॥ श्रीगणेशाय नमः ॥ श्रीसरस्वत्यै नमः ॥

श्रीगुरुप्रसादशास्त्रिकृतबालमनोरमाख्यव्याख्याऽलङ्कृता—

# मध्यसिद्धान्तकौमुदी ।

नत्वा वरदराजः श्रीगुरून् भट्टोजिदीक्षितान् ।
करोति पाणिनीयानां मध्यसिद्धान्तकौमुदीम् ॥ १ ॥

## ❀ बालमनोरमा ❀

वन्दे ज्ञानध्वस्तध्वान्तविद्योद्भासितदिङ्मुखान् ।
सद्रसमण्डलमार्तण्ड-स्नेहिरामाभिधान् गुरून् ॥ १ ॥
मनोरमादिटीकाभ्यः सारमाकृष्य कृत्स्नशः ।
बालानां सुखबोधाय टीकां हि सरलामिमाम् ॥ २ ॥
गणेशगुरुगीःपादपङ्कजामोदमोदितः ।
गुरुप्रसादनामाऽहं तन्वे बालमनोरमाम् ॥ ३ ॥

शिष्टाचारपरिप्राप्तं मङ्गलं शिष्यशिक्षार्थं ग्रन्थतो निबध्नाति—नत्वेति । श्रीगुरून् भट्टोजिदीक्षितान् नत्वा वरदराजः पाणिनीयानां मध्यसिद्धान्तकौमुदीं करोति । (इत्यन्वयः) ।

वरं ददातीति—वरदः=शिवो, विष्णुश्च । वरदश्चासौ राजा च—वरदराजः । वा—वरदानां—विष्ण्वादीनां—राजा—प्रभुः—महाविष्णुः, श्रीमहागणपतिर्वा वरदराज इति विग्रहः । श्रिया=यशःसम्पदा युक्ता गुरवः—श्रीगुरवः, तान्—श्रीगुरून् । भटन्तीति—भट्टाः, तान् भट्टान् उ—वितर्केण—जयतीति—भट्टोजिः, दीक्षा

अथ भाषाटीका—मैं वरदराजाचार्य अपने गुरु श्रीभट्टोजिदीक्षित जी को प्रणाम करके पाणिनीय व्याकरण के मध्यसिद्धान्तकौमुदी नामक ग्रन्थ को करता हूँ ॥ १ ॥

अइउण् ।१। ऋऌक् ।२। एओङ् ।३। ऐऔच् ।४। हयवरट् ।५। लण् ।६। ञमङणनम् ।७। झभञ् ।८। घढधष् ।९। जबगडदश् ।१०। खफछठथचटतव् ।११। कपय् ।१२। शषसर् ।१३। हल् ।१४।

[१]इति माहेश्वराणि सूत्राण्यणादिसंज्ञार्थानि ।

सञ्जाताऽस्य-दीक्षितः, भट्टोजिश्चाऽसौ दीक्षितश्च—भट्टोजिदीक्षितः, तान् भट्टोजिदीक्षितान् । 'एकत्वं न प्रयुञ्जीत गुरावात्मनि चेश्वरे' इत्यभियुक्तोक्तेर्बहुवचनेनात्र गुरोर्निर्देशः । पाणिनिना प्रोक्तं पाणिनीयं, पाणिनीयमधीयते विदन्ति वा पाणिनीयाः, तेषां—पाणिनीयानाम् = वैयाकरणानाम् । सिद्धान्तानां कौमुदीव—सिद्धान्तकौमुदी ! मध्या चासौ सिद्धान्तकौमुदी च—मध्यसिद्धान्तकौमुदी । सिद्धान्त... पाणिनीयानामेव । वैयाकरणमध्यसिद्धान्तकौमुदीमिति यावत् । एवञ्च 'वैयाक... मध्यसिद्धान्तकौमुदी'त्यस्य ग्रन्थस्य नाम, पद्यानुसारेण च असमासेन नि... इत्यवधेयम् । अत्र च—नातिदुरूहा वैयाकरणसिद्धान्ता विषयः, तज्ज्ञानं प्र... जनं, तज्जिज्ञासुरधिकारी, प्रतिपाद्यप्रतिपादकभावश्च विषयग्रन्थयोः सम्बन्ध इत्यनुबन्धचतुष्टयं स्वयमेवोह्यम् ॥ १ ॥

अथ वैयाकरणसिद्धान्तान्निरूपयिष्यन्, व्याकरणशास्त्रस्य मूलभूतानि चतु... सूत्राणि पठति—अइउणित्यादिना । नन्विमानि सूत्राणि मुनित्रयग्रन्थबहिर्भूतत्वा... प्रमाणमित्यत आह—इति माहेश्वराणि सूत्राणीति । महेश्वरादागतानि माहे... राणि । 'तत आगत' इत्यण् । महेश्वरादधिगतानीति यावत् । तदुक्तं—

'येनाऽक्षरसमाम्नायमधिगम्य महेश्वरात् ।
कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः ॥' इति ।

'नृत्ताऽवसाने नटराजराजो ननाद ढक्कां नवपञ्च ( १४ ) वारम् ।
उद्धर्तुकामः सनकादिसिद्धानेतद्विमर्शे शिवसूत्रजालम् ॥' इति च

अत्र 'ननादे'त्यन्तर्भावितण्यर्थो नदधातुः । ननाद—ढक्कां नादयामास इत्यर्थः । नवपञ्चवारं = चतुर्दशकृत्वः । एतच्छिवढक्कोत्थितं वर्णजालं शिव...

[१] ये जो 'अइउण्' इत्यादि १४ सूत्र महेश्वर महादेवजीके वरप्र... पाणिनिजी को प्राप्त हुए हैं सो अण् आदि संज्ञा ( प्रत्याहार ) के वास्ते हैं...

एषामन्त्या इतः[1] । हकारादिष्वकार[2] उच्चारणार्थः । [3]लण्मध्ये त्वित्संज्ञकः ।

जालतया, विमर्शो=ज्ञानामीत्यर्थः । आर्षस्तङत्र । एतेन महेश्वरेण प्रोक्तानि माहेश्वराणीति कैश्चिदुक्तो विग्रहो निरस्तः । एवं च माहेश्वरत्वादेतेषां सूत्राणां नाऽप्रामाण्यमित्युक्तं भवति । नन्वेवमपि अनर्थकवर्णराश्यात्मकानामेषां सूत्राणां वैयाकरणसिद्धान्तप्रकाशने उपयोगाभावादिह तदुपन्यासो व्यर्थ एवेत्यत आह—अणादिसंज्ञार्थानीति। अण् आदिर्यासां ताः—अणादयः, अणादयश्च ताः संज्ञाश्च—अणादिसंज्ञाः, ताः—अर्थः=प्रयोजनं येषां तानि—अणादिसंज्ञाऽर्थानि । एवञ्च—अनर्थकवर्णराशित्वेऽपि एषां सूत्राणां व्याकरणशास्त्रगतव्यवहारोपयोगिनीष्वणादिसंज्ञासूपयोगान्नानर्थक्यमिति भावः ।

ननु कथमेषां सूत्राणामणादिसंज्ञार्थत्वमित्यत आह—एषामन्त्या इत इति । एषाम्=उदाहृतचतुर्दशसूत्राणाम् , अन्त्याः=अन्ते भवाः—णकारादिवर्णाः—इतः=इत्संज्ञकाः प्रत्येतव्या इत्यर्थः । ननु 'हयवरे' त्यादौ पुनः-पुनरकारोच्चारणस्य किं प्रयोजनमित्यत आह— हकारादिष्वकार उच्चारणार्थ इति । हकारादीनां सुखसुखोच्चारणार्थमेव हि तत्र पुनःपुनरकारपाठ इत्यर्थः । अन्यथा ह्-य्-व्-र्-इत्येवं निर्देशे तस्य क्लिष्टोच्चारणापत्तेरिति भावः । अथवा—अचं विना हलामुच्चारणाऽभावात् पुनःपुनरकारपाठो हकाराद्युच्चारणार्थ इत्येवं व्याख्येयम् । अत एव 'उच्चैरुदात्तः' इति सूत्रे भाष्यम्—'न पुनरन्तरेणाचं व्यञ्जनस्योच्चारणमपि भवति' इति । अत्र च इदमेव अकारस्य पुनःपुनरुच्चारणं ज्ञापकम् । एवं च 'वर्णात्कारः' इति कारप्रत्यये सति ककार इत्यादिरूपाणि सिध्यन्ति । 'वाक्' इत्याद्यवसानेषु, ...' इत्यादौ संयुक्तवर्णेषु च, पदान्ते 'चोः कुः' इत्यादिविधिबलात्, 'हलोऽनन्तराः ...गः' इत्यादिशास्त्रबलाच्च नायं नियम इत्यपि बोध्यमिति वासुदेवदीक्षिताः ।

लणिति । लण्सूत्रस्थलकारघटकोऽकारस्तु वक्ष्यमाणसूत्रेण 'उपदेशेऽजि' त्यनेन

---

१ हकारादि में जो अकार हैं वे हकारादि के स्पष्ट उच्चारण के वास्ते हैं (इत्संज्ञा के वास्ते नहीं हैं )।

२ लण्सूत्र के मध्य में जो अकार है वह इत्संज्ञक है ।

३ इन चौदह सूत्रों के अन्त्य के अक्षर ण् क् ङ् आदि वक्ष्यमाण 'हलन्त्यं' सूत्रसे इत्संज्ञक होते हैं ।

**हकारो द्विरुपात्तोऽयमटि शल्यपि वाञ्छता ।**
**अर्हेणाऽधुक्षदित्यत्र द्वयं सिद्धं भविष्यति ॥**

[1]**हलन्त्यम्** ।१।३।३। उपदेशेऽन्त्यं हलित्स्यात् । [2]उपदेश आद्योच्चारणम् । सूत्रेष्वदृष्टं[3] पदं सूत्रान्तरादनुवर्तनीयं सर्वत्र ॥

---

इत्सञ्ज्ञको, नतूच्चारणमात्रार्थ इत्यर्थः । तेन रप्रत्याहारसिद्धिः ।

ननु सर्वे वर्णा अत्र अक्षरसमाम्नाये सकृदुपात्ताः, हकारस्तु पुनरयं किमिति द्विरुपादीयते इत्यत आह—हकार इति । अट्प्रत्याहारे, शल्प्रत्याहारे च हकारग्रहणमिच्छता भगवता वेदपुरुषेण हकारोऽयमक्षरसमाम्नाये द्विरुपात्तः । तत्र—अट्प्रत्याहारे ग्रहणस्य फलम्—अर्हेणेत्यत्र—'अड्व्यवायेऽपी'ति हकारव्यवधानेऽपि णत्वम् । शलि हकारग्रहणस्य प्रयोजनम्—अधुक्षदित्यत्र 'शल इगुपधा'दिति क्स इति द्विरुपादानादिदं रूपद्वयं सिध्यतीत्यर्थः ।

**हलन्त्यम्** । हल्-अन्त्यमिति च्छेदः । हल्शब्दो नपुंसकलिङ्गोऽप्यस्ति, अन्त्यमिति नपुंसकसामानाधिकरण्यात् । 'उपदेशेऽजनुनासिक इ'दिति पूर्वसूत्रादुपदेश इति, इदिति चानुवर्तते । तदाह—उपदेशेऽन्त्यमित्यादिना । 'धातुप्रातिपदिकनिपातप्रत्याहारसूत्रप्रत्ययादेशागमानामन्त्य'मिति भाष्यम् । अथ कोऽयमुपदेशो नाम ? तत्राह—उपदेश आद्योच्चारणमिति । उपशब्द आद्यर्थकः । दिशिरुच्चारणक्रियायाम् । भावे घञिति भावः । एतच्च 'आदेच उपदेशे' इत्यादिसूत्रे भाष्ये स्पष्टम् ।

'धातुसूत्रगणोणादिवाक्यलिङ्गानुशासनम् ।
आगमप्रत्ययादेशा उपदेशाः प्रकीर्तिताः ॥'

—इति प्राचीनकारिका तु प्रौढमनोरमायां बहुधा दूषितैव ।

ननु 'हलन्त्य'मिति हि द्विपदं सूत्रं, वृत्तिस्तु-उदक्षरा—'उपदेशेऽन्त्य'मित्यादिरूपाऽतिमहती, सा कथमुपपद्यतेऽत आह—सूत्रेष्विति । सूत्रेषु=हलन्त्यमित्यादौ, अदृष्टम्=अवर्तमानम्—'उपदेशे' इत्यादिपदं, सर्वत्र=सर्वस्थलेषु, सूत्रान्तरात्=यथायथं पूर्वोक्तसूत्रेभ्यः, अनुवर्त्तनीयम् । एवञ्च—'उपदेशेऽ'जित्यत 'उपदेशे' इति, 'इ'दिति चानुवर्त्तते इति नोक्तदोष इत्याशयः । अदर्शनमिति

---

१ उपदेश में जो अन्त्यहल् सो इत्संज्ञक हो । २ पाणिनि, कात्यायन पतञ्जलि कर्तृक जो प्रथम उच्चारण सो उपदेश कहलाता है । ३ सूत्रोंमें नहीं देखे गये जो पद सो सर्वत्र सूत्रान्तरों से अनुवर्तित जानना ।

[1]अदर्शनं लोपः ।१।१।६०। प्रसक्तस्याऽदर्शनं लोपसंज्ञं स्यात् ॥

[2]तस्यलोपः ।१।३।९। तस्येतो लोपः स्यात् । णादयोऽणाद्यर्थाः ॥

[3]आदिरन्त्येन सहेता ।१।१।७१। अन्त्येनेता सहित आदिर्मध्यगानां स्वस्य च संज्ञा स्यात् । यथा 'अण्' इति अइउवर्णानां संज्ञा । एवमच्-

---

अत्र दृशिर्ज्ञानसामान्ये । दर्शनं=ज्ञानम् । तदिह ज्ञानं शब्दानुशासनप्रकरणाच्छब्दविषयकं सत् श्रवणरूपं सम्पद्यते । श्रवणञ्च श्रोतृव्यापारः । तदभावश्च-अदर्शनं=श्रवणाभावः । नन्वेवं लोपविधायके 'लोपो व्योर्'रित्यादौ 'वकारयकारौ न श्रोतव्या'-विति श्रोतृव्यापार एव निषिध्येत, प्रयोक्तृव्यापारस्तूच्चारणं न निषिध्येतेति चेन्न, असति श्रवणे उच्चारणमनर्थकमेवेति श्रवणनिषेधे सामर्थ्यात्तद्धेतुभूतस्योच्चारणस्यापि स्वत एव निषिद्धत्वात् । प्रसक्तस्येति । 'स्थानेऽन्तरतम' इत्यतः 'स्थाने-' इत्यस्यानुवृत्त्या इदं लभ्यते । स्थानं हि प्रसङ्गः । तस्येति । तत्पदेन 'उपदेशेऽजिति सूत्रस्थमिदिति परामृश्यते । तदाह—इत इति । अत्र च-तस्येत्यस्यैव विवरणम्—'इत' इति ।

ननु णादीनामित्सञ्ज्ञायां लोपापत्तिरत आह—णादय इति । अणाद्यर्थाः=अणादिप्रत्याहारार्थाः, न लोपार्थाः । एवञ्च उच्चारणसामर्थ्यादेव न तेषां लोप इत्याशयः ।

आदिरन्त्येन सहेता । अन्ते भवः—अन्त्यः । तेन अन्त्येन इता सहोच्चार्यमाण आदिः—अ ण्-अ च् इत्यादिरूपः, मध्यगानां प्रत्याहारसंज्ञेत्यर्थः, संज्ञाप्रस्तावात् । तत्र 'यस्मात्पूर्वं नास्ति परमस्ति स आदिः' । 'यस्मात्परं नास्ति पूर्वमस्ति सोऽन्तः ।' इति आद्यन्तवत्सूत्रे भाष्यम् । तदिह आद्यन्तशब्दाभ्यां मध्यगा आक्षिप्यन्ते । अतस्तेषां संज्ञेति लभ्यते । 'स्वं रूप'मिति पूर्वसूत्राच्च-स्वमित्यनुवर्तते । तच्च षष्ठ्यन्ततया विपरिणम्यते । तदेतदाह—अन्त्येनेतेत्यादि ।

---

१ प्रसक्त नाम विद्यमान—उसका जो अदर्शन सो लोप संज्ञक हो ।

२ जिसकी इत्संज्ञा हो उसका लोप हो ।

३ अन्त्य इत् सहित जो आदि सो मध्यगवर्णों की ( प्रत्याहार ) संज्ञा हो । और स्वरूपके आदि की भी प्रत्याहार संज्ञा हो ।

हल्-अल्-इत्यादयः ॥ ऊकालोऽज्झ्रस्वदीर्घप्लुतः[१] ।१।२।२७। उश्च ऊ ऊ३ श्च—वः । वां काल इव कालो यस्य सोऽच् क्रमाद् ध्रस्वदीर्घप्लुत संज्ञः स्यात् । [२]स प्रत्येकमुदात्तादिभेदेन त्रिधा ॥ [३]उच्चैरुदात्तः

स्वस्य चेति । अत्र च स्वशब्देन संज्ञाकोटिप्रविष्ट आदिरेव परामृश्यते, नत्वन्त्योऽपि, अन्त्येनेति अप्रधाने तृतीयया 'सहयुक्तेऽप्रधाने' इति विहितया तस्य अप्रधान्यावगमात्, सर्वनाम्नां चोत्सर्गतः प्रधानपरामर्शित्वात् । प्रधानञ्चादिरेव तत्परामर्शः ।

तदेवमणादिसंज्ञासु सिद्धासु अचां ह्रस्वादिसंज्ञां विधत्ते—ऊकालोऽजिति 'ह्रस्वदीर्घप्लुत' इति समाहारद्वन्द्वः । सौत्रं पुंस्त्वम् । इतरेतरयोगद्वन्द्वो वा । तत्र सत्येकवचनमार्षम् । उ ऊ ऊ३ इति त्रयाणां एकमात्रद्विमात्रत्रिमात्राणां द्वन्द्वसमासे सति सवर्णदीर्घेण 'ऊ' इति प्रश्लिष्टनिर्देशः । तेषां कालः—ऊकालः । कालशब्दो मात्रापर्यायः—कालसदृशे लाक्षणिकः । ऊकालः कालो यस्येति विग्रहे 'सप्तम्युपमानपूर्वपदस्य बहुव्रीहिर्वाच्यो वा चोत्तरपदलोपः' इति द्विपदो बहुव्रीहिः ऊकालशब्दे पूर्वपदे उत्तरखण्डस्य कालशब्दस्य च लोप इत्यभिप्रेत्य फलितमाह—वां काल इवेत्यादिना । 'वः' इति ऊशब्दस्य प्रथमाबहुवचनम् । 'वा'मिति षष्ठीबहुवचनम् । वां काल इव कालो यस्येति फलितार्थकथनम् । उक्तरीत्या द्विपद बहुव्रीहिः । क्रमादिति । यथासङ्ख्यसूत्रलभ्यमेतत् । इहैव तु तत्सूत्रमुपन्यसितुमुचितम् । नच उ ऊ ऊ३ इत्युवर्णानां कथं ह्रस्वदीर्घप्लुतसंज्ञाः, तेषां ऊकालत्व

१ एकमात्रिक द्विमात्रिक त्रिमात्रिक जो उकार उसके उच्चारणकाल की सदृश उच्चारण काल है जिसका ऐसा जो अच् सो क्रम से ह्रस्व दीर्घ प्लुतसंज्ञक हो अर्थात् एकमात्रिक अच् ह्रस्व, द्विमात्रिक अच् दीर्घ, त्रिमात्रिक अच् प्लुत संज्ञक होता है । जैसे—अ-आ-आ३ ।

२ सः-नाम लब्ध हुई है ह्रस्वादिसंज्ञा जिसको ऐसा जो अच् सो, प्रत्येक नाम एक एक के प्रति उदात्त अनुदात्त स्वरितभेद करके तीन-तीन प्रकार का है जैसे—ह्रस्व-उदात्त, ह्रस्व-अनुदात्त, ह्रस्वस्वरित ।

३ भाग सहित जो तात्वादि ( कण्ठतालु आदि ) स्थान उनमें ऊर्ध्वभाग निष्पन्न जो अच् सो उदात्तसंज्ञक हो ।

।१।२।२९। ताल्वादिषु सभागेषु स्थानेपूर्ध्वभागे निष्पन्नोऽजुदात्तसञ्ज्ञः स्यात् ॥ [1]नीचैरनुदात्तः ।१।२।३०। ताल्वादिषु सभागेषु स्थानेष्वधोभागे निष्पन्नोऽजनुदात्तसञ्ज्ञः स्यात् ॥ [2]समाहारः स्वरितः ।१।२।३१। उदात्तत्वाऽनुदात्तत्वे वर्णधर्मौ समाह्रियेते यस्मिन् सोऽच् स्वरित-

शकालत्वाभावात् सादृश्यस्य भेदनिबन्धनत्वादिति वाच्यम्, ऊशब्दस्यात्र एकमात्रद्विमात्रत्रिमात्रकुक्कुटरुतानुकरणत्वात् । स इति । सः=ह्रस्वो दीर्घः प्लुतश्च अच् प्रत्येकमुदात्तादिभेदेन=उदात्तत्वेनानुदात्तत्वेन स्वरित्वेन च धर्मविशेषेण, त्रिधा=त्रिभिः प्रकारैर्वर्तते इत्यर्थः । तत्र उदात्तसंज्ञामाह—उच्चैरुदात्त इति । नादधर्मविशेष उच्चैस्त्वन्तु नेह विवक्षितम्, उपांशूच्चार्यमाणे अव्याप्तेः, किन्तु उच्चैश्शब्द इहाऽधिकरणशक्तिप्रधानः—ऊर्ध्वभागे इत्यर्थे वर्तते । ऊर्ध्वावयवस्य चावयव्यपेक्षायां तालुकण्ठादिवर्णाभिव्यक्तिस्थानानामित्यर्थाल्लभ्यते । ऊकालोऽजिति सूत्रादजित्यनुवर्तते । तदेतदाह—ताल्वादिष्वित्यादिना ।

सभागेष्विति । ताल्वादीनां सावयवत्वकथनमूर्ध्वभागे इत्यस्योपपादनार्थम्, तेषामखण्डत्वे ऊर्ध्वभागे इत्यस्यानुपपत्तेः । अनुदात्तसंज्ञामाह—नीचैरनुदात्तइति । ताल्वादिषु अधोभागे निष्पन्नोऽच् अनुदात्तसंज्ञः स्यादिति स्पष्टार्थकमित्यर्थः । अथ स्वरितसंज्ञामाह—समाहारः स्वरित इति । पूर्वसूत्राभ्यां 'उदात्त' इति 'अनुदात्त' इति चानुवर्तते । ऊकालोऽजित्यस्मादजित्यनुवर्तते । ततश्च उदात्तः अनुदात्तश्च अच् समाह्रियमाणः सन् स्वरितसञ्ज्ञ इत्यर्थः प्रतीयते । एवं सति वर्णद्वयस्य स्वरितसंज्ञा स्यान्नत्वेकस्य वर्णस्य । अतो नैवमर्थः, किन्तु उदात्तानुदात्तपदे अनुवृत्ते इह धर्मप्रधाने, तेच षष्ठ्यन्ततयाऽत्र विपरिणम्येते । 'समाहार' इत्यत्र चाऽधिकरणे घञ्, समाह्रियेते यत्राऽसौ समाहार इति । ततश्च उदात्तत्वानुदात्तत्वयोर्ध-

१ भागसहित जो कण्ठताल्वादिस्थान उनमें अधोभाग में निष्पन्न जो अच् सो अनुदात्त संज्ञक हो ।

२ उदात्तत्व अनुदात्तत्व ये जो वर्णों के धर्म वे इकट्ठे हों जिस अच् में सो अच् स्वरितसंज्ञक हो ।

सञ्ज्ञः स्यात्। [1]स नवविधोऽपि प्रत्येकमनुनासिकाननुनासिकत्वाभ्यां द्विधा ॥ मुखनासिकावचनोऽनुनासिकः[2] ।१।१।८। मुखसहितनासिकयोच्चार्यमाणो वर्णोऽनुनासिकसंज्ञः स्यात्। तदित्थम्—अ इ उ ऋ—एषां वर्णानां प्रत्येकमष्टादश भेदाः। लृवर्णस्य—द्वादश, तस्य दीर्घाभावात्। एचामपि द्वादश, तेषां ह्रस्वाभावात्॥ [3]तुल्यास्यप्रयत्नं सवर्णम् ।१।१।९। ताल्वादिस्थानमाभ्यन्तरप्रयत्नश्चेत्येतद्द्वयं यस्य येन

मयोर्यस्मिन्नचि मेलनं सोऽच् स्वरितसंज्ञक इत्यर्थः सिद्धः। फलितमाह—उदात्तत्वानुदात्तत्वे इत्यादिना।

तदेवमुदात्तह्रस्वः, अनुदात्तह्रस्वः, स्वरितह्रस्व इति ह्रस्वस्त्रिविधः। एवं दीर्घोऽपि त्रिविधः। तथा प्लुतोऽपि त्रिविधः। ततश्च एकैकोऽच् नवविध इति सिद्धम्। स नवविधोऽपीति। उक्तरीत्या नवविधोऽपि सः = अच् अनुनासिकत्वेन अननुनासिकत्वेन च द्विधा = द्वाभ्यां प्रकाराभ्यां वर्तते इत्यर्थः। तदेवम्—अनुनासिका नव अचः, अननुनासिकाश्च नवेत्यष्टादश विधत्वमेकैकस्याऽचः = अकारादेरिति स्थितम्। मुखनासिका। मुखसहिता नासिका मुखनासिका। शाकपार्थिवादित्वात् सहितपदस्य लोपः। उच्यते = उच्चार्यते इति—वचनः। कर्मणि ल्युट्। मुखनासिकया वचन इति—'कर्तृकरणे कृता बहुलम्' इति तृतीयासमासः। तदेतदाह—मुखसहितेत्यादिना। इह मुखं च नासिका चेति द्वन्द्वस्तु न, तथा सति 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्' इति समाहारद्वन्द्वनियमात् 'स नपुंसक'मिति नपुंसकत्वे 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति ह्रस्वत्वे 'मुखनासिकवचन' इत्यापत्तेः। ननु अष्टादश भेदाः किं सर्वेषामचामविशिष्टाः? नेत्याह—तदित्थमिति। इयता प्रबन्धेन यत् अचां भेदप्रपञ्चनं तत्—इत्थं=वक्ष्यमाणप्रका-

१ उदात्त अनुदात्त स्वरित भेद से नौ प्रकार का भी जो अच् है सो प्रत्येक भी अनुनासिक अननुनासिक भेद से दो दो प्रकार का है।

२ मुखसहित नासिका करके उच्चार्यमाण जो वर्ण सो अनुनासिक संज्ञक होय।

३ ताल्वादि स्थान और आभ्यन्तर प्रयत्न—ये जो वर्णों के जनकद्वय जिस वर्णके जनकद्वय के साथ तुल्य हों वे वर्ण परस्पर सवर्णसंज्ञक हों।

तुल्यं तन्मिथः सवर्णसंज्ञं स्यात् । *ऋलृवर्णयोर्मिथः [1]सावर्ण्यं वाच्यम्* । अकुहविसर्जनीयानां कण्ठः । इचुयशानां तालु । ऋटुरषाणां

रेण—व्यवस्थितं वेदितव्यमित्यर्थः । अष्टादश भेदा इति । अष्टादश प्रकारा इत्यर्थः । दीर्घाभावादिति । लृकारस्य दीर्घाभावे हि— होतृ—लृकार इत्यत्र सवर्णदीर्घे कृते 'होतॄकार' इति ऋकारघटितम् [ तुल्यास्यसूत्रे, अकः सवर्णे इति सूत्रे च ] भाष्योदाहरणमेव प्रमाणम् । ह्रस्वाभावादिति । यद्येचो ह्रस्वाः स्युस्तर्हि वर्णसमाम्नाये त एव लाघवात् अ इ उ इत्यादिवत् पठ्येरन्, नतु दीर्घाः, गौरवात् । अत एचो ह्रस्वा न सन्तीति विज्ञायते । एवं च ह्रस्वप्रपञ्चषड्भेदाभावात् द्वादशविधत्वमेवैचामिति भावः ।

अथ 'अणुदित्सवर्णस्य चाप्रत्ययः' इति अष्टादशानामकारादीनाम् अ इ उ इत्यादिसंज्ञां वक्ष्यन् सवर्णसंज्ञामाह—तुल्यास्येति । आस्यं=मुखम् । तत्सास्यस्य सर्ववर्णेष्वविशिष्टत्वादव्यावर्तकत्वादास्यशब्दोऽत्र न मुखमात्रपरः । किन्तु आस्ये मुखे भवम्—आस्यं = ताल्वादिस्थानम् । 'शरीरावयवाद्यत्' इति भवार्थे यत्प्रत्ययः । 'यस्येति च' इति प्रकृत्यन्त्यस्य अकारस्य लोपः । प्रकृष्टो यत्नः—प्रयत्नः । आस्यञ्च प्रयत्नश्च—आस्यप्रयत्नौ, तुल्यौ आस्यप्रयत्नौ यस्य वर्णजालस्य तत्—तुल्यास्यप्रयत्नं-परस्परं सवर्णसंज्ञकं स्यादिति भावः । तदाह—ताल्वादि स्थानमित्यादिना । मिथ इति । परस्परमित्यर्थः । ऋलृनि । भिन्नस्थानिकत्वाद्वार्त्तिकारम्भः । भो सूत्रकार ! त्वया न्यूनमुक्तं-तुल्यास्येति, किन्तु भिन्नस्थानिकयोरपि ऋलृवर्णयोर्मिथः सावर्ण्यं त्वया वाच्यमित्यर्थः । कस्य किं स्थानमित्याकाङ्क्षायां तद्व्यवस्थापकानि पाणिन्यादिशिक्षावचनान्यर्थतः संगृह्णाति—अकुहेत्यादिना । 'अ' इत्यष्टादश भेदा गृह्यन्ते । 'कु' इति कादिपञ्चकात्मकः कवर्गः । नचाऽणुदित्सूत्रस्येदानीमनिष्पत्तेः कथमत्र अ इत्यष्टादशभेदानां ग्रहणमिति वाच्यम्, लौकिकप्रसिद्धिमाश्रित्यैव एतत्प्रवृत्तेः । एवमग्रेऽपि कथञ्चित्समाधानं बोध्यम् । अकुहेति । अश्च कुश्च हश्च विसर्जनीयश्चेतिविग्रहः । विसर्जनीयशब्दोऽत्र

१ भिन्नस्थानिक जो ऋ-लृवर्ण इनकी भी परस्परमें सवर्णसंज्ञा होती है ।

मूर्धा । लृतुलसानां दन्ताः । उपूपध्मानीयानामोष्ठौ । ञमङणनानां नासिका च । एदैतोः कण्ठतालु । ओदौतोः कण्ठोष्ठम् । वकारस्य दन्तोष्ठम् । जिह्वामूलीयस्य जिह्वामूलम् । नासिकाऽनुस्वारस्य। इति स्थानानि ॥

यत्नो द्विधा । आभ्यन्तरो बाह्यश्च । आद्यः पञ्चधा । स्पृष्टेषत्स्पृष्टे

---

विसर्गपर्यायः । इचुयशेति । 'इ' इत्यष्टादश भेदाः । 'चु' इति चवर्गः । इश्च चुश्च यश्च शश्चेति विग्रहः । तालु = काकुदम् । ऋटुरषेति । 'ऋ' इत्यष्टादश भेदाः । टु इति टवर्गः । आ च टुश्च रश्च षश्चेति विग्रहः । ऋशब्दस्य आ इति प्रथमैकवचनान्तं धाता इतिवत् । लृतुलसेति । लृ इत्यस्य द्वादश भेदाः । तु इति तवर्गः । आ च तुश्च लश्च सश्चेति विग्रहः । लृशब्दस्यापि आ इत्येव प्रथमैकवचनान्तम् । आ अलौ अल इति च तस्य रूपाणि । दन्तशब्देन दन्तमूलप्रदेशो विवक्षितः । अन्यथा भग्नदन्तस्य तदुच्चारणानुपपत्तिः । उपूपेति । उ इत्यष्टादश भेदाः । पु इति पवर्गः । उश्च पुश्च उपध्मानीयश्चेति विग्रहः । उपध्मानीयशब्दमनुपदमेव स्वयं ग्रन्थकृद्व्याख्यास्यति । ञमङणनेति । ञश्च मश्च ङश्च णश्च नश्चेति विग्रहः । चकारेण स्वस्ववर्गीयस्थानसमुच्चयः । एदैतोरिति । एच्च ऐच्च एदैतौ । तपरकरणमसन्देहार्थं, नतु 'तपरस्तत्कालस्य' इति तत्कालमात्रग्रहणार्थम् । तेन प्लुतयोरपि संग्रहः । कण्ठश्च तालु चेति-कण्ठतालु । प्राण्यङ्गत्वात् समाहारद्वन्द्वे-एकवत्त्वं, नपुंसकत्वं च । ओदौतोरिति । ओच्च औच्च ओदौतौ । तपरकरणं पूर्ववदसन्देहार्थमेव । कण्ठश्च ओष्ठौ चेति कण्ठोष्ठम् । प्राण्यङ्गत्वात्समाहारद्वन्द्वे एकवद्भावो, नपुंसकत्वं च । वकारस्येति । दन्ताश्च ओष्ठौ चेति दन्तोष्ठम् । समाहारद्वन्द्वे एकवत्त्वं, नपुंसकत्वं च । जिह्वामूलीयस्येति । जिह्वामूलीयशब्दमग्रे स्वयमेव व्याख्यास्यति । एवमनुस्वारशब्दमपि । इति स्थानानीति । इति = एवंप्रकारेण वर्णाभिव्यक्तिस्थानानि-अस्माभिः-प्रदर्शितानीत्यर्थः ।

ननु तुल्यास्यसूत्रे प्रयत्नशब्देन प्रशब्दबलादाभ्यन्तरप्रयत्नो विवक्षित इति स्थितम् । तत्राभ्यन्तरत्वविशेषणं किमर्थं, व्यावर्त्याभावादित्यत्र आह—यत्नो द्विधेति । यत्नानामाभ्यन्तरत्वं बाह्यत्वं च वर्णोत्पत्तेः प्रागूर्ध्वभावित्वमेवेति पाणि

द्विवृतविवृतसंवृतभेदात्। तत्र स्पृष्टं प्रयतनं-स्पर्शानाम् । ईषत्स्पृष्टमन्तःस्थानाम्। ईषद्विवृतमूष्मणाम्। विवृतं स्वराणाम्। ह्रस्वस्याऽवर्णस्य प्रयोगे-संवृतम् । प्रक्रियादशायान्तु विवृतमेव । बाह्यप्रयत्नस्त्वेकादशधा। विवारः संवारः श्वासो नादो घोषोऽघोषोऽल्पप्राणो महाप्राण उदात्तोऽनुदात्तः स्वरितश्चेति । खरो-विवाराः श्वासा अघोषाश्च ।

न्यादिशिक्षासु स्पष्टम्। आद्य इति। आभ्यन्तरयत्न इत्यर्थः।

कस्य कः प्रयत्न इत्याकाङ्क्षायां तद्व्यवस्थापकशिक्षावचनानि पठति—तत्रेति। तेषु मध्ये इत्यर्थः। प्रयतनमिति। प्रयत्न इत्यर्थः । स्पर्शादिशब्दानग्रे व्याख्यास्यति। ह्रस्वस्याऽवर्णस्य संवृतमित्यन्वयः। एतावदेव च शिक्षावचनम्। नन्वेवं 'दण्ड-आढक'मित्यत्र अकारस्य आकारस्य च विवृतसंवृतप्रयत्नभेदेन सावर्ण्याभावात् सवर्णदीर्घो न स्यादित्यत आह—प्रयोग इति। शास्त्रीयप्रक्रियाभिः परिनिष्ठितानां 'रामः' 'कृष्णः' इत्यादिशब्दानां प्रयोगे क्रियमाणे एव ह्रस्वस्याऽवर्णस्य संवृतत्वमित्यर्थः। प्रक्रियेति। शास्त्रीयदीर्घादिकार्यप्रवृत्तिसमये तु ह्रस्वस्याप्यवर्णस्य विवृतत्वमेवेत्यर्थः। शिक्षावचनसिद्धं स्वाभाविकं ह्रस्वावर्णस्य संवृतत्वं प्रच्याव्य,—शास्त्रमूलभूते वर्णसमाम्नाये तस्य विवृतत्वेनैवोपदिष्टतया—कृत्स्नशास्त्रीयप्रक्रियासमये ह्रस्वस्याप्यवर्णस्य विवृतत्वकथनेन 'दण्डाढक'मित्यादौ सवर्णदीर्घादिकार्यं निर्बाधमिति अइउणिति सूत्रभाष्ये स्पष्टम्। एवञ्च 'ह्रस्वस्यावर्णस्य संवृत'मिति शिक्षावचनं परिशेषात् परिनिष्ठितदशायामेव पर्यवस्यतीति न तदानर्थक्यमिति भावः।

अथ बाह्यप्रयत्नान् प्रपञ्चयति—बाह्यप्रयत्नस्त्विति । प्रशब्दोऽत्र चिन्त्यः, प्रशब्दबलेन आभ्यन्तरयत्नस्यैव प्रयत्नशब्दवाच्यतायास्तुल्यास्यसूत्रे उक्तत्वात्, यत्नो द्विधेत्युपक्रमाच्च। अविवक्षितार्थो वा अत्र प्रशब्दः। अत्र च उदात्तानुदात्तस्वरितशब्दा धर्मपराः।

तत्र कस्य को बाह्ययत्न इत्याकाङ्क्षायां तद्व्यवस्थामाह—खर इति।

अथ स्पृष्टं प्रयतनं स्पर्शानामित्यादिसंदर्भे उपन्यस्तान् स्पर्शादिशब्दान्

१ अविधीयमान जो अण् और उदित् ये स्वसवर्ण की संज्ञा हों।

हशः-संवारा नादा घोषाश्च । वर्गाणां प्रथमतृतीयपञ्चमा यणश्चाल्पप्राणाः । वर्गाणां द्वितीयचतुर्थौ शलश्च-महाप्राणाः ।

कादयो मावसानाः स्पर्शाः । यणोऽन्तःस्थाः । शषसहा ऊष्माणः । अचः स्वराः । ᳵक ᳵख इति कखाभ्यां प्रागर्धविसर्गसदृशो जिह्वामूलीयः । ᳶप ᳶफ इति पफाभ्यां प्रागर्धविसर्गसदृश उपध्मानीयः । अं अः-इत्यचः परावनुस्वारविसर्गौ ॥

**अणुदित्सवर्णस्य[1] चाऽप्रत्ययः ।१।१।६९।** (प्रतीयतेविधीयते इति प्रत्ययः ) । अविधीयमानोऽण् उदिच्च सवर्णस्य संज्ञा स्यात् । अत्रैवाण् परेण णकारेण । कुचुटुतुपु एते उदितः । तदेवम्-'अ'इत्यष्टादशानां संज्ञा । तथेकारोकारौ । ऋकारस्त्रिंशतः । एवं लृकारोऽपि । एचो

---

व्याचष्टे—कादय इत्यादिना । क आदिर्येषां ते कादयः । मः—अवसाने= अन्ते येषां ते—मावसानाः । इदं च लोकप्रसिद्धमातृकापाठापेक्षम् ।

किं तद्ग्रहणकशास्त्रमित्याकाङ्क्षायां तदुपपादनं प्रतिजानीते—अणुदित्सवर्णस्येति । प्रत्ययशब्दस्य अणादिप्रत्ययपरत्वे 'त्यदादीनामः' 'इदम इश्' इत्यादीनां पर्युदासो न स्यादित्यतो व्याचष्टे—प्रतीयत इति । उत् इत् यस्य स—उदित्—कु चु टु तु पु इत्यादिः । चकारात्स्वं रूपमित्यतः स्वमित्यनुवर्तते । तच्च षष्ठ्यन्ततया विपरिणम्यते । तदाह—अविधीयमान इत्यादिना । अणिति पूर्वेण, परेण वा प्रत्याहार इति संशये निर्धारयति—अत्रेति । अस्मिन्नेव सूत्रे, अण् परेण णकारेण । इतरत्र तु 'अणोऽप्रगृह्यस्य' इत्यादौ पूर्वेणैवेत्यर्थः । अत्र च आचार्यपारम्पर्योपदेशरूपं व्याख्यानमेव शरणम् । एवं चाणुदित्सूत्रेणानेन अकारादिभिश्चतुर्भिर्दीर्घप्लुतानामिव सवर्णभूतहकारादीनामपि ग्रहणादच्त्वात्तेषु परेषु इकारस्य यणादिकं स्यादिति नाज्झलाविति प्रतिषेध आवश्यक इति सिद्धान्तकौमुद्यां स्थितम् । अणुदित्सूत्रस्य फलमाह—तदेवमिति । तत् = अणुदित्सूत्रेण यल्लब्धं तत् एवं=वक्ष्य-

---

[1] वर्णों की जो अतिशयित संनिधि ( स्वाभाविक अर्धमात्रा काल से अधिक काल से अनुच्चारण ) सो संहितासंज्ञक हो ।

द्वादशानाम् ॥ अनुनासिकाननुनासिकभेदेन यवला द्विधा । तेनाननुनासिकास्ते द्वयोर्द्वयोः संज्ञाः। परः[1] संनिकर्षः संहिता।१।४।१०९।वर्णानामतिशयितः संनिधिः संहितासंज्ञः स्यात् ॥ [1]हलोऽनन्तराः संयोगः

माणप्रकारेण फलतीत्यर्थः । त्रिंशत इति । ऋलृवर्णयोर्मिथः सवर्णतया ऋकारेण स्वाष्टादशभेदानां, लृकारीयद्वादशभेदानां च ग्रहणादिति भावः । एवं लृकारोऽपीति । त्रिंशतः सञ्ज्ञेति शेषः । ऋकारस्यापि लृकारसवर्णत्वादिति भावः ।

ननु ग्रहणकसूत्रे अज्ग्रहणमेव क्रियताम्—अजुदित्सवर्णस्येति, किमणग्रहणेन ? हयवरलानां सवर्णाभावेन तेषु ग्रहणकशास्त्रस्य व्यर्थत्वादित्यत आह—अनुनासिकेति । तेनेति । उक्तद्वैविध्येन सवर्णत्वात्—अननुनासिकाः, ते=यवलाः प्रत्येकं—द्वयोर्द्वयोः संज्ञाः । अननुनासिकानामेव तेषां पाठात् । एवं च अनुनासिकयवलसंग्रहार्थं ग्रहणकसूत्रे अज्ग्रहणमपहाय अण्ग्रहणं कृतमिति भावः ।

परः संनिकर्ष इति । परः = अतिशयितः । 'दूरानात्मोत्तमाः पराः' इत्यमरः । सन्निकर्षः = सामीप्यम् , अर्धमात्राधिककालव्यवधानाभाव इतियावत् । अर्धमात्राकालव्यवधानस्य अवर्जनीयत्वात् । तदेतदभिप्रेत्याह—अतिशयित इत्यादिना ।

हलोऽनन्तराः संयोगः । अन्तरशब्दोऽत्र व्यवधाने वर्तते । 'अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये' इत्यमरात् । व्यवधानं च विजातीयेनैव । अविद्यमानम् अन्तरं = व्यवधानं येषामिति विग्रहः । 'नञोऽस्त्यर्थानां मिति विद्यमानपदस्य लोपः । तदाह—अज्भिरित्यादिना । तत्र हलौ च हलश्च हल इत्येकशेषः । तेन द्वयोरपि संयोगसंज्ञा लभ्यते । ततश्च शिक्षेत्यत्र 'गुरोश्च हलः' इत्यप्रत्ययः सिध्यति । अत्र च समुदायस्यैव संयोगसंज्ञा, महासंज्ञाकरणात् , व्याख्यानाच्च, नतु प्रत्येकम् । तथा सति 'सुदृषत्प्रासाद' इत्यत्र पकारसन्निधौकेवलस्य तकारस्य संयोगत्वापत्तौ संयोगान्तलोपापत्तेः । यत्र तु बहवो हलः श्लिष्टास्तत्रापि द्वयोर्द्वयोः संयोगसंज्ञा, नतु बहूनामेवेति नागेशभट्टैः शब्देन्दुशेखरे स्पष्टमुक्तम् ।

सुप्तिङन्तं पदम् । 'सुप्' इति स्वौजसमौडिति सूत्रे सु इत्यारभ्य सुपः पकारेण प्रत्याहारः, न तु सप्तमीबहुवचनस्यैवात्र ग्रहणम् , व्याख्यानात् । सुप्च तिङ्

१ अव्यवधानरहित जो अनेक हल् उनकी संयोगसंज्ञा होय ।

।१।१।७। अज्भिरव्यवहिता हलः संयोगसंज्ञाः स्युः ॥ सुप्तिङन्तं [1]पद।१
।१।४।१४। सुबन्तं तिङन्तञ्च पदसंज्ञं स्यात् ॥

इति सन्ध्युपयोगि संज्ञाप्रकरणम् ।।१ ॥

## अथ अच्सन्धिः ।

इको [2]यणचि ।६।१।७७। इकः स्थाने यण् स्यादचि संहिताया
विषये । सुधी उपास्य इति स्थिते ॥ [3]तस्मिन्निति निर्दिष्टे पूर्वस्य

च सुप्तिङौ, तौ अन्ते यस्य तत्—सुप्तिङन्तम् । शब्दरूपमिति शब्दशास्त्रा स्ता-
वाल्लभ्यते । अन्तशब्दश्च प्रत्येकं संबध्यते । तदाह—सुबन्तमित्यादिनेति वासु
देवदीक्षिताः ।

इतिसंज्ञाप्रकरणमिति। सन्धिकार्योपयोगिप्रथमाध्यायस्थसंज्ञानिरूपणं समाप्तमित्यर्थः

इति श्रीगुरुप्रसादशास्त्रिसङ्कलितायां मध्यसिद्धान्तकौमुदीटीकायां
बालमनोरमायां संज्ञाप्रकरणम्

इको यणचि । इक इति षष्ठी । अतः षष्ठी स्थानेयोगेति परिभाषया स्थाने इति लभ्यते । स्थानं च प्रसङ्गः । वर्णानां वर्णान्तराधिकरणत्वासम्भवात्—अचीति सतिसप्तमी। तस्मिन्निति निर्दिष्टे पूर्वस्येति परिभाषया च वर्णान्तराव्यवहितोच्चारितेऽचि सति पूर्वस्येति लभ्यते । एवं च अचि परत इत्यर्थलभ्यम् संहितायामित्यधिकृतम् । ततश्चार्धमात्राधिककालव्यवधानाभावो लभ्यते । एवं च फलितमाह—इकः स्थाने इत्यादिना ।

सुधीति । ध्यै चिन्तायामिति धातोर्ध्यायतेः संप्रसारणं चेति क्विपि, यकारस्य सम्प्रसारणे इकारे, पूर्वरूपे, हलश्चेति दीर्घे च धीशब्दः । सुष्ठु ध्यायन्तीति सुधियः सुष्ठु शोभना धीर्येषामिति वा सुधियः । सुधीभिरुपास्य इति विग्रहः । 'कर्तृकरणे कृता बहुलम्' इति समासः ।

तस्मिन्निति निर्दिष्टे । इको यणचीत्यत्र हि अचि इको यण् स्यादित्यवगतम्।

१ सुबन्त और तिङन्त की पदसंज्ञा हो ।

२ इक् के स्थान में यण् आदेश हो अच् परे रहते संहिता के विषय में ।

३ सप्तमीनिर्देशसे विधीयमान जो कार्य सो वर्णान्तरव्यवधानरहित पूर्वको होय।

।१।१।६६। सप्तमीनिर्देशेन विधीयमानं कार्यं वर्णान्तरेणाव्यवहितस्य पूर्वस्य ज्ञेयम् ॥ [1]स्थानेऽन्तरतमः ।१।१।५०। प्रसङ्गे सति सदृशतम

---

तत्र अचो वर्णान्तराधिकरणत्वं न सम्भवतीति अचिति उतिसप्तमी-आश्रयणीया,अचि सति इको यण् स्यादिति। तत्र व्यवहिते अव्यवहिते च अचि इको यण् प्राप्तः। ततश्च समिधमित्यत्र धकारव्यवहिते अकारे सत्यपि मकारादिकारस्य यण् स्यात्। तथा अचि सति पूर्वस्य परस्य वा इको यण् प्राप्तः। ततश्च दध्युदकमित्यत्रपूर्वस्मिन् इकारे अचि सति उकारस्य परस्यापि इको यण् स्यात्। तत्र अव्यवहिते एव अचि भवति न व्यवहिते, पूर्वस्यैव भवति न परस्येत्येतदर्थमिदमारभ्यते। अत्र तस्मिन्निति न तच्छब्दः स्वरूपपरः। तथा सति 'तस्मिन्नणि च युष्माकास्माकौ' इत्यादावेव प्रवर्तेत, न त्विको यणचीत्यादौ। किन्तु इको यणचीत्यादिसूत्रगतस्य अचीत्यादिसप्तम्यन्तपदस्य तस्मिन्नित्यनुकरणम्। 'इती'त्यनन्तरं 'गम्येऽर्थे' इतिशेषः। निरिति नैरन्तर्ये, दिशिरुच्चारणे। एवं च 'इको यणचि' 'रायो हलि' त्यादिसूत्रेषु 'अचि' 'हलि' इत्येवं सप्तम्यन्तपदगम्येऽर्थे अकारादौ 'दध्यत्र' 'सुध्युपास्य' इत्यादिप्रयोगदशायां निर्दिष्टे = अव्यवहितोच्चारिते सति पूर्वस्य इकारादेर्यण् कार्यं भवति, न तु व्यवहितोच्चारिते, नापि परस्येति फलितोर्थः। व्यवधानं च वर्णान्तरकृतमेव निषिध्यते, न तु कालकृतम्। इको यणचीत्यादौ कालकृतव्यवधानस्य संहिताधिकारादेव निरासलाभात्। तंत्रहि कालकृतव्यवधानस्याप्यनेनैव सूत्रेण निरासे संहिताधिकारस्य वैयर्थ्यापातात्। एवं च ये संहिताधिकारबहिर्भूताः 'आनङृतो द्वन्द्वे' 'देवताद्वन्द्वे च' इत्यादय उत्तरपदे परत आनङादिविधयः— ते सर्वे 'अग्नाविष्णू' इत्याद्यवग्रहे कालव्यवधानेऽपि भवन्ति। एतत्सर्वमभिप्रेत्य पर्यवसन्नार्थमाह—सप्तमीनिर्देशेनेत्यादिना।

---

१ जहाँ एक स्थानीके स्थान में अनेक आदेशों का प्रसङ्ग हो वहाँ उस स्थानी के सदृशतम हो आदेश होय।

२ अच्से परीभूत जो यर् उसको विकल्प करके द्वित्व हो। परन्तु यर् से अच् परे रहे तो यर् को द्वित्व नहीं हो।

आदेशः स्यात्। सुध्य् उपास्य इति जाते। [2]अनचि च।८।४।४७ अचः परस्य यरो द्वे वा स्तो न त्वचि। इति धस्य द्वित्वम्॥ [1]झलां

---

स्थानेऽन्तरतमः। स्थानं च प्रसङ्गः। अन्तरशब्दोऽत्र सदृशपर्यायः। अतिशयितोऽन्तरः—अन्तरतमः। तदाह—प्रसङ्गे सतीत्यादिना। एकस्य स्थानिनोऽनेकादेशप्रसङ्गे सति यः स्थानार्थगुणप्रमाणतः स्थानिना सदृशतमः स एवादेशो भवतीत्यर्थः। अत्र स्थानशब्देन ताल्वादिस्थानं विवक्षितम्। गुणशब्देन प्रयत्नः। प्रमाणशब्देन च एकद्विमात्रादिपरिमाणम्। तत्र स्थानतो यथा—दध्यत्र अत्र तालुस्थानकस्य इकारस्य स्थाने तालुस्थानको यकारः। अर्थतो यथा-तृज्वत्क्रोष्टुरिति। अत्र हि—क्रोष्टुशब्दस्य उकारान्तस्य स्थाने तृजन्त आदेशो भवन्नर्थसाम्यात् क्रोष्टृशब्द एव तृजन्त आदेशो भवति। गुणतो यथा—वाग्घरिः अत्र हकारः स्थानी—घोषनादसंवारमहाप्राणप्रयत्नवान्। तस्य गकारसवर्णो भवन् चतुर्थो घकारो भवति, तस्य हकारेण स्थानिना घोषनादसंवारमहाप्राणप्रयत्नसाम्यात्। ककारस्तु न भवति, तस्य श्वासाघोषविवारालपप्राणप्रयत्नकत्वात्। तथा खकारोऽपि द्वितीयो न भवति, तस्य महाप्राणप्रयत्नसाम्येऽपि श्वासाघोषविवारप्रयत्नभेदात्। तथा तृतीयो गकारोऽपि न भवति, तस्य घोषनादसंवारप्रयत्नसाम्येऽपि अल्पप्राणप्रयत्नभेदात्। अत एव ङकारो न भवति। नन्वत्र हकारस्य खकारो द्वितीयः कुतो न स्यात्, तस्य स्थानिना हकारेण श्वासाघोषविवारप्रयत्नभेदे सत्यपि महाप्राणप्रयत्नसाम्यसत्त्वात्। तथा तृतीयो वा गकारः कुतो न स्यात्, तस्य स्थानिना हकारेण अल्पप्राणप्रयत्नभेदेऽपि घोषनादसंवारप्रयत्नसाम्यसत्त्वात्। अत एव ङकारो वा कुतो न स्यादिति चेन्न; तमब्ग्रहणेन उक्तसकलाऽतिप्रसङ्ग-निरासात्। अतिशयितो ह्यन्तरः,—अन्तरतमः। अतिशयितं च प्रयत्नतः साम्यं हकारेण घकारस्यैव, उभयोरपि घोषनादसंवारमहाप्राणात्मकप्रयत्नचतुष्टयसाम्येन सादृश्यातिशयात्। खकारस्य महाप्राणप्रयत्नसाम्येऽपि घोषनादसंवारप्रयत्नविरहात्। गङयोः घोषनादसंवारप्रयत्नसाम्येऽपि महाप्राणप्रयत्नविरहात्। प्रमाण

---

१ झलोंके स्थानमें जश् आदेश हो झश् परे रहते।

**झलां जश् झशि ।८।४।५३।** झलां जश् स्यात् झशि परे। इति पूर्वधस्य दः।
**संयोगान्तस्य[1] लोपः ।८।२।२३।** संयोगान्तं यत्पदं तदन्तस्य लोपः

यथा—'अदसोऽसेर्दादु दो मः' इति। ह्रस्वस्य उकारः, दीर्घस्य ऊकारः।

सुध् य् इति। 'धकारस्य द्वित्व'मिति वक्ष्यमाणेनान्वयः। केन सूत्रेणेत्यत आह—**अनचि च**। 'यरोऽनुनासिकेऽनुनासिको वा' इत्यतः 'यर' इति षष्ठ्यन्तं 'वे'ति चानुवर्तते। 'अचो रहाभ्यां द्वे' इत्यतः अच इति पञ्चम्यन्तं द्वे इति चानुवर्तते। न अच् अनच्, तस्मिन् अनचीति न पर्युदासः, तथा सति 'नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः' इति न्यायेन अज्भिन्ने हलीत्यर्थः स्यात्। तथा सति लाघवाद्धलीत्येव वदेत्। रामात् इत्याद्यवसानेषु च द्वित्वं न स्यात्। अतः अचि न भवतीत्यसमर्थसमासमाश्रित्य प्रसज्य प्रतिषेधपरं वाक्यान्तरम्। तदाह—**अचः परस्येत्यादिना**। **इति धस्येति**। अनेन सूत्रेण धकारस्य द्वित्वं—द्विरुच्चारणमित्यर्थः। धकारस्य उकारादचः परत्वादच्परकत्वाभावाच्चेति भावः।

**झलाञ्जश् झशि**। स्पष्टमिति पाठे तु—झलां स्थाने जश् स्यात् झशि परत इत्यर्थोऽवधेयः। अत्र हि न किञ्चिद्व्याख्यातव्यमस्ति, पदान्तरस्यानुवृत्त्यभावात्। **इति पूर्वस्येति**। 'सुध्' इति प्रथमधकारस्येत्यर्थः। **दकार इति**। तालुस्थानत आन्तर्यादिति भावः।

**संयोगान्तस्य लोपः**। पदस्येत्यधिकृतम्। संयोगः अन्तो यस्येति विग्रहः। संयोगान्तस्य पदस्य लोप इत्यन्वयः। नहि-अनेन कृत्स्नपदस्य लोपः, किन्तु अलोऽन्त्यस्येति परिभाषया तदन्तस्यैव। तदाह—**संयोगान्तमित्यादिना**। अत्र अन्तग्रहणं स्पष्टार्थमेव। संयोगस्य पदविशेषणतया 'येन विधि'रित्येव तदन्तलाभात्। यत्तु संयोगावन्तौ यस्येति द्विवचनेन विग्रहलाभार्थमन्तग्रहणम्, अन्यथा 'सुहृषत्प्रासाद' इत्यत्र पकारात् पूर्वस्य तकारस्य लोपः स्यादिति केचित्; तन्न, संयोगसंज्ञाया व्यासज्यवृत्तित्वात्। प्रत्येकवृत्तित्वमभ्युपगम्य अन्तग्रहणप्रयोजनवर्णनस्य व्यर्थत्वादिति शब्दरत्ने विस्तरः।

१ संयोगान्त जो पद उसका लोप हो।

स्यात् ॥ अलोऽन्त्यस्य[1] ।१।१।५२। षष्ठीनिर्दिष्टाऽन्त्यस्याऽल आदेशः स्यात् । इति [ यलोपे[1] ] प्राप्ते—*यणः[2] प्रतिषेधो वाच्यः । अज्झीनं परेण संयोज्यम् । [सुध्युपास्यः] सुद्ध्युपास्यः । [मध्वरिः] मद्ध्वरिः । [ धात्रंशः ] धात्त्रंशः । लाकृतिः ॥ एचोऽयवायावः[3] ।६।१।७८। एचः [ क्रमात्[1] ]—अय्, अव्, आय्, आव्, एते स्युरचि ॥ यथासंख्यमनुदेशः समानाम्[4] ।१।३।१०। समसम्बन्धी विधिर्यथासंख्यं स्यात् ।

इति यलोपे इति । सु द् ध् य्—इति यकारस्य अनेन सूत्रेण लोपे प्राप्ते तत्प्रतिषेध आरभ्यते—यणः प्रतिषेधो वाच्य इति । यणः संयोगान्तलोपप्रतिषेधो वक्तव्य इत्यर्थः । 'अनेन वार्तिकेन यकारस्य संयोगान्तलोपो न भवती'ति शेषः ।

एचोऽयवायावः । अय्च अव्च आय्च आव्चेति विग्रहः । इको यणचीत्यतोऽचीत्यनुवर्त्तते । यथासङ्ख्यपरिभाषया च एकारस्य—अय्, ओकारस्य—अव्, ऐकारस्य—आय्, औकारस्य—आव्—इति लभ्यते । तदाह—यथेति । समानां=समसङ्ख्यानाम्, अनुदेशः=पश्चाद्भववाक्यार्थबोधकालिकः सम्बन्धः, यथासङ्ख्यं भवति । प्रथमत्व-द्वितीयत्वादिसङ्ख्याघटितधर्मानतिक्रमेण भवतीति यावत् । एवञ्च—प्रथमस्य स्थानिन एकारस्य स्थाने प्रथम आदेशः—अय् भवति । एवं द्वितीयस्य ओकारस्य स्थाने द्वितीयः—अव् भवतीत्याद्यवधेयम् । क्रमेणोदाहरति—हरय इत्यादिना । हरे–ए, विष्णो–ए, नै–अकः, पौ–अक इति स्थिते एकारादीनां क्रमादयादयः ।

१ षष्ठीनिर्दिष्ट जो आदेश सो अन्त्य अल्के स्थानमें हो ।

२ यण्का संयोगान्त लोप नहीं हो ।

३ एच्के स्थानमें क्रमसे अय् अव् आय् आव् ये आदेश हों ।

४ सम सम्बन्धी जो विधि सो यथासङ्ख्य करके हो ।

अर्थात्—समसङ्ख्योंका जो पश्चाद्भव वाक्यार्थबोधकालिक सम्बन्ध प्रथमत्व द्वितीयत्व तृतीयत्व आदि सङ्ख्याघटित धर्मोंके अनुसार ही हो ।

[१] एतदन्तर्गतः पाठो लिखितादर्शे नास्ति ।

हरये । विष्णवे । नायकः । पावकः ॥ **वान्तो[1] यि प्रत्यये ।६।१।७९।** यादौ प्रत्यये परे ओदौतोरवावौ स्तः । गव्यम् । नाव्यम् । *गोर्यूतौ छन्दस्युपसंख्यानम्[2] । *अध्वपरिमाणे[3] च । गव्यूतिः ॥ **धातोस्तन्निमित्तस्यैव[4] ।६।१।८०।** यादौ प्रत्यये परे धातोरेचश्चेद्वान्तादेशस्तर्हि

वान्तो यि प्रत्यये । 'यि' इति सप्तम्यन्तम् । तेन यकारादाविति लभ्यते, 'यस्मिन्विधिस्तदादावल्ग्रहणे' इति वार्तिकात् । तत्र यस्मिन्निति सप्तम्यन्तं विवक्षितम् । अलिति वर्णपर्यायः । सप्तम्यन्ते वर्णग्रहणे यो विधिः स तद्वर्णादौ ज्ञेय इति तदर्थः । येन विधिरित्यस्यायमपवादः । वकारः—अन्ते यस्य स वान्तः । पूर्वसूत्रोपात्तः—अवादेश, आवादेशश्च विवक्षितः । तौ च कयोर्भवत इत्याकाङ्क्षायां ओदौतोरित्यर्थाल्लभ्यते, पूर्वसूत्रे तयोरेव तदुभयस्थानित्वेन क्लृप्तत्वात् । तदाह—यकारादावित्यादिना । गव्यमिति । गो—यम् इति स्थिते ओकारस्य अच्परकत्वाभावात् एचोऽयवायाव इत्यप्राप्ते अवादेशोऽत्र विधीयते ।

'गव्यूतिः = गोप्रचारभूमिः । गावो यूयन्ते मिश्र्यन्तेऽस्यामित्यधिकरणे युधातोः क्तिन्निति वेदभाष्ये भट्टभास्करः । अत्र यूतिशब्दस्य प्रत्ययत्वाभावात्तस्मिन् परतः 'वान्तो यि प्रत्यये' इत्यप्राप्तौ वचनमिदम्—अध्वपरिमाणे चेति । मार्गपरिमाणविशेषे गम्येऽपि यूतिशब्दे परे गोशब्दावयवस्य ओकारस्य अव् इति वान्तादेशस्य उपसंख्यानं कर्तव्यमित्यर्थः । लोकेऽपि प्राप्त्यर्थमिदम् ।

गव्यूतिरिति । यावति गोशब्दो यूयते मिश्र्यते श्रूयते तावानध्वा गव्यूतिः, क्रोशयुगम् । 'गव्यूतिः स्त्री क्रोशयुगम्' इत्यमरः । युधातोरधिकरणे क्तिन् ।

ननु, ओयते औयत इत्यत्रापि ओकारस्य औकारस्य च वान्तो यीति वान्तादेशः स्यादित्याशङ्क्य 'वान्तो यी'ति सूत्रं नियमयति—धातोस्तन्निमित्तस्यैवेति ।

---

१ ओकार औकारको क्रमसे अव् आव् आदेश हो यकारादि प्रत्यय परे रहते ।

२ गो शब्द को यूति शब्द परे रहते वान्तादेश हो छन्द ( वेद ) में ।

३ अध्व = मार्गका परिमाण = नाप वाच्य हो तो गो शब्दको यूतिशब्द परे रहते वान्त ( अव् ) आदेश हो ।

४ यकारादि प्रत्यय परे रहते धातुसम्बन्धी एच्को यदि वान्त आदेश हो तो यकारादिप्रत्ययनिमित्तक जो एच् उसको ही हो, अन्य एच्को नहीं हो ।

तन्निमित्तस्यैव, नान्यस्य। लव्यम्। अवश्यलाव्यम्। तन्निमित्तस्य किम् ओयते। औयत॥ **क्षय्यजय्यौ[1] शक्यार्थे।६।१।८१।** यान्तादेशनिपात

एच इति, वान्तो यि प्रत्यये इति चानुवर्तते। सः = यादिप्रत्ययः निमित्तं यस्य स तन्निमित्तः। यादिप्रत्यये परे धातोरेचां भवन् वान्तादेशो यादिप्रत्ययनिमित्तकस्यैव एचो भवति, नान्यस्येत्यर्थः। तदाह—यादौ प्रत्यय इत्यादिना। लव्यमिति लूञ् छेदने। अचो यत्। 'सार्वधातुकार्धधातुकयो'रित्यूकारस्य ओकारो गुणः; तस्य धात्ववयवत्वात्, यादि-यत्प्रत्यय-निमित्तकत्वाच्च वान्तादेशो भवति। अवश्यलाव्यमिति। 'ओरावश्यके' इति लूञो ण्यत्। 'अचोञ्णिती'त्यूकारस्य औकारो वृद्धिः। अवश्यमित्यव्ययम्। मयूरव्यंसकादित्वात्समासः। लुम्पेदवश्यमः कृत्ये इति मलोपः। अत्र औकारस्य धात्ववयवत्वात्, यादिण्यत्प्रत्ययनिमित्तकत्वाच्च वान्तादेशो भवति। ननु लव्यमवश्यलाव्यमित्यत्र वान्तो यीत्येव वान्तादेशः सिद्धः, अतस्तन्निमित्तस्यैवेति नियमार्थमिदं सूत्रमिति हि-वस्तुस्थितिः, तत्र तन्नियमविधेः किं प्रयोजनमिति पृच्छति—तन्निमित्तस्यैवेति किमिति। नियमस्य किं प्रयोजनमित्यर्थः। **ओयते इति।** वेञ् तन्तुसन्ताने। कर्मणि लट्। 'भावकर्मणो'रित्यात्मनेपदम्। यक्। 'वचिस्वपियजादीना'मिति वकारस्य संप्रसारणम्—उंकारः। पूर्वरूपम्। 'अकृत्सार्वधातुकयो'रित्युकारस्य दीर्घः। आङा सह उकारस्य 'आद्गुण' इति गुण ओकारः। तस्य ओकारस्य परादिवद्भावेन धात्ववयवत्वेऽपि यादियक्प्रत्ययनिमित्तकत्वाऽभावान्न वान्तादेशः। आद्गुण इतिहि चाङ्गुणः, स च न यक्प्रत्ययनिमित्तकः। नन्वत्र न धातुलोपसूत्रस्थभाष्यरीत्या 'आद्गुण' इति गुणस्य ओकारस्य पदद्वयापेक्षत्वेन बहिरङ्गतयाऽन्तरङ्गे वान्तादेशे कर्तव्येऽसिद्धत्वादोकाराभावान्न तत्र वान्तादेशप्रसक्तिरपीत्यस्वरसादाह—औयतेति। वेञः केवलात् कर्मणि लङ्। आत्मनेपदादि पूर्ववत्। 'आडजादीना'मित्याट्। आटश्चेति औकारो वृद्धिः। तस्य परादिवद्भावेन धात्ववयवत्वेऽपि यादिप्रत्ययनिमित्तकत्वाभावान्न वान्तादेशः। नचात्र वृद्धेर्बहिरङ्गत्वम्, तस्या आनिमित्तकत्वेन पदद्वयसापेक्षत्वाभावात्। 'सिद्धे सत्यारम्भो नियमार्थः' इति

1 शक्य अर्थ में क्षय्य और जय्य ये शब्द निपातित हों।

नार्थमिदम् । क्षय्यम् । जय्यम् । शक्यार्थे किम् ? क्षेतुं जेतुं योग्यं-क्षेयंपापं जेयं मनः ॥ [1]क्रय्यस्तदर्थे ।६।१।८२। 'क्रेतारः क्रीणीयु'रिति बुद्धया

न्यायेनैव नियमविधिसिद्धेस्तन्निमित्तस्यैवेत्येवकारस्तु विपरीतनियमव्यावृत्त्यर्थः । एवकाराऽभावे हि यादिप्रत्ययनिमित्तकस्य एचो वान्तादेशश्चेत्तर्हि धातोरेवैच इत्यपि विपरीतो नियमः प्रतीयेत । तथा च 'बाभ्रव्य' इत्यत्र वान्तादेशो न स्यात् । वभ्रोरपत्यं बाभ्रव्यः । 'मधुबभ्र्वोर्ब्राह्मणकौशिकयो'रिति यञ् । 'ओर्गुण' इत्युकारस्य गुण ओकारः । तस्य यादियञ्प्रत्ययनिमित्तकस्य धात्ववयवत्वाभावादत्र वान्तादेशो न स्यात् । अत इष्टनियमावधारणार्थं तन्निमित्तस्यैवेत्येवकारः ।

क्षय्यजय्यौ शक्यार्थे । शक्यार्थे क्षय्यजय्यशब्दौ वाचकतया वर्तेते इत्यर्थः । ननु किमपि कार्यं विधेयमत्र न दृश्यते इत्यत आह—यान्तेति । प्रातिस्विकविधिं विना सिद्धप्रक्रियस्य शब्दस्वरूपस्य निर्देशो निपातनम् । ततश्च शक्यार्थके यादौ प्रत्यये परे क्षिक्षये जिजये इति धातोरेचः—अय् इति यान्तादेशः स्यादिति विधानमत्र फलति । 'शक्यार्थे क्षिज्योर्यान्त' इति प्रातिस्विकविधौ गौरवादेवं निपातनमिति भावः । क्षय्यमिति । 'कृत्या' इत्यधिकारे क्षिधातोरचो यदिति यत्प्रत्ययः । स च 'शकि लिङ् च' इति शक्यार्थे । शक्यार्थे लिङ् स्यात् चात् कृत्या इति हि तदर्थः । 'सार्वधातुकार्धधातुकयो'रिति इकारस्य गुण एकारः । तस्याऽच्परकत्वाऽभावादप्राप्तोऽयादेशोऽत्र निपात्यते । जय्यमित्यपि पूर्ववत् । शक्यार्थे किमिति । 'शक्यार्थे' इत्यस्य किं प्रयोजनमिति प्रश्नः । क्षेतुमित्यादि । क्षेतुं नाशयितु योग्यं क्षेयं पापं, जेतुं योग्यं जेयं मन इत्यन्वयः । 'अर्हे कृत्यतृचश्चे'ति यत् । स च न शक्यार्थक इति नात्र यान्तादेश इत्यर्थः । क्रय्यस्तदर्थे । इदमपि यान्तादेशनिपातनार्थम् ।

तदर्थशब्दस्य कोऽर्थ इति चेच्छृणु—क्रय्यशब्दे यः क्रीञ्धातुः—यत्प्रत्ययप्रकृतिभूतस्तस्य योऽर्थः = अभिधेयः—द्रव्यविनिमयरूपः क्रयः, स प्रकृत्यर्थस्तच्छ-

[1] ग्राहकोंके खरीदने के लिये जो वस्तु फैलाकर बाजार में रखी जाय वह वाच्य हो तो 'क्रय्य' यह निपातन हो ।

आपणे प्रसारितं—क्रय्यम् । क्रेयमन्यत् । क्रयणार्हमित्यर्थः ॥ [1]अदेङ्गुणः १।१।२। अदेङ् च गुणसंज्ञः स्यात् ॥ [2]तपरस्तत्कालस्य ।१।१।७०। तः परो यस्मात्स च, तात्परो वा उच्चार्यमाणसमकालस्यैव संज्ञा स्यात् [ एकः पूर्वपरयोः ।६।१।४। इत्यधिकृत्य ] । [3]आद्गुणः ।६।१।८७। अवर्णादचि परे पूर्वपरयोरेको गुणादेशः स्यात् संहितायाम् । उपेन्द्रः

ब्देन विवक्षितः । तस्मै इदं तदर्थं=क्रयार्थं वस्तु । तथा च क्रयार्थे वस्तुनि ग क्रीञ्धातोर्यादौ प्रत्यये परे क्रय्य इतीदं निपात्यते इति फलति । 'यान्तः क्रीञस दर्थे' इत्येवं विधौ तु गौरवान्निपातनमाश्रितम् । क्रयार्थत्वं चात्र फलोपधाय विवक्षितमित्याह—क्रेतार इत्यादि । योग्यतामात्रग्रहणे तु तदर्थे इत्यन्यावर्त स्यादिति भावः । क्रीञः कर्मणि 'अचो यत्' इति यत् । सार्वधातुकार्द्धधातुकयो रिति गुण एकारः । अत्र एकारस्य अच्परकत्वाऽभावादनेन अयादेशविधिः क्रेयमन्यदिति । गृहान्तःस्थितंक्रयणाद्यर्थं संगृहीतं धान्यादीत्यर्थः । 'अर्हे कृत्यतृचश्च' इति यत् । अत्र अयादेशो न भवति, फलोपधानस्य क्रयार्थत्वस्य तत्राऽभावादित्यर्थः

अदेङिति । अच एङ् च—अदेङिति समाहारद्वन्द्वः । तदाह—अदेङ् चेति तपर इति । तः परो यस्मादिति बहुव्रीहिः, तात्परः—तपर इति पञ्चमीतत्पुरुषश्च तन्त्रावृत्त्यादिना चाऽत्र तपरशब्दस्योभयार्थकता । आद्यस्य फलम्—'अतो भि ऐस्' । विश्वपाभिरित्यत्र ऐस् न । द्वितीयस्य फलं—वृद्धिरादैजित्यत्र त्रिमात्रस्य वृद्धिसञ्ज्ञा नेति । तस्य = तपरतयोच्चार्यमाणस्य वर्णस्य, काल इव काल यस्यासौ—तत्कालः, तस्येति बहुव्रीहिः ।

आद्गुणः । आदिति पञ्चमी नतु तपरकरणम् । एकः पूर्वपरयोरित्यधिकृतम्

१ अ ए ओ—इनकी गुण संज्ञा हो ।

२ तकार परे है जिस ( अच् ) के, और तकार से जो परे ऐसा जो अच् सं उच्चार्यमाणसमकाल की संज्ञा हो ।

३ अवर्ण से अच् परे रहते पूर्व पर के स्थानमें एक गुणादेश हो संहिता में

[ ] अयंपाठः क्वचिदेव दृश्यते, न सर्वत्र ।

रमेशः। गङ्गोदकम्॥ [1]उपदेशेऽजनुनासिक इत्।१।३।२। उपदेशेऽनुनासिकोऽजित्संज्ञः स्यात्। *प्रतिज्ञानुनासिक्याः[2] पाणिनीयाः। लण्सूत्रस्थाऽवर्णेन सहोच्चार्यमाणो रेफो रलयोः संज्ञा॥ [3]उरण् रपरः ।१।१।५१। 'ऋ इति त्रिंशतः संज्ञे'त्युक्तं, तत्स्थाने योऽण् स रपरः सन्नेव

तदाह—अवर्णादचीत्यादिना। उपेन्द्र इति। उप—इन्द्र इति स्थिते पकाराद-कारस्य, तस्मादिकारस्य च पूर्वपरयोः कण्ठतालुस्थानकयोस्तथाविध एको गुण एकारः, आन्तरतम्यात्। अथ प्रत्याहारेषु स्ववाच्यवाच्येषूक्तां लक्षणां स्मारयितुं दीर्घविषयोदाहरणमाह—रमेश इति। रमा—ईश इति स्थिते आकारस्य, ईकारस्य च स्थाने पूर्ववदेको गुण एकारः।

गङ्गोदकमिति। गङ्गा-उदकमिति स्थिते आकारस्य उकारस्य च कण्ठोष्ठ-स्थानकतया तथाविध एको गुण ओकारः।

कृष्णर्द्धिरित्यत्र कृष्ण—ऋद्धिरिति स्थिते 'आद्गुण' इति प्राप्तम्। अत्र अकार ऋकारश्चेति द्वौ स्थानिनौ। तयोः—स्थाने अकार एकार ओकारश्चेति त्रयोऽपि गुणाः प्रसक्ताः, अकारेण स्थानिना त्रयाणामपि कण्ठस्थानसाम्याऽविशेषात्। ऋकारेण स्थानिना तु न कस्यापि स्थानसाम्यं, तस्य मूर्धस्थानकत्वात्, एतेषां च तदभावात्। एवं-तव—लृकार इति स्थितेऽपि त्रयो गुणाः प्रसक्ताः, अकारेण तेषां कण्ठस्थानसाम्याऽविशेषात्। लृकारेण तु स्थानिना न कस्यापि स्थानसाम्यं, तत्र कतमो गुणो भवतीत्याकाङ्क्षायामिदमारभ्यते—उरण्रपर इति। इत्युक्तमिति। 'अणुदित्सूत्रे' इति शेषः। 'उ' इति ऋ इत्यस्य षष्ठ्येकवचनम्। 'षष्ठी स्थाने' इति परिभाषया स्थाने इति लभ्यते। अनुवादे तत्परिभाषानुपस्थितावपि स्थानेग्रहणं ततोऽनुवर्तते। तदाह—तत्स्थाने योऽणिति। 'स्थानेऽन्तरतम' इत्यतोऽपि 'स्थाने'ग्रहणमनुवर्तते। स्थानं च प्रसङ्ग इत्युक्तम्। ततश्च प्रसङ्गाव-स्थायामित्यर्थो विवक्षितः। तदाह—रपरः सन्नेव प्रवर्तत इति। अत्र र इति

१ उपदेश अवस्था में जो अनुनासिक अच् सो इत्सञ्ज्ञक हो।

२ पाणिनिजी के कहे हुए जो वर्ण सो प्रतिज्ञा (शास्त्रकारीयव्यवहार) से ही अनुनासिक जानना। ३ तीस प्रकार का जो ऋ ( अर्थात् ऋ और लृ ) उसके स्थानमें जायमान जो अण् सो रपर ( और लपर ) होकर ही प्रवृत्त हो।

प्रवर्तते । कृष्णर्द्धिः । तवल्कारः ॥ [1]लोपः शाकल्यस्य ।८।३।१९। अवर्णपूर्वयोः पदान्तयोर्यवयोर्लोपो[1] वा स्यादशि परे॥ पूर्वत्रासिद्ध

प्रत्याहारः, तत्सिद्धिप्रकारस्तु मूले एव स्पष्टमुक्तः । ततश्च रेफशिरस्को, लकारशिरस्कश्च प्रवर्तत इति लभ्यते । अत्र—कृष्णर्द्धिरित्यत्राऽर्, तवल्कार इत्यत्राऽल् आन्तरतम्यात् । अयं भावः—त्रिषु गुणेषु प्रसज्यमानेषु अकारस्य अणो रेफलकारशिरस्कतया तस्य अर् अल् इत्येवमात्मकस्य अकारांशे स्थानिभूतेन अकारेण रेफांशे च ऋकारेण, एवम् अकारांशे स्थानिभूतेन अकारेण, लकारांशे लृकारेण च स्थानसाम्यादकारऋकारयोः स्थाने अरेव भवति । अकारलृकारयोः स्थाने अलेव भवति । एकारौकारौ तु गुणौ न भवत एव, तयोः—ऋकारेण लृकारेण च स्थानसाम्याभावादिति । न च एकार ओकारश्च कथं रपरौ न स्यातामिति वाच्यम्, पूर्वेणैव णकारेण ह्यत्राऽण् ग्रहणात्, प्रशास्तॄणामित्यादिनिर्देशात् 'रेफः स्वरमधो याति हलश्चोर्ध्वं च तिष्ठती'ति न्यायाच्च रेफस्योर्ध्वंगतिः ।

हरे-इह, विष्णो-इह, श्रियै-उद्यतः, गुरौ-उत्क इत्यत्र एचां क्रमेण अयवायावादेशेषु कृतेषु यकारवकारयोर्वैकल्पिकं लोपं विधत्ते—लोपः शाकल्यस्येति । 'भोभगो' इत्यतः—अपूर्वस्येति, अशीति चानुवर्तते । 'व्योर्लघुप्रयत्न'त्यतो व्योरित्यनुवर्तते । वकारयकारयोरित्यर्थः । अपूर्वस्येति च व्योरित्यस्य विशेषणम् । अवर्णः पूर्वो यस्मात् स—अपूर्वः । अपूर्वस्य वस्य यस्य चेति प्रत्येकमन्वयाभिप्रायमेकवचनम् पदस्येत्यधिकृतम्—अवर्णपूर्वकाभ्यां यकारवकाराभ्यां विशेष्यते । विशेषणत्वाच्च व्योरित्यत्र तदन्तता लभ्यते । ततश्च अवर्णपूर्वो यो वकारो, यकारश्च तदन्तस्य पदस्य लोपः स्यादशि परत इत्यर्थः । अलोऽन्त्यपरिभाषया तादृशपदान्तस्येति लभ्यते शाकल्यग्रहणान्मतान्तरे न भवतीति गम्यते । ततश्च फलितमाह—अवर्णपूर्वयोरित्यादिना । व्योरित्यनुवृत्तावपि वर्णसमाम्नाये यकारस्य प्राथम्यात्—यवयोरित्युक्तम्।

पूर्वत्रेति । यदीदं सूत्रं विधिः स्यात्तर्हि पूर्वत्र शास्त्रे परं शास्त्रमसिद्धमित्यर्थ

१ अवर्ण पूर्वक जो पदान्तस्थ यकार वकार उनका लोप हो, विकल्प करके, अश् परे रहते ।

१ 'यवयोर्वा लोपोऽशि परे' इति पाठान्तरम् ।

८।२।१। [ [1]अधिकारोऽयम् । तेन ] [2]सपादसप्ताध्यायीं प्रति त्रिपाद्य-सिद्धा, त्रिपाद्यामपि पूर्वं प्रति परं शास्त्रमसिद्धम् । हर इह । हरयिह । विष्ण इह । विष्णविह ॥ [3]वृद्धिरादैच् ।१।१।१। आदैच्च वृद्धिसंज्ञः स्यात् ॥ [4]वृद्धिरेचि ।६।१।८८। आदेचि परे वृद्धिरेकादेशः स्यात् । गुणापवादः । कृष्णैकत्वम् । गङ्गौघः । देवैश्वर्यम् । कृष्णौत्कण्ठ्यम् ॥

[5]एत्येधत्यूठ्सु ।६।१।८९।अवर्णादेजाद्योरेत्येधत्योरूठि च परे पूर्व-

लभ्येत, तथा च सपादसप्ताध्यायीं प्रति त्रिपाद्यसिद्धेत्येवार्थो लभ्यते, 'त्रिपाद्या-मपी'त्यर्थो नैव लभ्येत, एवञ्च 'मोऽनुस्वार' इति त्रैपादिकं शास्त्रं प्रति 'मय उञ' इति परत्रैपादिकं नासिद्धं स्यादत आह—अधिकार इति । अयम्=अयं विधिः । अयञ्च [ ] बन्धनागतः पाठो न सार्वत्रिकः ।

वृद्धिरेचि । 'आद्गुण' इत्यत आदिति पञ्चम्यन्तमनुवर्तते । एकः पूर्वपरयो-रित्यधिकृतम् । तदाह—आदेचीत्यादिना । गुणापवाद इति । 'आद्गुण' इति प्राप्तावेतदारम्भादिति भावः । कृष्णैकत्वमिति । कृष्णस्य—एकत्वमिति षष्ठी-समासः । 'पूरणगुणे'-ति निषेधस्त्वनित्य इति तत्रैव सिद्धान्तकौमुद्यां स्पष्टम् । कृष्णेति सम्बुद्ध्यन्तं पृथक्पदमित्यन्ये । अत्र अकारस्य च कण्ठतालुस्थानकस्य स्थाने तथाविध ऐकार एकादेशः । गङ्गा—ओघ इति स्थिते अकारस्य ओकारस्य च कण्ठोष्ठस्थानकस्य स्थाने तथाविध औकारः । एवं देवैश्वर्यम्, कृष्णौत्कण्ठ्यमि-त्यत्रापि । वस्तुतस्तु संख्यादिशब्दा न गुणवचनाः ।

एत्येधत्यूठ्सु । एतिश्च एधतिश्च ऊठ्चेति विग्रहः । एतीति एधतीति च 'इक्श्तिपौ धातुनिर्देशे' इति श्तिपा निर्देशः । इण् गताविति, एध वृद्धाविति च

१ अयं पाठो लिखितेषु क्वापि नास्ति । २ सपादसप्ताध्यायीस्थ शास्त्र की दृष्टिमें त्रिपादीस्थ शास्त्र असिद्ध हो और त्रिपादीमें भी पूर्व शास्त्रकी दृष्टिमें पर शास्त्र असिद्ध हो । ३ आ ऐ औ—इनकी वृद्धि संज्ञा हो ।

४ अवर्ण से एच् परे रहते पूर्व पर के स्थान में वृद्धिरूप एकादेश हो ।

५ अवर्ण से एजादि एति ( इण्धातु), एधति (एधधातु) और ऊठ् परे रहते पूर्वपरके स्थानमें वृद्धि रूप एकादेश हो ।

परयोर्वृद्धिरेकादेशः स्यात्। पररूपगुणापवादः। उपैति। उपैधते। प्रष्ठौह

---

धातू अत्र विवक्षितौ। एचीत्यनुवर्तते। 'यस्मिन्विधिः' इति तदादिग्रहणम् ततश्च एजादाविति लभ्यते। तच्च एत्येधत्योरेव विशेषणं, न तु ऊठः, असंभवात् एकः पूर्वपरयोरित्यधिकृतम्। 'आद्गुण' इत्यत आदिति पञ्चम्यन्तमनुवर्तते तदाह- –अवर्णादित्यादिना।

पररूपगुणापवाद इति। एत्येधत्योरेङि पररूपमित्यस्य, ऊठि आद्गुण इत्यस्यायमपवाद इत्यर्थः। यदि हि वाहः सम्प्रसारणमेव विधीयेत न ऊठ्, तर्हि वस्य संप्रसारणेन उत्वे कृते, सम्प्रसारणाच्चेति पूर्वरूपे च तस्य लघूपधगुणो न स्यात्, तस्मिन् कर्तव्ये बहिर्भूतशस्प्रत्ययापेक्षभसंज्ञापेक्ष सारणाश्रितपूर्वरूपस्य बहिरङ्गतया अत्राऽसिद्धत्वात। तथा च गुणाऽभावे प्रष्ठ आह्-अस्- इति स्थिते पूर्वरूपे, प्रष्ठ---उह् अस् इति स्थिते 'आद्गुण' इति ओकारे, विभक्तिकार्ये च 'प्रष्ठोह' इति स्यात्। संप्रसारणसंज्ञकस्य ऊठो तु प्रष्ठ ऊ आह् अस् इति स्थिते पूर्वरूपे, लघूपधगुणस्याऽप्रसक्ततया ओ स्याऽभावादूकारस्यैव सत्त्वात् वृद्धिरेचीत्यस्याऽप्रसक्तेराद्गुण इति गुणे तं बाधित्वा एत्येधत्यूठ्स्विति वृद्धौ विभक्तिकार्ये च प्रष्ठौह इति सिध्य त्यूठ्ग्रहणमावश्यकमिति।

उपैतीति। इण्धातोर्लट्। तिप्। शप्। लुक्। 'सार्वधातुकार्धधातुक इति इकारस्य गुण एकारः। उप-एतीति स्थिते अनेन वृद्धिः। उपैधत इति एधधातोर्लट्। आत्मनेपदं, तादेशः, शप्। 'टित आत्मनेपदानाम्' इत्येत्वम् उप-एधते इति स्थिते अनेन वृद्धिः। प्रष्ठौह इति। प्रष्ठं वहतीति प्रष्ठवाह् तस्य प्रष्ठौहः। 'वहश्च' इति ण्विः। 'वेरपृक्तस्य' इति वलोपः। 'अत उपधाया इति वृद्धिः। ततः शसि 'वसोः संप्रसारण'मित्यतः संप्रसारणमित्यनुवृत्तौ ऊठ्' इति संप्रसारणसंज्ञकस्य ऊठः 'सम्प्रसारणाच्चे'ति पूर्वरूपम्। प्रष्ठ ऊह् इति स्थिते अनेन वृद्धिरौकारः। विभक्तिकार्यम्।

उपेत इति। इण्धातोर्लट् तस् शप् लुक्। सार्वधातुकमपि'दिति

एजाद्योः किम् ? उपेतः । मा भवान्प्रेदिधत् । *स्वादीरेरिणोः[1] । स्वैरम् । स्वैरी । स्वैरिणी । *अक्षादूहिन्यामुपसंख्यानम्[2]। अक्षौहिणी

ङित्त्वात् तस्मिन् परत इकारस्य न गुणः । तथा च अत्र इण्धातोरेजादित्वाभावात्तस्मिन् परतो न वृद्धिः । मा भवान्प्रेदिधदिति । एधधातोर्णिच् । लुङ् । तिप् । 'नित्यं ङितः' इति इकारलोपः । 'णिश्रिद्रुस्रुभ्य' इति चङ् । 'णौ चङ्यु पधाया ह्रस्वः' । 'चङि' इत्यजादेर्द्वितीयस्य धिशब्दस्य द्वित्वम् । 'अभ्यासे चर्चे' ति जश्त्वम् । 'न माङ्योगे' इत्याडभावः । भवच्छब्दयोगात् प्रथमः पुरुषः ।

स्वादीरेरिणोः। स्वशब्दादीरशब्दे, ईरिन्शब्दे च परे पूर्वपरयोरचोर्वृद्धिरेकादेशः स्यादित्यर्थः । स्वैर इति । ईर गतौ । भावे घञ् । स्वेन छन्देन ईर इति विग्रहः । 'कर्तृकरणे कृता बहुलम्' इति समासः । स्व–ईर इति स्थिते आद्गुण इति गुणे प्राप्ते अनेन वार्त्तिकेन वृद्धिः ।

स्वैरीति । स्वेन = छन्देन ईरितुं = संचरितुं शीलमस्येत्यर्थे 'सुप्यजाता' विति णिनिः । स्वच्छन्दचारीत्यर्थः । उपपदसमासः । स्व—ईरिन् इति स्थिते गुणे प्राप्ते अनेन वृद्धिः । स्वैरिणीति । प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणात् । मूलेऽपि क्वचिदयं पाठो ( न ) दृश्यते ।

अक्षादूहिन्यामुपसंख्यानमिति । अत्र 'अक्षादूहिन्याम्' इत्येव लिखितपुस्तके पाठः । आदिति, अचीति, वृद्धिरिति चानुवर्तते । एकः पूर्वपरयोरिति च । ऊह् वितर्के । ऊहनमूहः, सोऽस्यास्तीत्यूहिनी । अक्षशब्दादूहिनीशब्दे परे पूर्वपरयोरचोः—वृद्धिरेकादेशः स्यादित्यर्थः । अक्षौहिणीति मत्वर्थीय इनिः । नान्तत्वान्ङीप् । अक्षाणामूहिनीति विग्रहः । परिमाणविशेषविशिष्टा सेना

१ स्वशब्दान्त्यावयव अवर्ण से ईर और ईरिन्शब्दाद्यवयव अच् परे रहते पूर्व परके स्थानमें वृद्धिरूप एकादेश हो ।

२ अक्षशब्दान्तावयव अवर्णसे ऊहिनीशब्दाद्यवयव अच् परे रहते पूर्वपरके स्थानमें वृद्धिरूप एकादेशहो ।

सेना। *प्रादूहोढोढ्येषैष्येषु[1] । प्रौहः । प्रौढः । प्रौढिः । प्रैषः । प्रैष्यः । *ऋते च तृतीयासमासे[2] । सुखेन ऋतः—सुखार्तः । तृतीयेति किम् ? परमर्त्तः ।

---

अक्षौहिणी । 'पूर्वपदात् संज्ञायाम्' इति णत्वम् । अक्ष—ऊहिनीति स्थिते आद्गुणं इति गुणे प्राप्ते अनेन वार्तिकेन वृद्धिः ।

प्रादूहोढोढ्येषैष्येषु । प्र इत्युपसर्गात् ऊह, ऊढि, एष, एष्य, एतेषु प[…] पूर्वपरयोरचोर्वृद्धिरेकादेशः स्यादित्यर्थः । प्रौह इति । ऊह वितर्के । भावे घञ् […] गतिसमासः । प्र–ऊह इति स्थिते अनेन वार्तिकेन वृद्धिः । प्रौढ इति । […] प्रापणे, क्तः । 'वचिस्वपी'ति सम्प्रसारणम् । पूर्वरूपम् । 'हो ढ' इति ढत्वम् । 'झषस्तथोर्धोऽधः' इति धत्वम् । ष्टुत्वम् । 'ढो ढे लोपः' । 'ढ्रलोपे' इति दीर्घः । प्र […] इति स्थिते आद्गुण इति गुणे प्राप्ते अनेन वचनेन वृद्धिः ।

प्रौढिरिति । वहधातोः क्तिन् । ढत्वधत्वष्टुत्वढलोपदीर्घाः । प्र-ऊढि […] स्थिते आद्गुणइति गुणं बाधित्वा अनेन वृद्धिः ।

ऋते च तृतीयासमासे । तृतीयासमासे—अकारात् ऋतशब्दे परे पूर्व[…] योरचोर्वृद्धिः स्यादित्यर्थः । सुखेन–ऋत इति विग्रहप्रदर्शनम् । ऋ गतौ । 'ग[…] र्थाकर्मके'ति कर्तरि क्तः । प्रकृत्यादित्वादभेदे च तृतीया । 'सुप्सुपे'ति समास[…] सुख–ऋत इति स्थिते गुणे प्राप्ते अनेन वृद्धिराकारः । रपरत्वे च सुखार्त इ[…] रूपम् । समासग्रहणस्य उदाहृतविग्रहवाक्यमेव प्रत्युदाहरणं दर्शितप्रायमिति वि[…] विहाय तृतीयेत्यंशस्य प्रयोजनं पृच्छति—तृतीयेति किमिति । परमर्त इति […] परमश्चासौ ऋतश्चेति कर्मधारयः । 'आद्गुणः' । प्रवत्सतरेति । पञ्चम्यर्थे ष[…] प्र, वत्सतर, कम्बल, वसन, दशन्, ऋण—एतेभ्यां ऋणशब्दे परे पूर्वपरयोर[…]

---

१ प्रशब्दान्तावयव अवर्णसे–ऊह, ऊढ, ऊढि, एष, एष्य–एतच्छब्दा[…] वयव अच् परे रहते पूर्वपरके स्थानमें वृद्धिरूप एकादेश हो ।

२ यत्किञ्चित्शब्दान्तावयव अकारसे ऋतशब्दाद्यवयव अच् परे र[…] पूर्वपरके स्थानमें वृद्धिरूप एकादेश हो, तृतीयासमास में ।

* [1]प्रवत्सतरकम्बलवसनार्णदशानामृणे । प्रार्णमित्यादि ॥

[2]उपसर्गाः क्रियायोगे ।१।४।५९। प्रादयः क्रियायोगे उपसर्गसंज्ञाः स्युः । प्र । परा । अप । सम् । अनु । अव । निस् । निर् । दुस् । दुर् । वि । आङ् । नि । अधि । अपि । अति । सु । उत् । अभि । प्रति । परि । उप—एते प्रादयः ॥

[3]भूवादयो धातवः ।१।३।१। क्रियावाचिनो भ्वादयो धातुसंज्ञाः स्युः ॥ [4]उपसर्गादृति धातौ ।६।१।९१। अवर्णान्तादुपसर्गा-

---

द्वृद्धिरेकादेशः स्यादित्यर्थः । प्रार्णमिति । प्रगतमृणमिति विग्रहे 'प्रादयो गताद्यर्थे प्रथमये'ति गतिसमासः । प्र-ऋणम् इति स्थिते गुणं बाधित्वा अनेन वार्तिकेन वृद्धिराकारः । रपरत्वम् । वत्सतरः = शिशुर्वत्सः, तस्य ऋणमिति विग्रहः । वत्सतरमधिकृत्य वा, तद्ग्रहणार्थं वा यदृणं गृह्यते तत्—वत्सतरार्णम् । एवमग्रेऽपि द्रष्टव्यम् । आदिशब्देन—कम्बलार्णं, वसनार्णं, दशार्णम्, ऋणार्णमिति च गृह्यते । सर्वत्र षष्ठीसमासः ।

भूवेति । भूश्च वाश्च भूवौ, आदिश्च आदिश्च—आदी । भूवावादी येषान्ते भूवादयः । तत्र—एक आदिशब्दः प्रभृत्यर्थः, अपरः प्रकारार्थः । तेन भूप्रभृतयो, वासदृशा इत्यर्थः ।

उपसर्गादृति । 'आद्गुण' इत्यत आदिति पञ्चम्यन्तमनुवर्तते । तच्च उपसर्गविशेषणम्, अतस्तदन्तविधिः । तेन अकारान्तादिति लभ्यते । ऋतीति धातो-

---

१ प्र, वत्सतर, कम्बल, वसन और ऋण—इन शब्दों के अन्तावयव अकार से ऋणशब्दाद्यवयव अच् परे रहते पूर्व पर के स्थान में वृद्धिरूप एक आदेश हो ।

२ क्रिया के योग में प्रादि २२ उपसर्गसंज्ञक हों ।

३ क्रियावाची जो भू आदि सो धातुसंज्ञक हों ।

४ अवर्णान्त उपसर्ग से ऋकारादि धातु परे रहते पूर्व पर के स्थान में वृद्धि रूप एकादेश हो ।

ऋकारादौ धातौ परे वृद्धिरेकादेशः [1]स्यात्। [[2]उपार्च्छति]। प्रार्च्छति
[3]**वा सुप्यापिशलेः**।६।१।९२। आदुपसर्गादृकारादौ सुब्धातौ प
वृद्धिर्वा [1]स्यात्। आपिशलिग्रहणं पूजार्थम्।

[4]**अचो रहाभ्यां द्वे**।८।४।४६। अचः पराभ्यां रेफहकाराभ्यां
परस्य यरो द्वे वा स्तः। इति प्राप्ते—[5]**शरोऽचि**।८।४।४९। [[2]अचि

विशेषणम्। 'यस्मिन्विधि'रिति तदादिविधिः ततश्च ऋकारादाविति लभ्यते। 'वृद्धिरेची'त्यतो 'वृद्धि'रिति चानुवर्तते। 'एकः पूर्वपरयो'रित्यधिकृतं। तदाह—अवर्णान्तादित्यादिना। एकादेश इति। 'पूर्वपरयोरचो'रिति शेषः। अन्यथा उपसर्गस्य धातोश्च सर्वादेशः स्यात्। उपार्च्छति। प्रार्च्छतीति। उप ऋच्छति प्र ऋच्छति इति स्थिते आद्गुण इति गुणे प्राप्ते अनेन वृद्धिः, रपरत्वम्।

वा सुपि। 'उपसर्गादृति धाता'विति पूर्वसूत्रमनुवर्तते। 'आद्गुण' इत्यतः 'वृद्धिरेची'त्यतश्च आदिति वृद्धिरिति चानुवर्तते। आदित्यनेन उपसर्गादि विशेष्यते इति तदन्तविधिः। प्रत्ययग्रहणपरिभाषया सुप्शब्देन सुबन्तप्रकृतिः धातुर्विवक्षितः। 'एक पूर्वपरयो'रिति चाधिकृतं, तदाह—अवर्णान्तादित्यादिना। सुब्धाताविति। सुबन्तप्रकृतिके धातौ परत इत्यर्थः,सुबन्तस्य धातोरसंभवात्। एकादेश इति। 'पूर्वपरयोरचो'रिति शेषः। यद्यपि ऋच्छ गतावित्यादीनां क्वि धातुत्वं, सुबन्तत्वं च संभवति, तथापि तुल्यास्यसूत्रभाष्ये उपार्कारीयतीत्यादेरेव दुदाहरणत्वेन उक्तत्वात् सुबन्तप्रकृतिके इत्येव व्याख्यानमुचितम्।

ननु वाग्रहणादेव सिद्धे आपिशलिग्रहणं व्यर्थमित्यत आह—आपिशलिग्रहणमिति। आपिशलेराचार्यस्याप्ययमर्थः संमत इत्यादेर्लाभार्थमित्यर्थः। प्रार्षभ

१ स्यादिति क्वचिन्न। २ अयं पाठ एकत्रादर्शे दृश्यते, नापरत्र।

३ अवर्णान्त उपसर्ग से ऋकारादि सुब्धातु ( नामधातु ) परे रहते वृद्धिरू एकादेश विकल्प करके हो। ४ अच् से परे जो रेफहकार, उससे परे जो य उसको द्वित्व हो विकल्प करके।

५ अच् परे रहते शर् को द्वित्व नहीं हो।

परे शरो ] द्वे न [ [1]स्तः ]। प्रार्षभीयति। प्रर्षभीयति ॥

एङि [2]पररूपम् ।६।१।९४। आदुपसर्गादेङादौ धातौ परे पररूपमेकादेशः स्यात्[3]। प्रेजते। उपोषति ॥

[4]अचोऽन्त्यादि टि ।१।१।६४। अचां मध्ये योऽन्त्यः स आदिर्यस्य तट्टिसंज्ञं स्यात्। *शकन्ध्वादिषु पररूपं वाच्यम्[5]। तच्च टेः।

---

यतीति। ऋषभमात्मन इच्छतीत्यर्थे 'सुप आत्मनः क्यच्' इति क्यच्। 'सनाद्यन्ताः' इति धातुत्वम्। 'सुपो धातुप्रातिपदिकयोः' इति सुपो लुक्, 'क्यचि च' इति ईत्वम्। लट्, तिप्, शप्, पररूपम्। प्र-ऋषभीयति इति स्थिते अनेन वृद्धिराकारः। रपरत्वम्। प्रार्षभीयतीति। वृद्ध्यभावपक्षे 'आद्गुणः'। रपरत्वम्।

एङि पररूपम्। 'उपसर्गा'दिति, धाताविति चानुवर्तते। आदित्यनुवृत्तमुपसर्गादित्यस्य विशेषणमिति तदन्तविधिः। 'यस्मिन् विधि'रिति परिभाषया तदादिग्रहणम्। 'एकः पूर्वपरयो'रिति चाधिकृतं, तदाह—अवर्णान्ताद्दित्यादिना। एकादेश इति। 'पूर्वपरयो'रिति शेषः। प्रेजत इति। एजृ दीप्तौ। 'एजृ कम्पने' इति तु परस्मैपदी। प्र एजते इति स्थिते 'वृद्धिरेची'ति वृद्धिं बाधित्वा अनेन पररूपमेकारः। उपोषतीति। उष दाहे, लट् तिप् शप्। लघूपधगुणः। उप-ओषतीति स्थिते वृद्धिं बाधित्वा अनेन पररूपमोकारः।

अथ क्वचित् टेः पररूपं विधातुं टिसंज्ञामाह—अचोऽन्त्यादि टि। 'अच' इति निर्धारणे षष्ठी। जातावेकवचनम्। अन्ते भवः—अन्त्यः,—आदिर्यस्य

---

१ अयं पाठः क्वचिदेव दृश्यते।

२ अवर्णान्त उपसर्ग से एङादि धातु परे रहते पूर्व पर के स्थान में पररूप एकादेश हो।

३ 'स्या'दिति एकस्मिँल्लिखितादर्शे न दृश्यते।

४ अचोंके मध्यमें जो अन्त्य अच् वह आदि में है जिसके—उसकी टि संज्ञा हो।

५ शकन्ध्वादिकी सिद्धिके अनुगुण पररूप हो और वह 'टि'के स्थानमें हो।

**शकन्धुः । कर्कन्धुः । कुलटा । *सीमन्तः केशवेशे[1] । सीमान्तोऽन्यः । मनीषा । हलीषा । लाङ्गलीषा । पतञ्जलिः ।**

तत् अन्त्यादीति विग्रहः । फलितमाह—अचां मध्य इत्यादिना । शकन्ध्वादिष्विति । शकन्ध्वादिगणपठितेषु विषये तत्सिद्ध्यर्थं पूर्वपरयोः पररूपं वक्तव्यमित्यर्थः । ततश्च शकादिशब्दानां टेरचि परे, टेश्च परस्याचश्च स्थाने पररूपमेकादेश इत्यर्थाल्लभ्यते । आदित्यनुवृत्तौ तु शकन्ध्वादिगणे 'सीमन्त' इत्यादिकतिपयरूपाणामसिद्धिः । तदाह—तच्च टेरिति । शकन्ध्वादिगणं पठति—शकन्धुरित्यादिना । शकानां=देश(सीदियन-'स्वेजनहर')विशेषाणाम्, अन्धुः=कूप इति विग्रहः । शक–अन्धु इति स्थिते सवर्णदीर्घे प्राप्ते अनेन पररूपम् । अत्र शकशब्दे द्वावचौ, तत्र अन्त्यः—अच् 'ककारादकारः, तदादिरकार एव 'आद्यन्तवदेकस्मिन्' इति वचनात् । एवमग्रेऽपि द्रष्टव्यम् । कर्कन्धुरिति । कर्काणाम् अन्धुरिति विग्रहः । कर्क–अन्धु–इति स्थिते पररूपम् । कुलटेति । अट गतौ । अटतीत्यटा । पचाद्यच् । टाप् । कुलानाम्—अटेति विग्रहः । भिक्षार्थं व्यभिचारार्थं वा या गृहानटति सा कुलटा । कुलान्यटतीति विग्रहे तु कर्मण्यण्, टिड्ढाणञिति ङीपि कुलाटीति स्यात् । कुल–अटेति स्थिते पररूपम् । सीमन्तः केशवेश इति । शकन्ध्वादिगणान्तर्गतवार्तिकमेतत् । केशानां वेशः=सन्निवेशविशेषः, तस्मिन् गम्ये सीमन्शब्दस्य टेः–'अन्' इत्यस्य, अन्तशब्दस्थाऽवर्णस्य च स्थाने पररूपमित्यर्थः । आदित्यनुवृत्तौ तु इदं न सिध्येत् । सीमान्तोऽन्य इति । ग्रामान्तप्रदेश इत्यर्थः । मनीषेति । मनस ईषेति विग्रहः । अत्र अस् इति टेः, ईकारस्य च स्थाने पररूपमीकारः । 'ईष गतौ' । 'गुरोश्च हलः' इत्यप्रत्ययः । टाप् । 'बुद्धिर्मनीषा धिषणा' इत्यमरः । हलीषेति । 'ईषा लाङ्गलदण्डः स्यात्' इत्यमरः । हलस्य ईषेति विग्रहः । अत्र करिकलभ इतिवत् पुनरुक्तिः समाधेया । अत्र गुणे प्राप्ते पररूपम् । एवं लाङ्गलीषेत्यत्रापि । पतञ्जलिरिति । पतन्—अञ्जलिर्यस्मिन्नमस्कार्यत्वादिति विग्रहः । अत्र अत् इति टेः, अकारस्य च स्थाने पररूपमकारः ।

---

१ केश का सन्निवेषविशेष वाच्य हो तो 'सीमन्त' यह पररूपघटित निपातन हो ।

[1]*सारङ्गः पशुपक्षिणोः । साराङ्गोऽन्यः । आकृतिगणोऽयम् ।

*एवे[2] चानियोगे । [ [3]अवर्णादेवशब्दे परेऽनियोगे वाच्ये पूर्वपरयोः स्थाने पररूपमेकादेशः स्यात् ]। क्वेव भोक्ष्यसे । नियोगोऽवधारणम् । अनवक्लृप्तावेवशब्दः । अनियोगे किम् ? तवैव ।

केचित्तु—गोनर्दाख्यदेशे कस्यचिद्द्वेषः सन्ध्योपासनसमये अञ्जलेर्निर्गत इत्यैतिह्यात्—अञ्जलेः पतन्निति विगृह्णन्ति । मयूरव्यंसकादित्वात् समासः । सारङ्गः पशुपक्षिणोरिति । इदमपि शकन्ध्वादिगणान्तर्गतं वार्तिकम् । भाष्ये तु न दृश्यते । सारशब्द उत्कृष्टे । 'सारो बले स्थिरांशे च न्याय्ये क्लीबं वरे त्रिषु' इत्यमरः । साराणि अङ्गानि यस्येति विग्रहः । सार अङ्ग इति स्थिते सवर्णदीर्घे प्राप्ते अनेन पररूपम् । 'चातके हरिणे पुंसि सारङ्गः शबले त्रिषु' इत्यमरः ।

आकृतिगणोऽयमिति । आकृत्या=एवंजातीयकतया निर्णेतव्योऽयं गण इत्यर्थः । लोकप्रयोगानुसारेण एवंजातीयकाः शब्दा अस्मिन् गणे निवेशनीया इति यावत् । तत्फलमाह—मार्तण्ड इति । मृतादण्डादागतो मार्तण्डः । मृत—अण्ड इति स्थिते सवर्णदीर्घं बाधित्वा अनेन पररूपम् । ततः अपत्ये अणि मार्तण्डः । 'परामार्ताण्डमास्थत्' इति सवर्णदीर्घस्तु च्छान्दसः ।

एवे चानियोगे । नियोगशब्दं व्याचष्टे — नियोगोऽवधारणमिति । अवधारणम् = अन्ययोगव्यवच्छेदः । तदन्यस्मिन्नर्थे य एवशब्दः, तस्मिन्नकारात् परे पूर्वपरयोः पररूपमेकादेशः स्यादित्यर्थः । क्वेव भोक्ष्यस इति । अत्रेति न निश्चिनुम इत्यर्थः । क्व एव इति स्थिते वृद्धिं बाधित्वा अनेन वार्तिकेन पररूपमेकारः । अनवक्लृप्तावेवेति । अनवक्लृप्तिः=अनवधारणम् । तथाच अनवधारणे इह एवशब्द इति ध्येयम् । तवैवेति । नान्यस्येत्यर्थः । अत्र एवशब्दस्य अवधारणार्थत्वान्न तस्मिन् परे पररूपम् ।

१ पशु और पक्षी वाच्य हो तो 'सारङ्ग' यह पररूपघटित निपातन हो ।

२ अवर्ण से एव शब्द परे रहते पूर्वपर के स्थान में पररूप एकादेश हो । अनिश्चय गम्यमान हो तो ।

३ [ ] एतदन्तर्गता वृत्तिरेकस्मिँल्लिखितादर्शे एव दृश्यते, न द्वितीयादर्शे ।

*ओत्वोष्ठयोः [1]समासे वा। स्थूलोतुः। स्थूलौतुः। बिम्बोष्ठः। बिम्बौष्ठः। समासे किम्? तवौष्ठः॥

[2]ओमाङोश्च।६।१।९५। ओमि आङि चाऽऽत् [ परे ] पररूपमेकादेशः स्यात्। शिवायों नमः। [ शिव[3]–आ–इहि–इति स्थिते–] शिव एहि। शिवेहि॥ [4]अकः सवर्णे दीर्घः।६।१।१०१। [ अकः सवर्णेऽ

ओत्वोष्ठयोः। अवर्णात् ओतुशब्दे, ओष्ठशब्दे च परे पूर्वपरयोरचोः पररूपं वक्तव्यमित्यर्थः। स्थूलोतुरिति। 'ओतुर्बिडालो मार्जारः' इत्यमरः। स्थूल—ओतुरिति स्थिते वृद्धिं बाधित्वा पाक्षिकं पररूपम्। बिम्बोष्ठ इति। बिम्बफल(कुन्दरु)वत् रक्तवर्णौ ओष्ठौ यस्येति विग्रहः।

ओमाङोश्च। ओम् च आङ्चेति विग्रहः। आदिति, पररूपमिति चानुवर्तते एकः पूर्वपरयोरिति च, तदाह—ओमीत्यादिना। शिवायों नम इति। अत्र वृद्धिं बाधित्वा पररूपम्। शिवेहीति। आ—इहीति स्थिते गुणे एहीति रूपम्। तत्र शिव एहि इति स्थिते वृद्धिं बाधित्वा पररूपमेकारः। नच शिव—आ—इहीति स्थिते सवर्णदीर्घे कृते, पश्चाद् गुणे, शिवेहीति रूपसिद्धेराङ्ग्रहणं व्यर्थमिति वाच्यं 'धातूपसर्गयोः कार्यमन्तरङ्गम्' इति न्यायेन प्रथमं 'आद्गुण' इति गुणे कृते शिव एहीति स्थिते, वृद्धौ प्राप्तायां तन्निवृत्त्यर्थं तस्यावश्यकत्वात्। भाष्ये तु—आ—ऋश्यात्, गुणः, अर्श्यात्, अद्य अर्श्यात् अद्यर्श्यादित्यत्र सवर्णदीर्घनिवृत्त्यर्थमाङ्ग्रहणमिति स्थितम्। 'शिव आ इहीति स्थिते' इति मुद्रितेष्वधिकः पाठो दृश्यते, स न लिखितः।

अकः सवर्णे। अक इति पञ्चमी। इको यणचीत्यतः—अचीत्यनुवर्तते एकः पूर्वपरयोरित्यधिकृतम्। तदाह—अकः सवर्णेऽचीत्यादिना।

---

[1] अवर्ण से ओतुशब्द और ओष्ठशब्दका आद्यवयव अच् परे रहते पूर्वपरके स्थान में पररूप एकादेश हो विकल्प करके समास में।

[2] अवर्णसे ओम् और आङ् परे रहते पूर्वपरके स्थानमें पररूप एकादेश हो।

[3] [ ] मूले एतदन्तर्गतः पाठो लिखितादर्शे क्वापि न दृश्यते।

[4] अक् से सवर्ण अच् परे रहते पूर्व परके स्थानमें सवर्ण दीर्घ एकादेश हो

परे दीर्घ ] एकादेशः स्यात् । दैत्यारिः । श्रीशः । विष्णूदयः । [* [1]ॠति सवर्णे ॠ वा । होतृकारः । होतॄकारः । ] [2]एङः पदान्तादति । ६ । १ । १०९ । पदान्तादेङोऽति परे पूर्वरूपमेकादेशः स्यात् । हरेऽव । विष्णोऽव ॥ [3]सर्वत्र विभाषा गोः । ६ । १ । १२२ । लोके वेदे चैङन्तस्य गोरति वा

दैत्यारिरिति । दैत्य—अरिः इति स्थिते द्वयोरकारयोरेको दीर्घ आकारः, स्थानसाम्यात् । श्री—ईश इति स्थिते ईकारयोरेक ईकारः । विष्णु—उदय इति स्थिते उकारयोरूकारः ।

[ 'ॠति ॠ वा' इति वार्तिकमकः सवर्ण इत्यतोऽनुवृत्तसवर्णपदेन योजयित्वा पठति—ॠति सवर्णे ॠ वा । 'अक' इत्यनुवर्तते । 'एकः पूर्वपरयो'रिति च । अकः सवर्णे ॠति परे पूर्वपरयोः स्थाने अज्भक्तिरेफद्वयवान् विलक्षणः 'ॠ' इत्येकादेशः स्यादित्यर्थः । होतृकार इति । होतृ—ॠकार इति स्थिते अनेन द्वयोॠकारयोः स्थाने ॠकारविलक्षणो नृसिंहवत् द्वयन्तरात्मा ह्रस्व ॠकारो नाम रेफद्वयवान् कश्चिद्वर्णो भवति । एतदभावपक्षे रूपं दर्शयति—होतॄकार इति । अकः सवर्ण इति दीर्घः । अयं च पाठो लिखिते नैव दृश्यते ] ।

एङः पदान्तादति । 'अमि पूर्व' इत्यतः पूर्व इत्यनुवर्तते । एकः पूर्वपरयोरित्यधिकृतम् । तदाह—पदान्तादित्यादिना । हरे—अव इति स्थिते अयादेशं बाधित्वा पूर्वरूपमेकारः । एवं—विष्णो अवेत्यत्र अवादेशं बाधित्वा पूर्वरूपमोकारः ।

सर्वत्र विभाषा । पदान्तादित्यनुवर्तते । 'प्रकृत्यान्तःपाद'मित्यतः प्रकृत्येत्यनुवर्तते । प्रकृत्या = स्वभावेन, निर्विकारस्वरूपेण अवतिष्ठते इत्यर्थः । 'यजुष्युर'

[ ] एतदन्तर्गतः पाठो लिखितादर्शे क्वापि नास्ति ।

१ ॠकाररूप अक् से ॠकाररूप सवर्ण अक् परे रहते पूर्व पर के स्थान में रेफद्वय तथा उभयतः अज्भक्तिमान् नृसिंहवत् विलक्षण ह्रस्व ] ॠकार आदेश हो विकल्प करके ।

२ पदान्त एङ् से ह्रस्व अकार परे रहते पूर्वपरके स्थानमें पूर्वरूप एकादेश हो।

३ पदान्त में एङन्त गो शब्द को ह्रस्व अकार परे रहते प्रकृतिभाव हो, विकल्प करके, लोक और वेद में ।

प्रकृतिभावः [[1]स्यात् ] पदान्ते[2] । गोअग्रम् । गोऽग्रम् । एङन्तस्य किम्? चित्रग्वग्रम् । पदान्ते किम् ? गोः ॥ [2]अनेकाल् शित्सर्वस्य ।१।१।५५ [ अनेकालादेशः शिच्च सर्वस्यैवं स्यात् ] । इति प्राप्ते ॥ [3]ङिच्च ।१।१। ५३। ङिदनेकालप्यन्तस्यैव स्यात् ॥

[4]अवङ् स्फोटायनस्य ।६।१।१२३। पदान्ते एङन्तस्य [5]गोः अवङ् वा स्यादचि । गवाग्रम् । पदान्ते किम् ? गवि ॥ [6]इन्द्रे च ६।१। १२४। गोरवङ् इन्द्रे । गवेन्द्रः । [ [7]व्यवस्थितविभाषया—गवाक्षः]

इ...तो यजुषीति निवृत्तं, तत्सूचनायैव सूत्रे 'सर्वत्रे'त्युपात्तम् । तेन लोके, वेदे चेति लभ्यते । तदाह—लोक इत्यादि । प्रकृतिभाव इति । स्वभावेनावस्थानमित्यर्थः । एवंच—पूर्वरूपमवादेशश्च न । गो-अग्रमिति हि प्रकृतिभावे रूपम्, पूर्वरूपे-गोऽग्रमिति । अत्र एङ इत्यप्यनुवर्तते । ततश्च 'एकदेशविकृतमनन्यवद्भवती'ति न्यायेन 'चित्रग्वग्र'मित्यत्र नातिप्रसङ्गः । हे चित्रगोऽग्रमित्यत्रापि प्रकृतिभावः, प्रतिपदोक्तस्यैव एङो ग्रहणात्, प्रकृते त्र 'ह्रस्वस्य गुण' इत्योकारस्य लाक्षणिकत्वात् । गोरिति । गो—अस् इति स्थिते 'गो' इत्योकारस्य पदान्तत्वाऽभावान्न प्रकृतिभावः । न चैवमपदान्तत्वादेङः पदान्तादिति पूर्वरूपमपि दुर्लभमिति वाच्यम्, अत एव 'ङसिङसोश्चे'ति तत्र विशिष्य पूर्वरूपारम्भात् ।

१ [ ] अयं पाठः क्वचिदेव लिखितादर्शे दृश्यते ।

२ लोक और वेद में एङन्त गो शब्द उसको ह्रस्व अकार परे रहते विकल्प से प्रकृति भाव हो पदान्त में ।

२ अनेकाल् जो आदेश और शित् जो आदेश सो सम्पूर्णके स्थानमें हो ।

३ ङित् जो आदेश वह यदि अनेकाल् भी हो तो भी अन्त्य के ही स्थान में हो ( सम्पूर्ण के स्थान में नहीं हो ) ।

४ पदान्त में विद्यमान एङन्त जो गो शब्द उसको अवङ् आदेश विकल्प करके हो, अच्परे रहते । ५ 'गोरवङचि वा' पा० ।

६ गो शब्द को [ नित्य ] अवङ् आदेश हो, इन्द्र शब्द परे रहते ।

७ लिखिते न दृश्यतेऽयं पाठः ।

[1]दूराद्धूते च ।८।२।८४। [2]दूरात्संबोधने यद्वाक्यन्तस्य टेः प्लुतो वा [ [3]स्यात् ] ॥

## [ * [4]अथ प्रकृतिभावः * ]

[5]प्लुतप्रगृह्या अचि नित्यम् ६।१।१२५। एतेऽचि [ नित्यं ] प्रकृत्या स्युः । आगच्छ कृष्णा ३ अत्र गौश्चरति ॥

[6]ह्रस्वं लघु ।१।४।१०। [7]संयोगे गुरु ।१।४।११। संयोगे परे

---

अवङ् स्फोटायनस्य । पदान्तादिति, गोरिति, अचीति चानुवर्तते । स्फोटायनस्य ऋषेर्मते अवङ्, अन्यस्य तु न, ततश्च विकल्पः सिद्धः । तदाह—अचि इत्यादिना । 'ङिच्चे'त्यन्तादेशः । गवाग्रमिति। गो–अग्रमिति स्थिते गकारादोकारस्याऽवङ् । ततश्च गव–अग्रमिति जाते सवर्णदीर्घः । गवीति । अत्र गो–इ इति स्थिते ओकारस्य पदान्तत्वविरहान्नाऽवङ्, नापि पूर्वसूत्राभ्यां प्रकृतिभावपररूपे, किन्तु अवादेशः । 'अती'त्यनुवृत्तौ तु 'गवेश' इत्यादि न सिध्येत् ।

इन्द्रे च । पूर्वसूत्रेभ्यो गोः, अवङ्, अचीत्यनुवर्तते । तदाह—गोरिति । विकल्पनिवृत्त्यर्थः पुनरारम्भः । गवेन्द्र इति । गो–इन्द्र इति स्थिते अवङ् । 'आद्गुणः' ।

अथ प्रकृतिभाव इति । 'निरूप्यते' इति शेषः । प्लुतप्रगृह्याः । वक्ष्यन्त इति । 'दूराद्धूते चे'त्यादिना, 'ईदूदे'दित्यादिना चेत्यर्थः। प्रकृत्येति। 'प्रकृत्यान्तःपाद'मित्यतस्तदनुवृत्तेरिति भावः । प्रकृत्या = स्वभावेनावस्थिताः स्युरित्यर्थः ।

---

१ दूर सेति सम्बोधन ( बुलाने, आवाज देने ) में जो वाक्य—उसकी टि को प्लुत हो, विकल्प करके ।

२ 'दूरात्सम्बोधने वाक्यस्य टेः प्लुतो वा' इति क्वचित्पाठः ।

३ क्वचिन्न ।

४ [ ] अयं पाठो लिखितादर्शेषु नास्ति ।

५ प्लुत और प्रगृह्य प्रकृति से रहें अचपरे रहते। अर्थात् इनको प्रकृतिभाव हो।

६ ह्रस्व अच् की लघु संज्ञा हो ।

७ संयोग परे रहते ह्रस्व अच् की गुरु संज्ञा हो ।

ह्रस्वं गुरुसंज्ञं स्यात् ॥ [1]दीर्घं च ।१।४।१२। [[2]दीर्घं च] गुरु स्यात्

[3]गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम् ।८।२।८६। दूराद्धू... यद्वाक्यं तस्य ऋद्भिन्नस्याऽनन्त्यस्या [ऽ[2]न्त्यस्या]ऽपि गुरोर्वा प्लु... स्यात् । दे३वदत्त । देवद३त्त । देवदत्त ३ । गुरोः किं ? वकारादकारस्य मा भूत् । अनृतः किम् ? कृष्णा ३ । एकैकग्रहणं पर्यायार्थम् ॥

[4]ईदूदेद्द्विवचनं प्रगृह्यम् ।१।१।११। ईदूदेदन्तं द्विवचनं प्रगृ...

---

तत्र सन्धिकार्याणि न भवन्तीति यावत् । एहि कृष्णा ३ अत्रेति । 'दूराद्धूते चे'... णकारादकारः प्लुतः । तस्य अकारे परे न सवर्णदीर्घः ।

गुरोरनृतोऽनन्त्यस्य । 'दूराद्धूते चे'त्यनुवर्तते । 'वाक्यस्य टेः प्लुत उदात्तः' इत्यधिकृतम् । दूरात् सम्बोधने यद्वाक्यं तत्र सम्बोध्यमानवाचकं यत् पदं, त... वयवस्य ऋकारभिन्नस्य अनन्त्यस्य गुरोः प्लुतः स्यात्, अन्त्यस्य तु गुरोरगु... स्यादित्यर्थः, 'अन्त्यस्य टे'रित्यस्याऽपिना समुच्चयात् । तदाह—दूरादित्यादि... दे३वदत्तेत्यादिषु सर्वत्र 'एही'ति शब्दः प्रागध्याहर्तव्यः । अन्यथा 'एक... वाक्य'मिति वाक्यत्वानुपपत्तेः । पर्यायार्थमिति । अन्यथा सर्वेषां गुरूणां युग... प्लुतः स्यादेति भावः ।

ईदूदेद्द्विवचनम् । ईच ऊच एच्चेति समाहारद्वन्द्वः । ईदूदेदिति द्विवच... विशेषणत्वात्तदन्तविधिः । द्विवचनमित्यनेन तु प्रत्ययत्वेऽपि न तदन्तं गृह्य... 'संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ती'ति तन्निषेधात् । तदाह—ईदूदेद...

---

१ दीर्घ अच् को ( भी ) गुरु संज्ञा हो ।

२ अयं पाठ एकत्र लिखितादर्शे दृश्यते, नान्यत्र ।

३ दूर सेति संबोधन [ बुलाने ] में जो वाक्य, तदवयव जो सम्बोध्यमा... वाचक पद, तदवयव जो ऋकारभिन्न अनन्त्य गुरु, उनको पर्याय से [ एक ... करके ] प्लुत हो, विकल्प करके और अन्त्य जो ऋद्भिन्न गुरु या अगुरु [ लघु ] उसको भी प्लुत हो, विकल्प करके ।

४ ईदन्त ऊदन्त एदन्त जो द्विवचन सो प्रगृह्य संज्ञक हो ।

सञ्ज्ञं स्यात् । हरी एतौ । विष्णू इमौ । गङ्गे अमू । [पचेते इमौ] 'मणी वोष्ट्रस्ये'ति तु इवार्थे वशब्दो वाशब्दो वा बोध्यः ॥

[1]अदसो मात् ।१।१।१२। अस्मात्परावीदूतौ प्रगृह्यौ स्तः। अमी ईशाः। रामकृष्णावमू आसाते ।

मित्यादिना । हरी एताविति । अत्र ईकारस्य परादिवत्त्वाश्रयणात् द्विवचनत्वम् । प्रगृह्यत्वे सति 'प्लुतप्रगृह्या' इति प्रकृतिभावान्न यण् । विष्णू इमावित्यत्राप्येवम् । गङ्गे—अमू इत्यत्र तु प्रकृतिभावेन अयादेशो न भवति ।

[ 'ईदूदेदन्त'मिति तदन्तविधेः प्रयोजनं दर्शयितुमाह—पचेते इमाविति । तदन्तविध्यभावे 'ईदूदेदात्मकं द्विवचनं प्रगृह्य'मिति लभ्येत । एवं सति पचेते इत्यत्र इते इति द्विवचनस्य एद्रूपत्वाऽभावात् प्रगृह्यत्वं न स्यादिति भावः । 'ईदूदेदन्तं यद्द्विवचनान्त'मिति व्याख्याने तु कुमार्योरगारं कुमार्यगारमित्यत्राऽतिप्रसङ्गः स्यात् । 'ईदूदेदन्तं द्विवचन'मिति व्याख्याने तु नातिप्रसङ्गः । ओसो द्विवचनस्य ईदूदेदन्तत्वाऽभावात्] । ननु 'मणी वोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम' इति भारत-श्लोके मणी इवेत्यत्र ईकारस्य प्रगृह्यत्वे सति प्रकृतिभावे सवर्णदीर्घो न स्यादित्यत आह—मणीवोष्ट्रस्येतीत्यादिना । 'वं प्रचेतसि जानीयादिवार्थे च तदव्ययम्' इति मेदिनी कोशः । 'व वा यथा तथैवैवं साम्ये' इत्यमरः ।

अदसो मात् । 'अदस' इत्यवयवषष्ठी । अदश्शब्दावयवान्मकारादित्यर्थः । ईदूदिति, प्रगृह्यमिति चानुवर्तते । मादिति दिग्योगे पञ्चमी । परशब्दोऽध्याहार्यः । तदाह—अस्मात् पराविति । अदश्शब्दावयवमकारात् परावित्यर्थः । एदिति तु नानुवर्तते, अदश्शब्दे मकारात् परस्य एकारस्याऽसंभवात् । द्विवचनमित्यपि नानुवर्तते, अदश्शब्दे मकारात् परस्य ईकारस्य अमी इति बहुवचनत्वात्, ऊकारस्य च मकारात्परस्य तत्र द्विवचनान्तेष्वेव सत्त्वेन व्यावर्त्याऽभावात् । अमी ईशा इति । अदश्शब्दाज्जसि त्यदाद्यत्वं, पररूपत्वं, जसश्शी, आद्गुणः । अदे इति स्थिते एकारस्य एत ईदिति ईत्त्वं, दस्य च मत्वम् । ततः—अमी इति रूपम् । अत्र ईकारस्य द्विवचनत्वाऽभावात् पूर्वसूत्रेण प्रगृह्यसंज्ञा न प्राप्तेत्यनेन सा विधीयते । रामकृष्णावमू इति । पुंल्लिङ्गाददश्शब्दात् प्रथमाद्विवचने औङि, त्यदा-

[1] अदस् शब्द सम्बन्धी मकारसे परे जो ईत् ऊत् सो प्रगृह्य संज्ञक हों ।

मात्किम ? अमुकेऽत्र। असति माद्ग्रहणे एकारोऽप्यनुवर्तेत ॥

[1]चादयोऽसत्त्वे ।१।४।५७। अद्रव्यार्थाश्चादयो निपातसंज्ञाः स्युः

[2]प्रादयः ।१।४।५८। एतेऽपि तथा ।

वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते ।
द्रव्यमित्युच्यते सोऽर्थो भेद्यत्वेन विवक्षितः ॥

---

यत्वं, पररूपत्वं, वृद्धिरेचि । अदौ इति स्थिते—अदसेऽसोरित्यौकारस्य ऊत्वम् दस्य मत्वम् । ततश्च—अमू इति रूपम् । यद्यप्ययमूकारो द्विवचनं भवति, तथापि पूर्वसूत्रेण प्रगृह्यत्वे कर्तव्ये उत्वमत्वयोरसिद्धतया दकारादौकारस्यैव शास्त्रदृष्ट्या सत्त्वात् पूर्वसूत्रेण तस्य प्रगृह्यत्वं न प्राप्तमित्यनेन विधीयते । 'अदसो मा'दिति सूत्रं प्रति तु ऊत्वमत्वे नाऽसिद्धे, आरम्भसामर्थ्यात् । पूर्वसूत्रस्य तु तत्र न सामर्थ्यम्, हरी एतौ, विष्णू इमावित्यादौ चरितार्थत्वात् ।

मात्किमिति ।' अदस' इत्येव सूत्रमस्तु, माद्ग्रहणस्य किं प्रयोजनमिति प्रश्नः । अमुकेऽत्रेति । 'अव्ययसर्वनाम्नामकच् प्राक्टेः' इत्यकचि अदकश्शब्दाजसि त्यदाद्यत्वे, पररूपत्वे, जसश्शी, आद्गुणे, उत्वे मत्वे—अमुके इति रूपम् । अत्र एकारस्य प्रगृह्यत्वनिवृत्त्यर्थं माद्ग्रहणम् । कृते च तस्मिन् एकारस्य मात्परत्वाऽभावान्न प्रगृह्यत्वमिति भावः । नन्वेवमपि माद्ग्रहणं व्यर्थम्, एद्ग्रहणमननुवर्त्य ईदूतोरेवात्र सम्बन्धेनात्र प्रगृह्यत्वप्रसक्तेरेवाभावादित्यत आह—असतीति ।'अदसो मा'दित्यत्रईदूदेतां एकसमासपदोपात्तानां मध्ये ईदूतोर्द्वयोरनुवृत्तौ एतोऽप्यनुवृत्तिप्रसक्तौ माद्ग्रहणादेतोऽनुवृत्तिः प्रतिबद्धा । माद्ग्रहणाऽभावे तु बाधकाऽभावादेतोऽप्यनुवृत्तिः स्यात् । ततश्च अमुके इत्यत्रापि एकारस्य प्रगृह्यत्वप्रसक्तौ तन्निवृत्त्यर्थं माद्ग्रहणम् । कृते तु तस्मिन् एतोऽनुवृत्तिप्रतिबन्धादमुके इत्यत्र न प्रगृह्यत्वम् । तथा च एकाराननुवृत्तिफलकं माद्ग्रहणमिति भावः ।

---

१ अद्रव्यार्थक जो चादि सो निपातसंज्ञक हों ।

२ अद्रव्यार्थक जो प्रादि सो [भी] निपातसंज्ञक हों ।

३ जहाँ किसी वस्तु के परिचय कराने के लिए सर्वनाम का प्रयोग किया जाता है वह [ वस्तु ] 'द्रव्य' कहलाता है । और वह विशेष्य ही होता है ।

[[1]लिङ्गसंख्यान्वययोग्यं द्रव्यम् ]

[2]निपात एकाजनाङ् ।१।१।१४। एकोऽज् निपात आङ्वर्जः प्रगृह्यः [ संज्ञः स्यात्[3] ]। इ इन्द्रः । उ उमेशः ।

[ [4]ईषदर्थे क्रियायोगे मर्यादाऽभिविधौ च यः। एतमातं ङितंविद्यात्–] वाक्यस्मरणयोरङित्[5] । आ एवं नु मन्यसे। आ एवं किल तत् । [[6]आ एवं सर्ववेदार्थः। आ एवं सद्वचो हरेः]। पूर्वं नैवं संस्था इदानीन्त्वेवं मन्यसे इत्यर्थः]। अन्यत्रङित् ।ईषदुष्णम् । ओष्णम्

---

वस्तूपलक्षणमिति । वस्तुपरिचायकतया यत्र सर्वनाम्नः प्रयोगः,–यथा 'चैत्रोऽस्ति, तमानयेति तद् द्रव्यम् । तच्च भेद्यत्वेन = विशेष्यत्वेनैव विवक्षितं भवतीत्यर्थः ॥ १ ॥

निपात एकाच् । प्रगृह्यमित्यनुवर्तते, तच्च पुंलिङ्गतया च विपरिणम्यते । एकश्चाऽसावच्चेति कर्मधारयः । तदाह–एकोऽजित्यादिना। इ इन्द्रः । उ उमेश इति। इ इति, उ इति च निपातः सम्बोधने । उभयोरपि एकाच्त्वान्निपातत्वाच्च प्रगृह्यत्वान्न सन्धिः। आ एवमिति । पूर्वप्रक्रान्तवाक्यार्थस्य अन्यथात्वद्योतकोऽयमाकारः, पूर्वमित्थं नामंस्थाः, इदानीं त्वेवं मन्यसे इत्यर्थः । आ एवमिति । स्मरणद्योतकोऽयमाकारः । इहोभयत्रापि आकारस्य ङित्त्वाऽभावान्न पर्युदासः ।

ङित्तु आकारः प्रगृह्यो न भवति, अनाङिति पर्युदासादित्याह–ओष्णमिति । आ–उष्णमित्यत्र आकारस्य ङित्वात् प्रगृह्यत्वाऽभावे सति आद् गुणः । ननु प्रयोगदशायां ङकारस्याऽश्रवणाऽविशेषाद् ङिदङिद्विवेकः कथमित्यत आह–वाक्येति। प्रक्रान्तवाक्यार्थस्याऽन्यथात्वे, स्मरणे च आकारोऽङित् । अन्यत्र = ईषदाद्यर्थे गम्ये तु ङिदिति विवेकः—अवगन्तव्य इत्यर्थः । तथा च भाष्यम्—

---

१[] अयं पाठो लिखितादर्शयोर्न दृश्यते । २ आङ् भिन्न जो एक अच् निपात सो प्रगृह्यसंज्ञकहो । ३ एकत्र लिखिते नाऽयं पाठः । ४ एकत्रादर्शे नायं पाठः । ५ ईषदर्थ में, क्रिया के योग में, मर्यादा में और अभिविधि अर्थ में जो आकार सो ङित् ( 'आङ्' ) जानना । और वाक्य में तथा स्मरण में अङित् ( केवल 'आ' ) जानना । ६ लिखितादर्शयोर्नास्ति ।

[1]ओत् । १ । १ । १५ । ओदन्तो निपातः [2]प्रगृह्यः स्यात् अहो ईशाः ॥ [3]संबुद्धौ शाकल्यस्येतावनार्षे ।१।१।१६। संबुद्धिनिमित्तक ओकारो वा प्रगृह्योऽवैदिके इतौ परे । विष्णो इति । विष्ण इति विष्णविति । [ [4]अनार्षे इति किं ? ब्रह्मबन्धवित्यब्रवीत् । ]

[5]मय उञो वो वा ।८।३।३३। मयः परस्य उञो वो वा स्यादचि । किमु उक्तम । किम्वुक्तम् ॥

[6]इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च ।६।१।१२७। पदान्ता इकं

---

'ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः ।
एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित् ॥' इति ॥

ओत् । 'निपात' इत्यनुवर्तते । 'ओ' दिति तस्य विशेषणम् , अतस्तद विधिः । 'प्रगृह्य' मित्यनुवर्तते, तच्च पुँल्लिङ्गतया विपरिणम्यते, तदाह—ओद इत्यादिना । अहो ईशा इति । अनेकाच्त्वात्पूर्वसूत्रेणाऽप्राप्तौ वचनम् ।

संबुद्धौ शाकल्यस्येति । सम्बुद्धाविति निमित्तसप्तमी, ओदित्यनुवृत्तेन सह न्वेति । 'प्रगृह्य' मित्यनुवर्तते, पुँल्लिङ्गतया च विपरिणम्यते । ऋषिः = वेद 'तदुक्तमृषिणे' त्यादौ तथा दर्शनात् । ऋषौ भवः-आर्षः, न आर्षः-अनार्ष तस्मिन्-अनार्षे । अवैदिके इतिशब्दे परत इत्यर्थः । शाकल्यग्रहणाद्विक तदाह—संबुद्धिनिमित्तक इति । विष्णो इतीति । अत्र ओकारो 'ह्रस्वस्य गु इति संबुद्धिनिमित्तकः । अत्र ओदन्तत्वेऽपि निपातत्वाऽभावादप्राप्ते विभाषेयम् 'विष्ण' वितीति च प्रगृह्यत्वाभावे रूपम् ।

'एकोऽच् यस्ये'ति बहुव्रीहिस्तु नाश्रितः तथा सति 'प्रेद' मित्यादावतिप्रसङ्गात्

---

१ ओदन्त जो निपात सो प्रगृह्यसंज्ञक हो । २ 'प्रगृह्यसंज्ञः स्यात्' पा

३ सम्बुद्धिनिमित्तक जो ओकार सो विकल्प करके प्रगृह्यसंज्ञक हो, अवै इति शब्द परे रहते । ४ अयं पाठ एकत्रादर्शे एव दृश्यते ।

५ मय् से परे जो उञ् उसको व आदेश हो विकल्प करके अच् परे रहते

६ पदान्त इक् को ह्रस्व हो विकल्प करके और प्रकृति भाव भी विकल्प करके असवर्ण अच् पर रहते ।

ह्रस्वाः [ प्रकृत्या च[1] ] वा स्युरसवर्णेऽचि । ह्रस्वविधिसामर्थ्यान्न स्वरसन्धिः । चक्रि—अत्र । चक्र्यत्र । पदान्ताः किम् ? गौर्यौ ।※[2]न समासे । वाप्यश्वः ।। [3]ऋत्यकः ।६।१।१२८। ऋति परे पदान्ता

---

मय उञो वो वा । 'मय' इति पञ्चमी, 'उञ' इति षष्ठी । 'ङमो ह्रस्वादचि' इत्यतोऽचीत्यनुवर्तते, तदाह—मयः परस्येति । किम्वुक्तमिति । 'किमु—उक्त' मिति स्थिते मकारोत्तराकारस्य उञो 'निपात एकाच्' इति नित्यं प्रगृह्यत्वात्प्रकृतिभावाद्यणभावे प्राप्ते वत्वार्थं वचनमिदम् ।

इकोऽसवर्णे । इक इति षष्ठी । एङः पदान्तादित्यतः पदान्तादित्यनुवर्त्तते । तच्च षष्ठयन्ततया विपरिणम्यते । अचीति चानुवर्तते । ततश्च पदान्तस्येकोऽसवर्णेऽचि परे ह्रस्वः स्यादित्येकं वाक्यम् । चकारात् 'प्रकृत्यान्तः पादम्' इत्यतः प्रकृत्येत्यनुकृष्यते । ह्रस्व इति तत्रापि संबध्यते । ततश्च उक्तो ह्रस्वः प्रकृत्या = स्वभावेन अवतिष्ठते इति वाक्यान्तरं संपद्यते । फलितमाह—पदान्ता इक इत्यादिना । यदि चकारो न क्रियेत, तर्हि पदान्तस्य इकोऽसवर्णेऽचि ह्रस्वः स्यादित्येव लभ्येत । तस्य ह्रस्वस्य प्रकृतिभावश्च न लभ्येत । ततश्च चक्री—अत्रेति स्थिते ईकारस्य ह्रस्वे सति, तस्य यणादेशे च चक्र्यत्रेत्येव रूपं स्यात्, चक्रि अत्रेति ह्रस्वसमुच्चितप्रकृतिभावविशिष्टं रूपन्तु न स्यात् । इष्यते तूभयमपि रूपम् । अतः प्रकृत्येत्यनुकर्षणार्थश्चकार आवश्यक इति सूत्रकारस्य हृदयम् ।

न समासे । वार्तिकमेतत् । समासे उक्तशाकलविधिर्न भवतीत्यर्थः । वाप्यश्व इति । वाप्यामश्व इति विग्रहः । शौण्डादेराकृतिगणत्वात्, 'सुप्सुपे' ति वासमासः ।

ऋत्यकः । 'अक' इति षष्ठी । शाकल्यस्य, ह्रस्वश्चेत्यनुवर्तते । 'असवर्ण' इति निवृत्तम् । 'एङः पदान्ता'दित्यतः पदान्तादित्यनुवर्तते । तच्च षष्ठ्यन्ततया विपरिणम्यते । ततश्च—'पदान्तस्य अक ऋति ह्रस्वो वा स्या' दित्येकं वाक्यं सम्पद्यते । चकारात् 'प्रकृत्ये' त्यनुकृष्यते । 'उक्तो ह्रस्वः प्रकृत्या अवतिष्ठते'

---

१ [ ] लिखितेषु नाऽयं पाठः ।

२ पदान्त इक् को समास में ह्रस्व और प्रकृतिभाव नहीं हो ।

३ पदान्त अक् को ह्रस्व और प्रकृतिभाव विकल्प करके हो ऋत् परे रहते ।

अकः प्राग्वत् । ब्रह्म—ऋषिः । ब्रह्मर्षिः । पदान्ताः किम् ? आच्छेत्
इति स्वरसन्धिः ॥

[ ॥ अथ हल्सन्धिः ॥ ]

[1]स्तोः श्चुना श्चुः ।८।४।४०। सकारतवर्गयोः शकारचवर्गाभ्यां योगे शकारचवर्गौ स्तः॥ हरिश्शेते । रामश्चिनोति । सच्चित् । शार्ङ्गिञ्जय

इति च द्वितीयं वाक्यं संपद्यते । तदाह—ऋति परे अकः प्राग्वदिति । ऋ ऋषिरिति । ब्रह्मा—ऋषिरिति स्थिते आकारस्य ह्रस्वः, प्रकृतिभावश्च । तत्र 'आद्गुण' इति गुणो न भवति । अत्र आकारस्य इक्त्वाऽभावादिकोऽस इत्यस्याऽप्राप्तेरिदं वचनम् । ब्रह्मर्षिरिति । उक्तह्रस्वसमुच्चितप्रकृतिभावाऽभावे 'आद्गुण' इति अकारो गुणः । रपरत्वम् । 'ऋत्यस्य' इत्येव तु न सूत्रितं होतृ-ऋकार इत्यत्र प्रकृतिभावार्थमग्रहणस्याऽऽवश्यकत्वात् । पदान्ताः किमिति पदान्तग्रहणमत्र कुतोऽनुवर्तनीयमित्यर्थः । आच्छेदिति । ऋ गतौ । लङ् तिप् शप् । 'पाघ्राध्मे' ति ऋच्छादेशः, 'इतश्चे' ति इकारलोपः, 'आडजादीना' मित्याडागमः, 'आटश्चे' ति वृद्धिः । अत्रहि आ—ऋच्छदिति स्थिते आकारस्य अकः पदान्तत्वाऽभावान्नोक्तः प्रकृतिभावः ।

इति श्रीगुरुप्रसादशास्त्रिसंगृहीतायां बालमनोरमायामच्सन्धिप्रकरणम् ।

॥ अथ हल्सन्धिः ॥

स्तोः श्चुना श्चुः । स् च तुश्चेति समाहारद्वन्द्वः । पुंस्त्वमार्षम् । इतरेतरयोगद्वन्द्वो वा, तथा सत्येकवचनमार्षम् । एवं 'श्चुना श्चु' रित्यत्रापि। 'श्चुने' ति च सहार्थे तृतीया, 'योगे' इत्यध्याहार्यम् । ततश्च सहशब्दयोगाऽभावेपि तदर्थगम्यत्वात्तृतीयाऽत्र युज्यते, अस्मादेव निर्देशात् । तदाह—सकारतवर्गयोरिति अत्र स्थान्यादेशानां यथासंख्यं भवति । ततश्च सकारस्य शकारः, तवर्गस्य चवर्गः । तत्रापि त-थ-द-ध-नानां क्रमेण च-छ-ज-झ-ञा इति फलितं, त-थ-द-ध-नेत्यादिमातृकाक्रमस्याप्यनादिलोकसिद्धत्वात् । 'श्चुना योगे' इत्यत्र तु न यथासंख्यम्, ततश्च सकारस्य तवर्गस्य शकारेण चवर्गेण वा यथासंभवं योगेऽपि श्चुत्वं भवति, शादिति निषेधाल्लिङ्गात् ।

१ सकार तवर्ग के स्थान में शकार चवर्ग के योग में शकार चवर्ग आदेश हो

[1]शात् ।८।४।४४। [2]शात्परस्योक्तं न [ [3]स्यात् ] । विश्नः । प्रश्नः ॥

[4]ष्टुना ष्टुः ।८।४।४१। स्तोः ष्टुना योगे ष्टुः । [ स्यात्[3] ] [ रामष्षष्ठः ] रामष्टीकते । पेष्टा । तट्टीका । चक्रिण्ढौकसे ॥

[5]न पदान्ताट्टोरनाम् ।८।४।४२।

रामश्शेते इति । रामस्-शेते इति स्थिते, शकारेण योगात्सकारस्य शकारः । 'श्चुना योगे इत्यत्राँऽशो न यथासङ्ख्य' मित्यस्य प्रयोजनं दर्शयितुं सकारस्य चकारयोगेऽप्युदाहरति—रामश्चिनोतीति । रामस्-चिनोतीति स्थिते चवर्गयोगात्सकारस्य शकारः । 'श्चुना-योगे' इत्यत्रापि यथासंख्याश्रयणे तु इह सकारस्य शकारयोगाऽभावाच्छकारो न स्यादिति भावः । सच्चिदिति । सत्-चिदिति स्थिते श्चुत्वस्याऽसिद्धत्वाज्जश्त्वेन तकारस्य दत्वे, तस्य श्चुत्वेन जकारे, 'खरि चे' ति चर्त्वेन तस्य चकारे च रूपम् ।

शार्ङ्गिञ्जयेति । शार्ङ्गिन्—जयेति स्थिते, चवर्गयोगान्नकारस्य श्चुत्वेन ञकारः ।

शात् । ' पदान्ता'दिति पूर्वसूत्रात् 'ने'त्यनुवर्तते । 'स्तोः श्चुना श्चु'रित्यतः 'तो'रिति, 'चु'रिति चानुवर्तते । 'शा'दिति दिग्योगे पञ्चमी, 'परस्ये'त्यध्याहार्यन्तदाह—शात्परस्येत्यादिना । विश्न इति । विच्छ गतौ । 'यजयाचयतविच्छप्रच्छरक्षो नङ्'इति नङ् 'छ्वोःशूठ्'इति छस्य शः । ङित्वान्न गुणः । अत्र शकारयोगात्तवर्गीयनकारस्य श्चुत्वेन ञकारे प्राप्तेऽयं निषेधः । पूर्वसूत्रे 'श्चुना योगे' इत्यत्रापि यथा सङ्ख्याश्रयणे तु इह तवर्गीयस्य नस्य चुना योगाऽभावेन चुत्वस्याऽप्रसक्ततया तन्निषेधो व्यर्थः स्यात् । एवं च अस्मादेव निषेधात् पूर्वसूत्रे श्चुना योगे इत्यत्र न यथासंख्याश्रयणमिति विज्ञायते । प्रश्न इति । 'प्रच्छ ज्ञीप्सायाम्' । पूर्ववत् नङादि । अत्र 'ग्रहिज्या' इति संप्रसारणं न, 'प्रश्ने चासन्नकाले' इत्यादिनिर्देशात् ।

१ शकारसे परे जो तवर्ग उसको चवर्ग नहीं हो ।

२ 'शात्परस्य तवर्गस्य श्चुत्वं न' इति पाठान्तरम् । ३ स्यादिति क्वचिन्न ।

४ सकार तवर्ग के स्थानमें षकार टवर्गके योगमें षकार टवर्ग आदेश हो ।

५ पदान्त टवर्ग से परे जो नाम् अवयव भिन्न तवर्ग और सकार उसको ष्टुत्व [ षकार टवर्ग ] नहीं हो ।

[[1]'अना'मिति लुप्तषष्ठीकस्पदम्]। पदान्ताट्टवर्गात् परस्याऽना स्तोः ष्टुर्न स्यात्। षट् सन्तः। षट् ते। पदान्तात्किम्? ईट्टे। टोः किम् सर्पिष्टमम्।

*[2]अनाम्नवतिनगरीणामिति [3]वाच्यम् । षण्णाम्। षण्ण

ष्टुना ष्टुः। 'स्तो'रित्यनुवर्तते। तदाह – स्तोरिति। अत्रापि स्थान्यादेशान मेव यथासंख्यं, नतु 'ष्टुयोगे' इत्यत्र। रामष्षष्ठ इति। रामस्-षष्ठ इति स्थिते कारयोगात् सस्य ष्टुत्वेन षः। अत्रापि 'ष्टुना योगे' इत्यत्र न यथासंख्यमित्यस्य प्रयोजनं दर्शयितुं सकारस्य टवर्गयोगेऽपि उदाहरति–रामष्टीकते इति। टीकृ गतौ तट्टीकेति। तस्य टीकेति विग्रहः। 'तद्–टीका' इति स्थिते ष्टुत्वेन दस्य डत्वे चर्त्वम्। चक्रिण्ढौकसे इति। ढौकृ गतौ। अत्र चक्रिन्-ढौकसे इति स्थिते टव र्गयोगात् नस्य ष्टुत्वेन णत्वम्।

न पदान्तात्। 'अना'मिति' तोरित्यस्य विशेषणम्। ननु भिन्नविभक्तिकमेव स्कथं तद्विशेषणमित्यत आह–अनामिति लुप्तषष्ठीकमिति। नामवयवभिन्नस्येत्यर्थः 'स्तोः' 'ष्टु'रित्यनुवर्तते। तदाह—पदान्तादित्यादिना।

ईट्टे इति। 'ईड स्तुतौ' आत्मनेपदी। ईड् ते इति स्थिते, खरि चेति डस्य चर्त्वम्, ततः परस्य तकारस्य 'ष्टुना ष्टु'रिति ष्टुत्वम्। तस्य टवर्गात् परत्वेऽपि पदान्तात् परत्वाऽभावान्नाऽनेन ष्टुत्वनिषेधः।

सर्पिष्टममिति। सर्पिष्–तमम् इति स्थिते 'स्वादिष्वसर्वनामस्थाने' इति वा अन्तर्वर्तिनीं विभक्तिमाश्रित्य वा पदत्वात्, षकारस्य पदान्तत्वात्ततः परस्य तका रस्य ष्टुत्वनिषेधो न भवति, पदान्ताट्टवर्गात्परत्वाऽभावात्। नच षकारस्य 'झलां जशोऽन्ते' इति जश्त्वेन डकारे सति तकारस्य टोः परत्वात् ष्टुत्वनिषेधः स्यादे वेति वाच्यम्, 'ह्रस्वात्तादौ तद्धिते' इति षत्वस्याऽसिद्धत्वेन जश्त्वाभावात्। इह 'आदेशप्रत्यययो'रिति षत्वं तु न भवति, तत्र 'अपदान्तस्य मूर्धन्यः' इत्यधिकारात्

अनाम्नवतीति। ष्टुत्वप्रतिषेधे नाम एव केवलं पर्युदासो न भवति, किन्तु

---

१ अयं पाठः क्वचिन्न।

२ पदान्त टवर्ग से परे जो नाम् नवति नगरी शब्दावयव भिन्न तवर्ग और सकार उनको ष्टुत्व नहीं हो–ऐसा सूत्रकार को कहना चाहिये।

३ 'अनाम्नवतीनगरीणां ष्टुत्वमिति वाच्यम्' इति मुद्रितपुस्तकपाठः।

वतिः । षण्णगर्यः ॥

[1]तोः षि ।८।४।४३। तवर्गस्य षकारे परे न[2] ष्टुत्वम् । सन्षष्ठः ॥

[3]झलां जशोऽन्ते ।८।२।३९। पदान्ते झलां जशः स्युः । वागीशः । [4]चिद्रूपम् ॥

यरोऽनुनासिकेऽनुनासिको वा[5] ।८।४।४५। यरः पदान्तस्या-

नवतिनगरीशब्दावयवनकारस्यापि तत्र पर्युदासो वक्तव्य इत्यर्थः । षण्णामिति । षष्-नामिति स्थिते 'स्वादिष्वसर्वनामस्थाने' इति पदान्तत्वात् षस्य जश्त्वेन डकारे 'प्रत्यये भाषायां नित्यम्' इति तस्य णकारः । अत्र टवर्गयोगान्नकारस्य 'ष्टुना ष्टु'रिति ष्टुत्वम् । 'न पदान्ता'दितिष्टुत्वनिषेधस्तु न, 'अना'मिति पर्युदासात् । षण्णवतिरिति । षडधिका नवतिरिति विग्रहः । अत्रापि नकारस्य न ष्टुत्वनिषेधः, तत्र नवतिशब्दस्याऽपि पर्युदासात् । षण्णगर्य इति च पृथक्पदे । न तु कर्मधारयः, 'दिक्संख्ये संज्ञायाम्' इति नियमात् । अत्रापि 'न पदान्ता'दिति नगरीशब्दे नकारस्य ष्टुत्वनिषेधो न भवति, नगरीशब्दस्यापि तत्र पर्युदासात् ।

तोः षि । 'ष्टु'रिति'ने'ति चानुवर्तते । तदाह—तवर्गस्येति । सन्षष्ठ इति । अत्र नकारस्य षकारयोगात् 'ष्टुना ष्टु'रि'ति ष्टुत्वं प्राप्तमनेन निषिध्यते । अस्मादेव ज्ञापकात् 'ष्टुना ष्टु'रित्यत्र ष्टुना योगे इत्यंशे यथासंख्यं नेति विज्ञायते ।

यरोऽनुनासिके । "न पदान्ताट्टो'रित्यतः 'पदान्ता'दित्यनुवर्तते, तच्च षष्ठ्यन्ततया विपरिणम्यते, तदाह—यरः पदान्तस्येति । 'एतन्मुरारि'रिति कर्मधारयः । एतद्—मुरारिति स्थिते दस्य अनुनासिको नकारः, दन्तस्थानसाम्यात्, स्पष्टप्रयत्नसाम्याच्च ।

१ तवर्गको षकार परे रहते ष्टुत्व [ टवर्ग ] नहीं हो ।
२ 'ष्टुत्वं न स्यात्' इति । 'तोःषि । नष्टुत्वं' इति च पा० ।
३ पदान्त झल्के स्थान में जश् आदेश हो ।
४ 'चिद्रूपमिति' क्वचिन्न ।
५ पदान्त यर् को अनुनासिक परे रहते अनुनासिक आदेश हो विकल्पकर के ॥

ऽनुनासिके परेऽनुनासिको वा [¹स्यात्]। एतन्मुरारिः। [²स्थान-प्रयत्नाभ्यामन्तरतमे स्पर्शे चरितार्थो विधिरयं रेफे न प्रवर्तते चतुर्मुखः]।

*³प्रत्यये भाषायां नित्यम्। तन्मात्रम्। चिन्मयम्॥

⁴तोर्लि।८।४।६०। तवर्गस्य लकारे परे परसवर्णः स्यात्⁵। तल्लयः। विद्वाँल्लिखति। नस्याऽनुनासिको लः॥

[ननु 'चतुर्मुख' इत्यत्रापि रेफस्य अनुनासिको णकारः स्यात्, रेफणकारयोः स्पृष्टेषत्स्पृष्टप्रयत्नभेदेऽपि मूर्धस्थानेन तयोरान्तर्यादित्यत आह—स्थानेति। ए-न्मुरारिरित्यादौ स्थानतः, प्रयत्नतश्चान्तरतमे स्पर्शे=दकारे चरितार्थः = लब्ध-प्रयोजनोऽयमनुनासिकविधिः स्थानमात्रेण आन्तर्यमादाय रेफे न प्रवर्तितु-मर्हतीत्यर्थः। 'यूनि लब्धे तु युवतिर्जरठे रमते कथम्' इति न्यायादिति भावः]

प्रत्यये भाषायां नित्यम्। वार्तिकमेतत्। भाषा=लौकिकप्रयोगः। प्रत्ययघटकेऽनुनासिके परतः प्रागुक्तोऽनुनासिको नित्यं भवतीत्यर्थः। तन्मात्रमिति। तत्–प्रमाणं यस्य तत्–तन्मात्रं, 'प्रमाणे द्वयसज्दघ्नञ्मात्रचः' इति मात्रच्प्रत्ययः। चिन्मयमिति। 'नित्यं वृद्धशरादिभ्यः' इत्यत्र नित्यमिति योगविभागात् मयट्।

तोर्लि। 'अनुस्वारस्य ययि'त्यतः 'परसवर्ण' इत्यनुवर्तते, तदाह—तव-र्गस्येत्यादिना। तल्लय इति। तस्य लय इति विग्रहः। तद्-लय इति स्थिते दस्य परसवर्णः=परनिमित्तभूतलकारसवर्णो भवति, स च लकार एव, अन्यस्य तत्सवर्णस्याऽभावात्। नकारस्येति। विद्वान्-लिखतीत्यत्र नकारस्य स्थाने नोऽनुनासिकस्य परसवर्णो लकारो भवन्नान्तर्यादनुनासिक एव भवतीत्यर्थः।

१ क्वचिन्न। २ अयं पाठो लिखितादर्शे क्वापि नास्ति।

३ पदान्त यर् के स्थान में नित्य अनुनासिक आदेश हो प्रत्ययावयव अनु-नासिक परे रहते भाषा अर्थात् लोकप्रयोग में।

४ तवर्ग को लकार परे रहते पर सवर्ण हो।

५ परसवर्णः' इति पाठा०।

[1]उदः स्थास्तम्भोः पूर्वस्य ।८।४।६१। उदः परयोः स्थास्तम्भोः पूर्वसवर्णः [स्यात्[2]]॥ [3]तस्मादित्युत्तरस्य ।१।१।६७। पञ्चमीनिर्देशेन [4]क्रियमाणं कार्यं वर्णान्तरेणाऽव्यवहितस्य परस्य ज्ञेयम् ॥ [5]आदेः परस्य ।१।१।५४। परस्य

उदः स्थास्तम्भोः । 'अनुस्वारस्य ययि परसवर्णः' इत्यत्र समासनिर्दिष्टमपि सवर्णग्रहणमिह निष्कृष्य सम्बध्यते, एकदेशे स्वरितत्वप्रतिज्ञानात् । 'उदः' इति च पञ्चमी । अतस्तस्मादित्युत्तरस्येति परिभाषया उदः परयोरित्यर्थो लभ्यते । तदाह—उदः परयोरिति । पूर्वेति । पूर्वस्य निमित्तभूतस्य उदो दकारस्य यः सवर्णः स स्थास्तम्भोरादेशः स्यादित्यर्थः । पूर्वसवर्णश्चायमलोऽन्त्यपरिभाषया स्थास्तम्भोरन्तादेशो न भवति, किन्तु तयोरादेरादेशो भवतीत्याह—आदेः परस्येति । अनया परिभाषया स्थास्तम्भोराद्यवयवस्य सकारस्यैव पूर्वसवर्णो भवतीत्यर्थः । उत्थानमिति । 'ष्ठा गतिनिवृत्तौ' । भावे ल्युट् । उत्तम्भनमिति । 'ष्टभि प्रतिष्टम्भे' । भावे ल्युट् । अथवा 'स्तम्भु रोधने' इति श्नुविधौ निर्दिष्टः सौत्रो धातुः, 'स्थास्तम्भो'रिति पवर्गीयोपधनिर्देशस्य उभयसाधारणत्वात् ।

ननु उद् स्थानमित्यत्र सकारस्य पूर्वसवर्णविधौ पूर्वनिमित्तं दकारः, तत्सवर्णाश्च त-थ-द-ध-नाः पञ्चैव, दन्तस्थानसाम्यात्, स्पृष्ट-प्रयत्न-साम्याच्च । न तु लृकारः, सकारश्च, तयोः स्थानसाम्येऽपि स्पृष्टप्रयत्नत्वाऽभावात्प्रयत्नभेदात् । नापि लकारः, ईषत्स्पृष्टत्वात् । एतदतिरिक्ताश्च सर्वे वर्णा भिन्नस्थानकत्वान्न दकारसवर्णाः । ततश्च पूर्वनिमित्तभूतदकारसवर्णाः त-थ-द-ध-नाः पञ्चापि सकारस्य प्राप्ताः । स्थानीभूतसकारेण दन्तस्थानत आन्तर्यस्य पञ्चस्वप्यविशिष्टत्वात्, आभ्यन्तरप्रयत्नत आन्तर्यस्य च पञ्चस्वप्यभावात्, स्थानीभूतसकारस्य विवृतप्रयत्नत्वात्, एतेषां च पञ्चानां स्पृष्टप्रयत्नत्वात्, अतोऽत्र बाह्यप्रयत्नत एवाऽऽन्त-

१ उद् से परे जो स्था और स्तम्भ उनको पूर्व सवर्ण आदेश हो । २ स्यादिति क्वचिन्न । ३ पञ्चमी निर्देश से क्रियमाण जो कार्य सो वर्णान्तर से व्यवधान रहित जो पूर्व उसको हो । ४ 'विधीयमानं' पा० । ५ पर को जो कार्य विधान किया हो वह पर के आदि को हो ।

यद्विहितं तत्तस्याऽऽदेर्बोध्यम् । [1]अत्राऽघोषस्य महाप्राण [ विवारस्य[2] श्वासस्य ] सस्य तादृश एव थः [ इति [3]सस्य थः ]
[2]झरो झरि सवर्णे ।८।४।६५। हलः परस्य झरो लोपो वा [4]स्यात्स झरि ॥ [5]खरि च । ८। ४। ५५ । [ [6]खरि परे ] झलां चरः स्
इत्युदो दस्य तः । उत्थानम् । उत्तम्भनम् ॥

[7]झयो होऽन्यतरस्याम् ।८।४।६२। झयः परस्य हस्य वा पू सवर्णः स्यात् । नादस्य घोषस्य संवारस्य महाप्राणस्य हस्य ता

र्यमादाय पञ्चस्वन्यतमव्यवस्थामाह—अघोषस्येति । स्थानीभूतस्तावत् सक ऽघोषश्वासविवारमहाप्राणात्मकयत्नचतुष्टयवान् । तस्य त-थ-द-ध प्रथमतृतीयपञ्चमा न भवन्ति, तेषामल्पप्राणप्रयत्नकत्वात् । नापि चतुर्थो धक भवति, तस्य घोषनादसंवारादियत्नकत्वात् । द्वितीयस्तु थकारोऽघोषश्वासवि महाप्राणात्मकयत्नचतुष्टयवान् । अतः स एव थकारः पूर्वनिमित्तम्, तदकारस सकारस्य स्थाने भवतीत्यर्थः । खरि च । 'झलाञ्जशझशी'त्यतो झलामिति, 'अ चर्चे'त्यतश्चरिति चाऽनुवर्तते । तदाह—खरि पर इत्यादिना ।

झयो हः । 'झय' इति पञ्चमी । 'परस्ये' त्यध्याहार्यम्, 'ह' इति ष 'उदः स्थास्तम्भो' रित्यतः 'पूर्वस्ये' ति, 'अनुस्वारस्य ययी' त्यतः 'सवर्ण' चानुवर्तते, तदाह—झयः परस्येत्यादिना । 'वाग्घरि' रित्युदाहरणम् । वाक्शब्द कारान्तः, कुत्वं जश्त्वम्, तदेवं वाग्–हरिरिति स्थिते हकारस्य पूर्वसवर्ण गकारः पूर्वो निमित्तम्, तत्सवर्णाश्च क-ख-ग-घ-ङाः पञ्च । तेषां हकारेण नि ना स्थानत आन्तर्यमविशिष्टम् । आभ्यन्तरप्रयत्नसाम्यं तु पञ्चानामपि ह रेण स्थानिना न विद्यते,तयोः स्पृष्टविवृतप्रयत्नभेदात् । अतो बाह्ययत्नत आ मादाय पञ्चस्वन्यतमव्यवस्थामाह—नादस्य घोषस्येत्यादिना । स्थानी

१ अत्रेति क्वचिन्न । २क्वचिन्नायं पाठः । ३ हल् से परे जो झर् उसका लो विकल्प करके सवर्ण झर् परे रहते । ४ 'स्या' दिति क्वचिन्न । 'झरो वा इत्यपि क्वचित्पाठः । ५ खर् परे रहते झलों के स्थान में चर् आदेश ६ 'खरि परे' इति क्वचिन्न । ७ झय् से परे जो हकार उसको पूर्वसव विकल्प करके ।

वर्गचतुर्थः [ [1]एवादेशः ] । वाग्घरिः । वाग्हरिः ॥

[2]शश्छोऽटि ।८।४।६३। पदान्ताज्झयः परस्य शस्य छो वा[3]स्यादटि । तच्छिवः । तच्शिवः । पदान्तात्किम् । विरप्शम्[4]। *[5]छत्वममीति वाच्यम्। तच्छ्लोकेन । [6]तच् श्लोकेन । अमि किं,वाक्श्चोतति[7]।

[8]मोऽनुस्वारः ।८।३।२३। मान्तस्य पदस्याऽनुस्वारः[9] स्याद्धलि।

हकारो घोषनादसंवारमहाप्राणाख्ययत्नचतुष्टयवान् ,तस्य क-ख-ग-घ-ङेषु प्रथमतृतीयपञ्चमा न भवन्ति, तेषामल्पप्राणत्वात् । द्वितीयः खकारोऽपि न भवति, तस्याऽघोषश्वासविवारयत्नकत्वात् । चतुर्थस्तु घकारो घोषनादसंवारमहाप्राणवान् । अतः स एव घकारो हकारस्य स्थाने भवतीत्यर्थः । ततश्च 'वाग्घरि'रिति भवति । पूर्वसवर्णाऽभावे तु 'वाग् हरि'रिति ।

शश्छोऽटि ।'झय' इति पञ्चम्यन्तमनुवर्तते । 'श' इति षष्ठ्येकवचनम् । तदाह—झयः परस्येति । 'तद्-शिव' इति स्थिते दकारस्य चुत्वेन जकारे कृते, जकारस्य चर्त्वेन चकार इत्यन्वयः । तच्छिव इति । स चासौ शिवश्चेति, तस्य शिव इति वा विग्रहः । 'चोः कु' रिति कुत्वं तु न, श्चुत्वस्याऽसिद्धत्वात् । छत्वममीति । 'शश्छोऽटी' ति सूत्रे 'अटी'ति पदं विहाय सूत्रकारेण अमीति वक्तव्यमित्यर्थः । पाणिनिनेदं सूत्रं 'शश्छोऽमी' ति पठनीयमिति यावत् । तच् श्लोकेनेति । स चासौ श्लोकश्च, तस्य श्लोक इति वा विग्रहः । लकारस्य अड्बहिर्भूतत्वात्तत्परकस्य शकारस्य यथाश्रुताऽटीतिपदघटितसूत्रपाठतश्छत्वेऽप्राप्ते वार्तिकम् । वाक्श्चोततीति । अत्र तु कुत्वं भवत्येव, चकारस्य स्वाभाविकतया श्चुत्वनिष्पन्नत्वाऽभावेन असिद्धत्वाऽभावात् । अत्र चकारस्य अम्बहिर्भूतत्वात्तत्परकशकारस्याऽत्र न छत्वम् ।

मोऽनुस्वारः । 'पदस्ये'त्यधिकृतम् । 'म' इति षष्ठ्यन्तं च पदस्य विशेषणं, तेन तदन्तविधिः । 'हलि सर्वेषा'मित्यतो 'हली'त्यनुवर्तते, तदाह—मान्तस्येति ।

१ क्वचिन्न । २ पदान्त झय् से परे जो शकार उसको छकार आदेश विकल्प करके हो । ३ 'छोवाऽटि' पा० । ४ 'विरप्शिन्' पा० । ५ पदान्त झय् से परे जो शकार उसको छकार हो विकल्प करके अम्परे रहते [ ऐसा सूत्रकार को कहना चाहिए ] । ६ क्वचिन्न । ७ वाक्श्चोतति' । ८ मान्त पदको अनुस्वार हो हल् परे रहते । ९ 'मान्तस्य पदस्यानुस्वारो हलि' पा० ।

हरिं वन्दे। पदस्य किम्? गम्यते॥ [1]नश्चाऽपदान्तस्य झलि।८।३।२४। नस्य मस्य चाऽपदान्तस्य झल्यनुस्वारः स्यात्। यशांसि आक्रंस्यते। [ [2]झलि किम्? मन्यते ]॥

[3]अनुस्वारस्य ययि परसवर्णः।८।४।५८। [ [4]अङ्कितः अञ्चितः ]। शान्तः। [ [5]गुम्फितः ]।

[6]वा पदान्तस्य।८।४।५९। [ [7]पदान्तस्याऽनुस्वारस्य ययि (प...

---

हरिं वन्दे इति। हरिम्-वन्दे इति स्थितेऽनेन मस्यानुस्वारः। गम्यते इति। गम्लृ गतौ। कर्मणि लट्। 'भावकर्मणोः' इत्यात्मनेपदे यक्। अत्र मस्य पदान्तत्वाभावान्नाऽनेनाऽनुस्वारः। नश्चापदान्तस्य। चकारान्मस्येत्यनुकृष्यते, 'अनुस्वा...' इति च। तदाह—नस्येति। यशांसीति। यशश्शब्दात् जसः 'जश्शसोश्शिः' 'नपुंसकस्य झलचः' इति नुम्। 'सान्तमहत' इति दीर्घः। यशान्-सीति स्थिते नकारस्य अनुस्वारः। आक्रंस्यत इति। आक्रम् स्य ते इति स्थिते मस्याऽपदान्तत्वात् पूर्वेणाऽनुस्वारेऽप्राप्ते वचनम्। मन्यते इति। अत्र मस्य झल्परकत्वाऽभावान्नाऽनेनानुस्वारः। अपदान्तत्वाच्च न पूर्वेणापि।

अनुस्वारस्य ययि। स्पष्टमिति। अनुवर्त्यपदान्तराऽभावादिति भावः। ए...श्चानुस्वारस्य स्थाने यपि परतः परसवर्णः स्यादित्यर्थः सूत्रादेव संपन्न इति बोध्यम्। अञ्चित इति। अञ्चु गति पूजनयोः। नोपधः तस्मात् क्तः। 'अञ्चेः ...जायाम्'इतीट्। 'नाञ्चेः पूजायाम्'इति निषेधादनिदितामिति नलोपो न। ... 'नश्चापदान्तस्ये'त्यनुस्वारस्य परसवर्णो ञकारः। कुण्ठित इति। कुठि प्रतिघाते। इदित्त्वान्नुम्। क्तः इट्। अत्र 'नश्चे'त्यनुस्वारस्यप रसवर्णो णकारः।

शान्त इति। शम उपशमे। क्तः। 'वा दान्तशान्ते'त्यादिनिपातनान्नेट्...

---

१ अपदान्त जो नकार और मकार उनको अनुस्वार हो झल् परे रहते। २ अयं पाठः क्वचिन्न। ३ अनुस्वार के स्थान में पर सवर्ण आदेश हो, य... परे रहते। ४ अयं पाठो लिखितपुस्तके क्वापि न दृश्यते। ५ क्वचि... पाठः। ६ पदान्त अनुस्वार के स्थान में पर सवर्ण विकल्प से हो, यय् ... रहते। ७ अयं पाठो लिखितादर्शे न दृश्यते।

परसवर्णो वा स्यात् ]। त्वङ्करोषि। त्वं करोषि॥ [ त्वन्तनोषि। त्वं तनोषि। सँव्वत्सरः। संवत्सरः। यँल्लोकम्। यं लोकम्। अनुस्वारस्य पक्षे अनुनासिका यवलाः ]।

[1]मो राजि समः क्वौ ।८।३।२५। क्विबन्ते [2]राजतौ परे समो मस्य म एव स्यात्। सम्राट्॥ [3]हे मपरे वा ।८।३।२६। मपरे हकारे मस्य मो वा स्यात्। किम्ह्मलयति। किं ह्मलयति।* [4]यवलपरे यवला वेति वक्तव्यम्। कियँ ह्यः। किं ह्यः। किवँ ह्वलयति। किं ह्वलयति। किलँ ह्लादयति। किं ह्लादयति॥ [5]नपरे नः।८।३।२७। नपरे हकारे

---

'अनुनासिकस्य क्वी'ति दीर्घः। 'नश्चे'ति मस्यानुस्वारः। तस्य परसवर्णो नकारः। गुम्फित इति। गुम्फ ग्रन्थे। क्तः। इट्। 'नोपधात्थफान्ताद्वे'त्यकित्त्वपक्षे नलोपो न। अत्र 'नश्चे'त्यनेनाऽनुस्वारस्य परसवर्णो मकारः।

वा पदान्तस्य।'अनुस्वारस्य ययि परसवर्ण' इत्यनुवर्तते। तदाह—पदान्तस्येति।

मो राजि। 'म' इति प्रथमान्तम्। 'मोऽनुस्वार' इत्यतो 'म' इति स्थानषष्ठ्यन्तमपरमप्यनुवर्तते। 'सम' इत्यवयवषष्ठी। प्रत्ययग्रहणपरिभाषया च क्विग्रहणेन क्विप्प्रत्ययान्तलाभस्तदाह—क्विबन्त इति। म एवेति। न त्वनुस्वार इत्यर्थः। मस्य मविधानञ्चानुस्वारनिवृत्त्यर्थमिति भावः। सम्राडिति। राज दीप्तौ। सम्पूर्वात् 'सत्सूद्विषद्रुहे'त्यादिना 'क्विप्'। व्रश्चेति षत्वम्। जश्त्वेन डत्वम्। चर्त्वेन टकारः। अत्र मोऽनुस्वारो न भवति। हे मपरे वा। 'मोऽनुस्वार' इत्यतो 'म' इति षष्ठ्यन्तमनुवर्तते। 'मो राजी'त्यतो 'म' इति प्रथमान्तमनुवर्तते। मः परो यस्मादिति च विग्रहः। तदाह—मपरे इति।

---

१ क्विबन्त राज् धातु परे रहते सम् के मकार को मकार ही आदेश हो ( अनुस्वार आदेश नहीं हो )। २ 'राजतौ धातौ परे' पा०। ३. मकारपरक हकार के परे रहने पर मकार को मकार ही होता है विकल्प से। ४ यवलपरक हकार के परे रहने पर मकार को अनुनासिक यँ वँ लँ हों विकल्प कर के। ५ नकार परक हकार परे रहते मकार को नकारादेश हो विकल्प से।

मस्य नो वा। किन् ह्नुते। किं ह्नुते॥ [1]ड: सि धुट् ।८।३।२९ डात्परस्य सस्य धुड् वा॥ [2]आद्यन्तौ टकितौ ।१।१।४६ टित्कितौ यस्योक्तौ तस्य क्रमादाद्यन्ताऽवयवौ स्तः। षट्त्सन्तः षट् सन्तः॥ [3]ङ्णोः कुक् टुक् शरि ।८।३।२८। ङकारणकारयोः कुक्टुकावागमौ वा स्तः शरि। कुक्टुकोरसिद्धत्वान्न जश्त्वम्।

*[4]चयो द्वितीयाः शरि पौष्करसादेरिति वाच्यम्

यवलपरे इति। यवलाः पराः यस्मादिति विग्रहः। यवलपरके हकारे ... मस्य म एव वा स्यादित्यर्थः। कियँ ह्य इति। मस्य यत्वे रूपम्। 'ह्य' इत्यव्ययम्, पूर्वेद्युरित्यर्थकम्। यत्वाभावे मोऽनुस्वारः। नपरे नः। 'हे' इति 'वे'ति 'म' इति चानुवर्तते। नः परो यस्मादिति विग्रहः। नपरे इति। कि... ह्नुते इति। ह्नुङ् अपनयने। मस्य नत्वे रूपम्। तदभावे मोऽनुस्वारः।

ङ्णोः कुक्टुक्शरि। 'हे मपरे वे'त्यतो वेत्यनुवर्तते। कुक् च टुक् चेति समाहारद्वन्द्वः। आगमाविति। एतच्च 'आद्यन्तौ टकिता'विति लभ्यम्। यथासङ्ख्यपरिभाषया च ङकारस्य कुक्, णकारस्य टुक्। उभयत्र ककार इत्, उकार उच्चारणार्थः।

प्राङ् षष्ठ इति, सुगण् षष्ठ—इति च स्थिते, यथाक्रमं कुकि, टुकि ... तयोः पूर्वान्ताऽऽद्यन्तवत्त्वेन पदान्तत्वाज्जश्त्वमाशङ्क्याह—कुक्टुकोरिति।

चयो द्वितीया इति। ['पौष्करसादिशब्दस्य चयो द्वितीया' इत्यर्थभ्रमं वारयति पौष्करसादिराचार्य इति। तथाच विकल्पः फलतीति भावः।] कुकि प्राङ्...

१. डकार से पर सकार का धुड् हो विकल्प से। २. टित् और कित् जिस समुदायको कहे हैं उस समुदायका आद्यवयव टित् हो, अन्तावयव कित् हो। ३. ङकार णकार को कुक् टुक् का आगम हो विकल्प से शर् परे रहते।

४ चय् के स्थान में स्वस्ववर्ग के द्वितीय अक्षर आदेश हों, शर् परे रहते 'पौष्करसादि' आचार्य के मत में।

प्राङ् ख् षष्ठः। प्राङ्क्षष्ठः। प्राङ् षष्ठः। [ सुगण्ठ्षष्ठः[1] ] सुगण् ट् षष्ठः। सुगण्षष्ठः।

नश्च[2] ।८।३।३०।[3]नान्तात्परस्य सस्य धुड् वा। सन्त्सः। सन्सः॥

शि तुक्[4] ।८।३।३१। पदान्तस्य नस्य शे परे तुग् वा। सञ्च्छम्भुः। सञ्छम्भुः। सञ्च्शम्भुः। सञ्शम्भुः।

[5]ञ्छौ ञ्चछा ञ्चशा ञशाविति चतुष्टयम्।
रूपाणामिह तुक्छत्वचलोपानां विकल्पनात्॥

---

षष्ठ इति रूपम्। कषसंयोगे क्षः। तदेवं प्राङ्क्षष्ठ इति रूपं जायते। 'चयो द्वितीया इति पक्षे प्राङ्ख् षष्ठ इति रूपम्।

नश्च। सि धुट् इति, वेति चानुवर्तते। न इति पञ्चमी। तस्मादित्युत्तरस्येति परिभाषया सीति षष्ठी सम्पद्यते। तदाह—नकारान्तात् परस्येति। सन्त्स इति। धुटि धस्य चर्त्वम्।

शि तुक्। पूर्वसूत्रात् 'न' इति पञ्चम्यन्तमनुवृत्तमिह षष्ठ्यन्तमाश्रीयते, शब्दाधिकाराश्रयणात्। 'पदस्ये'त्यधिकृतम्—अवयवषष्ठ्यन्तमाश्रीयते। 'हे मपरे वे' त्यतो 'वे' त्यनुवृत्तम्। तदाह—पदान्तस्येति। 'नान्तस्य पदस्ये' त्युचितम्। तुकि उकार उच्चारणार्थः। सन् शम्भुरिति स्थिते नकारस्यान्तावयवस्तुक्। सञ् छम्भुरिति। तकारस्य श्चुत्वमापन्नस्य लोपे सति नकारस्य श्चुत्वेन ञकारे रूपम्। सञ्च् छम्भुरिति। श्चुत्वमापन्नस्य तकारस्य लोपाऽभावे, नकारस्य च श्चुत्वेन ञकारे च रूपम्। सञ्च् शम्भुरिति। शस्य छत्वाभावे, तकारनकारयोश्चुत्वे च रूपम्। सञ्शम्भुरिति। तुकोऽभावे नकारस्य चुत्वे रूपम्।

---

१ क्वचिन्नाऽयं पाठः।
२ नकारान्त पद से परे जो सकार उसको धुट् का आगम हो विकल्प करके।
३ 'नकारान्तात्सस्य धुड्वा' इति क्वचित्पाठः।
४ पदान्त नकार को शकार परे रहते तुक् का आगम विकल्प करके हो।
५ अयं श्लोकः क्वचिदादर्शे नास्ति। क्वचिच्च दृश्यते।

[1]ङमो ह्रस्वादचि ङमुण्नित्यम् ।८।३।३२। ह्रस्वात्परो यो ङम् तदन्तं यत्पदं, तस्मात्परस्याऽचो नित्यं ङमुडागमः[2] स्यात्। प्रत्यङ्ङात्मा। सुगण्णीशः। सन्नच्युतः॥

[3]समः सुटि ।८।३।५। समो रुः [4]स्यात्सुटि॥ [5]अत्रानुनासिकः पूर्वस्य तु वा ।८।३।२। अत्र = रुप्रकरणे रोः पूर्वस्यानुनासिको वा [6]स्यात्

ङमो ह्रस्वात्। अत्र 'ङम्' इति प्रत्याहारः। 'ङम' इति च पञ्चम्यन्तम् तद्विशेषणत्वात् पदस्येत्यधिकृतं पञ्चम्यन्ततया विपरिणम्यते। 'ङम' इति 'ह्रस्वा' दिति विशेषणसम्बन्धमनुभूय पदविशेषणत्वं भजत्तदन्तपरम्। 'ङम' इ पञ्चमीबलादचीति सप्तमी षष्ठ्यर्थे। तदाह—ह्रस्वात्पर इति। सन्नच्युत इति सन्—अच्युत इति स्थिते अकारस्यादौ नुट्।

समः सुटि। 'सम' इति षष्ठ्यन्तम्। 'मतुवसो रु सम्बुद्धौ' इत्यतो रुग्रह मनुवर्तते। तदाह—समो रुरिति। 'रु' इत्युकार इत्। अलोऽन्त्यस्येत्युपतिष्ठते तेन समो मस्य रुत्वमिति बोध्यम्। सम्पूर्वात् करोतेस्तृचि 'सम्परिभ्यां करो भूषणे' इति सुडागमे सम्–स्कर्तेति स्थिते मस्य रुत्वम्। ततः–सर् स्कर्ते स्थिते–अत्रानुनासिक इति। 'मतुवसो रु सम्बुद्धौ' इति रुत्वविध्यनन्तरमि सूत्रं पठितम्। अतोऽत्रेत्यनेन रुप्रकरणे इत्यर्थो गम्यते। पूर्वत्वं च 'रु' इत्यपेक्ष ज्ञेयम्, प्रकृतत्वात्। तदाह—अत्रेति। उत्तरसूत्रे अनुनासिकाऽभावपक्षानुवादा विकल्पे सिद्धे 'वा' ग्रहणं स्पष्टार्थम्। 'परस्य नित्यं रुत्वम्, पूर्वस्य तु अनुनासिक विकल्प' इति वैषम्यस्य सिद्धस्यैव द्योतनार्थस्तुशब्दोऽपि स्पष्टार्थ एव। सँर्स्कर्ता

१ ह्रस्व से परे जो ङम्, तदन्त जो पद, उससे परे जो अच्, उसका नित्य ङमुट् का आगम हो।

२ स्यादिति क्वचिन्न।

३ सम् के मकार को रु आदेश हो सुट् परे रहते।

४ 'रुः सुटि' इति पाठान्तरम्।

५ इस रुप्रकरण में रु से जो पूर्व उसको अनुनासिक आदेश हो विकल्प करके

६ स्यादिति क्वचिन्न।

[1]अनुनासिकात्परोऽनुस्वारः ।८।३।४। अनुनासिकं विहाय रोः पूर्वस्मात्परोऽनुस्वारागमः स्यात्[2] ।

[3]खरवसानयोर्विसर्जनीयः ।८।३।१५। खरि अवसाने च पदान्तस्य [4]रेफस्य विसर्गः [5]स्यात् [इति प्राप्ते] ।* [6]संपुंकानां सो वक्तव्यः । सँस्स्कर्ता । संस्स्कर्त्ता ॥

[7]पुमः खय्यम्परे ।८।३।६। अम्परे खयि पुमो रुः स्यात् । पुँस्कोकिलः ॥ पुंस्कोकिलः ।

स्थिते—अनुनासिकादिति । 'अनुनासिका' दिति हि ल्यब्लोपे पञ्चमी । 'विहाये'ति ल्यबन्तं च गम्यम् । पूर्वस्येत्यनुवृत्तं, तच्च पञ्चम्यन्ततया विपरिणम्यते । पूर्वत्वञ्च रुत्वकृतरेफापेक्षया । परत्वं च रोर्यः पूर्ववर्णस्तदपेक्षया, तदाह—अनुनासिकं विहायेति । अनुनासिकाऽभावपक्षे इत्यर्थः । आगमत्वं परशब्दलभ्यम् । ततश्च सकारादकारस्य अनुनासिकाभावपक्षे अकारात्परोऽनुस्वारागमः । संर् स्कर्ता—इति स्थिते—अथ रेफस्य विसर्गविधिं कथयति—खरवसानयोरिति । खरवसानयोरित्येतदपवादे वा शरीति पाक्षिके विसर्गे प्राप्ते वार्त्तिकमवतारयति—संपुंकानामिति । सम् पुम् कान् एतेषां विसर्गस्य सकारो वक्तव्य इत्यर्थः । 'अनेन वार्तिकेनात्र विसर्गस्य नित्यमेव सत्व'मिति शेषः ।

सँस्स्कर्तेति । अनुनासिकपक्षे रूपम् । संस्स्कर्तेति । अनुस्वारपक्षे रूपम् । उभयत्रापि द्विसकारवत्त्वमेव ।

पुमः । 'रु'ग्रहणमनुवर्तते । अम् परो यस्मादिति विग्रहः । तदाह—अम्परे खयीति । 'पुमान् कोकिल' इति कर्मधारये 'सुपो धातुप्रातिपदिकयो'रिति सुब्लुकि

१ अनुनासिकादेशस्थल को छोड़ करके ( अर्थात् अनुनासिकाऽभाव पक्षमें ) रु से जो पूर्व, उससे परे—अनुस्वार का आगम हो ।

२ स्यादिति क्वचित्कम् ।

३ खर् परे रहते और अवसान में पदान्त रेफ को विसर्ग हो ।

४ 'रस्य विसर्गः' इति पाठान्तरम् । ५ इतोऽग्रे–'इति प्राप्ते' इति पाठान्तरम् ।

६ सम् पुम् कान् इन [ के विसर्ग ] को सकार ही हो ।

७ अम् परक खय् परे रहते पुम् [ के मकार ] को रु हो ।

[ [1]पुँस्पुत्रः । पुंस्पुत्रः । अम्परे किं ? पुंक्षीरम् । खयि किं ? पुंदासः। पुंसः संयोगान्तलोपेऽवशिष्टभागस्येदमनुकरणम् । [2]*ख्याञादेशे न। पुंख्यानम् ] ।

[3]नश्छव्यप्रशान् ।८।३।७। अम्परे छवि नान्तस्य पदस्य [4]रुः।

[5]विसर्जनीयस्य सः ।८।३।३४। खरि [ [6]परे विसर्जनीयस्य

'संयोगान्तस्य लोप' इति सकारलोपे पुम्-कोकिल इति स्थिते मस्य रुत्वम्, अनुनासिकानुस्वारविकल्पः, विसर्गः, 'संपुंकाना'मिति सः । 'पुँस्कोकिल' इत्यनुनासिकपक्षे रूपम् । 'पुंस्कोकिल' इत्यनुस्वारपक्षे रूपम् ।

[ननु पुंसः ख्यानं पुंख्यानमित्यत्रापि पुमो मस्य रुत्वं स्यादित्यत आह—ख्याञादेशे नेति । भाष्ये 'चक्षिङः ख्शाञ्' इति पठित्वा 'पूर्वत्रासिद्ध'मित्यसिद्धकाण्डे 'रषाभ्या'मिति णत्वविध्यनन्तरं 'ख्शाञश्शस्य यो वा' इति पठितमिति स्पष्टमन्यत्र एवंच यत्वस्याऽसिद्धतया खकारस्य अम्परकत्वाऽभावात् 'पुमः खयि' इति रुत्वं नेत्यर्थः । पुंख्यानमिति । 'मोऽनुस्वारः' । 'वा पदान्तस्य' इति परसवर्णविकल्पः]

नश्छव्यप्रशान् । 'न' इति षष्ठ्यन्तं 'पदस्ये'त्यधिकृतस्य विशेषणम्, तत स्तदन्तविधिः । 'अम्परे' इत्यनुवर्तते, 'रु' इति च । तदाह—अम्पर इत्यादिना 'अप्रशा'निति षष्ठ्यर्थे प्रथमा । तेन 'न तु प्रशान् शब्दस्ये'त्यर्थो लभ्यते

विसर्जनीयस्य सः । 'खरवसानयो'रित्यतो मण्डूकप्लुत्या खरीत्यनुवर्तते एकदेशे स्वरितत्वप्रतिज्ञानात् । तदाह—खरीति ।

१ [] एतदन्तर्गतः पाठो लिखितादर्शेषु नास्ति ।

२ चक्षिङ्धातुस्थानिक ख्याञादेश परे रहते पुम् के मकार को रु आदेश नहीं हो ।

३ अम् परक छव् परे रहते नान्तपद को 'रु' आदेश हो ।

४ 'रुः स्यात्' पाठ० ।

५ खर् परे रहते विसर्ग को स आदेश हो ।

६ क्वचिन्नायं पाठः ।

सः स्यात् ]। चक्रिँस्त्रायस्व। चक्रिंस्त्रायस्व। अप्रशान् किम्? प्रशान्तनोति। [1]पदस्य किम्? हन्ति। [[2]अम्परे किम्? सन्त्सरुः खड्गमुष्टिः]॥

[3]नॄन्पे ।८।३।१०। [4]नॄनित्यस्य रुर्वा पे॥ [5]कुप्वोः ᳲक ᳲपौ च ।८।३।३७। कवर्गे, पवर्गे च [6]परे विसर्गस्य ᳲक ᳲपौ स्तः। चाद्विसर्गः। नॄँ ᳲपाहि। नॄं ᳲपाहि। नॄँःपाहि। नॄंःपाहि। नॄन्पाहि॥

'शार्ङ्गिन् छिन्धि', 'चक्रिन् त्रायस्व' इति स्थिते नकारस्यानेन रुत्वम्, अनुनासिकानुस्वारविकल्पः। ततो विसर्गः। सत्वं। सस्य श्चुत्वेन शकारः। शार्ङ्गिँश्छिन्धीति। अनुनासिकपक्षे रूपम्। शार्ङ्गिंश्छिन्धीति। अनुस्वारपक्षे रूपम्। 'चक्रिँस्त्रायस्वे'त्यनुनासिकपक्षे। अनुस्वारपक्षे तु 'चक्रिंस्त्रायस्वे'ति। प्रशानिति। प्रपूर्वात् शाम्यतेः क्विपि 'अनुनासिकस्य क्वी'ति दीर्घः। 'मो नो धातो'रिति मस्य नः। तस्याऽसिद्धत्वान्नलोपो न।

नॄन्पे। 'नॄन्' इति द्वितीयान्तशब्दस्वरूपपरं षष्ठ्यन्तम्। षष्ठ्याः सौत्रो लुक्। नलोपाऽभावोऽपि सौत्र एव। 'मतुवसो रु' इत्यतः 'रु' इत्यनुवर्तते। 'उभयथर्क्षि'त्यनुवर्तते। कदाचिद्भवति, कदाचिन्न भवतीत्येवमुभयथा रुः प्रत्येतव्य इत्यर्थः। विकल्पेन भवतीति यावत्। तदाह—नॄनित्यस्येत्यादिना। 'अलोऽन्त्यस्ये'त्यन्त्यस्य नस्य रुत्वम्। नॄन्—पाहीति स्थिते नस्य रुत्वम्। अनुनासिकानुस्वारविकल्पः। 'खरवसानयो'रिति रेस्यफ नित्यं विसर्गे प्राप्ते—कुप्वो ᳲक ᳲपौ चेति। 'कुप्वोः' इति छेदः। 'क्रमा'दिति यथासंख्यसूत्रलभ्यम्। चाद् विसर्ग इति। 'शर्परे विसर्जनीयः' इत्यतो 'विसर्जनीय' इत्यनुकृष्यते इत्यर्थः। चकारः पक्षे विसर्गसमुच्चयार्थ इति यावत्। अन्यथा जिह्वामूलीयोपध्मानीयाभ्यां विसर्गस्य बाध एव स्यादिति भावः।

१ 'पदान्तस्य किं? हन्ति' पाठा०। २ लिखितादर्शेऽयं पाठो न दृश्यते।
३ 'नॄन्' के नकार को रु आदेश हो पकार परे रहते, विकल्प करके।
४ 'नॄनित्यस्य रुर्वा स्यात्पकारे परे' इति पा०।
५ विसर्ग के स्थान में ᳲक ᳲप आदेश हो क्रम से, कवर्ग पवर्ग परे रहते।
६ चकार से विसर्ग को विसर्ग आदेश भी हो। ६ 'परे' इति क्वचिन्न।

**सोऽपदादौ**[1] ।८।३।३८। विसर्गस्य सः स्यादपदाद्योः कुप्वोः । पयस्पाशम् । पयस्कल्पम् । यशस्कम् । यशस्काम्यति । [2]**अनव्ययस्येति वाच्यम्** । प्रातःकल्पम् ।[3]**काम्ये रोरेवेति वाच्यम्** । नेह—गीः काम्यति ॥

[4]**इणः षः** । ८।३।३९। इणः परस्य विसर्गस्य षः स्यात् पूर्वविषये । सर्पिष्पाशम् । सर्पिष्कल्पम् । सर्पिष्कम् । सर्पिष्काम्यति ॥

[6]**कस्कादिषु च** ।८।३।४८। एष्विण उत्तरस्य विसर्गस्य षः स्यादन्यस्य[7] तु सः । कस्कः । कौतस्कुतः । सर्पिष्कुण्डिका । धनुष्कपालमित्यादि । आकृतिगणोऽयम् ॥

---

सोऽपदादौ । विसर्गस्येति । 'कुप्वो' रित्यस्यायमपवादः । पयस्पाशमिति । 'याप्ये पाशप्' । कुत्सितं पय इत्यर्थः । यशस्कल्पमिति । ईषदसमाप्तौ कल्पप् । ईषदसमाप्तं यश इत्यर्थः । यशस्कमिति । 'अज्ञाते' इति, 'कुत्सिते' इति वा कः । यशस्काम्यतीति । यश आत्मन इच्छतीत्यर्थे 'सुप आत्मनः' इत्यनुवृत्तौ 'काम्यच्चे'ति काम्यच् । 'सनाद्यन्ता' इति धातुत्वाल्लडादयः । अनव्ययस्येति । 'सोऽपदादा'विति सत्वम्—अव्ययविसर्गस्य न भवतीत्यर्थः । प्रातःकल्पमिति । ईषदसमाप्तौ कल्पप् । ईषदसमाप्तः प्रातःकाल इत्यर्थः । अधिकरणशक्तिप्रधानस्यापि प्रातश्शब्दस्य वृत्तिविषये शक्तिमत्प्रधानत्वं च न विरुध्यते, दोषाभूतमहः, दिवाभूता रात्रिरितिवत् ।

काम्ये रोः । काम्यच्प्रत्यये परतो रुस्थानिकस्यैव विसर्गस्य सोऽपदादावित्ति सत्वं भवति, नान्यस्येत्यर्थः । गीःकाम्यतीति । गिरमात्मन इच्छतीत्यर्थे काम्यच् ।

इणः षः । 'इण' इति पञ्चमी । 'परस्ये' त्यध्याहार्यम् । 'विसर्जनीयस्ये'त्यनुवर्तते । तदाह—इणः परस्येति ।

---

१ विसर्ग के स्थान में 'स' आदेश हो अपदादि कवर्ग पवर्ग परे रहते ।

२ अव्यय के विसर्ग को [ 'सोऽपदादौ' इस सूत्रसे ] सकारादेश नहीं हो ।

३ काम्यच् प्रत्यय परे रहते रुस्थानिक विसर्ग को ही [ 'सोऽपदादौ' इस सूत्र से] सत्व हो, अन्य विसर्गको सत्व नहीं हो । ५ 'स्यात्' इति क्वचिन्न दृश्यते ।

६ कस्कादिगणपठित जो शब्द उनमें इण् से उत्तर विसर्ग को 'ष' आदेश हो, और इण् से अनुत्तर विसर्ग को 'स' आदेश हो ।

७ 'अन्यत्र तु सः' इति पाठान्तरम् ।

[[1]इदुदुपधस्य चाऽप्रत्ययस्य ।८।३।४१। इकारोकारोपधस्याऽप्रत्ययस्य विसर्गस्य षः स्यात्कुप्वोः परयोः। निष्प्रत्यूहम् । आविष्कृतम् । दुष्कृतम् । अप्रत्ययस्य किम् ? अग्निःकरोति । एकादेशशास्त्रनिमित्तकस्य न षत्वम् , कस्कादिषु भ्रातुष्पुत्रशब्दपाठात् । तेनेह न—मातुः कृपा[2] ]

[3]तस्य परमाम्रेडितम् ।८।१।२। द्विरुक्तस्य परमाम्रेडितं स्यात् ॥

[4]कानाम्रेडिते ।८।३।१२। कान्नकारस्य रुः [5]स्यादाम्रेडिते । काँस्कान् । कांस्कान् ॥

[ इदुदुपधस्येति । 'विसर्जनीयस्ये'त्यनुवर्तते । 'इदुदुपधस्ये' ति तद्विशेषणम् । 'इदुतौ उपधे यस्येऽ'ति बहुव्रीहिः । 'कुप्वो'रिति चानुवर्तते । तदाह—इकारोकारेति । अप्रत्ययस्येति । प्रत्ययावयवभिन्नस्येत्यर्थः । 'प्रत्ययभिन्नस्य विसर्गस्ये'त्यर्थे तु कविभिः कृतमित्यत्रापि षत्वं स्यात् । तत्र भिसः प्रत्ययत्वेऽपि विसर्गमात्रस्य प्रत्ययत्वाऽभावात् । निष्प्रत्यूहमिति ।प्रत्यूहः = विघ्नः, तस्याभावः-निष्प्रत्यूहम् । अर्थाभावेऽव्ययीभावः । आविष्कृतमिति । 'प्रकाशे प्रादुराविः स्या' दित्यमरः । अग्निः करोतीति । विसर्गस्य व्यपदेशिवद्भावेन प्रत्ययाऽवयवत्वादिति भावः ।

एकादेशेति । एकादेशशास्त्रसंपन्नरेफस्थानिकत्वेन विसर्गस्य एकादेशशास्त्रनिमित्तकत्वमिति भावः । भ्रातुष्पुत्रेति । एकादेशशास्त्रनिमित्तकस्यापि विसर्गस्य षत्वप्रवृत्तौ तु कस्कादिगणे भ्रातुष्पुत्रशब्दस्य पाठो व्यर्थः स्यात् । 'कस्कादिषु चे' ति षत्वार्थो हि तत्र पाठः । षत्वस्य च अनेनैव सिद्धौ तु किं तेनेति भावः ।

कानाम्रेडिते । 'का'निति, द्वितीयान्तशब्दस्वरूपपरं षष्ठ्यन्तम् । षष्ठ्याः सौत्रो लुक् । नलोपाभावोऽपि सौत्र एव । अलोऽन्त्यपरिभाषया कान्शब्दान्तस्येति लभ्यते । 'रु' इत्यनुवर्तते, तदाह—कान्नकारस्येत्यादिना ।

काँस्कानिति । 'कान्' इत्यस्य वीप्सायां द्विर्वचने कान् कान् इति-

१ इकार और उकार उपधा में हैं जिसके ऐसा जो प्रत्ययाऽवयवसे भिन्न विसर्ग उसको षत्व हो कवर्ग पवर्ग परे रहते । २ [] एतदन्तर्गतः पाठो लिखितादर्शेषु नास्ति । मन्ये कैश्चित्सिद्धान्तकौमुदीमनुसृत्य वर्द्धितः स्यात् ।

३ द्विरुक्त का जो पररूप सो आम्रेडित संज्ञक हो । ४ कान् के नकार को 'रु' आदेश हो आम्रेडित परे रहते । ५. 'स्यादाम्रेडिते [परे]' इति पाठान्तरम् ।

छे [1]च ।६।१।७३। [2]ह्रस्वस्य छे तुक् ।[3]स्वच्छा [या] । [ [4]शिवच्छाया ] ॥ [5]आङ्माङोश्च ।६।१।७४। [6]तुक् छे । आच्छादयति । माच्छिदत् ॥ [7]दीर्घात् ।६।१।७३। [8]तुक् छे । म्लेच्छति ॥ [9]पदान्ताद्वा ।६।१।७६। दीर्घात्पदान्ताच्छे तुग्वा [ [10]स्यात् ] । लक्ष्मीच्छाया । लक्ष्मीछाया ॥

इति हल्सन्धिः ॥ ३ ॥

---

स्थिते प्रथमनकारस्य रुत्वे अनुनासिकानुस्वारविकल्पः । रेफस्य विसर्गः । तस्य 'विसर्जनीयस्य स' इति सत्वं बाधित्वा 'कुप्वोः'रिति प्राप्तौ 'संपुंकाना'मिति सत्वम् ।

छे च । 'ह्रस्वस्य पिती'त्यतो 'ह्रस्वस्ये'ति, 'तु'गिति चानुवर्तते । 'संहितायाम्'-मित्यधिकृतम्, तदाह—ह्रस्वस्येति । तुकः ककार इत् । उकार उच्चारणार्थः । कित्त्वात् ह्रस्वस्यान्तावयवः । पदान्ताद्वा । 'तुक्', 'छे', 'दीर्घात्' इत्यनुवर्तते । तदाह—दीर्घादिति ।

इति श्रीगुरुप्रसादशास्त्रिसङ्कलितायां मध्यकौमुदीटीकायां बालमनोरमायां हल्सन्धिप्रकरणम् ।

---

१ ह्रस्वको तुक् का आगम हो छकार परे रहते ।
२ 'ह्रस्वस्य तुगागमः स्याच्छकारे परे । अच्छा' इति क्वचित्पाठा० ।
३ 'स्वच्छाया' इति मुद्रिते पाठः । ४ इदं लिखितादर्शेषु क्वापि न दृश्यते ।
५ आङ् और मांङ् को [ नित्य ] तुक् का आगम हो छकार परे रहते ।
६ 'तुगागमः स्याच्छे परे' इति पाठान्तरम् ।
७ दीर्घ को तुक् का आगम हो छकार परे रहते ।
८ 'तुगागमः स्याच्छे परे' इति पाठा० ।
९ पदान्त दीर्घ को तुक् का आगम विकल्प करके हो छकार परे रहते ।
१० 'स्या'दिति क्वचिन्न ।

[ ॥ अथ विसर्गसन्धिः ॥ ]

[1]विसर्जनीयस्य सः ।८।३।३४। [ खरि परे [2]विसर्जनीयस्य सः ] [3]शर्परे विसर्जनीयः ।८।३।३५। शर्परे खरि विसर्गस्य विसर्गो, न त्वन्यत् । कः त्सरुः । 'घनाघनः क्षोभणः' ॥ [4]वा शरि ।८।३।३६। [5]शरि [-परे ] विसर्गस्य विसर्गो वा [ स्यात् ]। हरिः शेते । हरिश्शेते । [6]*खर्परे शरि वा विसर्गलोपो वक्तव्यः ॥ हरि स्फुरति । हरिः स्फुरति ॥

[ [7]इति विसर्गसन्धिः ॥ ४ ॥ ]

विष्णुस्त्रातेति । विष्णुशब्दात् सुप्रत्यये तस्य रुत्वे विसर्गे सति विष्णुः त्रातेति स्थितेऽनेन सत्वम् । शर्परे इति । 'विसर्जनीयस्ये'त्यनुवर्तते । 'खरवसानयो'रित्यतः खर्ग्रहणं मण्डूकप्लुत्याऽनुवर्तते । शर् परो यस्मादिति च बहुव्रीहिः । तत्र खर्-विशेष्यम् । तदाह—शर्परे खरीति । विसर्गस्य विसर्गविधौ च फलमाह—न त्वन्य-दिति । विसर्गस्य विसर्गविधानं तदितरपरिसंख्यानार्थमिति भावः । वा शरि । 'विसर्जनीयस्ये'ति, 'विसर्जनीय' इति चाऽनुवर्तते । विसर्गस्य विसर्गवि-धानञ्च तस्य सत्वपरिसंख्यानार्थम् । वाग्रहणाच्च सत्वपरिसंख्यानं पाक्षिकम् । तदाह-शरि परे इति । खर्परे शरि । खर् परो यस्मादिति बहुव्रीहिः, तत्र-शर् विशेष्यम् । खर्परके शरि परे विसर्गस्य लोपविकल्पो वक्तव्य इत्यर्थः । लोपाऽभावपक्षे 'वा शरी'ति भवति ॥ इति विसर्गसन्धिः ॥ अतः परं स्वादिसन्धिः ।

१ विसर्जनीयके स्थानमें सकार आदेश हो खर् परे रहते ।

२ [] एतदन्तर्गतः पाठः क्वचिन्न ।

३ शर्परक खर् परे रहते बिसर्ग को विसर्ग ही आदेश हो, अन्य आदेश नहीं हो ।

४ शर् परे रहते विसर्ग को विसर्ग आदेश विकल्प करके हों ।

५ 'शरि परे विसर्गस्य विसर्गो वा स्यात्' पाठ० ।

६ खर् परे है जिसके ऐसा शर् परे रहते विसर्ग का लोप हो विकल्प करके ।

७ अयं पाठो लिखितेषु नास्ति ।

## [ अथ स्वादिसन्धिः ] ।

[१]ससजुषो रुः ।८।२।६६। पदान्तस्य सस्य[२], सजुषृशब्दस्य च रुः स्यात् ॥ [३]अतो रोरप्लुतादप्लुते ।६।१।११३। अप्लुतादतः परस्य रोरुः स्यादप्लुतेऽति । [४]शिवोऽर्च्यः । अतः किं ? देवा अत्र । अति [५]किं ? श्व आगन्ता । अप्लुतात्किम् ? एहि सुस्रोता ३ अत्र स्नाहि । प्लुतस्याऽत्वादतः परोऽयम् । अप्लुतादिति विशेषणे तु तत्सामर्थ्यान्नाऽसिद्धत्वम् ।

---

ससजुषो रुः । सश्च सजूश्च ससजुषौ, तयोरिति विग्रहः । पदस्येत्यधिकृतं सकारेण, सजुष्शब्देन च विशेष्यते, ततस्तदन्तविधिः । एवञ्च—सकारान्तं, सजुष्शब्दान्तं च यत् पदं तस्य रुः स्यादित्यर्थः । स च 'अलोऽन्त्यस्ये'त्यन्त्यस्य भवति । तत्फलितमाह—पदान्तस्येति । सजुष्शब्दस्येति । सजुष्शब्दान्तं यत् पदं, तदन्तस्य षकारस्येत्यर्थः । ततश्च सजुषौ सजुषः इत्यत्र षकारस्य न रुत्वम्, पदान्तत्वाभावात् । 'सजुष्शब्दान्तं यत्पद'मिति तदन्तविधिना च परमसजूरित्यत्र नाव्याप्तिः । नच सजूरित्यत्राव्याप्तिः शङ्क्या, व्यपदेशिवद्भावेन तदन्तत्वात् ।

शिवर् अर्च्य इति स्थिते—अतो रोः । 'ऋत उ'दित्यत 'उ'दित्यनुवर्तते । 'अतः' इति पञ्चमी । 'एङः पदान्तादती'त्यताऽतीत्यनुवर्तते । तदाह—अप्लुतादिति । देवा अत्रेति । देवास् अत्रेति स्थिते, सस्य रुः । तस्य दीर्घादाकारात् परत्वादतः परत्वाभावादुत्वं न, किंतु 'भोभगो' इति यत्वे, 'लोपश्शाकल्यस्ये'ति यकारलोपः । श्व आगन्तेति । श्वस् आगन्तेति स्थिते, सस्य रुः, तस्य ह्रस्वाकारपरकत्वाभावादुत्वं न, किंतु यत्वं, लोपश्च । एहीति । 'सुस्रोतस्' शब्दोऽत्र कस्यचित् संज्ञा । सम्बुद्धौ सोर्हल्ङ्यादिलोपः । 'दूराद्धूते च'ति टेः

---

१ पदान्त जो स् और पदान्त जो सजुष् शब्द उनको 'रु' आदेश हो ।

२ 'सजुषश्च' इत्येव लिखितेषु पाठो दृश्यते ।

३ अप्लुत ( ह्रस्व ) अकार से परे जो रु उसको उकार आदेश हो, अप्लुत ( ह्रस्व ) अकार परे रहते ।

४ 'शिवस्—अर्च्यः । शिवोऽर्च्यः' इति मुद्रिते पाठः ।

५ 'अतीति किं' इति मुद्रिते पाठः ।

तपरकरणस्य तु न सामर्थ्यं, दीर्घनिवृत्त्या चरितार्थत्वात्। [1]अप्लुतेऽतीति किं ? तिष्ठतु पय आ३ग्निदत्त !॥

[2]हशि च ।६।१।११४। [3]अप्लुतादतः परस्य रोरुः स्याद्धशि।

प्लुतः। सस्य रुः। सुस्रोत३र्-अत्रति स्थिते प्लुतात् परस्य रोरुत्वनिवृत्तये अप्लुतादिति पदमित्यर्थः।

नन्वत्र रोरतः परत्वाऽभावादेव उत्वनिवृत्तिसिद्धेरप्लुतादिति व्यर्थमेवेत्यत आह—प्लुतस्याऽसिद्धत्वादिति। परोऽयमिति। उत्वे कर्तव्ये प्लुतस्याऽसिद्धत्वादतः परोऽयं रुः। अतस्तस्य उत्वे प्राप्ते तन्निवृत्त्यर्थमप्लुतादित्यावश्यकमित्यर्थः।

नन्वप्लुतादित्युक्तेऽपि रोरुत्वमत्र दुर्वारम्, उत्वे कर्तव्ये प्लुतस्याऽसिद्धतया अप्लुतात्परत्वस्यापि सत्त्वादित्यत आह—अप्लुतादितीति। यदि उत्वे कर्तव्ये प्लुतस्यासिद्धत्वं, तर्हि अप्लुतादिति विशेषणं व्यर्थमेव स्यात्, दत्तेऽपि विशेषणे प्लुतस्याऽसिद्धतया अप्लुतात् परत्वस्यापि सत्त्वेन उत्वप्राप्तिरूपदोषस्य तादवस्थ्यात्। अतोऽप्लुतादिति विशेषणसामर्थ्यात् प्लुतस्य नासिद्धत्वमिति विज्ञायते इत्यर्थः। नन्वेवमपि 'अप्लुता'दिति व्यर्थं,'प्लुतात् परस्य रोरत' इति तपरकरणादेव उत्वनिवृत्तिसिद्धेः। नच उत्वे कर्तव्ये प्लुतस्याऽसिद्धत्वादतः परत्वस्यापि सत्त्वादुत्वं स्यादिति वाच्यं, तपरकरणसामर्थ्यादेव प्लुतस्याऽसिद्धत्वाभावविज्ञानेन अतः परत्वाऽभावेनैव उत्वनिवृत्तेः सम्भवादित्यत आह—तपरकरणस्येति। 'प्लुतस्याऽसिद्धत्वाऽभावसाधने' इति शेषः। कुत एतदत आह—दीर्घनिवृत्त्येति। 'देवा अत्रे'त्यादौ दीर्घव्यावृत्त्या लब्धप्रयोजनकत्वादित्यर्थः। येन विना हि यदनुपपन्नं तदेव तस्य गमकम्। प्रकृते तु प्लुतस्याऽसिद्धत्वेऽपि 'अत' इति तपरकरणं 'देवा अत्रे'त्यादौ दीर्घव्यावृत्तिरूपं प्रयोजनं लब्ध्वा उपपद्यमानं सत् कथं प्लुतस्याऽसिद्धत्वाऽभावं गमयितुं शक्नुयादिति भावः। तिष्ठतु पय आ३ग्निदत्तेति। अत्र 'पयस्' इति स्थिते, सस्य रुः। तस्य च प्लुतपरकत्वादुत्वं न।

हशि च। 'अतो रोरप्लुता'दिति पदत्रयमनुवर्तते। 'ऋत उ'दित्यत उदिति

---

१ 'अप्लुतेऽति किं' इत्येव लिखिते पाठः।

२ अप्लुत अकार से परे जो रु उसको उकार हो, हश परे रहते।

३ 'हशि च। तथा। शिवोवन्द्यः।' पा०।

शिवो वन्द्यः ॥

[1]भोभगोअघोअपूर्वस्य योऽशि ।८।३।१७। एतत्पूर्वस्य रोर्यादेशः [2]स्यादशि। देवा इह। देवायिह। 'भोस्' 'भगोस्' 'अघोस्' इति सान्ता निपाताः। तेषां रुत्वे, यत्वे च कृते—[3]व्योर्लघुप्रयत्नतरः शाकटायनस्य ।८।३।१८। [4]पदान्तयोर्यकारवकारयोर्लघूच्चारणौ यवौ वा स्तोऽशि [ [5]परे ]।

---

च। तदाह—अप्लुतादिति। शिवो वन्द्य इति। शिवस्-वन्द्य इति स्थिते—सस्य रुः। तस्य अत्परकत्वाऽभावात् पूर्वसूत्रेण उत्वं न प्राप्तमिति वचनमिदम्।

भोभगो। 'रोः सुपी'त्यतो 'रो'रित्यनुवर्तते। भो भगो अघो अ इत्येषां द्वन्द्वः। एते पूर्वे यस्मादिति बहुव्रीहिः। पूर्वशब्दश्च प्रत्येकं संबध्यते-भोपूर्वकस्य भगोपूर्वकस्य अघोपूर्वकस्य अकारपूर्वकस्य च रोरिति। तदाह—एतत्पूर्वकस्येति। निपाता इति। चादेराकृतिगणत्वादिति भावः। यत्वे चेति। 'भोभगो-अघो इत्यनेने'ति शेषः। 'भोय्—अच्युत' इति स्थिते 'लोपश्शाकल्यस्ये'ति तु न भवति, यकारस्य अकारपूर्वकत्वाऽभावात्।

व्योर्लघु। व् च य् च व्यौ, तयोरिति विग्रहः। 'पदस्ये'त्यधिकृतं तच्च वकारयकाराभ्यां विशेष्यते, विशेषणेन तदन्तविधिः। तेन वान्तस्य, यान्तस्य च पदस्येति लभ्यते। स च 'अलोन्त्यस्ये'त्यन्त्यस्य भवति, तथाच पदान्तयोर्यवयोरिति फलितम्। लघुः प्रयत्नो यस्योच्चारणे स-लघुप्रयत्नः। अतिशयितो लघुप्रयत्नः—लघुप्रयत्नतरः। अन्यपदार्थस्य च वर्तिपदार्थप्रकर्षापेक्षः प्रकर्षः। लघुतरप्रयत्नक इत्यर्थः। प्रत्येकाभिप्रायमेकवचनम्। आन्तर्यात्यस्य यः, वस्य वः। 'अशी'त्यनुवर्तते। शाकटायनग्रहणाद्विकल्पः। तदाह—पदान्तयोरिति। ततश्च 'भोय्-

---

१ भो भगो अघो और अपूर्वक जो रु उसको यकार आदेश हो, अश् परे रहते।

२ 'रोर्यादेशोऽशि' पा०।

३ पदान्त यकार वकार के स्थानमें लघूच्चारण य और व आदेश हो अश् परे रहते। ४ 'पदान्तयोर्यवयोः' पा०। ५ क्वचिन्न।

[ [1]यस्योच्चारणे जिह्वाग्रोपाग्र-मध्य मूलानां शैथिल्यं जायते स लघूच्चारणः ] ॥

[2]ओतो गार्ग्यस्य ।८।३।२०। [ [3]ओकारात्परस्य] पदान्तस्याऽलघुप्रयत्नस्य यस्य नित्यं लोपः [ [3]स्यात् । गार्ग्यग्रहणम्पूजार्थम् ]। भो अच्युत । लघुप्रयत्नपक्षे—भोयच्युत । पदान्तस्य किम्? । तोयम् ॥

[4]हलि सर्वेषाम् ।८।३।२२। भोभगोअघोअपूर्वस्य [ [5]लघ्वलघू-

अच्युतेऽत्यत्र यकारस्य पाक्षिको लघुप्रयत्नो यकारः । वकारोदाहरणं तु—'असावादित्य' इति ध्येयम् ।

ओतो गार्ग्यस्य । 'ओत' इति पञ्चमी । 'व्योरि'त्यतो यग्रहणमनुवर्त्तते, नतु वकारोऽपि, ओतः परस्य वस्याऽसंभवात् । 'पदस्ये'त्यधिकृतं यकारेण विशेष्यते, ततस्तदन्तविधिः । तेन-ओकारात् परो यो यकारस्तदन्तस्य पदस्येत्यर्थो लभ्यते । अलोऽन्त्यपरिभाषया च 'पदान्तस्य यकारस्ये'ति फलितम् । 'भोभगो' इत्यतोऽशीत्यनुवर्तते । 'लोपः शाकल्यस्ये'त्यतो 'लोपः' इत्यनुवर्तते । सच पूर्वविहितलघुप्रयत्नस्य न भवति, विधानसामर्थ्यात्, तदाह- ओकारादिति । ननु लोपस्य कथं नित्यत्वं, 'गार्ग्य'ग्रहणादित्यत आह—गार्ग्यग्रहणमिति । व्याख्यानादिति भावः । भो अच्युतेति । अलघुप्रयत्नपक्षे च यकारस्य नित्यं लोपः । भोयच्युतेति । अत्र लघुप्रयत्नस्य विधानसामार्थ्यान्न लोपः । तोयमिति । अत्र यकारस्य पदान्तत्वाभावादोतो गार्ग्यस्येति न भवति । अनेनाऽत्र 'भोभगो' इति नाऽनुवर्तते इति सूचितम् ।

हलि सर्वेषाम् । 'भोभगोअघोअपूर्वस्ये'त्यनुवर्तते । 'व्योर्लघुप्रयत्ने'त्यतो

१ लिखितेषु नास्ति ।

२ ओकार से परे जो पदान्त अलघुप्रयत्न यकार उसका नित्य लोप हो ।

३ अयं पाठो लिखिते नास्ति ।

४ भो भगो अघो अपूर्वक जो यकार उसका लोप हो, हल् परे रहते ।

५ लिखिते न दृश्यते ।

चारणस्य ] यस्य [ [1]नित्यं ] लोपः स्याद्धलि । भो देवाः । भगो नमस्ते । अघो याहि । देवा यान्ति ॥ [2]रोऽसुपि ।८।२।६६। अह्नो रेफादेशो, न तु सुपि । अहरहः । अहर्गणः । असुपि किम् ? अहोभ्याम् । अत्र 'अहन्' इति रुत्वम् । *[3]रूपरात्रिरथन्तरेषु रुत्वं वाच्यम् । अहो रूपम् ।

यकारग्रहणमनुवर्तते । तदाह—भोभगो इति । रोऽसुपि । रः-असुपीतिच्छेदः । 'अहन्' इति सूत्रमनुवर्तते, तच्च लुप्तषष्ठीकं पदं, तदाह—अह्न इति । न तु सुपीति । पर्युदासाश्रयणे तु 'नञिव'युक्तन्यायेन सुब्भिन्ने प्रत्यये परे इत्यर्थः स्यात्, ततश्च 'अहर्वा'नित्यादावेव स्यान्न त्वहर्भातीत्यादावपि, अतः प्रसज्य-प्रतिषेध इहाश्रितः ।

अहरहरिति । 'नित्यवीप्सयो'रिति द्विर्वचनम् । अहन्-अहन् इति स्थिते, रत्वम् । 'न लुमते'-ति निषेधात्सुप्परकत्वाऽभावः । 'अह'न्निति रुत्वे तु 'अतो रोरप्लुता'दित्युत्वं स्यात् । अहर्गण इति । अह्नां गण इति विग्रहः । 'अह'-न्निति रुत्वे तु 'हशि चे'त्युत्वं स्यात् । अहोभ्यामिति । 'अहन् भ्या'मिति स्थिते नकारस्य सुप्परकत्वान्न रेफः । अत्रेति । 'अह'न्निति रुत्वे, 'हशि चे'त्युत्वे च 'आद् गुण'इत्याशयः । रूपरात्रीति । 'अहन्शब्दस्ये'ति शेषः । 'रोऽसुपी'ति रत्वस्याऽयमपवादः । अहोरूपमिति । अह्नो रूपमिति विग्रहः । 'अहन्-रूप'-मिति स्थिते नकारस्य रुत्वम् । उत्वम् । 'आद्गुणः' । रत्वे तु 'हशि चे'त्युत्वं न स्यात् । गतमहो रात्रिरेषेति । 'अहन्-रात्रि'रिति स्थिते, रुत्वम्, उत्वम्, 'आद्गुणः' । रत्वे तु उत्वं न स्यात् ।

ननु अहश्च रात्रिश्चेति द्वन्द्वे, 'अहस्सर्वैकदेशे'त्यादिना समासान्ते अचि, 'यस्येति चे'ति लोपे, नकारस्य रुत्वे, उत्वे, आद्गुणे, 'रात्राह्नाहाः पुंसी'ति पुंस्त्वे, 'अहोरात्र' इति रूपं भवति, अत्र नकारस्य 'रात्रि'शब्दपरकत्वाभावात्

१ 'नित्य'मिति लिखिते नैव दृश्यते ।

२ अहन् शब्दको रेफ आदेश हो, परन्तु सुप् परे हो तो रेफ आदेश नहीं हो ।

३ रूप रात्रि और रथन्तर शब्द परे रहते अहन् शब्द के नकार को रुत्व ( रु आदेश ) हो ।

गतमहो, रात्रिरेषा। एकदेशविकृतन्यायेन-अहोरात्रः॥ अहो रथन्तरम्।

*[1]अहरादीनां पत्यादिषु वा रेफो, विसर्गापवादः। [[2]अहःपतिः। अह्ँपतिः]। [3]अहर्प्पतिः॥ गीर्प्पतिः। धूर्प्पतिः। पक्षे-विसर्गोपध्मानीयौ॥

[4]रो रि ८।३।१४। रेफस्य रेफे[5] परे लोपः [[6]स्यात्]॥

[7]ढ्रलोपे पूर्वस्य दीर्घोऽणः ।६।३।१११। ढरेफयोर्लोपनिमित्तयोः

---

कथं रुत्वम्? ततश्च 'रोऽसुपी'ति रत्वे, उत्वं न स्यादित्यत आह—एकदेशेति। अहोरथन्तरमिति। अहश्च रथन्तरं चेति द्वन्द्वः। रथन्तरं—सामविशेषः।

ननु 'अहरादीना'मिति रेफविशिष्टस्योपादानाद्रेफस्य रेफविधानं व्यर्थमित्यत आह—विसर्गापवाद इति। अहर्पतिरिति। अह्नां पतिरिति विग्रहः। 'अचो रहाभ्या'मिति पक्षे पकारस्य द्वित्वम्। गीर्पतिरिति। गिरां पतिरिति विग्रहः। धूर्पतिरिति। धुरां पतिरिति विग्रहः। 'र्वोरुपधाया' इति दीर्घः। पक्षे इति। रत्वाभावपक्षे विसर्गस्य 'कुप्वो'रिति उपध्मानीय-विसर्गौ। 'इदुदुपधस्ये'ति षत्वं तु तपरकरणान्नेति भावः।

रो रि। 'र'इति षष्ठी। 'ढो ढे लोप' इत्यतो 'लोप' इत्यनुवर्तते, तदाह—रेफस्येति। पुनर्-रमते इति स्थिते रेफस्य लोपः।

ढ्रलोपे। ढ् च र् श्च ढ्रौ, तौ लोपयतीति-ढ्रलोपः। ण्यन्तात्कर्मण्युपपदे अण्, उपपदसमासः। ढलोपनिमित्तं, रेफलोपनिमित्तं च विवक्षितम्। तच्च ढकार-

---

१ अहरादि का पत्यादि शब्द परे रहते ( विसर्ग का अपवाद ) रेफ आदेश हो, विकल्प करके।

२ लिखितादर्शे नाऽयं पाठो दृश्यते।

३ 'अहर्पतिः' गीर्पतिः' 'धूर्पतिः' इति पा०।

४ रेफ परे रहते रेफ का लोप हो।

५ 'रेफस्य रेफे लोपः' इति पा०।

६ 'स्या' दिति लिखितादर्शेषु नास्ति।

७ ढकारलोपनिमित्तक जो ढकार, और रेफलोपनिमित्त जो रेफ, वह परे रहते पूर्व अण् ( अ-इ-उ ) को दीर्घ हो।

पूर्वस्याऽणो दीर्घः [ [1]स्यात् ]। पुना रमते। [ [2]हरी रम्यः। शम्भू राजते ]। अणः किम्? [ [3]तृढः। ] वृढः।

'मनस्-रथ' इत्यत्र रुत्वे कृते, 'हशि चे'त्युत्वे 'रोरी'ति लोपे च प्राप्ते-

[4]विप्रतिषेधे परं कार्यम् ।१।४।२। तुल्यबलविरोधे परं कार्यं स्यात्।

---

रेफात्मकमेव, 'ढोढे लोपः', 'रो री'ति सूत्रे तयोरेव ढ्लोपनिमित्तत्वात्। तथा च ढलोपनिमित्ते ढकारे, रेफलोपनिमित्ते रेफे च परतः पूर्वस्याऽणो दीर्घ इत्यर्थः फलति। तदाह—ढरेफयोरिति। 'ढलोपे, रेफलोपे च पूर्वस्याणो दीर्घ' इति तु न व्याख्यातं, तथा सति 'चयनीय'मित्यनीयर्प्रत्ययान्ते 'तस्य लोप' इति रेफलोपे यकारादकारस्य, 'चकार' 'चचारे'त्यादौ अभ्यासे अकारस्य च हलादिशेषेण रेफलोपे दीर्घापत्तेः।

पुना रमत इति। 'पुनर्-रमते' इति स्थिते 'रो री'ति रेफलोपः। तन्निमित्ते रेफे परे नकारादकारस्य दीर्घः। हरी रम्य इति। हरिस् रम्य इति स्थिते रुत्वे, रेफलोपे चाऽनेन दीर्घः। शम्भू राजत इति। शम्भुस् राजते इत्यत्र रुत्वे, रेफलोपेऽनेन दीर्घः।

[तृढो] वृढ इति। अत्र ऋकारस्य दीर्घनिवृत्त्यर्थमण्ग्रहणम्। ऋकारश्चात्र अण्ग्रहणेन न गृह्यते, पूर्वेणैव णकारेण अण् प्रत्याहाराश्रयणात्, अन्यथा दीर्घश्रुत्या 'अच' इत्युपस्थितौ किमण्ग्रहणेनेति भावः।

ननु 'मनोरथ' इत्यत्र मनस्—रथ इति स्थिते, सस्य रुत्वे, तस्य रेफस्य 'हशि चे'त्युत्वं, 'रो री'ति लोपश्चेत्युभयं प्रसक्तं, तत्र कतरद्बाध्यमित्यत्र निर्धारयति—मनस् रथ इत्यत्रेति। 'मनस् रथ' इत्यत्र रुत्वे कृते, 'हशि चे'त्युत्वे, रो री'ति रेफलोपे च प्राप्ते, उत्वमेवेत्यन्वयः। नन्वत्र परत्वाद्रेफस्य लोप एव स्यादिति शङ्कितुमाह—विप्रतिषेधे इति।

तुल्यबलेति। द्वयोः शास्त्रयोः क्वचिल्लब्धावकाशयोरेकत्र लक्ष्ये युगपत्सम्भव-

---

१ 'स्या' दिति क्वचिन्न।

२ [ ] एतदन्तर्वर्त्ती पाठो लिखितेषु नास्ति।

३ 'तृढ' इति लिखितेषु नास्ति।

४ तुल्यबल विरोध में परकार्य हो। अन्यत्र अन्यत्र लक्ष्यों में लब्धावकाश जो शास्त्र उनका एक लक्ष्य में समावेश 'तुल्यबलविरोध' कहलाता है।

इति लोपे प्राप्ते। 'पूर्वत्रासिद्ध'मिति 'रो री'त्यस्याऽसिद्धत्वादुत्वमेव—मनोरथः ॥

[1]एतत्तदोः सुलोपोऽकोरनञ्समासे हलि।६।१।१३२।अककारयोरेतत्तदोर्यः सुस्तस्य लोपो हलि, [2]नतु नञ्समासे। एष विष्णुः। स शम्भुः। अकोः किम्? एषको रुद्रः। अनञ्समासे किम्? असः शिवः।

---

स्तुल्यबलविरोधः। कार्यस्य परत्वञ्च—परशास्त्रविहितत्वमेव। इति लोपे प्राप्त इति। 'हशि चे'त्यस्यावकाशः—'शिवो वन्द्य' इति। रेफलोपस्यावकाशः—'पुना रमते' इति। ततश्च तयोस्तुल्यबलयोः—उत्व—रेफलोपयोः 'मनोरथ' इत्यत्र युगपत् प्राप्तेः सम्भवादन्यतरस्मिन् बाधनीये सति परत्वादुत्वं प्रबाध्य रेफलोपे प्राप्ते इत्यर्थः।

एतत्तदोः। 'एतत्तदो' रित्यत्र 'त्यदादीनां मिथः सहोक्तौ यत्परं तच्छिष्यते' इत्येकशेषस्य, त्यदाद्यत्वस्य चाऽभाव आर्षः। 'सु' इति लुप्तषष्ठीकं पदम्—'एतत्तदो'रित्यनेनान्वेति—'एतत्तदोः सकारस्ये'ति। अत एव सोर्लोपः सुलोप इति न षष्ठीसमासः, असामर्थ्यात्। अविद्यमानः ककारो ययोस्तौ अकौ, तयोः—अकोरिति बहुव्रीहिः। 'अनञ्समासे' इति न पर्युदासः, तथा सति नञिवयुक्तन्यायात् नञ्समाससदृशे समास एव स्यात्, न तु 'एष विष्णु'रित्यादिषु इत्यभिप्रेत्याह—न तु नञ्समास इति।

एषको रुद्र इति। 'अव्ययसर्वनाम्नामकच्प्राक्टेः' इति अकच्। अत्र एतच्छब्दस्य सककारत्वान्न सुलोपः। तच्छब्दे अकचि च 'सको रुद्र' इत्यपि प्रत्युदाहरणम्। न च अकचि सति शब्दान्तरत्वादस्य प्राप्तिरेव नेति वाच्यम्, 'तन्मध्यपतितस्तद्ग्रहणेन गृह्यते' इति परिभाषया साकच्कस्य अशब्दान्तर-

---

१ ककार रहित जो एतद् और तद् शब्द, तदर्थगत सङ्ख्याभिधायी जो सु, उसका लोप हो, हलपरे रहते। परन्तु नञ्समास में सुका लोप नहीं हो।

२ 'न तु नञ्समासे' इत्यस्य स्थाने 'नञ्समासे न' इत्येव सर्वत्र लिखितेषु पाठो दृश्यते।

हलि किम् ? एषोऽत्र ॥ [1]सोऽचि लोपे चेत्पादपूरणम् ।६।१।१३४। 'स [ स् ]' इत्यस्य सोर्लोपः स्यादचि, पादश्चेल्लोपे सत्येव पूर्येत । 'सेमामविड्ढि प्रभृतिम्' । 'सैष दाशरथी रामः' ॥

[2]इति विसर्गसन्धिः ॥

॥ [ [3]इति स्वादिसन्धिः ] ॥

---

त्वात् । अस्यां परिभाषायां तु इदमेव ज्ञापकम् । असःशिव इति । न सः--अस इति विग्रहः । 'विसर्जनीयस्य स' इति सत्वे, श्चुत्वेन शकारः । नञ्समासत्वान्न सुलोपः । एषोऽत्रेति । एषस्--अत्रेति स्थिते, सस्य रुत्वम्, उत्वम्, आद्गुणः । अत्र हल्परकत्वाभावान्न लोपः ।

सोऽचि लोपे । 'स' इति प्रथमैकवचनान्तस्वरूपपरं, ततः षष्ठ्या लुक् । एवञ्च 'सस्'शब्दस्येति लभ्यते । 'सुलोप' इत्यनुवर्तते । तदाह---सस् इत्यादिना ।

इति श्रीगुरुप्रसादशास्त्रिकृतायां बालमनोरमायां स्वादिसन्धिः ।

इति पञ्चसन्धिप्रकरणम् ।



---

१ 'स स्' इसके सुका लोप हो, अच् परे रहते, लोप होने से ही यदि पादकी पूर्ति होती हो तो ।

२ 'इति विसर्गसन्धिः' इत्येवं पाठो लिखितेषु दृश्यते ।

३ 'इति स्वादिसन्धिः' इति पाठस्तु मुद्रितेष्वेव दृश्यते, न लिखितेषु ।

## [ [1]अथाऽजन्ताः पुँल्लिङ्गाः ] ।

**अर्थवदधातुरप्रत्ययः प्रातिपदिकम्** ।१।२।४५। धातुं, प्रत्ययं, प्रत्ययान्तं च वर्जयित्वाऽर्थवच्छब्दस्वरूपं प्रातिपदिकसंज्ञं [2]स्यात् ॥

**कृत्तद्धितसमासाश्च** ।१।२।४६। कृत्तद्धितान्तौ, समासाश्च [3]तथा स्युः ॥

---

अर्थवदधातुः । अर्थोऽस्यास्तीत्यर्थवत् । नपुंसकलिङ्गानुरोधात्—'शब्दस्वरूप'मिति विशेष्यमत्राध्याहार्यम् । अधातुरिति, अप्रत्यय इति च तद्विशेषणम् । न धातुरधातुरिति नञ्तत्पुरुषः । 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' इति पुंस्त्वम् । 'अप्रत्यय' इत्यावर्तते । प्रत्ययभिन्नं, प्रत्ययान्तभिन्नं च विवक्षितम् । पूर्ववत्पुंस्त्वम् । 'संज्ञाविधा'विति निषेधस्तु प्रत्ययस्य यत्र संज्ञा तद्विषय इति नाऽत्र प्रवर्त्तते इति भावः । तदाह—धातुं प्रत्ययमित्यादिना । अव्युत्पन्ना डित्थादिशब्दा इहोदाहरणानि ।

कृत्तद्धित । कृच्च, तद्धितश्च, समासश्चेति विग्रहः । पूर्वसूत्रात् 'प्रातिपदिक'-मित्यनुवर्तते, तच्च बहुवचनान्ततया विपरिणम्यते । प्रत्ययग्रहणपरिभाषया कृत्तद्धितेति तदन्तग्रहणम् । तदाह—कृत्तद्धितान्ताविति । कृत्तद्धितान्तयोः प्रत्ययान्तत्वात् पूर्वसूत्रेणाऽप्राप्तौ कृत्तद्धितग्रहणम् । केवलयोः कृत्तद्धितयोः संज्ञायां प्रयोजनाऽभावात् 'संज्ञाविधा'विति निषेधोऽत्र न भवति । अस्मादेव पूर्वसूत्रे संज्ञाविधावपि प्रत्ययग्रहणपरिभाषया तदन्तलाभात् प्रत्ययान्तपर्युदासः । केचित्तु अर्थवदित्यनुवर्त्य तत्सामर्थ्यात्तदन्तविधिमाहुः । कृदन्ते उदाहरणं यथा—'कर्ता' 'हर्ता' इत्यादि । तद्धिते उदाहरणं यथा—'औपगव' इत्यादि । समासे उदाहरणं यथा—'राजपुरुष' इत्यादि ।

---

अर्थवत् । धातुभिन्न प्रत्ययभिन्न प्रत्ययान्तभिन्न जो अर्थवान् शब्द स्वरूप वह प्रातिपदिकसंज्ञक हो ।

कृत्तद्धित । कृदन्त तद्धितान्त और समास इनकी प्रातिपदिक संज्ञा हो ।

---

१ लिखितेषु नास्ति । २ 'प्रातिपदिकं स्यात्' पा० ।

३ 'प्रातिपदिकसंज्ञाः स्युः' पा० ।

स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसा-म्ङ्योस्सुप् ।४।१।२। सु और जस् [1][ इति ]-प्रथमा। अम् औट् शस्-द्वितीया। टा भ्यां भिस्-तृतीया। ङे भ्यां भ्यस्-चतुर्थी। ङसि भ्यां भ्यस्-पञ्चमी। ङस् ओस् आम्-षष्ठी। ङि ओस् सुप्-सप्तमी।

[ [2]प्रत्ययः ।३।१।१। आ पञ्चमसमाप्तेरधिकारोऽयम्।

[2]परश्च ।३।१।२। अयमपि तथा ]।

ङ्याप्प्रातिपदिकात् ।४।१।१। ङ्यन्तादाबन्तात्प्रातिपदिकाच्च परे

---

स्वौजसमौट्। अत्र समाहारद्वन्द्वः, इतरेतरयोगद्वन्द्वो वा, तथा सति सौत्रमेकवचनम्। 'ङ्याप्प्रातिपदिका'दित्यधिकृतं, 'प्रत्ययः', 'परश्चेति' च। यथायथं च विपरिणम्यते। तदाह—ङ्यन्तादित्यादिना।

[प्रत्ययः। इत ऊर्ध्वमापञ्चमाध्यायपरिसमाप्तेः प्रत्ययशब्दः संज्ञात्वेनाधिक्रियते इत्यर्थः। 'हनश्च वधः', 'ई च खनः,' 'नडादीनां कुक्चे'त्यादीनामादेशागमानां तु न प्रत्ययसंज्ञा, महासंज्ञाकरणात्।

अयमपि तथेति। अयमपि योग आ पञ्चमपरिसमाप्तेरधिक्रियते इत्यर्थः। परश्चेति। अत्राऽवधिनियमे तु व्याख्यानमेव शरणम् ]।

ङ्याप्प्रातिपदिकात्। ङी च, आप् च, प्रातिपदिकं च एषां समाहारः—ङ्याप्रातिपदिकं, तस्मादिति समाहारद्वन्द्वः। ङीति—ङीप्ङीष्ङीनां सामान्येन

---

स्वौजस। ङ्यन्त, आबन्त और प्रातिपदिक से स्वादि प्रत्यय हों।

प्रत्ययः। यह पञ्चमाध्याय की समाप्ति पर्यन्त अधिकार है।

परश्च। यह भी पञ्चमाध्याय की समाप्ति पर्यन्त अधिकार है।

ङ्याप्प्रा। ङ्यन्त से, आबन्त से और प्रातिपदिक से परे स्वादि प्रत्यय हों।

---

१ क्वाचित्कः पाठोऽयम्। २ अयं ग्रन्थः लिखितेषु क्वापि नास्ति।

'स्वादयः प्रत्ययाः स्युः ॥ सुपः ।१।४।१०३। सुपस्त्रीणि त्रीणि वचनान्येकश एकवचन-द्विवचन-बहुवचनसंज्ञानि स्युः ॥

द्व्येकयोर्द्विवचनैकवचने ।१।४।२२। द्वित्वैकत्वयोरेते स्तः ॥

विरामोऽवसानम् ।१।४।११०। वर्णानामभावोऽव[सा]नसंज्ञः[1] स्यात् । रुत्व-विसर्गौ । रामः । ❋अयोगवाहानाम [[2]कार]स्योपरि, शर्षु चेति

---

ग्रहणम् । आबिति च टाप्डाप्चापां ग्रहणम् । प्रत्ययग्रहणपरिभाषया च तदन्तग्रहणम् । तदाह—ङ्यन्तादित्यादिना ।

सुपः । 'सुप्' इति प्रत्याहारः, ततः षष्ठ्येकवचनम् । 'तान्येकवचनद्विवचनबहुवचनान्येकशः' इति सूत्रं 'तानी'तिवर्जमनुवर्तते । 'तिङस्त्रीणि त्रीणी'त्यतः 'त्रीणि त्रीणी'त्यनुवर्तते । तदाह—सुपस्त्रीणीति ।

द्व्येकयोरिति । 'द्व्येकयो'रिति भावप्रधानो निर्देशः, अन्यथा 'द्व्येकेष्वि'ति स्यादित्यभिप्रेत्य व्याचष्टे—द्वित्वैकत्वयोरिति । रुत्वविसर्गाविति । रामशब्दात् प्रथमाविभक्तेरेकवचने सुप्रत्यये सति, उकारस्य इत्त्वे लोपे, सस्य 'ससजुषो'रिति रुत्वं, रेफस्य 'खरवसानयो'रिति विसर्गश्चेत्यर्थः ।

राम इति । तथाच श्रुतिः—

---

सुपः । सुप् के जो तीन तीन वचन सो प्रत्येक—एकवचन, द्विवचन, बहुवचन सञ्ज्ञक हों ।

द्व्येकयो । द्वित्वकी विवक्षा में द्विवचन हो और एकत्व की विवक्षा में एकवचन हो ।

विरामो । वर्णों का जो अभाव सो अवसान सञ्ज्ञक हो ।

अयोगवाहाना । अयोगवाहों का ( अनुस्वार, विसर्ग, जिह्वामूलीय, उपध्मानीय और यमों का ) अक्षरसमाम्नाय में अकार के आगे और शर् प्रत्याहार में भी उपसङ्ख्यान ( पाठ ) करना चाहिए ।

---

१ 'अवसानं स्यात्' पा० । २ 'मस्योपरि' इत्येव लिखितेषु पाठो दृश्

वाच्यम्। यमाऽनुस्वार-विसर्ग-जिह्वामूलीयोपध्म[illegible]।
तेनेह विसर्गस्य यत्वादनचि चेति द्वित्वपक्षे—रा[illegible]।

**सरूपाणामेकशेष एकविभक्तौ ।१।२।६४।** [illegible]ानि सरूपाण्येव दृष्टानि तेषामेक एव शिष्यते, [1]अन्ये [ तु ] लुप्यन्ते। यः शिष्यते स लुप्यमानार्थाऽभिधायी। **प्रथमयोः** [illegible] ।६।१।१०२। अकः प्रथमाद्वितीययोरचि [ [2]परे ] पूर्वसवर्णदीर्घ एकादेशः स्यात्। इति प्राप्ते। **नादिचि ।६।१।१०४।** आदिचि न पूर्वसवर्णदीर्घः। वृद्धिरेचि। रामौ।

---

'रमन्ते योगिनोऽनन्ते सत्यानन्दे चिदात्मनि'।
इति रामपदेनासौ परं ब्रह्माभिधीयते ॥' इति।

रामशब्दे 'करणाधिकरणयोश्च' इत्यधिकारे 'हलश्च' इत्यधिकरणे घञ्। कृत्तद्धिते'ति प्रातिपदिकत्वम्। यदि तु—अव्युत्पन्नः, संज्ञाशब्दो वा—रामशब्दः, तदा तु 'अर्थव'दिति प्रातिपदिकत्वं बोध्यम्।

सरूपाणाम्। 'एकविभक्ता'विति 'सरूपाणा'मित्यत्रान्वेति। समानं रूपं येषां तानि—सरूपाणि। ततो निर्धारणे षष्ठी। 'वृद्धो यूने'त्युत्तरसूत्रादेवेत्यपकृष्यते। शिष्यते इति—शेषः। कर्मणि घञ्। एकश्चासौ शेषश्चेति 'पूर्वकालैके'ति समासः। तथा च—एकस्यां विभक्तौ परतः सरूपाणामेव दृष्टानां मध्ये एकः शिष्यते इति फलति। तदाह—एकविभक्ताविति।

---

सरूपाणा। विभक्तित्वावच्छिन्न यावद्विभक्ति परे रहते जिनका समान ही रूप देखा गया हो उनमें से एक का ही शेष हो, अन्य का लोप हो।

प्रथमयोः। अक् से प्रथमा और द्वितीया सम्बन्धी अच् परे रहते पूर्व पर के स्थान में पूर्व का सवर्ण दीर्घ एकादेश हो।

नादिचि। अवर्ण से इच् परे रहते पूर्वसवर्ण दीर्घ नहीं हो।

---

१ 'अन्ये लुप्यन्ते'इति पाठः क्वचिदेव दृश्यते। 'तु' इति क्वचिन्न।
२ 'परे' इति क्वचिन्न।

**बहुषु बहुवचनम्** ।१।४।२१। बहुत्वविवक्षायां बहुवचनं स्यात् ॥ **चुटू** ।१।३।७। प्रत्ययाद्यौ चुटू इतौ स्तः ॥ **विभक्तिश्च** ।१।४।१०४। सुप्तिङौ विभक्तिसंज्ञौ स्तः ॥ **न विभक्तौ तुस्माः** ।१।३।४। [1]विभक्तिस्थास्तुसमा नेतः । इति सस्य नेत्त्वम् । रामाः ॥

---

बहुषु इति । पूर्वसूत्राऽवैरूप्याय इहापि बहुशब्दो बहुत्वपर इत्याह—बहुत्वेति ।

चुटू । 'उपदेशेऽजनुनासिक इत्' इत्यतः 'इ'दित्यनुवर्तते । तच्च द्विवचनान्ततया विपरिणम्यते । 'आदिर्ञिटुडवः' इत्यत 'आदि'ग्रहणमनुवर्त्य तदपि द्विवचनान्ततया विपरिणम्यते । 'षः प्रत्ययस्ये'त्यनुवर्तते । तदाह—प्रत्ययाद्याविति ।

विभक्तिश्च । 'सुपः' इति पूर्वसूत्रात् सुब्ग्रहणं, 'तिङस्त्रीणी'त्यतस्तिङ्ग्रहणं चानुवर्तते, एकदेशे स्वरितत्वप्रतिज्ञाबलात् । तदाह—सुप्तिङाविति । चकारः पुरुषवचनसंज्ञाभिः समावेशार्थः । तेन एकसंज्ञाधिकारस्थत्वेऽपि पुरुषवचनसंज्ञाभिर्न पर्यायः, किन्तु समावेश एव । अन्यथा 'रामेभ्यः' 'भवामः' इत्यादौ विभक्तिसंज्ञाविरहेण 'न विभक्ता'वितीत्त्वनिषेधो न स्यात् ।

जसः सकारस्य 'हलन्त्य'मितीत्संज्ञायां तस्य लोपमाशङ्क्याह—न विभक्तौ । तु स् म-एतेषां द्वन्द्वः । 'इत'इत्युनुवृत्तं बहुवचनान्ततया विपरिणम्यते । तदाह—विभक्तिस्था इति ।

---

बहुषु । बहुत्व की विवक्षा में बहुवचन हो ।

चुटू । प्रत्यय के आदि के जो चवर्ग और टवर्ग, उनकी इत्संज्ञा हो ।

विभक्तिश्च । सुप् और तिङ् की 'विभक्ति' सञ्ज्ञा हो ।

न विभक्तौ । विभक्ति में वर्त्तमान जो तवर्ग, सकार और मकार उनकी इत्सञ्ज्ञा नहीं हो ।

---

१ 'स्तवर्गसकारमकाराः' इति, 'स्तवर्गसमाः' इति च पा० ।

**एकवचनं सम्बुद्धिः ।२।३।४९।** सम्बोधन प्रथमाया एकवचनं 'सम्बुद्धि'संज्ञं स्यात् ॥ **यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् ।१।४।१३।** यः प्रत्ययो यस्माक्रियते तदादि शब्दस्वरूपं तस्मिन्प्रत्यये परेऽङ्गसञ्ज्ञं [1]स्यात् ॥ **एङ्ह्रस्वात्सम्बुद्धेः ।६।१।६९।** एङन्ताद्ध्रस्वान्ताच्चाऽङ्गा-

हे राम स् इति स्थिते, 'एङ्ह्रस्वात्संबुद्धेः' इति लोपं विधास्यन् संबुद्धिसंज्ञामाह—एकवचनमिति । 'प्रातिपदिकार्थलिङ्गे'त्यतः 'प्रथमे' त्यनुवृत्तं षष्ठ्या विपरिणम्यते । 'संबोधने चे'त्यतः 'संबोधने' इत्यनुवर्तते । तदाह—संबोधने इति ।

यस्मात्प्रत्ययविधिः । यस्मादित्यस्य प्रकृतिभूतादित्यर्थः । यः प्रत्यय इति । यच्छब्दान्तराध्याहारस्तु प्रत्यासत्तिलभ्यः । स च यस्माद्यस्य विधिः तस्मिन्प्रत्यये तदादेरङ्गसंज्ञेत्यर्थलाभाय । तत् = प्रकृतिरूपं आदिर्यस्य तत्—तदादि । नपुंसकवशाच्छब्दरूपमित्यध्याहार्यम् । तदाह—तदादि शब्दस्वरूपमिति । प्रकृते च रामशब्दस्य प्रकृतिमात्रस्य तदादित्वं तु व्यपदेशिवद्भावाद् बोध्यम् ।

एङ्ह्रस्वात् । 'एङ्ह्रस्वा'दित्यङ्गविशेषणं, ततस्तदन्तविधिः । 'हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं ह'लित्यतो हलिति प्रथमान्तमनुवर्तते, तच्चाङ्गादित्यत्रान्वेति—अङ्गात् परं हलिति । 'लोपो व्यो'रित्यतो लोप इत्यनुवर्तते । तच्च हलित्यनेन समानाधिकरणयेनान्वेति । लुप्यते इति लोपः । कर्मणि घञ् । 'संबुद्धे'रित्य-

एकवचनं । सम्बोधन में जो प्रथमा का एकवचन वह 'सम्बुद्धि' संज्ञक हो ।

यस्मात्प्रत्यय । जो प्रत्यय जिस ( प्रकृति ) से किया जाए तदादि जो शब्दस्वरूप, वह उस प्रत्यय परे रहते अङ्गसञ्ज्ञक हो ।

एङ्ह्रस्वात् । एङन्त और ह्रस्वान्त अङ्ग से परे जो सम्बुद्धिका अवयव हल उसका लोप हो ।

1 'अङ्गं स्यात्' पा० ।

द्धल्लुप्यते सम्बुद्धेश्चेत्। हे राम। हे रामौ। हे रामाः॥

अमि पूर्वः ।६।१।१०७। अकोऽम्यचि पूर्वरूपमेकादेशः [[1]स्यात्] रामम्। रामौ॥ लशक्वतद्धिते ।१।३।८। तद्धितवर्जप्रत्ययाद्या लशकवर्गा इतः स्युः॥ तस्माच्छसो नः पुंसि ।६।१।१०३। पूर्वसवर्णदीर्घा-

---

वयवषष्ठी हल्लित्यत्रान्वेति। ततश्च एङन्ताद्ध्रस्वान्ताच्चाङ्गात् परं यत् संबुद्ध्यवयवभूतं हल्—तल्लुप्यते इत्यर्थः फलति। तदाह—एङन्तादित्यादिना।

अमि पूर्वः। 'अकः सवर्णे दीर्घ' इत्यतोऽक इति पञ्चम्यन्तमनुवर्तते। 'एकः पूर्वपरयो'रित्यधिकृतम्। 'इको यणची'त्यतोऽचीत्यनुवर्तते। तदाह—अकोऽम्यचीति। लशक्वतद्धिते। 'लशकु' इति समाहारद्वन्द्वः। उपदेशेऽजनुनासिक इत्', 'आदिर्ञिटुडवः,' 'षः प्रत्ययस्ये'त्यतः—इदिति, आदिरिति, प्रत्ययस्येति चानुवर्तते। अतद्धिते इति च षष्ठ्यर्थे सप्तमी। तद्धितभिन्नस्य प्रत्ययस्य आदिभूता लकारशकारकवर्गा इत्संज्ञका भवन्तीत्यर्थः। तदाह—तद्धितवर्जेति।

तस्माच्छसो नः। 'प्रथमयोः पूर्वसवर्ण' इति पूर्वसूत्रविहितः संनिहितः पूर्वसवर्णदीर्घस्तस्मादित्यनेन परामृश्यते। दिक्शब्दयोगे च पञ्चम्येषा। तेन 'परस्ये' त्यध्याहार्यम्। 'शस' इत्यवयवषष्ठी। स चावयवः परत्वेन विशेष्यते। स चावयवोऽर्थात् सकार एव, अन्यस्याऽसंभवात्। तदाह—पूर्वेति।

---

अमि पूर्वः। अक् से अम् सम्बन्धी अच् परे रहते पूर्व और परके स्थान में पूर्वरूप एकादेश हो।

लशक्वतद्धिते। तद्धितभिन्न प्रत्ययका आदि जो लकार, शकार और कवर्ग उनकी इत्सञ्ज्ञा हो।

तस्माच्छशः। पूर्वसवर्णदीर्घ से परे जो शस् का अवयव सकार उसको नकार आदेश हो, पुंलिङ्ग में।

---

1 स्यादिति क्वचित्कम्।

त्परो यः शसः सस्तस्य नः स्यात्पुंसि ॥ अट्कुप्वाङ्नुम्व्यवायेऽपि ।८।४।२। अट्, कवर्गः, पवर्ग, आङ्, नुम्—एतैर्व्यस्तैर्यथासम्भवं मिलितैश्च व्यवधानेऽपि रषाभ्यां परस्य नस्य णः स्यात् समानपदे। इति प्राप्ते। पदान्तस्य ।८।४।३७। [¹पदान्तस्य] नस्य णो न। रामान् ॥

टाङसिङसामिनात्स्याः ।७।१।१२। अदन्ताट्टादीनामिनादयः

अट्कुप्वाङ्। 'रषाभ्यां नो णः समानपदे' इति पूर्वसूत्रमनुवर्तते। तत्र 'न' इति षष्ठ्यन्तम्। तेन च सूत्रेण रषाभ्यामव्यवहितपरस्य णत्वं विहितम्। रामेणेत्यादौ अडादिव्यवधानेऽपि प्राप्त्यर्थञ्चेदमारभ्यते। अट्-प्रत्याहारः, कुः = कवर्गः, पुः = पवर्गः। अट् च, कुश्च, पुश्च, आङ् च, नुम्च तैर्यद् व्यवधानम्, तस्मिन् सत्यपि रषाभ्यां परस्य नस्य णत्वं स्यादित्यर्थः। अत्र अडादिभिः समस्तैर्व्यवधानं 'रामेणे'त्यादिलक्ष्ये क्वाप्यसंभावितम्। 'एकैकव्यवायेऽपी'ति व्याख्याने तु 'रामेणे'त्यादावव्याप्तिः। 'यथासंभवं मिलितैर्व्यवायेऽपी'ति व्याख्याने तु 'नराणा'मित्यादावेकमात्रव्यवधाने णत्वं न स्यात्। अतोऽडादिभिर्व्यस्तैर्यथासम्भवं मिलितैश्च व्यवायेऽपीति व्याख्येयम्। एवं च 'क्षुभ्नादिषु चे'ति णत्वनिषेधसूत्रे 'क्षुभ्ना'शब्दपाठोऽर्थवान्, 'सरूपाणा'-मित्यादिनिर्देशाश्च उपपन्ना भवन्ति। तदाह—अट्कवर्गेत्यादिना।

इति प्राप्ते इति। पदावयवस्य नकारस्य णकारे प्राप्ते इत्यर्थः।

पदान्तस्य। 'रषाभ्यां नो णः' इत्यनुवर्तते, 'न भाभूपू' इत्यतो 'ने'ति च। तदाह—पदान्तस्येति।

टाङसिङसाम्। 'अङ्गस्ये'त्यधिकृतं पञ्चम्या विपरिणम्यते। 'अतो भिस'

अट्कुप्वाङ्। अट्, कवर्ग, पवर्ग, आङ्, नुम्—इनके प्रत्येक के, या यथा सम्भव मिलितों के व्यवधानमें भी रेफ षकार से परे जो नकार उसको णत्व हो, समानपद में।

पदान्तस्य। पदान्त के नकार को णकार नहीं हो।

टाङसिङसा। अदन्तसे परे जो टा ङसि ङस् उनको क्रमसे इन आत् स्य—ये आदेश हों।

१ अयं पाठोऽस्माभिर्वर्द्धितो, योग्यत्वात्।

[ [1]क्रमात् ] स्युः । णत्वम् । रामेण ॥ सुपि च ।७।३।१०२। यञादौ सुप्यतोऽङ्गस्य [2]दीर्घः [ स्यात् ]। रामाभ्याम् ॥ अतो भिस ऐस् ।७।१।९। अतोऽङ्गात्परस्य[3] भिस ऐस् स्यात् । 'अनेकाल्शित्सर्वस्य' । रामैः ॥

ङेर्यः ।७।१।१३। अतोऽङ्गात्परस्य ङेर्यादेशः स्यात् ॥ स्थानिवदादेशोऽनल्विधौ ।१।१।५६। आदेशः स्थानिवत्स्यान्न तु स्थान्यला-

---

इत्यस्मात् 'अत' इति पञ्चम्यन्तमनुवृत्तसङ्गस्य विशेषणम् । ततस्तदन्तविधिः । तदाह—अकारान्तादङ्गादिति । 'परेषा'मिति शेषः । क्रमादिति । यथासंख्य-सूत्रलभ्यमिदम् । टादीनामिति । टा-ङसि-ङसामित्यर्थः । इनादय इति । इन आत्-स्य एते इत्यर्थः । रामेणेति । राम-इन इति स्थिते आद्गुणः । णत्व-मिति । 'अट्कुप्वा'ङिति सूत्रेण नकारस्य णकार इत्यर्थः ।

सुपि च । 'अतो दीर्घो यञी'त्यनुवर्तते । 'यञी'त्यनेन सुपीति विशेष्यते । 'यस्मिन् विधि'रिति तदादिविधिरित्याह—यञादाविति । अतोऽङ्गस्येति । अदन्तस्याङ्गस्येत्यर्थः ।

अतो भिस ऐस् । 'अत' इति पञ्चमी । 'अङ्गस्ये'त्यधिकृतं पञ्चम्या विपरिणम्यते । 'अत' इति च तस्य विशेषणम् । विशेषणत्वाच्च तदन्तविधिः । तदाह—अदन्तादिति । 'अलोऽन्त्यस्ये' त्यन्तादेशमाशङ्क्याह—अनेकालिति ।

ङेर्यः । अत्र हि 'ङे'रित्येकारान्तान्ङेशब्दात् षष्ठ्येकवचनम्, नतु 'ङि' शब्दा-त्सप्तम्येकवचनं, व्याख्यानात् । 'अतो भिस' इत्यतोऽत इति पञ्चम्यन्तमनुवर्तते । तेन च 'अङ्गस्ये'त्यधिकृतं पञ्चम्या विपरिणतं विशेष्यते । तदाह—अतोऽङ्गादिति ।

---

सुपि च । यञादि सुप् परे रहते अदन्त अङ्ग को दीर्घ हो ।

अतो भिस ऐस् । अदन्त अङ्ग से परे जो भिस् उसको ऐस् आदेश हो ।

ङेर्यः । अदन्त अङ्गसे परे जो 'ङे' उसको 'य' आदेश हो ।

स्थानिवत्० । आदेश स्थानिवत् हो, परन्तु स्थानीभूत अल् को आश्रय करके कोई विधि करना हो तो स्थानिवद्भाव नहीं हो ।

---

१ क्वचित्कः पाठः । २ 'सुपि परेऽतोऽङ्गस्य दीर्घः स्यात्' पा० ।
३ 'अदन्तादङ्गात्' इति मुद्रिते पाठः । क्वचित्तु इयं वृत्तिरेव नास्ति ।

श्रयविधौ। [ [1]वर्णमाश्रितो विधिरल्विधिः। आदेशाऽलाश्रयविधौ तु स्यादेव ]। इति स्थानिवत्त्वात्सुपि चेति दीर्घः। रामाय। रामाभ्याम्॥

बहुवचने झल्येत् ।७।३।१०३। झलादौ बहुवचने सुप्यतोऽङ्गस्यैकारः। रामेभ्यः। सुपि किं ? पचध्वम्।

वाऽवसाने ।८।४।५६। अवसाने झलां चरो वा [ [1]स्युः]। रामात्। रामाद्। रामाभ्याम्। रामेभ्यः। रामस्य। ओसि च ।७।३।१०४। अतोऽङ्गस्यैकारः [ [1]स्यात् ]। रामयोः॥ ह्रस्वनद्यापो नुट् ।७।१।५४।

---

ननु यादेशे सुप्त्वाऽभावात्तस्मिन् परतः कथं 'सुपि च' इति दीर्घ इत्यत आह–इति स्थानिवत्त्वादिति।

बहुवचने झल्येत्। 'अतो दीर्घो यञि' इत्यतः, 'सुपि च' इत्यतश्च 'अत' इति, 'सुपि' इति चानुवर्तते। 'झलि' इत्यनेन 'सुपि' इति विशेष्यते। 'यस्मिन् विधि' रिति च तदादिविधिस्तदाह—झलादाविति। 'राम ओस्' इति स्थिते वृद्धौ प्राप्तायामाह–ओसि चेति। 'अतो दीर्घो यञि' इत्यतोऽत इत्यनुवर्तते। 'अङ्गस्य' इत्यधिकृतम्। 'बहुवचने झल्ये' दित्यत 'ए' दित्यनुवर्तते। तदाह—अतोऽङ्गस्येति। अदन्ताङ्गस्येत्यर्थः।

'राम आम्' इति स्थिते सवर्णदीर्घे प्राप्ते तदपवादसूत्रं–ह्रस्वनद्याप इति। ह्रस्वश्च, नदी च, आप्चेति समाहारद्वन्द्वाद्दिग्योगे पञ्चमी। 'परस्य' इत्यध्या-

---

बहुवचने। झलादि बहुवचन सुप् परे रहते अदन्त अङ्ग को एकार आदेश हो।

वावसाने। अवसान में विद्यमान जो झल् उनको चर् आदेश हो विकल्प करके।

ओसि च। अदन्त अङ्ग को एकार आदेश हो ओस् परे रहते।

ह्रस्वनद्यापो। ह्रस्वान्त, नद्यन्त और आबन्त अङ्ग से परे जो आम् उसको नुट् का आगम हो।

---

१ अयं पाठो लिखितेषु नास्ति।

ह्रस्वान्तान्नद्यन्तादाबन्ताच्चाङ्गात्परस्याऽऽमो नुडागमः ॥ नामि ।६।४।३। नामि परे अजन्ताङ्गस्य दीर्घः। रामाणाम्। रामे। रामयोः। [ [1]सुपि ] एत्वे कृते॥ [ [2]अपदान्तस्य मूर्धन्यः ।८।३।५५। आ पादपरिसमाप्तेरधिकारोऽयम्, इण्कोः ।८।३।५७। इत्यधिकृत्य। ]

आदेशप्रत्यययोः।८।३।५९। इण्कुभ्यां परस्याऽपदान्तस्याऽऽदेशः

हायम्। 'अङ्गस्ये'त्यधिकृत पञ्चम्या विपरिणम्य ह्रस्वादिभिर्विशेष्यते, ततस्तदन्तविधिः। 'आमि सर्वनाम्नः' इत्यत 'आमी'त्यनुवर्तते। तच्च 'उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्' इति न्यायात् 'तस्मादित्युत्तरस्ये' त्यनेन षष्ठ्यन्तं सम्पद्यते। तदाह—ह्रस्वान्तादित्यादिना। 'आम्'—अत्र षष्ठीबहुवचनमेव, नतु 'ङेरा'मित्यादिविहितम्, व्याख्यानात्।

नामि। 'ढ्लोप' इत्यतो दीर्घ इत्यनुवर्तते। दीर्घश्रुत्या च 'अच' इत्युपस्थितम्। तेन चाङ्ग विशेष्यते। अतस्तदन्तविधिः। तदाह—अजन्तेति।

रामयोरिति। ओसि चेत्येत्वेऽयादेशे च रूपम्। सुप्येत्वे कृत इति। पकारस्येत्त्वे, लोपे, 'बहुवचने झल्येत्' इत्येत्वे कृते इत्यर्थः।

['रामे-सु' इति स्थिते 'आदेशप्रत्यययो'रिति षत्वं विधास्यन्नाह—अपदान्तस्येति। मूर्धन्यः = मूर्धस्थानकः। अष्टमाध्यायस्य तृतीये पादे इदं सूत्रं पठितम्। इत आरभ्यैतत्पादसमाप्तिपर्यन्तमिदमधिक्रियते इत्यर्थः। इत्यधिकृत्येति। इदमुत्तरत्र विधिप्रदेशेष्वनुवर्तत इति भावः। इण् च, कुश्चेति समाहारद्वन्द्वः। पुंस्त्वमार्षम्। इतरेतरयोगद्वन्द्वे त्वेकवचनमार्षम्। इणिति परणकारेण प्रत्याहारः। [illegible] = कवर्गः ]।

अथ षत्वविधायकं सूत्रमाह—आदेशेति।

नामि। अजन्त अङ्ग को दीर्घ हो नाम् परे रहते।

[ अपदान्तस्य मूर्द्धन्यः। यह पादकी समाप्ति पर्यन्त अधिकार है।

इण्कोः। यह भी अधिकार सूत्र है ]।

आदेशप्रत्यययोः। इण् और कवर्ग से परे अपदान्त में विद्यमान जो

1 इदं क्वचिन्न। 2 इदं सूत्रद्वयं लिखितेषु नास्ति।

प्रत्ययावयवश्च यः सस्तस्य मूर्धन्यादेशः। ईषद्विवृतस्य सस्य तादृशं एव षः। रामेषु। एवं कृष्णादयोऽप्यदन्ताः[1]।

**सर्वादीनि सर्वनामानि ।१।१।२७।** [2]सर्वादीनि शब्दरूपाणि सर्वनामसंज्ञानि स्युः। सर्व। विश्व। उभ। उभय। डतर। डतम। अन्य। अन्यतर। इतर। त्वत्। त्व। नेम। सम। सिम। *पूर्वपराऽवरदक्षिणोत्तराऽपराऽधराणि व्यवस्थायामसंज्ञायाम्। *स्वमज्ञातिधनाख्यायाम्। *अन्तरं बहिर्योगोपसंव्यानयोः। त्यद्। तद्। यद्। एतद्। इदम्। अदस्। एक। द्वि। युष्मद्। अस्मद्। भवतु। किम्॥

---

सर्वादीनीति। सर्वः आदिः=प्रथमावयवो येषां तानि सर्वादीनि। अत्र सर्वशब्दः स्वरूपपरः। नपुंसकवशात् 'शब्दस्वरूपाणी'ति विशेष्यमध्याहार्यं, तदाह—सर्वादीनीति। पूर्वपरावरेति। गणान्तर्गतं सूत्रमिदम्। व्यवस्थायामसंज्ञायां च पूर्वादीनि सप्त सर्वादिगणप्रविष्टानि वेदितव्यानीत्यर्थः। सर्वनामसंज्ञा तु 'सर्वादीनि सर्वनामानी'त्येव सिध्यति। 'स्वमज्ञाती'ति, 'अन्तरं बहि'रिति च वक्ष्यमाणं गणसूत्रद्वयमप्येवमेव योज्यम्। सर्वशब्दात् जसि पूर्वसवर्ण-

---

आदेश रूप सकार और प्रत्ययावयव सकार उसको मूर्द्धन्य (षकार) आदेश हो।

सर्वादीनि०। सर्वादि जो शब्दस्वरूप वे सर्वनाम सञ्ज्ञक हों।

पूर्वपरा०। १ पूर्व २ पर ३ अवर ४ दक्षिण ५ उत्तर ६ अपर ७ अधर- इन सात शब्दों की व्यवस्था में (नियम से अवधि की आकांक्षा में) और असञ्ज्ञा में सर्वनाम सञ्ज्ञा हो।

स्वमज्ञाति०। ज्ञाति धन से अन्य जो आत्मा आत्मीय अर्थ–इनमें 'स्व' शब्द की सर्वनाम सञ्ज्ञा हो।

अन्तरं बहि०। बहिर्योग और उपसंव्यान अर्थ में अन्तर शब्द की सर्वनाम सञ्ज्ञा हो।

---

१ 'एवं कृष्णमुकुन्दादयः' इति मुद्रितेषु पाठः। २ क्वचिन्नेयं वृत्तिः।

३५ । [ एते पञ्चत्रिंशच्छब्दाः सर्वादयः[1] ] । **जसः शी** ।७।१।१७। अदन्तात्सर्वनाम्नो जसः शी स्यात् । अनेकाल्त्वात्सर्वादेशः ॥ सर्वे ॥

**सर्वनाम्नः स्मै** ।७।१।१४। अतः सर्वनाम्नो ङेः स्मै । सर्वस्मै । **ङसिङ्योः स्मात्स्मिनौ** ।७।१।१५। अतः सर्वनाम्न एतयोरेतौ स्तः । सर्वस्मात् । [ सर्वस्माद्[2] ] ।

**आमि सर्वनाम्नः सुट्** ।७।१।५२। अवर्णान्तात्परस्य, सर्वनाम्नो

---

दीर्घे प्राप्ते प्राह—जसः शीति । 'अतो भिस' इत्यस्मादत इत्यनुवर्तते । 'सर्वनाम्नः स्मै' इत्यतः 'सर्वनाम्न' इत्यनुवर्तते । तदाह—अदन्तादित्यादिना । 'शी'इति दीर्घोच्चारणं 'नपुंसकाच्च'इत्युत्तरार्थम् । तेन 'वारिणी' इत्यादि सिध्यति । अनेकालिति । न तु शित्त्वप्रयुक्तं सर्वादेशत्वमत्रेति भावः ।

सर्वनाम्नः स्मै । 'अतो भिस' इत्यस्मादत इत्यनुवर्तते । 'ङेर्यः' इत्यतो 'ङे'रिति च । तदाह—अतः सर्वेति ।

ङसिङ्योः । ङसिश्च, ङिश्चेति द्वन्द्वः । 'अतो भिस' इत्यस्मादत इति, 'सर्वनाम्नः स्मै' इत्यतः 'सर्वनाम्न' इति चानुवर्तते, तदाह—अतः सर्वेति । एतयोरिति । ङसिङ्योरित्यर्थः ।

एताविति । स्मात्स्मिनावित्यर्थः । सर्वस्मादिति । स्मादादेशस्य स्थानिवद्भावेन विभक्तित्वान्न विभक्ताविति तकारस्य नेत्त्वमिति बोध्यम् ।

सर्व–आम् इति स्थिते 'ह्रस्वनद्याप' इति नुटि प्राप्ते प्राह–आमि सर्वनाम्नः । 'आज्जसेरसुक्' इत्यतोऽनुवृत्तेन आदिति पञ्चम्यन्तेन 'अङ्गस्ये' त्यधि-

---

जसःशी । अदन्त सर्वनामसे परे जो जस् उसके स्थानमें 'शी' आदेश हो।

सर्वनाम्नः स्मै । अदन्त सर्वनाम से परे जो 'ङे' उसको 'स्मै' आदेश हो ।

ङसिङ्यो० । अदन्त सर्वनाम से परे जो 'ङसि' और 'ङि'–उनको क्रम से 'स्मात्' और 'स्मिन्' आदेश हो ।

आमिसर्व० । अवर्णान्त अङ्ग से परे और सर्वनाम से विहित जो आम् उसको सुट् का आगम हो ।

---

१ लिखितेष्वयं पाठो नास्ति । २ लिखितेषु नास्ति ।

विहितस्याऽऽमः सुडागमः [1]स्यात्। एत्वषत्वे। सर्वेषाम्। सर्वस्मिन्। शेषं रामवत्। एवं विश्वादयोऽप्यदन्ताः।

उभशब्दो नित्यं द्विवचनान्तः। उभौ २। उभाभ्याम् ३। उभयोः २। तस्येह पाठोऽकजर्थः।

डतरडतमौ—प्रत्ययौ। 'प्रत्ययग्रहणे तदन्तग्रहण'मिति तदन्ता ग्राह्याः। नेम—इत्यर्धे। समः—सर्वपर्यायः। तुल्यपर्यायस्तु [2]नेह—[ 'यथासङ्ख्यमनुदेशः[3]—] 'समाना'मिति ज्ञापकात्॥

---

क्तं पञ्चम्या विपरिणतं विशेष्यते, तेन तदन्तविधिः, 'परस्ये'त्यध्याहार्यम्। 'उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्' इति न्यायेन 'तस्मादित्युत्तरस्य' इति परिभाषया 'आमी'ति सप्तम्यन्तं षष्ठ्यन्तमापद्यते। 'सर्वनाम्न' इति तु विहितविशेषणम्। ततश्च अवर्णान्तादङ्गात् परस्य सर्वनाम्नो विहितस्याऽऽमः सुडागमः स्यादित्यर्थः सम्पद्यते। तदाह—अवर्णान्तादिति। अत्र च 'अवर्णान्ता'—दित्यनन्तरं–'अङ्गा'दिति शेषः।

एत्वषत्वे इति। 'बहुवचने झल्ये' दित्येत्वम्। 'आदेशप्रत्यययोः' इति षत्वं, सुटोऽपि 'यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते' इति परिभाषया प्रत्ययावयवत्वादिति भावः। शेषमिति। शिष्यते इति शेषं, कर्मणि घञ्। 'घञजबन्ताः पुंसि' इति तु प्रायिकमिति भावः। एवमिति। सर्वशब्दवदित्यर्थः।

नित्यमिति। सर्वदा द्विवचनान्त इत्यर्थः। द्विवचनान्त एव, न त्वेकवचनबहुवचनान्त इति यावत्। तेन टाबादि न निवार्यते। नन्वेवं सति 'जसः शी, 'सर्वनाम्नः स्मै' 'ङसिङ्योः स्मात्स्मिनौ' 'आमि सर्वनाम्नः सुट्' इत्युक्तानां सर्वनामकार्याणां द्विवचनेऽभावादुभशब्दस्य सर्वादिगणे पाठो व्यर्थ इत्यत आह—तस्येहेति। तस्य=उभशब्दस्य। इह=सर्वादिगणे। पाठः—उभकावित्यत्र 'अव्ययसर्वनाम्नामकच्प्राक्टेः' इत्यकच्प्रत्ययार्थ इत्यर्थः।

ननु डतर-डतमयोः केवलयोः क्वापि प्रयोगाऽदर्शनात् किमर्थस्तयोरिह पाठ इत्यत आह—डतरडतमौ प्रत्ययाविति। 'किंयत्तदो निर्धारणे द्वयोरे-

---

१ 'स्या'दिति क्वचिन्न। २ इहेति प्रायो नास्ति। ३ नायं पाठो लिखितेषु दृश्यते।

पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् । १।१।३४। एषां व्यवस्थायामसंज्ञायां सर्वनामसंज्ञा गणपाठात्सर्वत्र या प्राप्ता सा जसि वा स्यात् । पूर्वे । पूर्वाः । स्वाभिधेयाऽपेक्षाऽवधिनियमो व्यवस्था । व्यवस्थायां किम् ? दक्षिणा गाथकाः ।

---

कस्य डतरच्' 'वा बहूनां जातिपरिप्रश्ने डतमच्' । 'एकाच्च प्राचाम्' इति तद्धिताधिकारविहितौ डतरडतमौ प्रत्ययौ, 'प्रत्ययः' इत्यधिकृत्य तद्विधेः । अतः प्रत्ययग्रहणपरिभाषया डतरग्रहणेन कतरादिशब्दानां, डतमग्रहणेन कतमादिशब्दानां च ग्रहणमिति भावः ।

पूर्वपरेति । 'सर्वनामानी'ति, 'विभाषा जसी'ति चानुवर्तते । तदाह—एषामिति । पूर्वादिसप्तानामित्यर्थः । गणेति । सर्वादिगणेत्यर्थः ।

या प्राप्तेति । 'सर्वादीनी'त्यनेन नित्या संज्ञा या प्राप्तेत्यर्थः । एतेन च 'पूर्वपरे'ति गणपठितं सूत्रं जसोऽन्यत्र नित्यतया सर्वनामसंज्ञार्थम् । अष्टाध्यायीपठितं तु जसि तद्विकल्पार्थमिति न तयोः पौनरुक्त्यमिति सूचितम् ।

स्वाभिधेयेति । अपेक्ष्यते इति—अपेक्षः । कर्मणि घञ् । स्वस्य = पूर्वादिशब्दस्य, यद्—अभिधेयं = वाच्यं, तेन अपेक्षस्य = अपेक्ष्यमाणस्य—अवधेर्नियमः 'व्यवस्था'शब्देनाऽत्र विवक्षित इत्यर्थः । ततश्च नियमेनाऽवधिसापेक्षार्थे वर्तमानानां पूर्वादिशब्दानां जसि सर्वनामसंज्ञाविकल्प इति सूत्रार्थः फलति । व्यवस्थायां किमिति । पूर्वादिशब्दानां प्रायः सर्वत्र नियमेनावधिसापेक्ष एवार्थे विद्यमानत्वादिति प्रश्नः ।

दक्षिणा गाथका इति । अत्र दक्षिणशब्दो नावध्यपेक्ष इति भावः । ननु दक्षिणपार्श्ववर्तिनो गाथका इत्यत्र कस्मादित्यवध्यपेक्षाऽस्त्येवेत्यत आह—

---

पूर्वपरावर । पूर्व पर अवर दक्षिण उत्तर अपर अधर इन शब्दों की व्यवस्था में, और असंज्ञा में गणसूत्र करके सर्वत्र नित्य पाई जो सर्वनाम संज्ञा, वह जस् परे रहते विकल्प करके हो ।

स्वाभिधेया । 'स्व'—जो पूर्वादिशब्द, उनका जो अभिधेय = अर्थ, उससे नित्य अपेक्ष्यमाण जो अवधिका नियम—सो 'व्यवस्था' कहलाता है । अर्थात्—पूर्वादिशब्दों के अर्थ का अवध्यंश में नियमसे साकाङ्क्ष होना ही 'व्यवस्था' होती है ।

कुशला इत्यर्थः । [ [1]असंज्ञायां किम् ? [1]उत्तराः कुरवः ] ॥

**स्वमज्ञातिधनाख्यायाम् ।१।१।३५।** ज्ञातिधनान्यवाचिनः स्व-शब्दस्य प्राप्ता संज्ञा [[1]सा] जसि वा । स्वे । स्वाः । आत्मीया, आत्मान इति वा । ज्ञातिधनवाचिनस्तु-स्वाः । ज्ञातयोऽर्था वा ॥ **अन्तरं बहिर्योगोपसंव्यानयोः ।१।१।३६।** बाह्ये, परिधानीये चार्थेऽन्तरशब्दस्य प्राप्ता संज्ञा [[1]सा] जसि वा । अन्तरे अन्तरा वा गृहाः । बाह्या

कुशला इत्यर्थ इति । यद्यपि प्रावीण्यमपि कस्मादित्यवध्यपेक्षमेव, तथापि 'उत्तरे प्रत्युत्तरे च शक्त' इत्यादि प्रत्युदाहरणमत्र बोध्यमित्याहुः ।

असंज्ञायां किमिति । 'संज्ञोपसर्जनीभूतास्तु न सर्वादयः' इति वक्ष्यमाणतया संज्ञायां सर्वनामत्वस्याऽप्रसक्तेरिति प्रश्नः । उत्तराः कुरव इति । कुरुशब्दो देशविशेषे नित्यं बहुवचनान्तः । सुमेरुमवधीकृत्य तत्रोत्तरशब्दो वर्तते इत्यस्तीह व्यवस्था । किं तु संज्ञाशब्दत्वान्नास्य सर्वनामता । पूर्वादिशब्दानां तु दिक्षु अनादिः संकेत इति न ते संज्ञाशब्दाः । कुरुषु तूत्तरशब्दस्याऽऽधुनिकः सङ्केत इति भवत्ययं संज्ञाशब्दः ।

स्वमज्ञातीति । अत्रापि सर्वनामानीति, विभाषा जसीति चानुवर्तते । ज्ञातिश्च धनं च ज्ञातिधने, तयोराख्या—ज्ञातिधनाख्या, न ज्ञातिधनाख्या, अज्ञातिधनाख्या, तस्याम्—अज्ञातिधनाख्यायाम् । 'स्व'मिति शब्दस्वरूपापेक्षया नपुंसकत्वम् । तदाह—ज्ञातिधनान्येति । स्वे स्वा इति । सर्वनामत्वे शीभावः, तदभाव तदभाव इति भावः । आत्मा, आत्मीयं, ज्ञातिः, धनं चेति स्वशब्दस्य चत्वारोऽर्थाः । 'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने' इत्यमरः ।

अन्तरम् । अत्रापि 'सर्वनामानी'ति 'विभाषा जसी'ति चानुवर्तते । बहिः = अनावृतप्रदेशः, तेन योगः = सम्बन्धः यस्य स बहिर्योगः = बहिर्विद्यमानोऽर्थ

स्वमज्ञाति । ज्ञाति धनसे अन्य जो आत्मा और आत्मीय अर्थ, उनमें स्व शब्दकी गणसूत्रसे नित्य प्राप्त जो सर्वनाम सञ्ज्ञा, वह जस् परे रहते विकल्पसे हो।

अन्तरं । बाह्य और परिधानीय अर्थमें अन्तर शब्दकी गणसूत्रसे नित्य प्राप्त जो सर्वनामसञ्ज्ञा वह जस् परे रहते विकल्प से हो ।

१ इदं क्वचिन्न ।

इत्यर्थः। अन्तरे अन्तरा वा शाटकाः। परिधानीया इत्यर्थः॥

पूर्वादिभ्यो नवभ्यो वा।७।१।१६। एभ्यो ङसिङ्योः स्मात्स्मिनौ वा स्तः। पूर्वस्मात्—पूर्वात्। पूर्वस्मिन्—पूर्वे। एवं परादीनामपि। शेषं सर्ववत्। [ [1]एकशब्दः संख्यायां नित्यकवचनान्तः]। संज्ञोपसर्जनीभूतास्तु न सर्वादयः। सर्वो नाम कश्चित्तस्मै सर्वाय देहि। अतिक्रान्तः सर्वमतिसर्वस्तस्मै—अतिसर्वाय। तदन्तस्यापीयं सञ्ज्ञा, 'द्वन्द्वे चे'ति ज्ञापकात्। [2]अन्तरं बहिर्योगे'ति गणसूत्रे—अपुरीति वक्तव्यम्। [2]अन्तरायां पुरि।

तृतीयासमासे।१।१।३०। [अत्र[3]] सर्वनामता न। मासपूर्वाय। तृतीयासमासार्थवाक्येऽपि न-मासेन पूर्वाय॥ द्वन्द्वे च।१।१।३१।

---

इति यावत्। उपसंवीयते = परिधीयते इति—उपसंव्यानम्=अन्तरीयं वस्त्रम्। तदाह—बाह्य इत्यादिना।

संज्ञोपसर्जनीभूता इति। आधुनिकसंकेतः संज्ञा। अन्यविशेषणत्वेन स्वार्थोपस्थापकञ्च—उपसर्जनम्।

तृतीयासमासे। 'सर्वादीनी'त्यतः सर्वनामग्रहणं, 'न बहुव्रीहा'वित्यतो नेति चानुवर्तते इत्यभिप्रेत्याह—अत्रेति। मासपूर्वायेति। मासेन पूर्व इति

---

पूर्वादिभ्यो। पूर्व आदि पूर्वोक्त नौ शब्दों से परे जो ङसि और ङि उनको क्रमसे स्मात् और स्मिन् आदेश हों, विकल्प करके।

अपुरीति। पूः शब्द यदि विशेष्य हो तो 'अन्तर' शब्द की गणसूत्र से सर्वनामसञ्ज्ञा नहीं हो।

तृतीया। तृतीया समास में और तृतीया समासार्थ वाक्य में सर्वादि की सर्वनाम सञ्ज्ञा नहीं हो।

द्वन्द्वे च। द्वन्द्वसमास में सर्वादिकी सर्वनाम सञ्ज्ञा नहीं हो।

---

१ लिखितेषु नास्ति।

२ अयं ग्रन्थः 'पूर्वादिभ्यो नवभ्यो वे'त्यतः पूर्वं क्वचित्पठ्यते। 'अन्तरमिति-गणसूत्रे' इत्येवं लिखितेषु पाठः। ३ क्वचिन्न।

[द्वन्द्वे] उक्ता संज्ञा न। वर्णाश्रमेतराणाम् ॥ विभाषा जसि ।१।१।३२। [ [1]जसाधारं शीभावाख्यं यत्कार्यं तत्र कर्त्तव्ये द्वन्द्वे उक्ता सञ्ज्ञा वा स्यात् ]। वर्णाश्रमेतरे। वर्णाश्रमेतराः ॥

प्रथमचरमतयाऽल्पार्धकतिपयनेमाश्च।१।१।३३। एते जस्युक्तसंज्ञा वा स्युः। प्रथमे। प्रथमाः। तयः—प्रत्ययः। द्वितये। द्वितयाः। शेषं रामवत्। नेमे। नेमाः। शेषं सर्ववत्। ❋तीयस्य ङित्सु वा [ [2]वाच्या। तीयप्रत्ययान्तस्य ङिद्वचनेषु सर्वनामसञ्ज्ञा वा स्यात् ]। द्वितीयस्मै। द्वितीयायेत्यादि। एवं तृतीयः।

निर्जरः। जराया जरसन्यतरस्याम् ।७।२।१०१। जराया

---

विग्रहः। हेतौ तृतीया। 'पूर्वसदृशे'ति तृतीयातत्पुरुषसमासः। साक्षात् पूर्वभावीत्यर्थः।

उक्ता संज्ञा नेति। सर्वनामसंज्ञा नेत्यर्थः। वर्णाश्रमेतराणामिति। 'वर्णाश्रमेतराणां नो ब्रूहि धर्मानशेषतः' इति याज्ञवल्क्यस्मृतिः। वर्णाश्च, आश्रमाश्च, इतरे चेति द्वन्द्वः। अत्र सर्वनामत्वाऽभावादामि सर्वनाम्न इति सुण्न भवति।

प्रथमचरमतयेति। 'विभाषा जसी'त्यनुवर्तते, सर्वनामानी'ति च। तदाह—एते इति। प्रथमादय इत्यर्थः। उक्तसंज्ञा इति। सर्वनामसंज्ञका इत्यर्थः।

निष्क्रान्तो जरायाः—निर्जरः। 'निरादयः क्रान्ताद्यर्थे' इति समासः। निर्गता जरा यस्मादिति बहुव्रीहिर्वा। 'गोस्त्रियोः' इति ह्रस्वत्वम्।

---

विभाषा जसि। जस्स्थानिक शीभाव कर्त्तव्य हो तो द्वन्द्वमें सर्वादिकी सर्वनाम सञ्ज्ञा विकल्पसे हो।

प्रथमचरम। 'प्रथम', 'चरम', 'तय'प्रत्ययान्त, 'अल्प', 'अर्द्ध', 'कतिपय' और 'नेम'—इन शब्दोंकी सर्वनाम संज्ञा विकल्पसे हो, 'जस्' परे रहते।

तीयस्य। 'तीय'प्रत्ययान्त की ङिद्वचन परे रहते सर्वनामसञ्ज्ञा विकल्प से हो।

जरायाः। जरा शब्दको जरस् आदेश हो विकल्प करके, अजादि विभक्ति परे रहते।

---

१ एकत्र लिखितेऽयं पाठो दृश्यते नान्यत्र। २ लिखितेष्वयं पाठो न दृश्यते।

[1]जरस् वा स्यादजादौ विभक्तौ। पदाङ्गाधिकारे तस्य च, तदन्तस्य च। निर्दिश्यमानस्यादेशा भवन्ति। [[2]अनेकाल्त्वात्सर्वादेशे प्राप्ते]। एकदेशविकृतस्याऽनन्यत्वाज्जरशब्दस्य जरस्। निर्जरसौ। [निर्जरौ]। निर्जरसः-[[3]इत्यादि]। उपजीव्यविरोधान्न जरस्। निर्जरैः—इत्यादि। पक्षे हलादौ च रामवत्। [[4]पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु ।६।१।६३। पाद दन्त नासिका मास हृदय

---

जरायाः। 'अष्टन आ विभक्तौ' इत्यतो 'विभक्ता'वित्यनुवृत्तम्—'अचिर ऋतः' इत्यतोऽनुवृत्तेन 'अची'त्यनेन विशेष्यते। 'यस्मिन् विधिः' इति च तदादिविधिः। तदाह—जराशब्दस्येत्यादिना। ननु जराशब्दस्य विधीयमानो जरसादेशः कथं निर्जरशब्दस्य भवदित्यत आह—पदेति। पदाधिकारे, अङ्गाधिकारे च यस्य यद्विहितं तत् तस्य, तदन्तस्य च स्थाने भवतीत्यर्थः। जरसादेशश्चायमङ्गाधिकारस्थस्तेन जराशब्दस्य, तदन्तस्य निर्जरादिशब्दस्य च भवति। जरसावित्यादौ हि व्यपदेशिवद्भावेन तदन्तत्वं बोध्यम्।

ननु निर्जरशब्दस्य जराशब्दान्तत्वाऽभावात् कथमहि जरसादेश इत्यत आह—एकदेशेति। 'छिन्नेऽपि पुच्छे श्वा श्वैव, न चाश्वो, नच गर्दभ' इति न्यायादिति भावः। निर्जरसौ। निर्जरस इति। प्रथमाद्वितीययोर्द्विवचने, बहुवचने च रूपम्। अमि च 'निर्जरस'मित्युदाहार्यम्।

[ पद्दन्न इति। एषां समाहारद्वन्द्वः। शस् -द्वितीयाबहुवचनं—प्रभृतिः =

---

पदाङ्ग। पदाधिकार में और अङ्गाधिकार में जो कार्य जिसको कहे हैं वे उसको हों और वह हैं अन्तमें जिसके उसको भी हों।

निर्दिश्यमान। षष्ठी प्रकृतिजन्य प्राथमिकोपस्थिति विषय को आदेश हों।

पद्दन्नो। 'पाद' आदि को क्रमसे 'पद्' आदि आदेश हों विकल्प करके, शसादि विभक्ति परे रहते।

---

१ 'जराशब्दस्य जरस् वा' पा०। २ लिखितेऽयं पाठो दृश्यते क्वचित्।

३ क्वचिदिह न दृश्यते। ४ लिखितेषु नास्ति।

निशा असृज् यूष दोष यकृत् शकृत् उदक आस्य-एषां पदादय आदेशाः स्युः शसादौ वा । यत्तु 'आसनशब्दस्यासन्नादेश' इति काशिकायामुक्तं, तत्प्रामादिकमेव । पादः । पादौ । पादाः । पादम् । पादौ । पदः-पादान् । पदा-पादेन । [1]इत्यादि ] ।

विश्वपाः ॥ दीर्घाज्जसि च ।६।१।१०५। दीर्घाज्जसि, इचि च न पूर्वसवर्णदीर्घः । वृद्धिः । विश्वपौ । विश्वपाः । हे विश्वपाः । हे विश्वपौ । हे विश्वपाः । सुडनपुंसकस्य ।१।१।४३। स्वादिपञ्चवचनानि

---

आदिर्येषामिति तद्गुणसंविज्ञानो बहुव्रीहिः । 'अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्' इत्यतोऽन्यतरस्यामित्यनुवर्तते । शसादिषु परेषु पदादय आदेशा वा स्युरित्यर्थः । पदाद्यादेशैश्च स्वानुरूपाः स्थानिन आक्षिप्यन्ते । तदाह—पाद-दन्तेत्यादिना । यथासंख्यपरिभाषया च पादादीनां क्रमेण पदादय आदेशाः प्रत्येतव्याः ] ।

विश्वपा-इति । आबन्तत्वाऽभावान्न सुलोपः । एतदर्थमेव हल्ङ्यादि-सूत्रे सत्यपि दीर्घग्रहणे आब्ग्रहणमिति भावः । विश्वं पाति रक्षतीत्यर्थे 'आतोऽनुपसर्गे कः' इति प्राप्ते, वाऽसरूपन्यायेन 'आतो मनिन्क्वनिब्वनिपश्च' इति चकाराद्विच् ।

विश्वपा-औ इति स्थिते 'प्रथमयोः पूर्वसवर्ण' इति प्राप्ते तन्निषेधमाह-दीर्घाज्जसि चेति । 'प्रथमयोः' इत्यतः 'पूर्वसवर्ण' इति, 'नादिची'त्यतः 'ने'ति, 'इची'ति चाऽनुवर्तते । तदाह—दीर्घादित्यादिना ।

सुडनपुंसकस्य । 'शि सर्वनामस्थानम्' इत्यतः 'सर्वनामस्थान'मित्यनुवर्तते । अक्लीबं=नपुंसकभिन्नं प्रातिपदिकं, तस्य सुट् सर्वनामस्थानसंज्ञं

---

दीर्घाज्जसि च । दीर्घसे जस् और इच् परे रहते, पूर्वसवर्ण दीर्घ नहीं हो ।

सुडनपुं । 'सु' आदि पांच वचनों की 'सर्वनामस्थान' संज्ञा हो, नपुंसक लिङ्ग को छोड़कर ।

---

1 लिखितादर्शेष्वयं ग्रन्थो नास्ति । केनापि मुद्रितेषु वर्द्धितः स्यात् ।

सर्वनामस्थानसंज्ञानि स्युरक्लीबस्य ॥ [ सुडिति [1]प्रत्याहारः ] ।

स्वादिष्वसर्वनामस्थाने ।१।४।१७। [2]कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु [ [1]परतः ] पूर्वं पदं स्यात् ॥

यचि भम् ।१।४।१८। [3]यादिष्वजादिषु च कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु पूर्वं भं स्यात् ॥

आ कडारादेका संज्ञा ।१।४।१। इत ऊर्ध्वं 'कडाराः कर्मधारये' [२।२।३८] इत्यतः प्रागेकस्यैकैव संज्ञा ज्ञेया । या पराऽनवकाशा च ।

---

स्यादित्यर्थः । तत्र सुट्शब्दमप्रसिद्धार्थत्वाद्व्याचष्टे—सुडिति प्रत्याहार इति । 'सु इत्यारभ्य औटष्टकारेणे'ति शेषः । नतु टाटकारेण, प्रथमातिक्रमणे कारणाऽभावात् । तदेतदाह—स्वादिपञ्चवचनानीति ।

स्वादिष्वसर्वनामस्थाने । 'असर्वनामस्थाने' इति बहुत्वेऽप्येकवचनमार्षम् । कप्प्रत्ययावधिष्विति । पञ्चमाध्यायान्ते विधीयमानकप्प्रत्ययोत्तरावधिकेष्वित्यर्थः । अत्र च व्याख्यानमेव शरणम् ।

यचि भम् । य् च अच्चेति समाहारद्वन्द्वः । 'स्वादिष्वसर्वनामस्थाने' इत्यनुवृत्तं 'यची'त्यनेन विशेष्यते । 'यस्मिन् विधि'रिति च तदादिविधिः । तदाह—यकारादिष्वित्यादिना ।

आ कडारादिति । अत्र—आङ् मर्यादायामित्याह—कडाराः कर्मधारये

---

स्वादिष्व । 'सु' को आदि लेकर 'कप्'प्रत्यय पर्यन्त जो सर्वनामस्थानभिन्न प्रत्यय, वे परे रहते पूर्व की 'पद' सञ्ज्ञा हो ।

यचिभं । 'सु' को आदि लेकर 'कप्' प्रत्यय पर्यन्त जो सर्वनामस्थानभिन्न यकारादि और अजादि प्रत्यय, वे परे रहते पूर्वकी 'भ' सञ्ज्ञा हो ।

आकडारा । प्रथमाध्यायके चतुर्थपादसे लेकर 'कडाराः कर्मधारये' [२।२।३८] इस सूत्रसे पूर्व तक एककी एकही सञ्ज्ञा हो ।

---

१ लिखितेष्वयं पाठो नास्ति । २ 'कप्रत्ययावधिषु' पा० ।

३ 'यकारादिषु' इति मुद्रितेषु पाठः

[ तेन शसादावचि भसंज्ञैव, न पदत्वम्[1] ] ॥ आतो धातोः । ६।४।१४०। आकारान्तो यो धातुस्तदन्तस्य भस्याङ्गस्य लोपः स्यात्। अलोऽन्त्यस्य । विश्वपः। विश्वपा । विश्वपाभ्यामित्यादि ॥ एवं शङ्खध्मादयः । धातोः किम् ? हाहान्। 'आत' इति योगविभागादधातो-

इत्यतः प्रागिति । आङिह नाभिविधौ, कडारशब्दस्यापि प्रवेशे प्रयोजनाऽभावात् । 'प्राक्कडारात्समास' इति कडारशब्दस्तु नोत्तरावधिः, 'कडाराः कर्मधारये' इति कडारशब्दस्य उत्तरावधित्वेऽधिकलाभात् । 'प्राक्कडारा'दित्युत्तरं 'तत्पुरुषः' 'द्विगुश्चे'ति चकारकरणाच्च। संज्ञाद्वयसमावेशार्थो हि तत्र चकारः। तत्रैकसंज्ञाया नियमाऽप्रवृत्तौ किं तेन ?। नन्वस्त्विह एकैव संज्ञा, तथापि विनिगमनाविरहाद्भसंज्ञैवेति कुतो लाभः ?' तत्राह—या परा, अनवकाशा चेति। विरोधाऽभावेन विप्रतिषेधसूत्रस्य, सामान्याद्विशेषबलीयस्त्वस्य चाऽप्रवृत्तावपि परत्वनिरवकाशत्वयोरन्यत्र बलत्वन दृष्टत्वादिहापि ताभ्यां व्यवस्था युज्यते इति भावः। द्वयोः सावकाशयोः परा संज्ञा बलवती। अन्यतरस्या निरवकाशत्वे तु सैवेत्यपि बोध्यम्।

शसि विश्वपा अस् इति स्थिते 'प्रथमयो'रिति पूर्वसवर्णदीर्घे प्राप्ते आह—आतो धातोः। 'अङ्गस्ये'ति, 'भस्ये'ति चाधिकृतम्। 'धातो'रितिच-'आत' इति षष्ठ्यन्तेन विशेष्यते। तेन तदन्तविधिः। 'अल्लोपोऽनः' इत्यतो 'लोप' इत्यनुवर्तते। तदाह— आकारान्तो य इति। अलोऽन्त्यस्येति। 'इत्यन्त्यस्याऽऽकारस्य लोप' इति शेषः। विश्वपाभ्यामिति। अभत्वादाल्लोपो नेति भावः। इत्यादीति। विश्वपाभिः। विश्वपे। विश्वपाभ्यां। विश्वपाभ्यः। विश्वपः। विश्वपोः। विश्वपाम्। विश्वपि। विश्वपोः। विश्वपासु। एवं शङ्खध्मादय इति। शङ्खं धमतीति शङ्खध्माः।

धातोः किमिति। 'आतो नापः' इत्येव सूत्र्यताम्। तावतैव रमा इत्याद्या-

आतो धातोः । आकारान्त जो धातु, तदन्त जो भसञ्ज्ञक अङ्ग, उस [ के अन्त ] का लोप हो।

१ लिखितादर्शेषु पाठोऽयं नास्ति।

रप्याकारलोपः क्वचित्। क्त्वः। श्नः।

हरिः। हरी॥ जसि च ।७।३।१०९। ह्रस्वान्तस्याङ्गस्य गुणः स्याज्जसि परे। हरयः॥ ह्रस्वस्य गुणः ।७।४।१०८। [ह्रस्वस्य[1] गुणः स्यात्] सम्बुद्धौ। हे हरे। हरिम्। [हरी]। हरीन्॥

शेषो घ्यसखि ।१।४।७। 'शेष' इति स्पष्टार्थम्। अनदीसंज्ञौ ह्रस्वौ

---

वन्तेषु लोपव्यावृत्तेरिति प्रश्नः। हाहानिति। पूर्वसवर्णदीर्घे 'तस्माच्छस' इति नत्वम्। 'हाहा' इति गन्धर्वविशेषवाचकमव्युत्पन्नं प्रातिपदिकमेतत्। 'हाहा हूहूश्चैवमाद्या गन्धर्वास्त्रिदिवौकसाम्' इत्यमरः। सुटि विश्वपावत्।

नन्वधातुत्वात् कथमिह आल्लोप इत्यत आह—आत इति योगेति। 'आतो धातोः' इत्यत्र 'आत' इति योगो विभज्यते। आकारान्तस्य भस्याङ्गस्य लोपः स्यादित्यर्थः। तेन 'क्त्वः' 'श्नः' इति शसि रूपं सिध्यतीत्याशयः।

हरिरिति। हरिशब्दात् सुप्रत्यये रुत्वविसर्गौ। नच विसर्जनीयस्य अकारादुपरि उपसंख्यानेनाऽच्त्वात्तस्मिन् परतो रेफादिकारस्य यणादेशः शङ्क्यः, यणाऽऽदेशे कर्तव्ये विसर्जनीयस्याऽसिद्धत्वात्। हरि औ इति स्थिते 'प्रथमयोः पूर्वसवर्ण' इति पूर्वसवर्णदीर्घे सति हरी इति रूपम्।

जसि हरि अस् इति स्थिते पूर्वसवर्णदीर्घे प्राप्ते प्राह—जसि च। 'ह्रस्वस्य गुणः' इत्यनुवर्त्तते। 'अङ्गस्ये'त्यधिकृतं ह्रस्वेन विशेष्यते, तेन तदन्तविधिः। तथा च ह्रस्वान्तस्याङ्गस्येत्यर्थः। अलोऽन्त्यपरिभाषाफलितमाह—ह्रस्वस्येत्यादिना।

शेष इति। 'यू स्त्र्याख्यौ' इत्यतो 'यू' इत्यनुवर्तते। इश्च उश्च यू =

---

जसि च। ह्रस्वान्त अङ्ग को गुण हो, जस् परे रहते।

ह्रस्वस्य। ह्रस्वान्त अङ्गको गुण हो, सम्बुद्धि परे रहते।

शेषो घि। नदी सञ्ज्ञक से भिन्न जो ह्रस्व इकार और उकार, तदन्त जो सखिभिन्न अङ्ग, वह 'घि' सञ्ज्ञक हो।

---

१ लिखितेष्वयं पाठो नास्ति।

याविदुतौ तदन्तं सखिवर्जं घिसंज्ञं [ [1]स्यात् ] ॥ आङो नाऽस्त्रियाम् ।७।३।१२०। घेः परस्याऽऽङो ना स्यादस्त्रियाम् । 'आ'ङिति टासंज्ञा [प्राचाम्[2]] । हरिणा । हरिभ्याम् ३ । हरिभिः । घेर्ङिति ।७।३।१११। घिसंज्ञस्य ङिति सुपि गुणः [स्यात्[2]] । हरये । [3]हरिभ्यः२ । गुणे कृते-॥ ङसिङसोश्च ।६।१।११०। एङो ङसिङसोरति परे पूर्वरूपमेकादेशः

---

इवर्ण, उवर्णश्च । 'ङिति ह्रस्वश्चे' त्यतो 'ह्रस्व' इत्यनुवर्तते । स च यूभ्यां प्रत्येकमन्वेति । उक्तात् नदीसंज्ञकात् अन्यः—शेषः । स च यूभ्यां प्रत्येकमन्वेति । 'शब्दस्वरूप'मित्यध्याहार्यं यूभ्यां विशेष्यते, तेन तदन्तविधिः । तदाह—अनदीसंज्ञावित्यादिना ।

आङो ना । घेः परस्येति । 'अच्च घेः' इत्यतो घिग्रहणानुवृत्तेरिति भावः । हरिणेति । नादेशे 'अट्कुप्वाङ्' इति णत्वम् । ननु आङो विहितो नाभावः कथं टा इत्यस्य स्यादित्यत आह—आङितीति । प्राचामाचार्याणां शास्त्रे संज्ञैषेत्यर्थः ।

घेर्ङिति । 'सुपि च' इत्यतः 'सुपी'ति, 'ह्रस्वस्य' इत्यतो 'गुण' इति चानुवर्त्तते । तदाह—घिसंज्ञ[क]स्येत्यादिना । यणोऽपवादः ।

हरये इति । गुणेऽयादेशः ।

ङसिङसोश्च । 'एङः पदान्तात्' इत्यत 'एङ' इति, 'अती'ति चानुवर्तते । 'अमि पूर्वः' इत्यतः 'पूर्व' इत्यनुवर्तते । 'एकः पूर्वपरयोः' इत्यधिकृतम् । तदाह—एङो ङसिङसोरिति ।

---

आङो ना । घिसञ्ज्ञक से परे जो आङ् अर्थात् टा विभक्ति, उसको 'ना' आदेश हो, स्त्रीलिंगको छोड कर ।

घेर्ङिति । घिसञ्ज्ञक को गुण हो, ङित्सुप् परे रहते ।

ङसिङसोश्च । एङ् से ङसि और ङस् सम्बन्धी अकार परे रहते पूर्वपरके स्थानमें पूर्वरूप एकादेश हो ।

---

१ क्वचिन्न । २ क्वचिन्न । ३ क्वचिन्न ।

स्यात्[1] । हरेः २ । हर्य्योः । हरीणाम् ॥ अच्च घेः ।७।३।११९। इदुद्भ्या-मुत्तरस्य ङेरौत् घेरत् स्यात् । हरौ । हर्य्योः । हरिषु । एवं कन्यादयः ॥

अनङ् सौ ।७।१।९३। सख्युरङ्गस्याऽनङादेशोऽसम्बुद्धौ सौ ॥

अलोऽन्त्यात्पूर्व उपधा ।१।१।६५। [ अन्त्यादलः पूर्वो वर्ण उपधा-संज्ञः स्यात्[2] ] ॥ सर्वनामस्थाने चाऽसम्बुद्धौ ६।४।८।

हर्य्योरिति । षष्ठीसप्तमीद्विवचने यणादेशेऽचो रहाभ्यामिति यकारस्य द्वित्वे च रूपम् । हरीणामिति । 'ह्रस्वनद्यापः' इति नुट् । 'नामी'ति दीर्घः । 'अट्कुप्वाङ्' इति णत्वम् ।

हरि—इ इति स्थिते 'घेर्ङिति' इति गुणे प्राप्ते प्राह—। अच्च घेः । 'ङेराम्' इत्यतो ङेरित्यनुवर्तते । 'इदुद्भ्याम्' इति, 'औत्' इति च सूत्रमनुवर्तते । तदाह—इदुद्भ्यामित्यादिना ।

अनङ् सौ । 'सख्युरसम्बुद्धौ' इत्यनुवर्तते । 'अङ्गस्येत्यधिकृतम् । तदाह—सख्युरङ्गस्येत्यादिना । 'सौ' इति प्रथमैकवचनं, नतु सप्तमीबहुवचनम्, 'असम्बुद्धा'विति पर्युदासात् । अनङि ङकार इत्, नकारादकार उच्चारणार्थः ।

अलोन्त्यात् । 'अल' इति पञ्चमी, 'अन्त्या'दिति सामानाधिकरण्यात् । अल्प्रत्याहारो वर्णपर्यायः । पूर्वोऽप्यलेव गृह्यते, साजात्यादित्याह—अन्त्या-दल इत्यादिना ।

सर्वनामस्थाने । 'नोपधायाः' इति सूत्रमनुवर्तते । 'न' इति लुप्तषष्ठीकं पदम् । तेनाङ्गस्येत्यवयवषष्ठ्यन्तं विशेष्यते । तेन तदन्तविधिः । 'ढ्रलोपे'

अच्चघेः । ह्रस्व इकार और उकारसे परे जो 'ङि' उसको 'औत्' आदेश हो, और घिसञ्ज्ञक को अकार अन्तादेश हो ।

अनङ्सौ । सखिरूप अङ्गको अनङ् आदेश हो, सम्बुद्धिभिन्न सु परे रहते ।

अलोऽन्त्यात् । अन्त्य अल्से पूर्व जो वर्ण सो 'उपधा' सञ्ज्ञक हो ।

सर्वनामस्थाने चा । नान्त की उपधा को दीर्घ हो, सम्बुद्धिभिन्न सर्व-नामस्थान परे रहते ।

१ स्यादिति क्वचिन्न । २ क्वाचित्कः पाठः ।

नान्तस्योपधाया दीर्घोऽसम्बुद्धौ सर्वनामस्थाने। अपृक्त एकाल् प्रत्ययः।१।२।४१। [1]एकाल्प्रत्ययो यः सोऽपृक्तसंज्ञः स्यात्।

हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् ।६।१।६८। हलन्तात्परं, दीर्घौ यौ ङ्यापौ तदन्ताच्च परं—'सुतिसी'त्येतदपृक्तं हल्लुप्यते।

प्रत्ययलोपे प्रत्ययलक्षणम् ।१।१।६२। [2]प्रत्यये लुप्तेऽपि तदाश्रितं कार्यं स्यात्॥ न लोपः प्रातिपदिकान्तस्य।८।२।७। [3]प्रातिपदिकसंज्ञं यत्पदं तदन्तस्य नस्य लोपः। सखा॥

---

इत्यतो 'दीर्घ' इत्यनुवर्तते। तदाह—नान्तस्येत्यादिना।

अपृक्त इति। 'एका'लिति कर्मधारयः। अत्रैकशब्दोऽसहायवाची। 'एके मुख्यान्यकेवलाः' इत्यमरः। अनेन 'सु' इत्यस्याऽपृक्तसंज्ञा।

हल्ङ्याब्भ्य इति। हल् च ङीच आप् च इति द्वन्द्वः। दिग्योगे पञ्चमी। परमित्यध्याहार्यम्। 'सुतिसि' इति समाहारद्वन्द्वः। अपृक्तमिति, हलिति च सामानाधिकरण्येनान्वेति।

उकारे, इकारे च लुप्ते परिशिष्टः सकारस्तकारश्च 'सुतिसि' इत्यनेन विवक्षितः। ततश्च हलित्यनेन सामानाधिकरण्यं न विरुध्यते। 'लोपो व्योः' इत्यतो लोप इत्यनुवर्तते। तच्चेह कर्मसाधनमाश्रीयते—लुप्यते इति—लोपः। कर्मणि घञ्। तदाह—हलन्तात्परमित्यादिना।

सखेति। सुलोपे सति 'न लोपः' इति नकारलोपः। हे सखे इति।

---

अपृक्त एकाल्। एक अल् जो प्रत्यय सो अपृक्तसञ्ज्ञक हो।

हल्ङ्याप्। हलन्तसे परे जो सु-ति-सि का अपृक्त हल् उसका लोप हो। और दीर्घ जो 'ङी' और 'आप्' उनसे परे जो 'सु' का अपृक्तहल् उसका लोप हो।

प्रत्ययलोपे। प्रत्ययका लोप होने पर भी तत् प्रत्ययाश्रित कार्य हो।

न लोपः। प्रातिपदिकसञ्ज्ञक जो पद, तदन्त जो नकार उसका लोप हो।

---

१ क्वाचित्कोऽयं पाठः। २ अपिः क्वचिन्न। ३ 'सञ्ज्ञकं' पा०।

सख्युरसम्बुद्धौ ।७।१।९२। सख्युरङ्गात्परं संबुद्धिवर्ज्जं सर्वनामस्थानं णिद्वत्स्यात् ॥ अचोऽञ्णिति ।७।२।११५। अजन्ताङ्गस्य वृद्धिर्ञ्णिति, णिति च। सखायौ। सखायः। हे सखे। सखायम्। सखायौ। सखीन्। सख्या। [ सखिभ्याम्[1] । सखिभिः ]। सख्ये॥

ख्यत्यात्परस्य ।६।१।११२। खितिशब्दाभ्यां, खीतीशब्दाभ्यां

---

'अनङ् सौ' इत्यत्र असम्बुद्धावित्यनुवृत्तेरनङभावे 'ह्रस्वस्य गुण' इति गुणे, 'एङ्ह्रस्वात्' इति सुलोपे रूपम्।

सख्युरसम्बुद्धौ। 'सख्यु'रिति दिग्योगे पञ्चमी। 'अङ्गस्ये'त्यधिकृतं पञ्चम्या विपरिणम्यते। 'पर'मित्यध्याहार्यम्। 'इतोऽत्सर्वनामस्थाने' इत्यनुवर्तते। 'असम्बुद्धा'वित्यभेदेनान्वेति। 'गोतो णित्' इत्यतो णिदिति प्रथमान्तमनुवृत्तम्। तत्सामानाधिकरण्यात् 'असम्बुद्धा'विति, 'सर्वनामस्थाने' इति च सप्तमी प्रथमा कल्प्यते। तदाह—सख्युरङ्गादिति। णिद्वदिति। णित्कार्यकृत् स्यादित्यर्थः। णिच्छब्दस्तत्कार्यातिदेशार्थं इति भावः।

अचो ञ्णिति। ञ् च ण् च ञ्णौ, तावितौ यस्य तत्—ञ्णित्। 'मृजेः' इत्यतो 'वृद्धि'रित्यनुवर्तते। 'अङ्गस्ये'त्यधिकृतमचा विशेष्यते। ततस्तदन्तविधिः। तदाह—अजन्तस्येति।

ख्यत्यात् परस्य। 'खिखी'त्यनयोः, 'तिती'त्यनयोश्च कृतयणादेशयोः 'ख्य' इति, 'त्य' इति निर्देशः। यकारादकार उच्चारणार्थः। 'एङः पदान्तात्' इत्यतोऽतीत्यनुवर्तते। तच्च परस्येति सामानाधिकरण्यात् षष्ठ्यन्ततया विपरिण-

---

सख्युर। सखिरूप अङ्ग से परे जो सम्बुद्धि भिन्न सर्वनामस्थान, वह णिद्वत् हो।

अचोञ्णिति। अजन्त अङ्गको वृद्धि हो, ञित् णित् प्रत्यय परे रहते।

ख्यत्यात्परस्य। कृतयणादेश जो ह्रस्व खि-ति शब्द और दीर्घ खी-ती शब्द, उनसे परे जो ङसि ङस् सम्बन्धी अकार, उसको उकार आदेश हो।

---

१ क्वचिदपि नास्ति, अस्माभिरेव पाठोऽयं वर्द्धितः।

कृतयणादेशाभ्यां परस्य ङसिङसोरत उः[1] । सख्युः २ ॥ औत् ।७।३।११८। इतः परस्य ङेरौत् । सख्यौ । शेषं हरिवत् ॥

पतिः समास एव ।१।४।८। [[2]पतिः समास एव] घिसंज्ञः । पत्ये । पत्युः २ । पत्यौ । शेषं हरिवत् । समासे तु–भूपतये ॥

---

भ्यते । 'ङसिङसोश्चे'त्यतो 'ङसिङसो'रित्यनुवर्तते । अवयवषष्ठ्येषा । ततश्च ङसिङसोरवयवस्य अत इति लभ्यते । 'ऋत उत्' इत्यत उदित्यनुवर्तते । 'एकः पूर्वपरयोः' इति तु निवृत्तम्, 'पर'ग्रहणसामर्थ्यात् । अन्यथा 'ख्यत्या'दिति पञ्चमीनिर्देशादेव सिद्धे किं तेन ? । तदाह—खितिशब्दाभ्यामिति । सख्युरिति । सख्यस् इति स्थिते यकारादुत्तरस्याकारस्य उकारे रुत्वे विसर्गे च रूपम् ।

ङौ सखि इ इति स्थिते घित्वाऽभावात् 'अच्च घेः' इत्यस्याऽप्रवृत्त्या सवर्णदीर्घे प्राप्ते प्राह—औत् । 'इदुद्भ्याम्' इति सूत्रमनुवर्तते । 'ङेराम्' इत्यतो 'ङे'रिति च, तदाह—इतः परस्येत्यादिना । ननु घिसंज्ञकेषु हरिकव्यादिषु 'अच्च घेः' इति प्रवर्तते, नदीसंज्ञकेषु तु 'इदुद्भ्याम्' इति पूर्वसूत्रं प्रवर्तते, अतः सूत्रद्वयविषयादन्यौ सखिपतिशब्दावेवास्य सूत्रस्य विषय इति व्यक्तम्, एवञ्च उकारानुवृत्तिर्व्यर्थेति चेन्न, उकारानुवृत्तेः–'अच्च घेः'इत्युत्तरसूत्रेऽनुवृत्त्यर्थत्वेनोत्तरार्थत्वात् ।

पतिः समास एव । 'शेषो घ्यसखी'त्यतो 'घी'त्यनुवर्तते । तदाह—पतिशब्द इति । पत्युरिति । 'ख्यत्यात्' इत्युत्वम् । पत्याविति । घित्वाऽभावात् 'अच्च घेः' इत्यस्य प्रवृत्तेरभावे 'औत्' इति ङेरौत्त्वे, यणि च रूपम् ।

समासे तु भूपतये इति । 'भूपतिने'त्यादेरुपलक्षणम् । 'सीतायाः पतये नमः' इत्यादि त्वार्षम् ।

---

औत् । ह्रस्व इकार से परे जो ङि उसको औत् आदेश हो ।

पतिः समासे । पतिशब्द समासमें ही घिसञ्ज्ञक हो ।

---

१ 'उत्' पा० । २ क्वचिदपि नास्ति ।

कतिशब्दो नित्यं बहुवचनान्तः ॥ बहुगणवतुडति संख्या ।१।१।२३। [1]एते सङ्ख्यासञ्ज्ञाः स्युः । डति च ।१।१।२५। डत्यन्ता संख्या षट्संज्ञा स्यात् ॥ षड्भ्यो लुक् ।७।१।२२। [2]जश्शसोः ॥ [3]प्रत्ययलोपे 'जसि चे'ति गुणे प्राप्ते । प्रत्ययस्य लुक्श्लुलुपः ।१।१।६१।

---

अथ कतिशब्दे विशेषं दर्शयति—कतिशब्द इति । 'किमः संख्यापरिमाणे' इत्यनेन किंशब्दाद्बहुत्वसंख्यावच्छिन्नसंख्येयविषयप्रश्न एव डतिप्रत्ययस्य विधानात् । बहुगण । 'बहुश्च गणश्च वतुश्च डतिश्चे'ति समाहारद्वन्द्वः । एतत् संख्यासंज्ञं स्यादित्यर्थः । तदाह—बहुगणेति ।

डति च । 'डती'त्यविभक्तिको निर्देशः । प्रत्ययत्वात्तदन्तग्रहणम् । पूर्वसूत्रात् 'संख्ये'त्यनुवर्तते । 'ष्णान्ता षट्' इत्यतः 'ष'डिति च तदाह—डत्यन्तेति ।

जसि चेतीति । अनेन सूत्रेण लुप्तं प्रत्ययमाश्रित्य 'जसि चे'ति गुणे प्राप्ते इत्यर्थः ।

प्रत्ययस्य लुक् । 'अदर्शनं लोपः' इत्यतोऽदर्शनमित्यनुवर्तते । अत्र हि—प्रत्ययस्याऽदर्शनं लुक्श्लुलुप्संज्ञकं स्यादित्यर्थः प्रतीयते । एवं सति एकस्यैव

---

बहुगणवति । बहुशब्द, गणशब्द, वतुप्रत्ययान्त और डतिप्रत्ययान्त-ये सङ्ख्यासञ्ज्ञक हों ।

डति च । डत्यन्त जो सङ्ख्या वाचकशब्द वह षट् संज्ञक हो ।

षड्भ्यो लुक् । षट्सञ्ज्ञक से परे जो जस् और शस् उनका लुक् हो ।

प्रत्ययस्य लुक् । लुक् श्लु लुप् शब्दों से किया जो प्रत्ययका अदर्शन वह क्रमसे लुक् श्लु लुप् सञ्ज्ञक हो ।

---

१ इयं वृत्तिर्न सार्वत्रिकी ।

२ 'षड्भ्यः परयोर्जश्शसोर्लुक् स्यात्' इति पाठान्तरम् ।

३ 'प्रत्ययलोपे' इतिक्वचिन्न ।

लुक्श्लुलुप्शब्दैः कृतं प्रत्ययाऽदर्शनं क्रमात्तत्तत्संज्ञं स्यात् ॥ न लुमताऽङ्गस्य ।१।१।६।३। [ लुक् श्लु लुप् एते—[1]लुमन्तः ] । लुमता शब्देन लुप्ते तन्निमित्तमङ्गकार्यं न स्यात् । कतिभिः । कतिभ्यः । कतिभ्यः । कतीनाम् । कतिषु । [2]युष्मदस्मत्षट्संज्ञकास्त्रिषु सरूपाः ।

---

प्रत्ययाऽदर्शनस्य तिस्रोऽपि संज्ञा स्युः । ततश्च 'हन्ती'त्यत्र शब्लुकि 'श्लौ' इति द्वित्वं स्यात् । 'जुहोती'त्यत्र श्लौ सति 'उतो वृद्धिर्लुकि हली'ति वृद्धिः स्यात् । अतो नैवमर्थः, किं तु 'लुक्श्लुलुप' इत्यावर्तते । ततश्च 'लुक् श्लु लुप्' इत्युच्चार्य विहितं प्रत्ययादर्शनं क्रमात् लुगादिसंज्ञं स्या'दित्यर्थो लभ्यते, अतो नोक्तसंकर इत्यभिप्रेत्याह—लुक्श्लुलुप्शब्दैरिति । 'फक्के लुक्', 'जुहोत्यादिभ्यः श्लुः', 'जनपदे लुप्' इत्यादिविधिप्रदेशेषु 'अस्य सूत्रस्य शाटकं वय' इतिवद्भाविसंज्ञा-विज्ञानान्नान्योन्याश्रयः ।

न लुमताङ्गस्येति । 'प्रत्यलोपे प्रत्ययलक्षण'मित्यनुवर्तते । 'लु' इत्येकदेशोऽस्यास्तीति लुमान् = लुक्शब्दः, श्लुशब्दः, लुप्शब्दश्च । तैः शब्दैः प्रत्ययलोपे विहिते सति तत्प्रत्ययनिमित्तकमङ्गकार्यं न स्यादित्यर्थः ।

प्रसङ्गादाह—अस्मादिति । त्रिष्विति । पुंस्त्रीनपुंसकेष्वित्यर्थः । सरूपा इति । समानानि रूपाणि येषामिति विग्रहः । लिङ्गविशेषबोधकटाबाद्यभावादिति भावः । नचैवं सति 'अलिङ्गे युष्मदस्मदी' इति 'साम आकम्' इति सूत्रस्थभाष्यविरोध इति वाच्यं, पदान्तरसंनिधानं विना लिङ्गविशेषो युष्मदस्मच्छब्दाभ्यां न प्रतीयते इत्येव हि भाष्यार्थः । अत एव 'न षट्स्वस्रादिभ्यः' इति पञ्चनादिषट्संज्ञकेभ्यष्टाम्ङीब्निषेधः संगच्छते । अन्यथा स्त्रीत्वऽभावादेव तदभावे सिद्धे किं तेन ? । अत एव च 'ङे प्रथमयोः' इति सूत्रे, भाष्ये युष्मानित्यत्र

---

न लुमता । लुमान्–( लुक् श्लु लुप् ) शब्दों से जहाँ प्रत्ययका अदर्शन (लोप) हुआ हो वहाँ उस प्रत्ययको निमित्तमानकर होने वाला अङ्गकार्य नहीं हो ।

---

१ अयं पाठः क्वचिदपि लिखिते न दृश्यते ।

२ 'अस्मद्युष्मत्षट्सञ्ज्ञकाः' इत्येव लिखितेषु पाठो दृश्यते ।

त्रिशब्दो नित्यं बहुवचनान्तः। त्रयः। त्रीन्। त्रिभिः। त्रिभ्यः २। त्रेस्त्रयः ।७।१।५३। [1]आमि। त्रयाणाम्। त्रिषु। गौणत्वेऽपि—प्रियत्रयाणाम्॥

द्विशब्दो नित्यं द्विवचनान्तः[2]॥ त्यदादीनामः ।७।२।१०२। एषामकारो विभक्तौ। *द्विपर्यन्तानामेवेष्टिः। द्वौ २। द्वाभ्याम् ३।

---

'तस्माच्छसो नः पुंसि' इत्युपन्यासः संगच्छते। अत एव च 'नेतराच्छन्दसि' इति सूत्रे शिशीनुमादिभिर्युष्मदस्मदाद्यादेशानां विप्रतिषेधपरं वार्तिकं, तद्भाष्यं च संगच्छते।

त्रेस्त्रयः। 'आमि सर्वनाम्नः' इत्यत 'आमी'त्यनुवर्तते। तदाह—त्रिशब्दस्येति। अनेकाल्त्वात् सर्वादेशः। नुट्, दीर्घश्च। तदाह—त्रयाणामिति। अङ्गाधिकारस्थत्वात् 'पदाङ्गाधिकारे' इति परिभाषया 'त्रे'रिति तदन्तग्रहणमित्यभिप्रेत्योदाहरति—प्रियत्रयाणामिति। प्रियास्त्रयो यस्येति विग्रहः। गौणमुख्यन्यायस्त्वत्र न प्रवर्तते, तस्य पदकार्य एव प्रवृत्तेः।

द्विशब्द इति। तस्य द्वित्वनियतत्वादिति भावः। द्विपर्यन्तानामिति। सर्वादिगणे ये त्यदादयः पठितास्तेषामिह द्विपर्यन्तानामेव ग्रहणे भाष्यकारस्येच्छेत्यर्थः।

द्विपर्यन्तानामिति किमिति। युष्मदस्मदोरात्वयत्वलोपैर्बाधात्, किमः कादेशविधानाच्च तेषां त्यदादिष्वन्तर्भावेऽपि न दोष इति प्रश्नः।

---

त्रेस्त्रयः। त्रिशब्द को त्रय आदेश हो, आम् परे रहते।

त्यदादीनामः। त्यदादि को अकार अन्तादेश हो विभक्ति परे रहते।

द्विपर्यन्तानां। सर्वादिगण में 'त्यद्' शब्द से लेकर 'द्वि'शब्द पर्यन्त शब्द ही 'त्यदादि' पद से भाष्यकार को इष्ट हैं।

---

१ 'त्रिशब्दस्य त्रयादेशः स्यादामि परे' इति क्वचित्पाठः।

२ अयं पाठो क्विलितेषु न दृश्यते।

द्वयोः २। द्विपर्यन्तानां किम् ? भवान्। भवन्तौ।

पाति लोकमिति पपीः—सूर्यः। पप्यौ। पप्यः। हे पपीः। पपीम्। पप्यौ[1]। पपीन्। पप्या। पपीभ्याम् ३। पपीभिः। पप्ये। पपीभ्यः २। पप्यः। पप्योः २। पप्याम्। [ ङौ च[2]— ] पपी। पपीषु। एवं वातप्रम्यादयः।

बह्वयः श्रेयस्यो यस्य स बहुश्रेयसी [दीर्घङ्यन्तत्वाद्धल्ङ्याबिति-सुलोपः[3] ]॥ यू स्त्र्याख्यौ नदी।१।४।३। ईदूदन्तौ नित्यस्त्रीलिङ्गौ नदी-संज्ञौ स्तः। *प्रथमलिङ्गग्रहणं च। पूर्वं स्त्र्याख्यस्योपसर्जनत्वेऽपि नदीत्वं

---

भवान् भवन्ताविति। भवत् स् इति स्थिते 'उगिदचाम्' इति नुमि, हल्ङ्यादिलोपे, 'अत्वसन्तस्य चे'ति दीर्घे भवानिति रूपम्। द्विपर्यन्तानामित्य-स्यऽभावे तु भवत् स् इति स्थिते तकारस्य अत्वे कृते, 'अतो गुणे' इति पररूपे 'उगिदचाम्' इति नुमि, 'सर्वनामस्थाने' इति दीर्घे, सुलोपे, नलोपे च 'भवा' इति रूपं स्यात्। एवं—भवत् औ इति स्थिते पूर्ववत्तकारस्य अत्वे नुमि दीर्घे च भवानाविति रूपं स्यादिति भावः।

यू स्त्र्याख्यौ नदी। ईश्च उश्च यू। पूर्वसवर्णदीर्घः। 'दीर्घाज्जसि च' इति निषेधाऽभावश्छान्दसत्वात्। व्याख्यानाद्दीर्घयोरेव चात्र ग्रहणम्। स्त्रियमा-चक्षाते स्त्र्याख्यौ। शब्दावित्यर्थाल्लभ्यते। 'यू' इति तद्विशेषणम्। ततस्तदन्त-विधिः। स्त्रियामित्येव सिद्धे 'आख्या'ग्रहणं नित्यस्त्रीलिङ्गलाभार्थम्। द्वित्वेऽपि नदीत्येकवचनं छान्दसम्। तदाह—ईदूदन्तावित्यादिना।

ननु प्रकृते बहुश्रेयसीशब्दस्य पुंलिङ्गत्वेन नित्यस्त्रीत्वाऽभावात्कथं नदीसंज्ञे-त्यत आह—प्रथमलिङ्गग्रहणं चेति। प्रथमस्य = समासादिवृत्तिप्रवृत्तेः पूर्वं

---

यू स्त्र्याख्यौ। ईदन्त ऊदन्त जो नित्यस्त्रीलिङ्ग सो नदी सञ्ज्ञक हो। प्रथमलिङ्ग। जो शब्द समास आदि वृत्ति होने से पूर्वं नित्य स्त्रीलिंग

---

१ क्वाचित्कः पाठः। २ लिखितेषु तु क्वचिदपि नास्ति।

३ अयं पाठो लिखितादर्शे क्वचिदृष्टत्वान्निवेशितः।

वक्तव्यमित्यर्थः ॥ अम्बार्थनद्योर्ह्रस्वः ।७।३।१०७। अम्बार्थानां, नद्यन्तानां च ह्रस्वः स्यात्सम्बुद्धौ । हे बहुश्रेयसि । आण् नद्याः ।७।३।११२। नद्यन्तात्परेषां ङितामाडागमः ॥ आटश्च ।६।१।९०। आटोऽचि परे वृद्धिरेकादेशः [1]स्यात् । बहुश्रेयस्यै । बहुश्रेयस्याः २ । बहुश्रेयसीनाम् ॥

---

प्रवृत्तस्य स्त्रीलिङ्गस्य, 'यू स्त्र्याख्यौ' इत्यत्र ग्रहणं कर्तव्यमित्यर्थः । नन्वेवं सति समासादिवृत्त्यभावे गौर्यादिशब्दानां नदीत्वं न स्यादित्याशङ्क्य अपिशब्दमध्याहृत्य व्याचष्टे—पूर्वमिति । समासादिवृत्तिप्रवृत्तेः पूर्वं स्त्रीलिङ्गस्य सतो वृत्तिदशायामुपसर्जनतया स्त्रीलिङ्गत्वाऽभावेऽपि नदीत्वं वक्तव्यमिति वार्तिकार्थः ।

अम्बार्थनद्योर्ह्रस्वः । अम्बार्थानामिति । अम्बा (—मातृ—) पर्यायाणामित्यर्थः । नद्यन्तानामिति । अङ्गाधिकारस्थत्वात्तदन्तविधिः । तुल्यन्यायत्वादम्बार्थानामित्यत्रापि तदन्तविधिर्बोध्यः । सम्बुद्धाविति । 'सम्बुद्धौ चे'त्यतस्तदनुवृत्तेरिति भावः । अम्बागौर्यादिशब्देषु ह्रस्वत्वं तु व्यपदेशिवद्भावेन तदन्तत्वाज्ज्ञेयम् । हे बहुश्रेयसीति । ह्रस्वत्वे सति 'एङ्ह्रस्वात्' इति सम्बुद्धिलोपः । ह्रस्वे कृते गुणस्तु न, प्रक्रियालाघवाय 'अम्बार्थनद्योर्ह्रस्वः' इत्यनुक्त्वा 'अम्बार्थनद्योर्गुणः' इति वाच्ये ह्रस्वविधिसामर्थ्यात् ।

आण्नद्याः । 'अङ्गस्ये'त्यधिकृतं पञ्चम्या विपरिणम्यते । तच्च 'नद्या' इति पञ्चम्यन्तेन विशेष्यते, ततस्तदन्तविधिः । 'घेर्ङिती'त्यतो 'ङिती'त्यनुवृत्तं षष्ठ्या विपरिणम्यते, तदाह—नद्यन्तादिति । टित्त्वादाद्यवयवः ।

---

हो, परन्तु वृत्ति में उपसर्जन हो जाने से नित्य स्त्रीलिंग नहीं रहे तो भी उसकी नदी सञ्ज्ञा होती है—ऐसा ( सूत्रकार को ) कहना चाहिए ।

अम्बार्थ । अम्बार्थक ( शब्दों को ) और नद्यन्त शब्दों को ह्रस्व हो, सम्बुद्धि परे रहते ।

आण्नद्याः । नद्यन्त से परे जो ङिद्वचन उनको आट् का आगम हो ।

आटश्च । आट् से अच् परे रहते पूर्व परके स्थान में वृद्धि रूप एकादेश हो ।

---

१ 'स्या'दिति क्वचिन्न ।

ङेराम्नद्याम्नीभ्यः ।७।३।११६। नद्यन्तादाबन्तान्नीशब्दाच्च [[1]परस्य] ङेराम् स्यात् । [ [2]इह परत्वादाटा नुट् बाध्यते । 'सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव' ] । बहुश्रेयस्याम् । शेषं—पपीवत् ॥

अङ्यन्तत्वान्न [3]सुलोपः । [4]अतिलक्ष्मीः । शेषं बहुश्रेयसीवत् ॥

प्रधीः । अचि श्नुधातुभ्रुवां य्वोरियङुवङौ ६।४।७७। श्नुप्रत्ययान्तस्येवर्णोवर्णान्तस्य धातोर्भ्रू इत्येतस्य चाङ्गस्येयङुवङौ स्तोऽजादौ प्रत्यये परे । इति प्राप्ते । एरनेकाचोऽसंयोगपूर्वस्य ।६।४।८२। धात्व-

---

ङेराम्नद्याम्नीभ्यः । आङ्गत्वात्, प्रत्ययग्रहणपरिभाषया च तदन्तविधिमभिप्रेत्याह—नद्यन्तादित्यादिना । 'ङे'रिति सप्तम्येकवचनं, व्याख्यानात् ।

नन्वामि कृते 'ह्रस्वनद्यापः' इति नुटि, 'यदागमाः' इति न्यायेन नामोऽप्याम्ग्रहणेन ग्रहणात् 'आण्नद्याः' इति आडागमः स्यादित्याशङ्क्य आह—इह परत्वादिति । न च कृतेऽप्याडागमे नुट् किं न स्यादिति वाच्यम्, 'विप्रतिषेधेन यद्बाधितं तद्बाधितमेवे'ति न्यायादिति भावः ।

अचि श्नु । इश्च उश्च यू, तयोः—य्वोः=इवर्णोवर्णयोरित्यर्थः । श्नुश्च धातुश्च भ्रूश्चेति द्वन्द्वः । प्रत्ययग्रहणपरिभाषया च श्नुप्रत्ययान्तं विवक्षितम् । 'य्वो'रिति धातोरेव विशेषणं, ततस्तदन्तविधिः ।

'एरनेकाच' इति सूत्रे भाष्ये 'गतिकारकपूर्वस्यैवेष्यते' इति वार्तिकं पठितं

---

ङेराम् । नद्यन्त, आबन्त और 'नी' शब्द से परे जो 'ङि' उसको 'आम्' आदेश हो ।

अचिश्नु । श्नु प्रत्ययान्त धातु, इवर्णान्त और उवर्णान्त धातु और 'भ्रू' यह जो अङ्ग—इनको इयङ् उवङ् आदेश हो, अजादि प्रत्यय परे रहते ।

एरनेकाचो । धातु का अवयव संयोग पूर्व में नहीं है जिसके ऐसा जो

---

१ क्वाचित्कम् । २ अयं पाठः क्वाचित्को न सार्वत्रिकः ।
३ 'सुलोपो न' इति पाठान्तरम् ।
४ इतः परम्—अवीतन्त्रीतरीलक्ष्मीधीश्रीह्रीणामुणादितः । स्त्रीलिङ्गानाममीषां तु सुलोपो न कदाचन ॥ इत्यधिकः क्वचित्पाठः ।

वयवसंयोगपूर्वो न भवति य इवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचोऽङ्गस्य यण् स्यादजादौ प्रत्यये परे। प्रध्यौ। प्रध्यः। प्रध्यम्। प्रध्यौ। प्रध्यः। प्रध्यि। शेषं पपीवत्॥ एवं– ग्रामणीः। ङौ तु–ग्रामण्याम्॥

गतिश्च।१।४।६०। प्रादयः क्रियायोगे गतिसंज्ञाः स्युः। गतिकारकेतरपूर्वपदस्य यण्नेष्यते। शुद्धधियौ। [ [1]शुद्धधियः ]।

न भूसुधियोः।६।४।८५। एतयोरचि सुपि यण्न। [ [1]सुधीः ]। सुधियौ। सुधियः—इत्यादि॥

सुखमिच्छतीति—सुखीः। सुतीः। सुख्युः २। सुत्युः २ शेषं प्रधीवत्। शम्भुर्हरिवत्। एवं भान्वादयः॥

तृज्वत्क्रोष्टुः।७।१।९५। असम्बुद्धौ सर्वनामस्थाने 'क्रोष्टु' इत्यस्य

---

तत्तात्पर्यतः संगृह्णाति—गतिकारकेतरेति। शुद्धधियाविति। शुद्धा धीर्यस्येति विग्रहः। अत्र 'शुद्ध'शब्दस्य गतिकारकेतरत्वात् तत्पूर्वकस्य न यणिति भावः। शुद्धं ब्रह्म ध्यायतीति विग्रहे तु कारकपूर्वकत्वात्स्यादेव यण्—शुद्धध्यावित्यादि।

तृज्वत्क्रोष्टुः। प्रत्ययग्रहणपरिभाषया 'तृच्' इत्यनेन तृजन्तं गृह्यते। तेन

---

इवर्ण, तदन्त जो धातु, तदन्त जो अनेकाच् अङ्ग, उसको यण् हो, अजादि प्रत्यय परे रहते।

गतिश्च। प्रादि की क्रिया के योग में गति संज्ञा हो।

गतिकारके। गति और कारक से इतर ( भिन्न ) पूर्वपद में है जिसके [ ऐसा जो असंयोगपूर्वक इवर्णान्त धातु तदन्त जो अनेकाच् अङ्ग ] उसको यण् भाष्यकार को इष्ट नहीं है।

न भूसुधियोः। भू और सुधी इनको यण् नहीं हो, अजादि सुप् परे रहते।

तृज्वत् क्रोष्टुः। क्रोष्टु शब्द को तृजन्तवत् रूप हो [ अर्थात्–क्रोष्टुशब्द के स्थान में 'क्रोष्टृ' आदेश हो, सम्बुद्धिभिन्न सर्वनामस्थान परे रहते।

---

1 लिखितेषु नास्ति।

[ स्थाने ] 'क्रोष्टृ' [1]प्रयोक्तव्यमित्यर्थः ।

**ऋतो ङिसर्वनामस्थानयोः** ।७।३।११०। [2]ऋतोऽङ्गस्य गुणः स्याण्ङौ, सर्वनामस्थाने च । इति प्राप्ते । **ऋदुशनस्पुरुदंसोऽनेहसां च** ।७।१।९४। ऋदन्तानामुशनसादीनां चाऽनङ् स्यादसम्बुद्धौ सौ ॥

**अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तॄणाम्** ।६।४।११।

तुल्यम्' इति तृतीयान्ताद्वतिः । 'इतोऽत् सर्वनामस्थाने' इत्यतः 'सर्वनामस्थाने' इति, 'सख्युरसंबुद्धौ' इत्यतोऽसंबुद्धाविति चानुवर्तते । तदाह—असम्बुद्धाविति ।

'कार्य-रूप-निमित्ता-ऽर्थ-शास्त्र-तादात्म्य-शब्दिताः ।
व्यपदेशश्च सप्तैतानतिदेशान् प्रचक्षते ॥'

—इत्यतिदेशाः सप्त, तत्र प्राधान्यादिह तृजन्तरूपमेव अतिदिश्यते । तच्च न 'कर्तृ' 'भर्तृ' इत्यादि तृजन्तं रूपं, किंतु 'क्रोष्टृ' इत्येव तृजन्तरूपमतिदिश्यते, क्रुशधातोरुपस्थितत्वात्, अर्थत आन्तर्याच्चेत्यभिप्रेत्याह—क्रोष्टु इत्यस्य स्थाने इति ।

ऋतो ङि । 'ह्रस्वस्य गुणः' इत्यतो 'गुण' इत्यनुवर्तते । 'अङ्गस्ये'—त्यधिकृतम् 'ऋत' इत्यनेन विशेष्यते, ततस्तदन्तविधिस्तदाह—ङाविति ।

ऋदुशनस् । 'सख्युरसंबुद्धौ' इत्यतोऽसंबुद्धाविति 'अनङ् सौ' इत्यतोऽनङिति चानुवर्तते । 'अङ्गस्ये'त्यधिकृतम् ऋदादिभिर्विशेष्यते । तदाह—ऋदन्तानामिति । उशनसादिष्वपि तदन्तविधिर्बोध्यः । अनङि ङकार इत्, नकारादकार उच्चारणार्थः । 'ङिच्चे'त्यन्तादेशः ।

अप्तृन् । 'नोपधायाः' इत्यत 'उपधाया' इत्यनुवर्तते । 'सर्वनामस्थाने

ऋतो ङि । ऋदन्त अङ्ग को गुण हो, ङि और सर्वनाम स्थान परे रहते ।

ऋदुशनस् । ऋदन्त और उशनस् पुरुदंशस्, अनेहस् इन शब्दों को अनङ् आदेश हो, सम्बुद्धिभिन्न सु परे रहते ।

अप्तृन् । अप् शब्द, तृन्प्रत्ययान्त, तृच् प्रत्ययान्त और स्वसृ आदि शब्द,

1 'प्रयोक्तव्य इत्यर्थः' पा० ।

2 अत्र 'गुण' इत्येतावत्येव वृत्तिः प्रायो लिखितेषु दृश्यते ।

अबादीनामुपधाया दीर्घोऽसम्बुद्धौ सर्वनामस्थाने। क्रोष्टा। क्रोष्टारौ। क्रोष्टारः। क्रोष्टारम्। क्रोष्टारौ। क्रोष्टून्॥

विभाषा तृतीयादिष्वचि।७।१।९७। तृतीयादिष्वजादिषु क्रोष्टुर्वा तृज्वत्। क्रोष्ट्रा-क्रोष्टुना। क्रोष्ट्रे-क्रोष्टवे॥ ऋत उत्।६।१।१११। ऋतो ङसिङसोरति परे पूर्वपरयोरुदेकादेशः [[1]स्यात्]। रपरः॥ रात्सस्य।८।२।२४। रेफात्संयोगान्तस्य सस्यैव लोपो, नान्यस्य। रस्य

---

चाऽसंबुद्धौ' इति चकारवर्जमनुवर्तते। तदाह—अबादीनामिति।

क्रोष्टेति। क्रोष्टन् स इति स्थिते एकदेशविकृतस्यानन्यतया तृजन्तत्वाद्दीर्घः। हल्ङ्यादिना सुलोपः। नलोपः। यद्यपि 'सर्वनामस्थाने चे'त्येवात्र दीर्घः सिध्यति, तथापि परत्वादप्तृन्नित्येव दीर्घो न्याय्यः।

क्रोष्टाराविति। क्रोष्टु औ इति स्थिते तृज्वद्भावे, 'ऋतो ङी'ति गुणे, रपरत्वे, एकदेशविकृतस्याऽनन्यतया तृजन्तत्वाद्दीर्घे च रूपम्।

विभाषा तृतीयादिष्वचि। 'तृज्वत्क्रोष्टु'रित्यनुवर्तते। 'अची'ति तृतीयादि-विभक्तिविशेषणं,ततस्तदादिविधिस्तदाह—अजादिष्विति।

क्रोष्ट्रेति। तृज्वद्भावे क्रोष्टृ-आ इति स्थिते ऋकारस्य यण्।

ऋत उत्। 'एङः पदान्तादति' 'ङसिङसोश्चे'त्यतः—'अती'ति 'ङसिङसो'-रिति चानुवर्तते। 'ङसिङसो'रित्यवयवषष्ठी,—'अती'त्यत्रान्वेति। 'अङ्गस्ये'त्यधि-

---

इनको उपधा को दीर्घ हो, सम्बुद्धि भिन्न सर्वनामस्थान परे रहते।

विभाषा तृतीया। क्रोष्टु शब्द को तृज्वद्भाव [ क्रोष्टृ आदेश ] हो विकल्प करके, तृतीयादि अजादि विभक्ति परे रहते।

ऋत उत्। ऋदन्त से ङसि ङस् सम्बन्धी अकार परे रहते पूर्व परके स्थान में उत् एकादेश हो।

रात्सस्य। रेफ से परे यदि संयोगान्त लोप हो तो सकार का ही हो, अन्य का नहीं हो।

---

१ स्यादिति क्वचित्कम्।

विसर्गः। क्रोष्टुः २। क्रोष्टोः २। क्रोष्ट्रोः [ [1]क्रोष्ट्वोः ]। ❋ नुमचिर-तृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन। क्रोष्टूनाम्। क्रोष्टरि। पक्षे, हलादौ च शम्भुवत् ॥

हूहूः। हूह्वौ। [ [2]हूहूम्। हूहून् ] इत्यादि ॥

अतिचमू-शब्दे तु नदीकार्यं विशेषः। हे अतिचमु। अतिचम्वै। अतिचम्वाः २। अतिचमूनाम्। अतिचम्वाम्।

खलपूः। ओः सुपि ।६।४।८३। धात्ववयवसंयोगपूर्वो न भवति य उवर्णस्तदन्तो यो धातुस्तदन्तस्याऽनेकाचोऽङ्गस्य यण् स्यादचि सुपि। खलप्वौ। खलप्वः। एवं सुल्वादयः ॥

स्वयम्भूः। स्वयम्भुवौ। स्वयम्भुवः। एवं-स्वभूः ॥

वर्षाभूः। वर्षाभ्वश्च ।६।४।८४। अस्य यण् स्यादचि सुपि। वर्षाभ्वावित्यादि ॥

---

कृतम् 'ऋत' इत्यनेन विशेष्यते, ततस्तदन्तविधिस्तदाह—ऋदन्तादिति। रपरत्वमिति। ऋकारस्य, अकारस्य च स्थाने प्राप्नुवत उकारस्य ऋकार-स्थानिकत्वाऽनपायादिति भावः।

हूहूरिति। गन्धर्वविशेषवाचि अव्युत्पन्नं प्रातिपदिकमेतत्। हूह्वौ। हूह्व इत्यादि। 'दीर्घाजसि चे'ति पूर्वसवर्णदीर्घनिषेधे, 'इको यणची'ति यणि च रूपम्।

---

नुमचिर। नुम्, अच् परे रहते रभाव, और तृज्वद्भाव—इनकी अपेक्षा से पूर्व विप्रतिषेध से नुट् ही होता है।

ओः सुपि। धातु का अवयव संयोग पूर्व में नहीं हैं जिसके ऐसा जो उवर्ण, तदन्त जो धातु, तदन्त जो अनेकाच् अङ्ग, उसको यण् हो, अजादि सुप् परे रहते।

वर्षाभ्वश्च। 'वर्षाभू' शब्द को यण् हो, अजादि सुप् परे रहते।

---

१ पाठोऽयं लिखितेषु नास्ति।

दृन्भूः। * दृन्करपुनःपूर्वस्य भुवो यण् वक्तव्यः। दृन्भ्वौ। दृन्भ्वः। [–१खलपूवत् ]। एवं-करभूः। पुनर्भूः। दृग्भू-काराभूशब्दौ स्वयम्भूवत्॥

धाता। हे धातः। धातारौ। धातारः।

*ऋवर्णान्नस्य णत्वं वाच्यम्। धातृणाम् ॥ एवं नप्त्रादयः॥

'अप्तृन्'निति सूत्रे· नप्त्रादिग्रहणं व्युत्पत्तिपक्षे नियमार्थम्। तेनेह न- पिता। पितरौ। पितरः। पितरम्। शेषं धातृवत्॥ एवं जामात्रादयः।

ना। नरौ। नरः। नृ च ।६।४।६। अस्य नामि वा दीर्घः। नृणाम्-नृणाम् ॥ गोतो णित् ।७।१।९०। ओकाराद्विहितं सर्वनाम-

---

हे धातरिति। 'ऋदुशनस्' इत्यत्राऽसंबुद्धावित्यनुवृत्तेर्नानङ्। 'ऋतो ङि' ति गुणः, रपरत्वं, हल्ङ्यादिलोपः, विसर्गः। 'अप्तृन्' इति दीर्घस्तु न, असंबुद्धावित्यनुवृत्तेः। धातारावििति। ङिसर्वनामस्थानयोः—'ऋतो ङि' इति गुणः, रपरत्वम्, 'अप्तृन्' इति दीर्घश्च।

तृजन्तादेव सिद्धे नप्त्रादिग्रहणं व्यर्थमित्यत आह—नप्त्रादिग्रहणमिति। एवञ्च—औणादिकेषु नप्त्रादिसप्तानामेव तृन्तृजन्तानां दीर्घ इति नियमेन तदितरेषां पितृभ्रात्रादीनां न दीर्घ इति भावः।

---

दृन्कर। दृन्करपुनः पूर्वक जो भू, उसको यण् हो, अजादिसुप परे रहते ऐसा वक्तव्य है।

ऋवर्णान्नस्य-। ऋवर्ण से परे जो नकार उसको णत्व हो। [ ऐसा सूत्रकार को कहना चाहिए ]।

नृ च। नृ शब्दको विकल्प से दीर्घ हो, नाम् परे रहते।

गोतो णित्। ओकार से विहित जो सर्वनामस्थान, सो णिद्वत् हो।

---

१ क्वचिदेवायं पाठो दृश्यते

स्थानं णिद्वत्[1] । [ ओतो णिदिति[2] वाच्यम् ] । गौः । गावौ । गावः ॥

औतोऽम्शसोः ।६।१।९३। ['आ-ओत' इतिच्छेदः[2]] । ओतोऽम्शसोरचि आकार एकादेशः । गाम् । गावौ । गाः । गवा । गवे । गोः २ ॥

रायो हलि ।७।२।८५। रैशब्दस्या[3]ऽऽकारादेशो हलि विभक्तौ । राः । रायौ । रायः । राभ्यामित्यादि ॥

ग्लौः । ग्लावौ । ग्लावः । ग्लौभ्यामित्यादि ॥

इत्यजन्ताः पुँल्लिङ्गाः ॥

---

रायो हलि । 'राय' इति 'रै' शब्दस्य षष्ठ्यन्तम् । 'अष्टन आ विभक्तौ' इत्यत 'आ' इति, विभक्ता'विति चानुवर्तन्ते । 'हली'त्यनेन विभक्ताविति विशेष्यते, ततस्तदादिविधिः, तदाह—रैशब्दस्येति । ग्लौरिति । ग्लौशब्दश्चन्द्रवाची । 'ग्लौर्मृगाङ्कः कलानिधिः' इत्यमरः । ग्लाव इति । ग्लावम्, ग्लावौ, ग्लावः । ग्लावा, ग्लौभ्याम्, ग्लौभिः । ग्लावे, ग्लौभ्याम्, ग्लौभ्यः । ग्लावः, ग्लौभ्याम् ग्लौभ्यः । ग्लावः, ग्लावोः, ग्लावाम् । ग्लावि, ग्लावोः, ग्लौषु—इत्यादि रूपाणीति ध्येयम् ।

* इति मध्यकौमुदीव्याख्यायां बालमनोरमाख्यायामजन्तपुंलिङ्गप्रकरणम् *

---

औतोऽम् । ओकार से अम् शस् सम्बन्धी अच् परे रहते पूर्व पर के स्थान में आकार एकादेश हो।

रायो हलि । रै शब्द को आकार अन्तादेश हो, हलादि विभक्तिपरे रहते ।

---

१ 'णित्स्यात्' पा० ।

२ क्वचित्को लिखिते पाठोऽयम् ।

३ 'रैशब्दस्ये'ति क्वचित्कम् ।

## अथाजन्ताः स्त्रीलिङ्गाः ।

रमा । औङ आपः ।७।१।१८। आबन्तादङ्गात्परस्यौङः शी स्यात्। 'औ'ङित्यौकारविभक्तेः संज्ञा । रमे । रमाः ॥ सम्बुद्धौ च ।७।३।१०६। आप एकारः [ [1]स्यात्सम्बुद्धौ ] । हे रमे । हे रमे । हे रमाः । रमाम् । रमे । रमाः ॥ आङि चाऽऽपः ।७।३।१०५। [2]आङि, ओसि चाऽऽप एकारः । रमया । रमाभ्याम् । रमाभिः ॥

रमेति । 'रमु क्रीडायाम्' पचाद्यचि 'अजाद्यतष्टाप्' । प्रत्ययान्तत्वादप्रातिपदिकत्वेऽपि 'ङ्याप्प्रातिपदिकात्' इति ङ्यापोः पृथग्ग्रहणात्, लिङ्गविशिष्टपरिभाषया वा स्वादयः । 'हल्ङ्याप्' इति सुलोपः ।

औङ आपः । 'आप' इति पञ्चमी । प्रत्ययग्रहणपरिभाषया च आबन्तं विवक्षितम् । 'अङ्गस्ये'त्यधिकृतञ्च पञ्चम्या विपरिणम्यते । 'औङ' इति षष्ठी । 'जसः शी'त्यतः 'शी'त्यनुवर्तते । तदाह—आबन्तादिति ।

संज्ञेति । 'प्राचां शास्त्रे स्थिते'ति शेषः । रमे इति । 'रमा-औ' इति स्थितेऽनेन शीभावे, तस्य स्थानिवत्त्वेन प्रत्ययत्वा'ल्लशक्वतद्धिते' इतीत्संज्ञायां, गुणः । 'यस्येति चे'ति लोपस्तु न, अभत्वात् । जसि 'अकः सवर्णे' इति सवर्णदीर्घे रुत्वे विसर्गे च–रमा इति । पूर्वसवर्णदीर्घस्तु न भवति, 'दीर्घाज्जसि चे'ति निषेधात् । आङि चापः । 'ओसि चे'त्यनुवर्तते, 'आप' इति षष्ठी, 'अङ्गस्ये'त्यधिकृतं, तदन्तविधिः । 'बहुवचने झल्येत्' इत्यत एदित्यनुवर्तते । तदाह—आङि

औङ आपः । आबन्त अङ्ग से परे जो औङ् अर्थात्—औकार विभक्ति, उसको 'शी' आदेश हो ।

सम्बुद्धौ च । आबन्त अङ्ग को एकार आदेश हो, सम्बुद्धि परे रहते ।

आङि चापः । आबन्त अङ्गको एकार आदेश हो, आङ् (टा) और ओस् परे रहते ।

१ क्लिखते क्वाचित्कः पाठोऽयम् ।

२ 'आङि ओसि च परे आबन्ताङ्गस्य एकारः स्यात्' पा० ।

**याडापः** ।७।३।११३। [1]आपः परस्य ङिद्वचनस्य याडागमः । वृद्धिरेचि । रमायै । रमाभ्याम् । रमाभ्यः । रमायाः २ । रमयोः २ । रमाणाम् । रमायाम् । रमासु । एवं दुर्गादयः ॥

**सर्वनाम्नः स्याड्ढ्रस्वश्च** ।७।३।११४। आबन्तात्सर्वनाम्नो ङितः स्याड्, आपश्च ह्रस्वः । [ याटोऽपवादः ] । सर्वस्यै । सर्वस्याः २ । [ [2]प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणादामि सर्वनाम्न इति सुट् ] । सर्वासाम् । सर्वस्याम् । शेषं रमावत् । एवं विश्वादय आबन्ताः ॥

**विभाषा दिक्समासे बहुव्रीहौ** ।१।१।२८। [ [3]अत्र ] सर्वनामता वा । उत्तरपूर्वस्यै । उत्तरपूर्वायै । [ [3]इत्यादि । 'दिङ्नामान्यन्तराले' इति प्रतिपदोक्तस्यैव समासस्य ग्रहणान्नेह—योत्तरा सा पूर्वा यस्या

---

ओसि चेति । रमाणामिति । 'ह्रस्वनद्याप' इत्यत्राऽऽब्ग्रहणान्नुटि पर्जन्यवल्लक्षणप्रवृत्त्या'नामी'ति दीर्घे, 'अट्कुप्वाङ्'इति णत्वमिति भावः रमायामिति । 'रमा-इ' इति स्थिते 'ङेराम्नद्याम्नीभ्यः' इत्यामादेशे, याडागमे, सवर्णदीर्घ इति भावः ।

विभाषा दिक्समासे । 'सर्वादीनी'त्यतः 'सर्वनाम'ग्रहणमनुवर्तते । तदाह--सर्वनामतेति ।

दिङ्नामानीति । 'दिङ्नामान्यन्तराले' इति प्रतिपदोक्तो बहुव्रीहिर्दिक्समासः, दिक्शब्दमुच्चार्य विहितत्वात्, नतु 'अनेकमन्यपदार्थे' इति बहुव्रीहिरपि तथा, ततश्च लक्षणप्रतिपदोक्तपरिभाषया न तस्येह ग्रहणमित्यर्थः । योत्तरेति ।

---

याडापः । आबन्त अङ्गसे परे जो ङिद्वचन उनको याट् का आगम हो ।

सर्वनाम्नः स्याट् । आबन्त सर्वनाम से परे जो ङिद्वचन, उनको स्याट् का आगम हो, और आप् को ह्रस्व हो ।

विभाषादिक् । दिक्समास बहुव्रीहि में सर्वनाम संज्ञा विकल्प करके हो ।

---

१ 'आपो ङितो याट् । वृद्धिः' इत्येव क्वचिल्लिखिते पाठो दृश्यते ।

२ क्वाचित्कः पाठः । ३ क्वचिदपि न दृश्यते ।

उन्मुग्धायास्तस्यै उत्तरपूर्वायै। बहुव्रीहिग्रहणं स्पष्टार्थम्। अन्तरस्यै शालायै। बाह्यायै इत्यर्थः]। अपुरीत्युक्तेर्नेह-अन्तरायै नगर्यै। [1]तीयस्येति ङित्सु वा। द्वितीयस्यै। द्वितीयायै। एवं तृतीया। [2]अम्बार्थनद्योर्ह्रस्वः। हे अम्ब। हे अक्क। हे अल्ल। * असंयुक्ता ये डलकास्तद्वतां ह्रस्वो न। हे अम्बाडे। हे अम्बाले। हे अम्बिके।

जरा। जरसौ—जरे। इत्यादि। पक्षे, [3]हलादौ च रमावत्। गोपा—विश्वपावत्।

मतीः। मत्या॥ ङिति ह्रस्वश्च ।१।४।६। इयङुवङ्स्थानौ

---

उत्तराशब्दस्य, पूर्वाशब्दस्य च सामानाधिकरण्यं द्योतयितुं यत्तच्छब्दौ। सामानाधिकरण्याऽभावे हि 'अनेकमन्यपदार्थे' इति बहुव्रीहेरसंभवएव, 'बहुव्रीहिः समानाधिकरणानां वक्तव्यः' इति वचनात्।

उन्मुग्धाया इति। तेन पूर्वोत्तरयोर्विरोधात् कथं सामानाधिकरण्यमिति शङ्का निरस्ता। ननु 'विभाषा दिक्समासे' इत्येवास्तु, बहुव्रीहिग्रहणं न कर्तव्यम्, प्रतिपदोक्तत्वेन 'दिङ्नामान्यन्तराले' इति बहुव्रीहेरेव ग्रहणसिद्धेरित्यत आह—बहुव्रीहिग्रहणमिति।

बाह्यायै इत्यर्थ इति। 'अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये। छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि च' इति कोशात्। अर्थान्तरपरत्वे तु सर्वनामत्वाऽभावान्न स्यादिति भावः। तीयस्येति। विभाषाप्रकरणे तीयप्रत्ययान्तस्य ङित्सु सर्वनामत्वोपसंख्यानादित्यर्थः।

ङिति ह्रस्वश्चेति। अत्र चकाराद्वाक्यद्वयं, तथा हि-'यू स्त्र्याख्यौ नदी'-

---

असंयुक्ता ये। असंयुक्त जो डकार लकार ककार, तद्वान् जो अम्बार्थक शब्द, उनको ह्रस्व नहीं हो।

ङिति ह्रस्वश्च। इयङ् उवङ् का स्थानी, स्त्रीशब्दावयव से भिन्न, नित्य-

---

१ 'तीयस्य ङित्सूपसङ्ख्यानात्' इति तु मुद्रितेषु पाठः।

२ 'अम्बार्थेति ह्रस्वः' पाठा०। ३ 'पक्षे रमावत्' पा०।

स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गावीदूतौ, ह्रस्वौ च इउवर्णौ स्त्रियां वा नदीसंज्ञौ स्तो ङिति। मत्यै। मतये। मत्याः २। मतेः २। नदीत्वपक्षे [1]परत्वात् 'औत्' इति ङेरौत्वे प्राप्ते। इदुद्भ्याम् ७।३।११७। नदीसंज्ञकाभ्यामिदुद्भ्यां परस्य ङेराम् स्यात्। [[2]पक्षे-अच्च घेः]। मत्याम्। मतौ। शेषं हरिवत्। एवं बुद्ध्यादयः॥

---

त्यनुवर्तते। ईश्च ऊश्च यू। स्त्रियमेवाचक्षाते स्त्र्याख्यौ। नित्यस्त्रीलिङ्गाविति यावत्। 'नेयङुवङ्स्थानावस्त्री'ति सूत्रं नञ्वर्जं सर्वमनुवर्तते। इयङुवङोः स्थितिर्ययोस्ताविति विग्रहः। इयङुवङ्प्राप्तियोग्यावित्यर्थः। 'वामी'त्यतो 'वे'त्यनुवर्तते। ततश्च 'इयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गावीदूतौ नदीसंज्ञौ वा स्तो ङिति परे' इत्येकं वाक्यं संपद्यते। पुनरपि 'यू' इत्यनुवर्तते। इश्च उश्च यू। 'ह्रस्व' इति तत्र प्रत्येकमन्वेति। स्त्र्याख्याविति चानुवर्तते। तस्य च स्त्रीलिङ्गावित्येतावानेवार्थोऽत्रांशे विवक्षितो, नतु नित्यस्त्रीलिङ्गाविति, व्याख्यानात्। 'वामि' इत्यतो वेति चानुवर्तते। ततश्च 'स्त्रीलिङ्गौ ह्रस्वौ चेवर्णोवर्णौ नदीसंज्ञौ वा स्तो ङिति परे' इति वाक्यान्तरं संपद्यते। तदाह-इयङुवङ्स्थानाविति।

द्वितीयवाक्येऽपि स्त्रीलिङ्गे नित्यत्वविशेषणं तु नास्ति। नित्यत्वविशेषणे हि इष्वश्यन्यरणिप्रभृतीनामुभयलिङ्गानां, पटुमृदुप्रभृतीनां त्रिलिङ्गानां च ङिति नदीत्वविकल्पो न स्यादिति बोध्यम्। तत्र ह्रस्वयोरप्राप्ते, दीर्घयोस्तु 'नेयङुवङ्स्थानौ' इति निषेधादप्राप्ते विभाषेयम्।

---

स्त्रीलिङ्ग जो दीर्घ ईकार और ऊकार, उनकी नदी संज्ञा हो, विकल्प करके, ङिद्वचन परे रहते।

और ह्रस्व जो इवर्ण और उवर्ण उनकी नदी सञ्ज्ञा हो स्त्रीलिङ्ग में, विकल्प करके, ङिद्वचन परे रहते।

इदुद्भ्याम्। नदीसञ्ज्ञक ह्रस्व इकार और उकार से परे जो 'ङि' उसको 'आम्' आदेश हो।

---

१ 'परत्वा'दिति क्वचिन्न। २ क्वाचित्कः पाठः।

**त्रिचतुरो ( : ) स्त्रियां तिसृचतसृ** ।७।२।९९। स्त्रीलिङ्गयोरेतयोरेतौ स्तो विभक्तौ ॥ **अचि र ऋतः** ।७।२।१००। तिसृचतस्रोर्ऋतो रादेशोऽचि । गुणदीर्घोत्वानामपवादः । तिस्रः २ । तिसृभिः । तिसृभ्यः २ । आमि [1]नुट् । **न तिसृचतसृ** ।६।४।४। एतयोर्नामि दीर्घो न । तिसृणाम् । तिसृषु ॥

[ द्वेरत्वे [2]सत्याप् ] । द्वे २ । द्वाभ्याम् ३ । द्वयोः २ ॥

---

त्रिचतुरोः । एतयोरेताविति । त्रिचतुरोस्तिसृ चतसृ इत्येताविस्यर्थः । विभक्ताविति । 'अष्टन आ विभक्तौ' इत्यतस्तदनुवृत्तेरिति भावः ।

गुणदीर्घोत्वानामपवाद इति । 'ऋतो ङि' इति गुणस्य, 'प्रथमयोः' इति पूर्वसवर्णदीर्घस्य, 'ऋत उत्' इत्युत्त्वस्य चेदं रत्वमपवाद इत्यर्थः ।

तिस्र इति । जश्शसो रूपम् । तत्र जसि 'ऋतो ङी'ति गुणस्य रत्वमपवादः । शसि तु 'प्रथमयोः' इति पूर्वसवर्णदीर्घस्य रत्वमपवादः ।

आमीति । तिसृ—आम् इति स्थिते नुटं बाधित्वा 'अचि र ऋतः' इति रत्वे 'तिस्रा'मिति प्राप्ते—'नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेने'ति रत्वं बाधित्वा नुडित्यर्थः । तिसृ-नामिति स्थिते 'नामि' इति दीर्घे प्राप्ते—न तिसृचतसृ । 'तिसृचतसृ' इति लुप्तषष्ठीकं पदम् । 'ढ्रलोपे' इत्यतो 'दीर्घ' इत्यनुवर्तते । 'नामी'ति सूत्रं चानुवर्तते । तदाह—एतयोरित्यादिना । तिसृणामिति । 'ऋवर्णान्नस्ये'ति णत्वम् ।

[ द्वरत्वे इति । द्विशब्दाद्विभक्तौ सत्यां त्यदाद्यत्वे 'अजाद्यतः' इति टाबि-

---

त्रिचतुरोः । स्त्रीलिङ्ग 'त्रि' और 'चतुर्' शब्द के स्थान में क्रमसे 'तिसृ' और 'चतसृ' आदेश हो, विभक्ति परे रहते ।

अचि र । 'तिसृ' और 'चतसृ' के ऋकार को रेफ आदेश हो, अच् परे रहते ।

न तिसृ । 'तिसृ' और 'चतसृ' को 'नाम्' परे रहते दीर्घ नहीं हो ।

---

१ 'नुमचिरेति नुट्' इति पाठान्तरम् । २ अयं पाठो न क्वापि दृश्यते ।

गौरी। गौर्यौ। गौर्यः। हे गौरि। गौर्यै—इत्यादि। शेषं बहुश्रेयसीवत्। एवं नद्यादयः॥

लक्ष्मीः। शेषं गौरीवत्। एवं तरीतन्त्र्यादयः।

स्त्री। हे स्त्रि। स्त्रियाः ।६।४।७९। अस्येयङजादौ प्रत्यये। स्त्रियौ। स्त्रियः। वाऽम्शसोः ।६।४।८०। [1]अमि, शसि च स्त्रिया इयङ् वा। स्त्रियम्—स्त्रीम्। स्त्रियः—स्त्रीः। स्त्रिया। स्त्रियै। स्त्रियाः २। [ [2]स्त्रियोः २ ]। परत्वान्नुट्—स्त्रीणाम्। [ [3]स्त्रियाम् ]। स्त्रीषु॥

श्रीः। श्रियौ। श्रियः। [ [3]श्रियम्। श्रियौ। श्रियः। श्रिया। श्रीभ्याम्। श्रीभिः ]। नेयङुवङ्स्थानावस्त्री ।१।४।४। इयङुवङोः

---

स्यर्थः ]। द्वे इत्यादि। टापि सति सवर्णदीर्घे द्वाशब्दस्य नित्यं द्विवचनान्तस्य रमावद्रूपाणीति भावः। एवं तरीतन्त्र्यादय इति। 'अवितॄस्तॄतन्त्रिभ्य ईः' इत्यौणादिके 'ई'प्रत्यये—तरीः स्तरीः तन्त्रीरित्यादि। अत्राप्यङ्यन्तत्वान्न सुलोपः। 'कृदिकारात्' इति ङीषि तु सुलोपो भवत्येव। शेषं गौरीवत्।

श्रीरिति। श्रयन्त्येतामिति श्रीः। 'क्विब्वचिप्रच्छी'ति क्विप्, प्रकृतेर्दीर्घश्च। श्रीशब्दात् सुः। अङ्यन्तत्वान्न सुलोपः।

श्रियौ श्रिय इति। 'दीर्घाज्जसि च' इति पूर्वसवर्णदीर्घनिषेधे, 'इको यणचि' इति यणि प्राप्ते, धात्ववयवेवर्णान्तत्वात् 'अचि श्नुधातु'—'इतीयङ्। एकाच्त्वात्, संयोगपूर्वकत्वाच्च 'एरनेकाच' इति यण् न। 'यू स्त्र्याख्यौ' इति नदीत्वात् 'अम्बार्थे'ति ह्रस्वे प्राप्ते—नेयङुवङ्। 'यू स्त्र्याख्यौ नदी'त्यतो

---

स्त्रियाः। 'स्त्री' शब्द को इयङ् आदेश हो, अजादि प्रत्यय परे रहते।

वाऽम्शसोः। अम् और शस् परे रहते 'स्त्री'शब्द को इयङ् आदेश हो, विकल्प कर के।

नेयङुवङ्। इयङ् और उवङ् के स्थानी जो दीर्घ ईकार और ऊकार,

---

[1] 'स्त्रिया इयङ्' इत्येव क्वचिद्वृत्तिर्दृश्यते।

[2] क्वचिन्न। [3] लिखितेषु क्वापि नास्ति।

स्थितिर्ययोस्तावीदूतौ नदीसंज्ञौ न स्तो, न तु स्त्री। हे श्रीः। [[1]ङिति ह्रस्व-श्चेति वा नदीत्वम्–] श्रियै। श्रिये। श्रियाः २। श्रियः २।

वाऽऽमि ।१।४।५। इयङुवङ्स्थानौ स्त्र्याख्यौ यू आमि वा नदीसंज्ञौ स्तो, न तु स्त्री। [2]श्रीणाम्—श्रियाम्। [ [3]ङौ–] श्रियाम्—श्रियि॥

"अवी-तन्त्री-तरी-लक्ष्मी-धी-श्री-ह्रीणामुणादितः।
स्त्रीलिङ्गानाममीषान्तु सुलोपो न कदाचन[3]"॥ १॥

धेनुर्मतिवत्। स्त्रियाञ्च ।७।१।९६। स्त्रीवाची क्रोष्टुशब्दस्तृजन्त-

'यू' 'नदी'त्यनुवर्तते। 'स्थान'शब्दो भावे ल्युडन्तः। इयङुवङोः स्थानं-स्थिति-र्ययोरिति बहुव्रीहिः। इयङुवङ्योग्याविति यावत्। तदाह—इयङुवङोरित्या-दिना। हे श्रीरिति। अजादावियङ्योग्यत्वात् नदीत्वनिषेधात् 'अम्बार्थनद्योः' इति ह्रस्वो नेति भावः। श्रियमिति। अमिपूर्वरूपं बाधित्वा इयङ्।

श्रियौ श्रिय इति। औट्शसोः पूर्ववत्।

उनकी नदी संज्ञा नहीं हो, 'स्त्री' शब्द को छोड़कर। [ अर्थात्—इयङ् स्थानी होने पर भी 'स्त्री' शब्द की तो नदी सञ्ज्ञा हो जाती है ]।

वाऽऽमि। इयङ् और उवङ् का स्थानी, नित्य स्त्रीलिङ्ग जो दीर्घ ईकार और ऊकार, उसकी नदीसञ्ज्ञा विकल्प से हो, 'आम्' परे रहते, 'स्त्री' शब्द को छोड़ कर।

अवीतन्त्री। 'अवी' 'तन्त्री' आदि उणादि 'ई' प्रत्ययान्त स्त्रीलिङ्ग शब्दों में हल्ङ्यादि सूत्र से 'सु' का लोप नहीं होता है। क्योंकि ये शब्द ङ्यन्त नहीं हैं, किन्तु 'ई'प्रत्ययान्त हैं।

स्त्रियाञ्च। स्त्रीवाची 'क्रोष्टु' शब्द तृजन्त की तरह ( 'क्रोष्टृ' इस ) रूप को प्राप्त हो।

१ अयं क्वाचित्कः पाठः। २ 'श्रियां-श्रीणाम्। श्रियि-श्रियां' पा०।
३ क्वाचित्कः पाठः।

वद्रूपं लभते ॥ ऋन्नेभ्यो ङीप् ।४।१।५। ऋदन्तेभ्यो, नान्तेभ्यश्च स्त्रियां ङीप् । क्रोष्ट्री—गौरीवत् । [1]वधूः । शेषं नदीवत् ] ।

भ्रूः—श्रीवत् । स्वयम्भूः—पुंवत् ॥

न षट्स्वस्रादिभ्यः ।४।१।१०। एभ्यो ङीप्टापौ न स्तः ॥

स्वसा तिस्रश्चतस्रश्च ननान्दा दुहिता तथा ॥
याता मातेति सप्तैते स्वस्रादय उदाहृताः ॥ १ ॥

स्वसा । स्वसारौ । [[2]स्वसारः] । माता—पितृवत् । शसि—मातॄः । द्यौर्गोवत् । राः—पुंवत् । नौर्ग्लौवत् ॥

॥ इत्यजन्ताः स्त्रीलिङ्गाः ॥

---

ऋन्नेभ्यो ङीप् । ऋतश्च, नाश्चेति द्वन्द्वः । 'स्त्रिया'मित्यधिकृतम् । 'ङ्याप्प्रातिपदिकात्' इत्यतः प्रातिपदिकग्रहणमनुवृत्तम् ऋन्नकारैर्विशेष्यते । ततस्तदन्तविधिस्तदाह—ऋदन्तेभ्य इति ।

द्यौर्गोवदिति । 'ओतो णित्' इति णिद्वत्त्वाऽतिदेशात् 'अचो ञ्णिति' इति वृद्धिः । 'द्योदिवौ द्वे स्त्रियामभ्रम्' इत्यमरः ।

राः पुंवदिति । 'रायो हलि' इत्यात्वम् । 'राः स्त्रीत्येके' इति क्षीरस्वाम्युक्तेः स्त्रीलिङ्गोऽप्ययमिति भावः । नौर्ग्लौवदिति । 'स्त्रियां नौस्तरणिस्तरिः' इत्यमरः ।

॥ इति मध्यकौमुदीबालमनोरमायामजन्तस्त्रीलिङ्गप्रकरणम् ॥

---

ऋन्नेभ्यो । ऋदन्त और नान्त से ङीप् प्रत्यय हो स्त्रीलिङ्ग में ।

न षट् । षट्संज्ञक और 'स्वसृ' आदि शब्दों से 'ङीप्' और 'टाप्' प्रत्यय नहीं हों ।

---

१ अयं पाठः क्वचिन्न दृश्यते । २ क्वाचित्कः पाठः ।

## अथाऽजन्ता नपुंसकलिङ्गाः ।

अतोऽम् ।७।१।२४। अतोऽङ्गात्क्लीबात् स्वमोरम् । ज्ञानम् । 'एङ्ह्रस्वा'दिति सम्बुद्धिलोपः-हे ज्ञान । नपुंसकाच्च ।७।१।१९। क्लीबादौङः शी ['स्यात्] । भसंज्ञायाम् । यस्येति च ६।४।१४८। ईकारे, तद्धिते च परे भस्येवर्णाऽवर्णयोर्लोपः ।—²इत्यकारलोपे प्राप्ते । * औङः

---

अतोऽम् । 'अत' इति पञ्चमी । 'अङ्गस्ये'त्यधिकृतं पञ्चम्या विपरिणम्यते, 'अत' इत्यनेन विशेष्यते । तेन तदन्तविधिः । 'स्वमोर्नपुंसकात्' इत्यनुवर्तते । तदाह— अतोऽङ्गादिति । अदन्तादङ्गादित्यर्थः ।

नपुंसकाच्चेति । 'जसः शी'त्यतः 'शी'ति, 'औङ आप' इत्यत 'औङ' इति चानुवर्तते, तदाह—क्लीबादिति । 'औ'ङित्यौकारविभक्तेः संज्ञेत्युक्तम् ।

ज्ञान ई इति स्थिते—यस्येति चेति । 'यस्य-ईती'ति च्छेदः । इश्च अश्च तयोः समाहारो यं, तस्य यस्य = इवर्णस्य, अवर्णस्य चेत्यर्थः । 'भस्ये'त्यधिकृतम् । 'नस्तद्धिते' इत्यतस्तद्धिते इत्यनुवर्तते । तदाह—भस्येति । इत्यकारलोपे प्राप्ते इति । 'सुडनपुंसकस्ये'ति पर्युदासेन शीभावस्याऽसर्वनामस्थानतया तस्मिन् परतो भत्वादिति भावः । औङः श्यामिति । औङो यः श्यादेशस्तस्मिन् परतो 'यस्येति चे'ति लोपस्य प्रतिषेधो वक्तव्य इत्यर्थः ।

---

अतोऽम् । अदन्त क्लीब अङ्ग से परे जो 'सु' और 'अम्' उनको 'अम्' आदेश हो ।

नपुंसकाच्च । क्लीब अङ्ग से परे जो 'औङ्' उसको 'शी' आदेश हो ।

यस्येति च । भसंज्ञक जो इवर्ण और अवर्ण उनका लोप हो, ईकार और तद्धित परे रहते ।

औङः श्यां । 'औङ्'स्थानिक 'शी' परे रहते भसञ्ज्ञक इवर्ण और अवर्ण का लोप नहीं हो ।

---

१ क्वचिन्न । २ 'इत्यलोपे प्राप्ते' इत्येव लिखितेषु पाठः ।

इयां प्रतिषेधो [1]वाच्यः। ज्ञाने। जश्शसोः शिः ।७।१।२०। क्लीबात्परयोर्जश्शसोः शिः स्यात्॥ शि सर्वनामस्थानम् ।१।१।४२। ['शि' इत्येतत्सर्वनामस्थानसंज्ञं स्यात्]। नपुंसकस्य झलचः ।७।१।७२। झलन्तस्याऽजन्तस्य च क्लीबस्य नुमागमः स्यात्सर्वनामस्थाने।

मिदचोऽन्त्यात्परः ।१।१।४७। अचां मध्ये योऽन्त्यस्तस्मात्परस्तस्यैवाऽन्तावयवो मित्स्यात्। उपधादीर्घः। ज्ञानानि। पुनस्तद्वत्। शेषं पुंवत्। एवं धन-वन-फलादयः॥

अद्ड्डतरादिभ्यः पञ्चभ्यः ।७।१।२५। एभ्यः क्लीबेभ्यः स्वमोरद्डादेशः स्यात्॥ टेः ।६।४।१४३। डिति [ [2]परे ] भस्य टेर्लोपः। कतरत्—कतरद्। कतरे। कतराणि। हे कतरत्। शेषं पुंवत्। एवं कतमत्। इतरत्। अन्यत्। अन्यतरत्॥ 'अन्यतम'[[3]शब्द]स्य तु

---

जश्शसोः। क्लीब अङ्ग से परे जो जस् और शस् उनके स्थान में 'शि' आदेश हो।

शि सर्व। 'शि' की सर्वनामस्थानसञ्ज्ञा हो।

नपुंसकस्य। झलन्त और अजन्त जो क्लीब अङ्ग उसको नुम् का आगम हो, सर्वनामस्थान परे रहते।

मिदचो। अचों के मध्य में जो अन्त्य अच्, उससे परे और उसी का अन्तावयव मित् हो।

अद्ड्तरा। क्लीब लिङ्ग में वर्त्तमान जो डतरादि पाँच ( अर्थात्—डतर प्रत्ययान्त, डतमप्रत्ययान्त और अन्य, अन्यतर, इतर ये ५ ) शब्द, उनसे परे जो सु और अम् उसको 'अद्ड्' आदेश हो।

टेः। भसंज्ञक की 'टि'का लोप हो, डित्परे रहते।

---

१ 'वाच्य' इति क्वाचित्कम्। २ क्वचिदेवायं पाठो दृश्यते।
३ क्वचिन्न।

'अन्यतम'मित्येव । *एकतरात्प्रतिषेधो [1]वाच्यः । एकतरम् ॥

ह्रस्वो नपुंसके प्रातिपदिकस्य ।१।२।४७। अजन्तस्येत्येव । श्रीपं-ज्ञानवत् ॥ स्वमोर्नपुंसकात् ।७।१।२३। [2]क्लीबादङ्गात्स्वमोर्लुक् स्यात् । वारि । इकोऽचि विभक्तौ ।७।१।७३। इगन्तस्य क्लीबस्य नुमचि विभक्तौ । वारिणी । वारीणि । 'न लुमते'त्यस्याऽनित्यत्वात्पक्षे सम्बुद्धि-निमित्तो गुणः । हे वारे । हे वारि । 'घेर्ङिती'ति गुणे प्राप्ते—

---

स्वमोर्नपुंसकात् । 'षड्भ्यो लुक्' इत्यतो 'लु'गित्यनुवर्तते । वारीति । सोरमश्च लुकि रूपम् । इकोऽचि । 'इदितो नुम् धातोः' इत्यतो 'नु'मित्यनुवर्तते । 'नपुंसकस्य झलच' इत्यतो 'नपुंसकस्ये'त्यनुवर्तते । 'अङ्गस्ये'त्यधिकृतमिका विशेष्यते, ततस्तदन्तविधिः, तदाह—इगन्तस्येति ।

नन्विह सम्बुद्धेर्लुका लुप्तत्वात् 'न लुमता' इति प्रत्ययलक्षणनिषेधात् कथं गुण इत्यत आह—न लुमतेति । अत्र च 'इकोऽचि विभक्तौ' इत्यत्राऽज्ग्रहणं ज्ञापकं । तथाहि हलादिषु भ्यामादिषु हि सत्यपि नुमि 'न लोपः प्रातिपदिकान्तस्ये'ति तस्य लोपसम्भवादचीति व्यर्थम् । न च सम्बुद्धिव्यावृत्यर्थमज्ग्रहणं, अन्यथा तत्र नुमि सति 'न ङिसम्बुद्ध्योः'रिति निषेधे सति नकारश्रवणप्रसङ्ग इति वाच्यं, सम्बुद्धे र्लुका लुप्ततया प्रत्ययलक्षणाऽभावेन तत्र नुमः प्राप्तेरेवाऽभावात् । 'न लुमते'ति निषेधस्याऽनित्यत्वे तु सम्बुद्धौ प्रत्ययलक्षणेन प्राप्तं नुमं वारयितुमज्ग्रहणं

---

एकतरात् । क्लीब में वर्त्तमान 'एकतर' शब्द से परे जो 'सु' और 'अम्' उनको 'अद्ड्' आदेश नहीं हो ।

ह्रस्वो नपुं । नपुंसक में वर्त्तमान जो अजन्त प्रातिपदिक उसको ह्रस्व हो ।

स्वमोर्नपुं । क्लीब अङ्ग से परे जो 'सु' और 'अम्' उनका लुक् हो ।

इकोऽचि । इगन्त क्लीब को नुम् का आगम हो, अजादि विभक्ति परे रहते ।

---

१ 'वाच्य' इति क्वचिन्न । २ 'लुक्' इत्येव क्वचिद् वृत्तिर्दृश्यते ।

* वृद्ध्यौत्वतृज्वद्भावगुणेभ्यो नुम् पूर्वविप्रतिषेधेन । वारिणे। वारिणः २। वारिणोः २। 'नुमचिरे'ति नुट्। वारीणाम्। वारिणि। हलादौ हरिवत्॥

**तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य ।७।१।७४।** प्रवृत्तिनिमित्तैक्ये भाषितपुंस्कमिगन्तं क्लीबं पुंवद्वा टादावचि। अनादये—अनादिने इत्यादि। शेषं वारिवत्॥

'यन्निमित्तमुपादाय पुंसि शब्दः प्रवर्त्तते।
क्लीबवृत्ति तदेव स्यादुक्तपुंस्कं तदुच्यते॥१॥

---

सफलं भवत्यतोऽग्रहणं 'न लुमता' इत्यस्याऽनित्यत्वे लिङ्गमित्याहुः। अत एव 'इकोऽचि' इति सूत्रे 'हे त्रपो' इति, 'एङ्ह्रस्वात्' इति सूत्रे 'हे त्रपु' इति च भाष्यं सङ्गच्छते।

तृतीयादिषु। भाषितः पुमान् येन प्रवृत्तिनिमित्तेन तत्-भाषितपुंस्कं, तदस्यास्तीति अर्श आद्यच्। शब्दस्वरूपं विशेष्यम्। पुंस्त्वे, नपुंसकत्वे च एकप्रवृत्तिनिमित्तकमिति यावत्। 'इकोऽचि विभक्तौ' इत्यत 'इकोऽची'ति, 'नपुंसकस्य झलचः' इत्यतो 'नपुंकसस्ये'ति चानुवर्तते। षष्ठी च प्रथमया विपरिणम्यते। तदाह—प्रवृत्तिनिमित्तैक्ये इत्यादिना। पुंवद्वेति। 'गालव'-ग्रहणादिति भावः। अचीति। अजादावित्यर्थः। पुंवत्त्वे ह्रस्वनुमोरभाव इति भावः।

---

वृद्ध्यौत्त्व। वृद्धि, औत्त्व, तृज्वद्भाव और गुण—इनकी अपेक्षा से पूर्व विप्रतिषेध करके 'नुम्' ही होता है।

तृतीयादिषु। प्रवृत्तिनिमित्त के एक होने पर जो भाषितपुंस्क इगन्त क्लीब, उसको पुंवद्भाव हो, विकल्प करके, टादि अच् परे रहते।

यन्निमित्तं। जिस अर्थ ( धर्म ) को प्रवृत्तिनिमित्त मानकर जो शब्द पुंलिङ्ग में प्रवृत्त होता हो उसी प्रवृत्तिनिमित्त ( धर्म ) को मानकर वही शब्द नपुंसक में भी प्रवृत्त हो तो उसे 'भाषितपुंस्क' कहते हैं।

'पीलुर्वृक्षः, फलं पीलु, पीलुने, नतु पीलवे ।
वृक्षे निमित्तं पीलुत्वं, तज्जत्वं तत्फले पुनः' ॥२॥

पीलुर्वृक्षः, तत्फलं पीलु । तस्मै-पीलुने । अत्र न पुंवत् । प्रवृत्तिनिमित्तभेदात् ॥ अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः ।७।१।७५। [ ²एषामनङ् स्यात् ] टादावचि । अल्लोपोऽनः ।६।४।१३४। अङ्गावयवोऽसर्वनामस्थानयजादिस्वादिप्रत्ययपरो योऽन् तस्याऽकारस्य लोपः । दध्ना । दध्ने । दध्नः २ । दध्नोः २ ।

विभाषा ङिश्योः ।६।४।१३६। अङ्गावयवोऽसर्वनामस्थानयजादिस्वादिप्रत्ययपरो योऽन् तस्याऽकारस्य लोपो वा, ङिश्योः । दध्नि—दधनि । शेषं वारिवत् । एवमस्थिसक्थ्यक्षि ॥

---

पीलुर्वृक्ष इति । यदा वृक्षविशेषः पीलुशब्दवाच्यस्तदा पुंलिङ्गः पीलुशब्दः, यदा तु पीलुजन्यफलं पीलुशब्दवाच्यं, तदा नपुंसकलिङ्गोऽयम् । 'फले लुक्' इत्यणो लुक् । अत्र फले वाच्ये पुंवत्त्वं नेत्यर्थः । कुत इत्यत आह—प्रवृत्तिनिमित्तभेदादिति । वृक्षत्वव्याप्यजातिविशेषात्मकं पीलुत्वं हि वृक्षविशेषे वाच्ये प्रवृत्तिनिमित्तम् । फलविशेषे तु वाच्ये फलत्वव्याप्यजातिविशेषात्मकं पीलुत्वं प्रवृत्तिनिमित्तमिति पुंसि, नपुंसके च प्रवृत्तिनिमित्तभेदादित्यर्थः ।

---

अस्थिदधि । अस्थि आदि शब्दों को उदात्त अनङ् आदेश हो, टादि अच् परे रहते ।

अल्लोपोऽनः । अङ्गका अवयव,-सर्वनामस्थानभिन्न यकारादि अजादि स्वादि प्रत्यय परक,-जो अन्, उसके अकार का लोप हो ।

विभाषा ङिश्योः । अङ्गका अवयव,-सर्वनामस्थानभिन्न यकारादि अजादि स्वादि प्रत्यय परक जो 'अन्', उसके अकार का लोप हो, विकल्प करके, 'ङि' और 'शी' परे रहते ।

---

१ अयं श्लोको लिखितेषु क्वचिन्न दृश्यते । २ अयं पाठोऽस्माभिर्वर्द्धितः ।

सुधि । सुधिनी । सुधीनि । हे सुधे । हे सुधि । [ [1]सुधिया ] । सुधिना । [ सुधिये-सुधिने[1] ] इत्यादि ॥ मधु । मधुनी । मधूनि । हे मधो । हे मधु । एवमम्ब्वादयः ॥ सुलु । सुलुनी । सुलूनि । [2]सुल्वा-सुलुना । इत्यादि ॥ धातृ । धातृणी । धातॄणि । हे धातः । हे धातृ । [ [3]धात्रा ] । धातृणा । [ [1]धातॄणाम् ] । एवं ज्ञातृकर्त्रादयः ॥

**एच इग्घ्रस्वादेशे ।१।१।४८।** आदिश्यमानेषु ह्रस्वेषु [[4]मध्ये] एच

---

मध्विति । 'मधु मद्ये पुष्परसे' 'मधुर्वसन्ते चैत्रे च' इति कोशान्मधु-शब्दस्य पुंनपुंसकयोः मद्यत्ववसन्तत्वादिरूपप्रवृत्तिनिमित्तभेदान्न पुंवत्त्वविकल्पः, मृद्वीकाविकारवाचिनो मधुशब्दस्य तु नित्यनपुंसकत्वान्न पुंवत्त्वमिति विवेकः ।

सुल्वेति । शोभनलवनकर्तृत्वं प्रवृत्तिनिमित्तमेकमिति पुंवत्त्वविकल्पः । पुंवत्त्वे ह्रस्वाऽभावेनाऽघित्वान्नाभावो न । नुमभावश्च । 'ओः सुपि' इति यण् । पुंवत्त्वाऽभावपक्षे तु यणं बाधित्वा नुम् । 'ङे'प्रभृतिषु तु पुंवत्त्वाऽभावे 'वृद्ध्यौत्वे'ति पूर्वविप्रतिषेधेन नुमि 'सुलुने' इति, पुंवत्त्वे तु 'सुल्वे' इत्यादि-रूपद्वयम् ॥

धातृ इति । दधातीति धातृ । 'न लुमता' इति निषेधादनङ् न । धातृणी इति । 'इकोऽचि' इति नुमि 'ऋवर्णान्नस्ये'ति णत्वम् । धातॄणीति । जश्शसोः शिभावे नुमि 'सर्वनामस्थाने चे'ति दीर्घे णत्वम् । 'न लुमते'ति निषेधस्याऽनित्यत्वात् ह्रस्वस्य पक्षे सम्बुद्धिनिमित्तको गुण इत्याह—हे धातः—हे धातृ इति । धारणकर्तृत्वरूपप्रवृत्तिनिमित्तैक्याट्टादावचि पुंवत्त्वविकल्प इत्याह-धात्रा—धातृणेति । एवं-धात्रे-धातृणे । धातुः—धातृणः । धात्रोः—धातृणोः । 'नुमचिरे'ति नुट् । धातॄणाम् । धातरि—धातृणि—इति रूपाणि ।

---

एच इक् । ह्रस्व जहाँ करना हो वहाँ 'एच्' के स्थान में 'इक्' ही ह्रस्व हो ।

---

१ अयं पाठो लिखितेषु नास्ति । २ क्वाचित्कः पाठः ।

३ क्वचिल्लिखितेषु नास्ति ।

४ 'मध्ये' इत्यपपाठः, तद्योगे षष्ठ्या एवौचित्यादिति शेखरे ।

इगेव स्यात् । प्रद्यु । प्रद्युनी । प्रद्यूनि । प्रद्युना—इत्यादि ॥

प्ररि । प्ररिणी । प्ररीणि । प्ररिणा । **एकदेशविकृतमनन्यवत्** । प्रराभ्याम् । प्ररीणाम् ॥ सुनु । सुनुनी । सुनूनि । सुनुना—इत्यादि ॥

इत्यजन्ता नपुंसकलिङ्गाः ॥

---

## अथ हलन्ताः पुँल्लिङ्गाः ।

**हो ढः** ।८।२।३१। [1]हस्य ढः स्याज्झलि, पदान्ते, च । [[2]हल्ङ्याबिति सुलोपः । पदान्तत्वाद्धस्य ढः । जश्त्वचर्त्वे ] । लिट् । लिड् । लिहौ.२ । लिहः । लिड्भ्याम् । लिट्सु,—लिट्त्सु ॥

---

ननु रैशब्दस्य ऐदन्तस्य विहितमात्वं कथमिदन्तस्येत्यत आह—एकदेशविकृतस्यानन्यत्वादिति ।

❋ इति बालमनोरमायामजन्तनपुंसकलिङ्गप्रकरणम् ❋

---

हो ढः । 'ह' इति षष्ठ्यन्तम् । 'झलो झली'त्यतो 'झली'त्यनुवर्तते । 'पदस्ये'त्यधिकृतम् । 'स्कोः संयोगाद्योरन्ते च' इत्यतोऽन्ते इत्यनुवर्तते । तदाह—हस्येति । झलीति । झलि परतः पूर्वस्य हकारस्य, पदान्ते विद्यमानस्य हकारस्य चेत्यर्थः ।

लिट्त्सु इति । लिह्-सु इति स्थिते हस्य ढः । तस्य जश्त्वेन डः । 'खरि चे'ति चर्त्वस्याऽसिद्धत्वात्ततः प्रागेव 'डः सि' इति धुट् । ततो डस्य चर्त्वेन टः । धुटश्चर्त्वसंपन्नस्य तकारस्याऽसिद्धत्वात् 'चयो द्वितीयाः' इति न भवति । 'न पदान्ता'दिति तकारस्य ष्टुत्वं न । लिट्सु इति । धुडभावे रूपम् । हस्य ढः । ढस्य जश्त्वेन डः । तस्य चर्त्वेन टः । तस्याऽसिद्धत्वात् 'चयो द्वितीयाः' इति न । 'न पदान्तात्' इति सस्य न ष्टुत्वमिति भावः ।

---

हो ढः । हकार को ढकार आदेश हो, झल् परे रहते और पदान्त में ।

---

१ 'झलि पदान्ते चे'त्येव वृत्तिः क्वचित् । २ क्वाचित्कः पाठोऽयम् ।

**दादेर्धातोर्घः** ।८।२।३२। झलि, पदान्ते चोपदेशे दादेर्धातोर्हस्य घः। **एकाचो बशो भष् झषन्तस्य स्ध्वोः** ।८।२।३७। धात्ववयवस्यैकाचो झषन्तस्य बशो भष्, से ध्वे पदान्ते च। इह व्यपदेशिवद्भावेन धात्ववयवत्वाद्भष्भावः। [ [1]जश्त्वचर्त्वे ]। धुक्। धुग्। दुहौ। दुहः। [ दुहा ]। धुग्भ्याम्। धुक्षु॥

**वा द्रुहमुहष्णुहष्णिहाम्** ।८।२।३३। एषां हस्य वा घो, झलि, पदान्ते च। ध्रुक्। ध्रुग्। ध्रुट्। ध्रुड्। द्रुहौ। द्रुहः। ध्रुग्भ्याम्। ध्रुड्भ्याम्। ध्रुक्षु। ध्रुट्सु। ध्रुट्त्सु। एवं मुहः॥ **धात्वादेः षः सः** ।६।१।६४। [ [2]उपदेशे धातोरादेः षस्य सः स्यात् ]। स्नुक्। स्नुग्। स्नुट्। स्नुड्। एवं ष्णिहः॥ **इग्यणः संप्रसारणम्** ।१।१।४५। यणः स्थाने प्रयुज्यमानो

---

दादेर्धातोः। 'हो ढः' इत्यता 'ह' इति षष्ठ्यन्तमनुवर्तते। 'झली'ति, 'पदस्ये'ति, 'अन्ते' इति च पूर्ववदनुवर्तते। धातुग्रहणमावर्त्तते। तत्र एकं धातुग्रहणमवयवषष्ठ्यन्तं हकारेऽन्वेति—'धातोरवयवस्य हस्ये'ति। दादेरित्येतत्तु 'धातो'रित्यत्र सामानाधिकरण्येनान्वेति। द आदिर्यस्येति बहुव्रीहिः, 'धातो'रिति द्वितीयं धातुग्रहणं तु धातोरुपदेशकालं लक्षयति। ततश्च फलितमाह—उपदेशे इत्या-

---

**दादेर्धातोर्घः**। उपदेश अवस्था में जो दकारादि धातु उसके हकार को घकार आदेश हो, झल्परे रहते और पदान्त में।

**एकाचो बशो**। धातुका अवयव जो एकाच् झषन्त, तदवयव जो बश्, उसको भष्-भाव् हो, सकार और 'ध्व' परे रहते, और पदान्त में।

**वा द्रुह**। द्रुह् मुह् ष्णुह् और ष्णिह-धातु के हकार को घकार हो विकल्प कर के, झल्परे रहते और पदान्त में।

**धात्वादेः**। उपदेश में धातु के आदि के षकार को सकार आदेश हो।

**इग्यणः**। 'यण्' के स्थान में प्रयुज्यमान जो 'इक्' वह 'सम्प्रसारण'-सञ्ज्ञक हो।

---

१ काचित्कः पाठः। २ काचित्कीऽयं वृत्तिः।

थ इक् स संप्रसारणसंज्ञः स्यात् ॥ **वाह ऊठ्** ।६।४।१३२। भस्य वाहः संप्रसारणमूठ्। **संप्रसारणाच्च** ।६।१।१०८। संप्रसारणादचि ['परे] पूर्वरूपमेकादेशः । वृद्धिः । विश्वौहः । इत्यादि ॥

**चतुरनडुहोरामुदात्तः** ।७।१।९८। [[2]अनयोराम् स्यात् ] सर्वनामस्थाने ॥ **सावनडुहः** ।७।१।८२। [ [3]अस्य ] नुम् [[3]स्यात्सौ परे]।

---

दिना । धातूपदेशकाले यो दकारादिर्धातुस्तदवयवस्य इत्येत्यर्थः ।

वाह ऊठ् । 'भस्ये'त्यधिकृतम् । 'वसोः संप्रसारण'मित्यतः 'संप्रसारण'मित्यनुवर्तते । तच्च 'ऊठ्' इत्यनेनान्वेति । तदाह—भस्येत्यादिना ।

संप्रसारणमिति । तेन वाहो यो यण् वकारस्तस्य ऊडिति लभ्यते । 'संप्रसारण'मित्यननुवृत्तौ 'अलोऽन्त्यस्य' इति हकारस्य स्यात्, तदनुवृत्तौ तु ऊठो यण्स्थानिकत्वलाभान्नालोऽन्त्यस्येति प्रवर्त्तते इत्याशयः ।

ननु आम्नुमौ चैतौ मित्त्वादन्त्यादच उकारात् परौ प्राप्तौ । तत्र 'चतुरनडुहो'रित्याम्—सर्वनामस्थाननिमित्तकः सामान्यविहितः । 'सावनडुहः' इति नुम् तु (सर्वनामस्थानविशेषे) सौ विहितत्वाद्विशेषविहितः । स च निरवकाशत्वात्सामान्यविहितमामं बाधेत, सोरन्यत्राऽऽम्विधेश्चरितार्थत्वात् । तथाच 'अनड्वन्' इति स्यात्, 'अनड्वान्' इति रूपं च न स्यात् । किंच सम्बुद्धौ हे अनडुह स् इति स्थिते 'अम् सम्बुद्धौ' इत्यमागम आमपवादोऽनुपदमेव वक्ष्यते । तत्र 'सावनडुह' इति नुमपि प्राप्तः । स च सम्बुद्धावसम्बुद्धौ च विहितत्वात्, सामान्य-

---

वाह ऊठ् । भसञ्ज्ञक जो 'वाह' उसको सम्प्रसारणसञ्ज्ञक 'ऊठ्' आदेश हो।

सम्प्रसारणाच्च । सम्प्रसारण से अच् परे रहते पूर्वपर के स्थान में पूर्वरूप एकादेश हो।

चतुरनडुहो । 'चतुर्' और 'अनडुह' शब्द को 'आम्' का आगम हो, सर्वनामस्थान परे रहते ।

सावनडुहः । 'अनडुह' शब्द को नुम् का आगम हो, 'सु' परे रहते ।

---

१ क्वाचित्कः पाठः । २ स्पष्टप्रतिपत्तये वर्द्धितोऽयं पाठोऽस्माभिः ।
३ क्वचिदेव दृश्यते ।

'आच्छीनद्यो'रिति सूत्रादादित्यधिकारादवर्णात्परोऽयं नुम्। अतो विशेषविहितेनाऽपि नुमा आम् न बाध्यते। [ [1]आमा च नुम्न बाध्यते ]। सुलोपः। संयोगान्तस्य लोपः। नुम्विधिसामर्थ्याद्वसुस्रंस्विति दत्वं न। संयोगान्तलोपस्याऽसिद्धत्वान्नलोपो न। अनड्वान्।

अम्सम्बुद्धौ ।७।१।९९। चतुरनडुहोः [[2]अम्स्यात्सम्बुद्धौ परतः ]। हे अनड्वन्। अनड्वाहौ। अनडुहः। [[3]अनड्वाहः]। वसुस्रंसुध्वंस्वनडुहां दः।८।२।७२। सान्तवस्वन्तस्य स्रंसादेश्च दः स्यात्पदान्ते। अनडुद्भ्यामित्यादि। [ [3]सान्तेति किं-विद्वान् ]। पदान्ते किम्? स्रस्तम्। ध्वस्तम्॥

सहेः साडः सः ।८।३।५६। साड्रूपस्य सहेः सस्य मूर्धन्यादेशः स्यात्। तुराषाट्। [ [3]तुराषाड् ]। तुरासाहौ। तुराषाड्भ्यामित्यादि॥

---

विहितः। 'अम् सम्बुद्धौ' इत्यम् तु सम्बुद्धावेव विहितत्वाद्विशेषविहितः। स च निरवकाशत्वात्सामान्यं नुमं बाधेत, असम्बुद्धौ सौ नुम्विधेश्चरितार्थत्वात्। ततश्च हे अनड्वन्निति न स्यात्। किन्तु 'हो ढः' इति ढत्वे हे अनड्वट् इति स्यादित्याशङ्‌क्याह–आदित्यधिकारादिति। 'सावनडुहः' इति नुम्विधौ तावत् 'आच्छीनद्योः' इत्यत आदिति पञ्चम्यन्तमनुवर्तते। अतोऽनडुहोऽवर्णात् परो नुमिति लाभाद्विशेषविहितेनापि 'सावनडुहः' इति नुमा 'चतुरनडुहो'रिति सामान्यविहित आम् न बाध्यते, अवर्णात् परत्वेन विधीयमानं नुमं प्रति आम उपजीव्यत्वात्, उपजीव्योपजीवकयोर्विरोधाऽभावेन बाध्यबाधकभावविरहात्। प्रत्युत आमभावे नुमः प्रवृत्त्यसम्भव एव। तथा 'अम् संबुद्धौ' इत्यमा च विशेषविहितेनापि 'सावनडुहः' इति नुम् न बाध्यते, नुम उपजीवकत्वेन तेन विरोधाभावात्, प्रत्युत अमभावे नुमः प्रवृत्तेरेवाऽसंभवादित्यर्थः।

---

अम्सम्बुद्धौ। 'चतुर्' और 'अनडुह' शब्द को 'अम्' का आगम हो, सम्बुद्धि परे रहते।

वसुस्रंसु। सान्त जो वस्वन्त और स्रंसादि, उनको दकार आदेश हो, पदान्तमें।

सहेः साडः सः। 'साड्' रूप 'सह्' उसके सकारको मूर्धन्य ('ष')आदेश हो।

---

१ क्वाचित्कः पाठः। २ क्वचिदेवायं पाठो दृश्यते। ३ क्वचिन्न।

दिव औत् । ७।१।८४। 'दि'विति प्रातिपदिकस्यौत्स्यात्सौ [[1]परे। अल्विधित्वेन स्थानिवत्त्वाऽभावाद्धल्ङ्याबिति सुलोपो न ]। सुद्यौः। सुदिवौ ॥ दिव उत् ।६।१।१३१। [ [2]दिवोऽन्तादश उकारः स्यात् ] पदान्ते। सुद्युभ्यामित्यादि ॥

चत्वारः। चतुरः। चतुर्भिः। चतुर्भ्यः २॥ षट्चतुर्भ्यश्च ।७।१।५५। एभ्य आमो नुडागमः स्यात्॥ रषाभ्यां नो णः समानपदे ।८।४।१। [ [3]रेफषकाराभ्यां परस्य नस्य णः स्यात्समानपदे। णत्वं। द्वित्वम्।

---

दिव औत्। 'सावनडुहः' इत्यतः 'सौ' इत्यनुवर्तते। 'दिव' इति च षष्ठ्यन्तम्। 'दिवेर्डिविः' इत्यौणादिकमव्युत्पन्नं वा प्रातिपदिकं गृह्यते, नतु 'दिवु क्रीडादौ' इति धातुः, 'निरनुबन्धकग्रहणे न सानुबन्धकस्ये'ति न्यायात्। तदाह—दिवितीति। सुद्यौरिति। आङ्गत्वात्तदन्तस्याप्यौत्त्वे यण्, रुत्व-विसर्गौ। षट्चतुर्भ्यश्च। 'षट्चतुर्भ्य' इति पञ्चमी। 'आमि सर्वनाम्नः' इत्यत आमीत्यनुवृत्तं षष्ठ्या विपरिणम्यते। 'ष'डिति—षट्संज्ञकं गृह्यते, नतु षट्शब्दः, 'कृत्रिमाऽकृत्रिमयो'रिति न्यायात्। तदाह—षट्संज्ञकेभ्य इति।

---

दिव औत्। 'दिव्' इस प्रातिपदिक को औत् आदेश हो 'सु' परे रहते।

दिव उत्। 'दिव्' को उकार अन्तादेश हो, पदान्त में।

षट्चतुर्भ्यश्च। 'षट्'सञ्ज्ञक और 'चतुर्' शब्द से परे जो 'आम्' उसको 'नुट्' का आगम हो।

रषाभ्यां। रेफ और षकार से परे जो नकार उसको णत्व (णकार) हो, समान पद में।

---

१ अयं पाठ एकत्रादर्शे एव दृश्यते, नान्यत्र।

२ 'षट्संज्ञकेभ्यश्चतुरश्च परस्याऽऽमो नुडागमः स्यात्' पा०।

३ एकत्र लिखितादर्शेऽयं पाठ उपलभ्यते।

चतुर्ण्णाम् ]। चतुर्णाम् ॥ रोः सुपि ।८।३।१६। [1]रोरेव विसर्जनीयः सुपि, नान्यरेफस्य । [ '[2]शरोऽचि' ]। चतुर्षु ॥

मो नो धातोः ।८।२।६४। [ [2]मान्तस्य धातोर्मस्य नः स्यात् ] पदान्ते । प्रशान् । प्रशामौ ॥ किमः कः ।७।२।१०३। [ [3]किमः कादेशः स्यात् ] विभक्तौ । कः । कौ । के । इत्यादि ॥

---

रोः सुपि । 'खरी'त्यनुवृत्तेः सप्तमीबहुवचनमेवात्र सुप् । 'खरवसानयो'-रित्येव सिद्धे नियमार्थ एवैष विधिरित्याह—रोरेवेति । 'रोः सप्तमीबहुवचन एवे'ति विपरीतनियमस्तु न, 'हलोऽनन्तराः संयोग' इति निर्देशात् । षत्वमिति । 'आदेशप्रत्यययो'रित्यनेने' ति शेषः । रेफस्य इण्त्वेन ततः परत्वादिति भावः ।

मो नो धातोः । 'म' इति षष्ठ्यन्तं 'धातो'रित्यस्य विशेषणं, ततस्तदन्तविधिः । 'पदस्ये'त्यधिकृतं, 'स्कोः संयोगाद्योः' इत्यतोऽन्ते इत्यनुवर्तते । तदाह—मान्तस्येति ।

प्रशानिति । स्वरादिपाठेऽप्यस्य नाव्ययत्वं, सत्त्ववाचित्वात् । असत्त्ववाचित्वे तु स्वरादिपाठादव्ययत्वं भवत्येवेति भावः । प्रशान्भ्यामिति । भ्यामादौ हलि 'स्वादिष्वसर्वनामस्थाने' इति पदत्वान्नत्वमिति भावः ।

इत्यादीति । आदिना-प्रशान्भिः । प्रशामे । प्रशान्भ्यः । प्रशामः २ । प्रशामोः । प्रशामाम् । प्रशामि । प्रशान्त्सु—प्रशान्सु । 'नश्च' इति धुड् विकल्पः ।

---

रोः सुपि । सप्तमी बहुवचन 'सुप्' परे रहते 'रु' के रेफ को ही विसर्ग हो, अन्य रेफ को विसर्ग नहीं हो ।

मोनो धातोः । मान्त धातु के मकार को नकार आदेश हो, पदान्त में ।

किमः कः । 'किम्' शब्द को 'क' आदेश हो, विभक्ति परे रहते ।

---

१ 'सप्तमीबहुवचने सुपि परे रोरेव विसर्गो नान्यरेफस्य' इति, पा० । 'रोः सुपि । रोरेव विसर्जनीयः । चतुर्षु' इति च पा० । २ अस्माभिर्वर्द्धितः पाठोऽयम् ।

३ क्वाचित्कः पाठः ।

इदमो मः ।७।२।१०८।[ [1]इदमो मस्य मः स्यात् ] सौ [ परे ] । त्यदाद्यत्वापवादः ॥ इदोऽय् पुंसि ।७।२।१११। इदम इदोऽय् सौ पुंसि। अयम् । त्यदाद्यत्वे ॥ अतो गुणे ।६।१।९७। अपदान्तादतो गुणे पररूपमेकादेशः [ [2]स्यात् ] ॥ दश्च ।७।२।१०९। इदमो दस्य मः स्याद्विभक्तौ । इमौ । इमे । त्यदादेः सम्बोधनं नास्तीत्युत्सर्गः ॥

अनाप्यकः ।७।२।११२।अककारस्य इदम इदोऽन्, आपि विभक्तौ। 'आ'बिति प्रत्याहारः । अनेन ॥

---

इदमो मः । साविति । 'तदोः सः सौ' इत्यतस्तदनुवृत्तेरिति भावः । 'अलोऽन्त्यस्ये'त्यन्त्यस्य मस्य मः । ननु मस्य मविधिर्व्यर्थ इत्यत आह—त्यदाद्यत्वापवाद इति । इदोऽय् पुंसि । 'इद' इति स्थानषष्ठी । 'इदम' इत्यनुवर्तते । अवयवषष्ठ्येषा । 'यः सौ' इत्यतः सावित्यनुवर्तते । तदाह—इदम इति । इदम्शब्दस्याऽवयवो य इद्, तस्येत्यर्थः ।

दश्च । 'इदमो मः' इत्यनुवर्तते । 'द' इति षष्ठी । 'अष्टन आ विभक्तौ' इत्यतोऽतिव्यवहितमपि विभक्तावित्येतन्मण्डूकप्लुत्याऽनुवर्तते । 'तदोः सः सौ' इत्यतः साविति तु संनिहितमपि नानुवर्तते, साविदमो दस्याऽभावात्, 'यः सौ' इत्युत्तरसूत्रे 'सौ'ग्रहणाच्च । तदाह—इदमो दस्येति ।

---

इदमो मः । 'इदम्' शब्द के मकार को मकार ही आदेश हो, सु परे रहते ।

इदोऽय् । 'इदम्' शब्द के 'इद्' भाग को 'अय्' आदेश हो, 'सु' परे रहते, पुंलिङ्ग में ।

अतो गुणे । अपदान्त (ह्रस्व) अकार से गुण परे रहते पूर्व पर के स्थान में पररूप एकादेश हो ।

दश्च । 'इदम्' शब्द के दकार को मकार आदेश हो, विभक्ति परे रहते ।

अनाप्यकः । ककार रहित जो 'इदम्' शब्द, तदवयव जो 'इद्' भाग, उसको 'अन्' आदेश हो, आप् विभक्ति परे रहते । [ आप्विभक्ति = तृतीयादि विभक्ति ] ।

---

१ क्वाचित्कः पाठोऽयम् । २ 'स्या'दिति क्वचिन्न ।

**हलि लोपः** ।७।२।११३। अककारस्य इदम इदो लोप, आपि हलादौ । **नाऽनर्थकेऽलोन्त्यविधिरनभ्यासविकारे** ॥ **आद्यन्तवदेकस्मिन्** ।१।१।२१। एकस्मिन्क्रियमाणं कार्यमादाविवान्त इव स्यात् । 'सुपि चे'ति दीर्घः । आभ्याम् ॥ **नेदमदसोरकोः** ।७।१।११। अककारयोरिदमदसोर्भिस ऐस् न स्यात् । एभिः । अस्मै । एभ्यः २ । अस्मात् । अस्य । अनयोः । एषाम् । अस्मिन् । एषु ॥

**द्वितीयाटौस्स्वेनः** ।२।४।३४। [द्वितीयायां, टौसोश्च [1]परत]

---

नेदमदसोरकोः । 'अतो भिस ऐस्' इत्यतो 'भिस ऐ'सित्यनुवर्तते । 'अको'रिति षष्ठी । न विद्यते ककारो ययोरिति बहुव्रीहिः । तदाह—अककारयोरिति ।

द्वितीयाटौस्स्वेनः । द्वितीया च, टाश्च, ओश्च—द्वितीयाटौसः, तेष्विति द्वन्द्वः । 'इदमोऽन्वादेशे' इत्यत 'इदम' इति, 'अन्वादेशे' इति चानुवर्तते । 'एतदस्त्रतसोः' इत्यत 'एतद' इति च । तदाह—द्वितीयायामित्यादिना ।

---

हलि लोपः । ककार रहित 'इदम्' शब्द के 'इद्' भाग का लोप हो, हलादि आप् विभक्ति परे रहते ।

नानर्थके । अनर्थक में 'अलोऽन्त्य विधि' नहीं हो, अभ्यास विकार को छोड़कर ।

आद्यन्तवदेकस्मिन् । एक (अर्थात्-असहाय) को क्रियमाण जो कार्य वह आदि की तरह और अन्त की तरह हो । अर्थात्—तदादि और तदन्त को क्रियमाण जो कार्य वह तदादि और तदन्त की तरह असहाय को भी हो ।

नेदमदसोः । ककार रहित जो 'इदम्' और 'अदस्' शब्द उनसे परे 'भिस्' को 'ऐस्' नहीं हो ।

द्वितीयाटौ । द्वितीया, 'टा' ओर 'ओस्' परे रहते 'इदम्' शब्द को 'एन' आदेश हो, अन्वादेश में ।

---

१ अयं पाठो लिखिते क्वचिदपि नास्ति ।

[1]इदमेतदोरेनादेशः स्यादन्वादेशे । किंचित्कार्यं विधातुमुपात्तस्य कार्यान्तरं विधातुं पुनरुपादानम्—अन्वादेशः । यथा—'अनेन व्याकरणमधीतम्, एनं छन्दोऽध्यापये'ति । 'अनयोः पवित्रं कुलम्, एनयोः प्रभूतं स्व'मिति । एनम् । एनौ । एनान् । एनेन । एनयोः २ ॥

राजा । न ङिसम्बुद्ध्योः ।८।२।८। नस्य लोपो न [स्यात्[2]] ङौ, सम्बुद्धौ च । हे राजन् । [3]*ङावुत्तरपदे प्रतिषेधः । [ ङौ तु [4]छन्दस्युदाहरणम् । परमे व्योमन् सर्वा भूतानि ] । ब्रह्मनिष्ठः । राजानौ ।

---

'अन्वादेश'शब्दं व्याचष्टे—किञ्चिदिति । विधातुमिति । अपूर्वं बोधयितुमित्यर्थः । अन्वादेशमुदाहृत्य दर्शयति—यथेति । इह-उदाहरणप्रदर्शने 'यथा'शब्दः ।

न ङिसंबुद्ध्योः । 'न लोपः प्रातिपदिकान्तस्ये'त्यतो 'न लोप' इत्यनुवर्तते । तत्र नेति लुप्तषष्ठीकन्तदाह—नस्येत्यादिना ।

हे राजन्निति । 'सर्वनामस्थाने च' इति दीर्घस्तु न, 'असम्बुद्धा'वित्युक्तेः ।

ननु 'न ङिसम्बुद्ध्यो'रित्यत्र 'ङि'ग्रहणं व्यर्थं, 'राजनी'त्यत्र भत्वात्पदत्वाऽभावान्नलोपस्याऽप्रसक्तेरित्यत आह—ङौ तु छन्दसीति । छन्दस्येवेत्यर्थः । 'ब्रह्मनिष्ठ' इत्यादौ लोके तु नलोप इष्ट एवेत्याशयः ।

---

किञ्चित्कार्यं । किसी कार्य का विधान करने को उपात्त शब्द का पुनः कार्यान्तर विधान करने को उपादान करना—'अन्वादेश' कहलाता है ।

न ङिसम्बुद्ध्योः । नकारका लोप नहीं हो, 'ङि' और 'सम्बुद्धि' परे रहते ।

ङावुत्तर । उत्तरपदपरक 'ङि' परे रहते 'न ङिसम्बुध्दयोः' इसका प्रतिषेध हो । [अर्थात्—न ङिसम्बुध्दयोः' यह निषेध नहीं लगे, किन्तु नकार का लोप हो जावे ] ।

---

१ 'इदमेतदोरन्वादेशे'इत्येव लिखितेषु वृत्तिः । २ क्वाचित्कः पाठः ।

३ 'प्रतिषेधो वक्तव्यः' इति मुद्रिते पाठः ।

४ क्वचिदपि लिखितेषु न दृश्यते ।

राजानः । राजानम् । राजानौ । [ जञोर्ज्ञः ] । [1]अल्लोपोऽनः । चुत्वं ] । राज्ञः ॥

**नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति ।८।१।२।** सुब्विधौ, स्वरविधौ, संज्ञाविधौ, कृति—तुग्विधौ च नलोपोऽसिद्धो, नान्यत्र—'राजाश्व' इत्यादौ । इत्यसिद्धत्वादात्वमेत्वमैस्त्वं च न । राजभ्याम् । राजभिः । राजभ्यः । राज्ञि—राजनि ॥

यज्वा । यज्वानौ । यज्वानः ॥ **न संयोगाद्वमन्तात् ।६।४।१३७।** वमान्तसंयोगादनोऽकारस्य लोपो न । यज्वनः । यज्वना । यज्वभ्याम् । ब्रह्मणः । ब्रह्मणा ॥

---

[ जञोर्ज्ञ इति । जञयोगे तादृशध्वनेर्लोकवेदसिद्धत्वादिति भावः । नत्विदं वर्णान्तरं, शिक्षादावदर्शनात् । अत एतज्ज्ञानमिति श्चुत्वसिद्धिरित्याहुः ] ।

राज्ञ इति । शसादावचि भत्वादल्लोपे नकारस्य श्चुत्वेन ञकार इति भावः ।

नलोपः सुप् । नस्य लोपो नलोपः । 'विधि'शब्दो भावसाधनः । विधानं विधिः । सुप्च, स्वरश्च, संज्ञा च, तुक्च—एषां विधय इति संबन्धसामान्यषष्ठ्या समासः । 'कृती'ति तु तुकैव संबध्यते, अन्यत्राऽसंभवात्तदाह—सुब्विधावित्यादि ।

न संयोगाद्वमन्तात् । वश्च, मश्च-वमौ, तावन्तौ यस्येति विग्रहः । 'अल्लोपोऽनः' इत्यनुवर्त्तते । तदाह—वकारेत्यादिना । अन्तग्रहणं स्पष्टार्थं, वमयोः संयोगविशेषणत्वादेव तदन्तलाभात् ।

---

नलोपः सुप् । सुब्विधि, स्वरविधि, सञ्ज्ञाविधि और कृत्प्रत्यय परे रहते तुग्विधि कर्त्तव्य होने पर ही ( 'पूर्वत्रासिद्धं' इस सूत्र से ) नलोप असिद्ध हो, अन्यत्र नलोप असिद्ध नहीं हो ।

न संयोगात् । वकारान्त और मकारान्त संयोग से परे 'अन्' के अकार का लोप नहीं हो ।

---

१ एकत्रादर्शेऽयं पाठो दृश्यते ।

इन्हन्पूषार्यम्णां शौ ।६।४।१२। एषां शावेवोपधाया दीर्घः ॥ सौ च ।६।४।१३। इन्नादीनामुपधाया दीर्घोऽसम्बुद्धौ सौ । वृत्रहा । हे वृत्रहन् ॥ एकाजुत्तरपदे णः ।८।४।१२। एकाजुत्तरपदं यस्य तस्मिन्समासे पूर्वपदस्थान्निमित्तात्परस्य प्रातिपदिकान्त-नुम्-विभक्ति-स्थस्य नस्य णत्वं स्यात् । वृत्रहणौ । वृत्रहणः ॥

हो हन्तेर्ञ्णिन्नेषु ।७।३।५४। ञिति, णिति प्रत्यये, ने च परे हन्तेर्हस्य कुत्वं स्यात् ॥ हन्तेः ।८।४।२२। उपसर्गस्थान्निमित्ताद्धन्तेर्नस्य णः । प्रहण्यात् ॥ अत्पूर्वस्य ।८।४।२२। हन्तेरत्पूर्वस्यैव नस्य

---

इन्हन् । 'ढ्रलोपे' इत्यतो 'दीर्घ' इत्यनुवर्तते । 'नोपधायाः' इत्यत 'उपधाया' इति । तदाह—एषामिति । इन्, हन्, पूषन्, अर्यमन्-इत्यन्तानामित्यर्थः । अङ्ग-विशेषणत्वेन तदन्तविधिः । 'सर्वनामस्थाने चे'ति सिद्धे इदं नियमार्थमित्याह—शावेवेति । प्रहण्यादिति । अत्र भिन्नपदस्थत्वादप्राप्ते णत्वे वचनमिदम् ।

प्रकृतोपयुक्तमंशमाह—अत्पूर्वस्येति । हन्तेरत्पूर्वस्य नस्य णः स्यादिति लभ्यते । सिद्धे सत्यारम्भो नियमार्थस्तदाह—हन्तेरत्पूर्वस्यैवेति ।

---

इन्हन् । इन्, हन्, पूषन्, अर्यमन्—इनकी उपधा को 'शि' परे रहते ही दीर्घ हो, अन्यत्र नहीं हो ।

सौ च । इन्नादिकी उपधाको दीर्घ हो, सम्बुद्धिभिन्न 'सु' परे रहते ।

एकाजुत्तर । एकाच् उत्तरपद में है जिसके ऐसा जो समास, उसमें—पूर्व-पदस्थ निमित्त ( रेफ, षकार ) से परे जो प्रातिपदिकान्त नकार, नुम् का नकार और विभक्तिस्थ नकार उसको णत्व ( णकार ) हो ।

हो हन्ते । हन् धातुके हकारको कुत्व हो, ञित् णित् प्रत्यय ( परे रहते ) और नकार परे रहते ।

हन्तेः । उपसर्गस्थ निमित्त से परे जो हन् धातु का नकार उसको णत्व हो ।

अत्पूर्वस्य । हन् धातुके अत्पूर्वक नकारको ही णकार हो, अन्यको नहीं हो ।

णो, नान्यस्य । प्रघ्नन्ति । योगविभागसामर्थ्यादनन्तरस्य विधिर्वा भवति, प्रतिषेधो वेति न्यायं बाधित्वा 'कुमति चे'ति णोऽपि निवर्त्त्यते । वृत्रघ्नः-इत्यादि ॥ एवं शार्ङ्गिन् । यशस्विन् । अर्यमन् । पूषन् ॥

**मघवा बहुलम्** ।६।४।१२८। 'मघवन्'शब्दस्य वा 'तृ' इत्यन्वादेशः । ऋ इत् ॥ **उगिदचां सर्वनामस्थानेऽधातोः** ।७।१।७०। अधातोरुगितो, नलोपिनोऽञ्चतेश्च नुम् स्यात्सर्वनामस्थाने । मघवान् । [इह[1]] उपधादीर्घे कर्तव्ये संयोगान्तलोपस्याऽसिद्धत्वं न भवति, बहुलग्रहणात् । मघवन्तौ । [[2]मघवन्तः । मघवन्तं । मघवन्तौ] । मघवतः । [ मघवता[2] ] । मघवद्भ्याम् । तृत्वाऽभावे सुटि-राजवत् ॥

**श्वयुवमघोनामतद्धिते** ।६।४।१३३। अन्नन्तानां भानामेषामतद्धिते परे संप्रसारणं स्यात् । मघोनः । मघवभ्यामित्यादि ॥ एवं श्वन् ।

---

मघवा बहुलम् । 'अर्वणस्त्रसा'वित्यतः 'तृ' इत्यनुवर्तते । तच्च लुप्तप्रथमाकम् । 'मघवे'ति तु षष्ठ्यर्थे प्रथमा । तदाह—मघवञ्शब्दस्येत्यादिना ।

श्वयुवमघोनामतद्धिते । श्वा च, युवा च, मघवा च इति द्वन्द्वः । 'वसोः संप्रसारणम्' इत्यतः 'संप्रसारण'मित्यनुवर्तते । 'भस्ये'त्यधिकृतम् । 'अल्लोपोऽनः' इत्यतोऽन इत्यपकृष्यते । तच्च श्वयुवमघोनां प्रत्येकं विशेषणं, ततस्तदन्तविधिः । फलितमाह—अन्नन्तानामित्यादि ।

---

मघवा बहुलं । 'मघवन्' शब्दको 'तृ' अन्तादेश हो विकल्प करके ।

उगिदचां । धातुभिन्न जो उगित् और नलोपी जो अञ्चति ( अञ्चु धातु ) उनको नुम् का आगम हो, सर्वनामस्थान परे रहते ।

श्वयुव । अन्नन्त जो भसञ्ज्ञक 'श्वन्' 'युवन्' 'मघवन्' रूप अङ्ग, उसको सम्प्रसारण हो, तद्धितभिन्न प्रत्यय परे रहते ।

---

१ 'इहे'ति क्वचिन्न । 'बहुलग्रहणा'दित्यतोऽग्रे च-'मघवान्' इति पाठो दृश्यते क्वचित् । २ क्वाचित्कः पाठोऽयम् ।

युवन्। न संप्रसारणे संप्रसारणम् ।६।१।३७। [[1]सम्प्रसारणे परतः पूर्वस्य यणः सम्प्रसारणं न स्यात्।—इति यकारस्य न सम्प्रसारणम् ]। यूनः। युवभ्यामित्यादि ॥

अर्वा। हे अर्वन्!। अर्वणस्त्रसावनञः ।६।४।१२७। नञा रहितस्या'ऽर्व'न्नित्यस्य 'तृ' इत्यन्तादेशो, न तु सौ। अर्वन्तौ। [[2]अर्वन्तः]। अर्वतः। अर्वद्भ्याम् ॥

[3]पथिमथ्यृभुक्षामात् ।७।१।८५। [एषामाकारोऽन्तादेशः स्यात् ] सौ परे ॥ [4]इतोऽत्सर्वनामस्थाने ।७।१।८६। पथ्यादेरिकारस्याऽकारः

---

न संप्रसारणे। इति यकारस्येति। सवर्णदीर्घनिष्पन्नस्य ऊकारस्य 'अचः परस्मिन्' इति स्थानिवत्त्वेन संप्रसारणतया यकारस्य संप्रसारणपरकत्वान्न संप्रसारणमित्यर्थः।

पथिमथ्यृभुक्षामात्। पन्थाश्च, मन्थाश्च, ऋभुक्षाश्च, पथिमथ्यृभुक्षाणः, तेषामिति विग्रहः। 'सावनडुहः' इत्यतः 'सा'वित्यनुवर्तते। आदिति च तपरकरणम्। आकार एव चाऽत्र विधेयः। तदाह—एषामित्यादिना। 'अलोऽन्त्यस्ये'ति नकारस्य आकारः।

इतोऽत्। 'पथिमथ्यृभुक्षाम्' इत्यनुवर्तते। 'इतः' इति तपरकरणं स्पष्टार्थम्,

---

न सम्प्रसारणे। सम्प्रसारण परे रहते पूर्व यण् को सम्प्रसारण नहीं हो।

अवर्णस्त्रसौ। 'अर्वन्' शब्दको 'तृ' यह अन्तादेश हो, परन्तु 'सु' परे रहते नहीं हो।

पथिमथि। पथ्यादि को आकार अन्तादेश हो, 'सु' परे रहते।

इतोऽत्। पथ्यादि के इकार को अकार आदेश हो, सर्वनामस्थान परे रहते।

---

१ इयं वृत्तिः क्वचिन्न। २ क्वाचित्कोऽयं पाठः।

३ 'पथिमथ्यृभुक्षामात्॥ सौ [परे'] पा०।

४ 'इतोऽत्सवनामस्थाने। पथ्यादेः।' इत्येव क्वचिद् वृत्तिः।

स्यात्सर्वनामस्थाने ॥ थो न्थः ।७।१।८७। पथिमथोस्थस्य न्थादेशः सर्वनामस्थाने । पन्थाः । [ हे [1]पन्थाः ] । पन्थानौ । [ पन्थानः ] ॥

भस्य टेर्लोपः ।७।१।८८। [2]भस्य [3]पथ्यादेष्टिलोपः स्यात् । पथः । पथिभ्याम् । पथिभ्यः । एवं-मन्थाः । ऋभुक्षाः ॥

ष्णान्ता षट् ।१।१।२४। षान्ता, नान्ता च संख्या षट्संज्ञा स्यात् । पञ्च २ । पञ्चभिः । पञ्चभ्यः २ । [ [4]'षट्चतुर्भ्यश्चे'ति नुट् ] ।

नोपधायाः ।६।४।७। नान्तस्योपधाया दीर्घो, नामि । पञ्चानाम् । पञ्चसु ॥

---

पथ्यादिषु त्रिषु दीर्घप्लुतयोरसंभवात् । एवं भाव्यमानत्वादेव सवर्णाऽग्राहकत्वे सिद्धेऽदिति तपरकरणमपि स्पष्टार्थमेव । तदाह—पथ्यादेरिति ।

थो न्थः । थः—न्थ इति च्छेदः । 'थ' इति षष्ठी । आदेशेऽकार उच्चारणार्थः । पथिमथिग्रहणमनुवर्तते । ऋभुक्षिग्रहणं तु निवृत्तं, तत्र थकाराऽभावात् । 'इतोऽत्सर्वनामस्थाने' इत्यतः सर्वनामस्थानग्रहणमनुवर्तते । तदाह-पथिमथोरिति ।

नोपधायाः । 'न' इति लुप्तषष्ठीकम्,—अङ्गस्येत्यधिकृतस्य विशेषणम् । तस्तदन्तविधिः । 'ढ्रलोपे' इत्यतो 'दीर्घ' इत्यनुवर्तते, 'नामि' इति सूत्रञ्चानुवर्त्तते । तदाह—नान्तस्येत्यादिना ।

---

थो न्थः । 'पथिन्' और मथिन् शब्दों के थकार को 'न्थ' आदेश हो, सर्वनामस्थान परे रहते ।

भस्यते । भसञ्ज्ञक पथ्यादि की 'टि' का लोप हो ।

ष्णान्ता । षान्त और नान्त जो सङ्ख्यावाचक शब्द वह 'षट्' सञ्ज्ञक हो ।

नोपधायाः । नान्त की उपधा को दीर्घ हो 'नाम्' परे रहते ।

---

१ लिखितेषु न दृश्यते । २ 'भसञ्ज्ञकस्य' इति मुद्रितपाठः ।
३ 'टेर्लोपः' । इति पा० । ४ क्वचिन्न ।

[1]अष्टन आ विभक्तौ ।७।२।८४। 'अष्टन्'शब्दस्याऽऽत्वं [ वा ] हलादौ ॥ अष्टाभ्य औश् ।७।१।२१। कृताऽऽकारादष्टनो जश्शसोरौश्। 'अष्टभ्य' इति वक्तव्ये कृताऽऽत्वनिर्देशो जश्शसोर्विषये आत्वं ज्ञापयति। [ [2]वैकल्पिकञ्चेदमष्टन आत्वम्, 'अष्टनो दीर्घा'दिति ज्ञापकात् ]। अष्टौ २। अष्टाभिः। अष्टाभ्यः २। अष्टानाम्। अष्टासु। आत्वाऽभावे- अष्ट। पञ्चवत् ॥

ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च ।३।२।५९। एभ्यः क्विन्। अञ्चेः-सुप्युपपदे। युजिक्रुञ्चोः-केवलयोः। क्रुञ्चेर्नलोपाऽभावश्च निपात्यते। कनावितौ। कृदतिङ् ।३।१।९३। अत्र धात्वधिकारे तिङ्-

---

अष्टन आ विभक्तौ। 'रायो हली'त्यतो हलीत्यपकृष्यते। तच्च विभक्ते- र्विशेषणम्। तदाह—अष्टन इति।

अष्टाभ्य औश्। 'जश्शसोः शि'रित्यतो 'जश्शसो'रित्यनुवर्तते। 'अष्टाभ्य' इति पञ्चमी। 'तस्मादित्युत्तरस्ये'त्युपतिष्ठते। इह 'अष्टा' इत्याकारान्तशब्दो विवक्षितो, नत्वष्टन्छब्दः। तदाह—कृताकारादित्यादिना। नकारस्याऽऽत्वे कृते सति योऽष्टाशब्दस्तस्मादित्यर्थः।

कृदतिङ्। 'धातो'रित्यधिकृतं, 'प्रत्यय' इति च। 'धातो'रिति च विहित-

---

अष्टन आ। 'अष्टन्' शब्द को आकार आदेश हो, ( विकल्प करके ) हलादि विभक्ति परे रहते।

अष्टाभ्यः। कृताऽऽकार 'अष्टन्' शब्द से परे जो 'जस्' और 'शस्', उनको 'औश्' आदेश हो।

ऋत्विग्दधृक्। 'ऋत्विक्' आदि शब्द क्विन्प्रत्ययान्त निपातित हों। [अञ्चु धातु से सुबन्त उपपद रहते क्विन् हो। 'युज्' और 'क्रुञ्च' से केवल से क्विन् हो, और 'क्रुञ्च्' को नलोपोऽभाव भी निपातन से हो ]।

कृदतिङ्। इस ( संनिहित ) धात्वधिकार जो तिङ् भिन्न जो प्रत्यय वह

---

१ 'अष्टन आ विभक्तौ। हलादौ वा स्याद्'-इत्येव लिखिते क्वचिद् वृत्तिः।
२ लिखितेष्वयं पाठो न दृश्यते, किन्तु वृत्तावेव 'हलादौ वा स्या' दिति पठ्यते।

भिन्नः प्रत्ययः कृत्सञ्ज्ञः स्यात् ॥ **वेरपृक्तस्य** ।६।१।६७। [[1]वेरपृक्तस्य] लोपः। **क्विन्प्रत्ययस्य कुः** ।८।२।६२। क्विन्प्रत्ययो यस्मात्तस्य कवर्गोऽन्तादेशः स्यात् पदान्ते। ऋत्विक्-ऋत्विग्। ऋत्विजौ। ऋत्विग्भ्याम् ॥

**युजेरसमासे** ।७।१।७१। [ [2]युजेः ] सर्वनामस्थाने नुम्। सुलोपः। संयोगान्तस्य लोपः। कुत्वेन नस्य ङः। युङ्। युञ्जौ। युञ्जः। युग्भ्याम् ३। असमासे किम् ?-। **चोः कुः** ।८।२।३०। चवर्गस्य [3]कवर्गः स्याज्झलि, पदान्ते च। सुयुक्। सुयुग्। सुयुजौ। सुयुजः। [ [4]सुयुजा ]। सुयुग्भ्याम्। खन्। खञ्जौ। खञ्जः। खन्भ्याम् ॥

---

विशेषणं, तेन-'धातोर्विहितः प्रत्यय' इत्यर्थो लभ्यते। 'धातो'रित्यधिकृत्य विहित इति यावत्। तदाह-संनिहिते इति। तेन णिजादिनिरासः।

**वेरपृक्तस्य**। 'लोपो व्यो'रित्यतो 'लोप' इत्यनुवर्तते। उत्सृष्टानुबन्धाः सर्वे क्विबादयो 'वे'रित्यनेन गृह्यन्ते। इकार उच्चारणार्थः, अपृक्तग्रहणात्। तदाह—लोप इति।

**चोः कुः**। 'झलो झलि' इत्यतो 'झली'त्यनुवर्तते। 'पदस्ये'त्यधिकृतम्। 'स्कोः संयोगाद्यो'रित्यतोऽन्ते इत्यनुवर्तते, तदाह—चवर्गस्येति।

---

'कृत्' सञ्ज्ञक हो।

**वेरपृक्तस्य**। क्विप् क्विन् विच् आदि के अपृक्त वकार का लोप हो।

**क्विन्प्रत्ययस्य**। क्विन्प्रत्यय जिससे ( कभी कहीं ) किया जाए उसको कवर्ग अन्तादेश हो।

**युजेरसमासे**। युज् धातु को नुम् का आगम हो, सर्वनामस्थान परे रहते।

**चोः कुः**। चवर्ग को कवर्ग आदेश हो, झल्परे रहते और पदान्त में।

---

१ अस्माभिर्वर्द्धितोऽयं पाठः, औचित्यात्।
'अपृक्तस्य वेर्लोपः स्यात्' इति क्वचित्पाठः। २ क्वचिन्न।
३ 'कवर्गोऽन्तादेशः स्यात्' पा०। ४ काचित्कः पाठः।

व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः ८।२।३६। [[1]व्रश्चादीनां सप्तानां, छशान्तयोश्च षः स्यात् ] झलि, पदान्ते च। जश्त्वचर्त्वे। राट्। राड्। राजौ। [[2]राजः]। राड्भ्याम् ॥

एवं—विभ्राट्। देवेट्। विश्वसृट्। परिमृट् ॥

*परौ व्रजेः षः पदान्ते। परावुपपदे व्रजेः क्विप्, दीर्घश्च, पदान्ते षत्वमपि। परित्यज्य सर्वं व्रजतीति-परिव्राट्। परिव्राजौ ॥

विश्वस्य वसुराटोः ।६।३।१२८। विश्वस्य दीर्घः स्याद्वसौ, राट्शब्दे च परे। [[3]'रा'डिति पदान्तोपलक्षणार्थम् ]। विश्वाराट्। विश्वराजौ। विश्वाराड्भ्याम् ॥

स्कोः संयोगाद्योरन्ते च ।८।२।२९। पदान्ते, झलि च परे यः संयोगस्तदाद्योः सकारककारयोर्लोपः। भृट्। [4]भृड्। सस्य श्चुत्वेन शः। 'झलां जश् झशी'ति शस्य जः। भृज्जौ। [5]भृज्जः। भृड्भ्याम् ॥

---

स्कोः संयोगेति। 'पदस्ये'त्यधिकृतम्। चकारात् 'झलो झली'त्यतो 'झली'त्यनुवर्तते। पदस्यान्ते इति, झलीति च 'संयोगे'त्यनेन संबध्यते। 'संयोगे'ति लुप्तषष्ठीकं पृथक्पदम्। स् च क् च-स्कौ, तयोरिति विग्रहः। 'संयोगान्तस्य लोपः' इत्यतो 'लोप' इत्यनुवर्तते। तदाह—पदान्ते इति।

---

व्रश्चभ्रस्ज। व्रश्चादि सात धातु और छकारान्त तथा शकारान्त धातु, इनको षत्व हो, झल्परे रहते और पदान्त में।

परौ व्रजेः। 'परि' उपपद रहते 'व्रज्' धातु से क्विप् प्रत्यय हो और 'व्रज्' धातु को दीर्घ हो, और पदान्त में षत्व भी हो।

विश्वस्य वसु। 'विश्व' शब्द को दीर्घ हो 'वसु' और 'राट्' शब्द परे रहते।

स्कोः संयोगाद्योः। पदान्त में और झल् परे रहते जो संयोग, उसके आदि के सकार और ककार का लोप हो।

---

१ क्वचिल्लिखितेऽयं पाठो दृश्यते। २ क्वचिन्न। ३ लिखिते क्वापि नास्ति। ४ क्वाचित्कः पाठः। ५ क्वचिन्न।

त्यदाद्यत्वं। पररूपत्वम्। **तदोः सः सावनन्त्ययोः ।७।२।१०६।** त्यदादीनां [1]तकारदकारयोरनन्त्ययोः सः स्यात्सौ। स्यः। त्यौ। त्ये॥ सः। तौ। ते॥ यः। यौ। ये॥ एषः। एतौ। एते। एनम्। एनौ। एनान्। एनेन। एनयोः २॥

**ङे प्रथमयोरम् ।७।१।२८।** युष्मदस्मद्भ्यां परस्य 'ङे' [[2]इत्येतस्य] प्रथमाद्वितीययोश्चाऽमादेशः॥ [[2]मपर्यन्तस्य ।७।२।९१। इत्यधिकृत्य]। **त्वाऽहौ सौ।७।२।९४।** [3]अनयोर्मपर्यन्तस्य त्वाऽहौ स्तः सौ॥ **शेषे लोपः**

ङे प्रथमयोरम्। 'युष्मदस्मद्भ्यां ङसोऽश्' इत्यतो 'युष्मदस्मद्भ्या'-मित्यनुवर्तते। 'पर'शब्दोऽध्याहर्तव्यः। 'ङे' इति लुप्तषष्ठीकं पृथक्पदम्। 'प्रथमयो'रिति च प्रथमाद्वितीयाविभक्त्योर्लाक्षणिकं, तदाह—युष्मदस्मद्भ्यामिति। [ अधिकृत्येति। 'कार्याणि वक्ष्यन्ते' इति शेषः ]।

त्वाहौ सौ। त्वश्च अहश्च त्वाहौ। 'मपर्यन्तस्ये'त्यधिकृतम्। 'युष्मदस्मदोरनादेशे' इत्यतो 'युष्मदस्मदो'रित्यनुवर्तते। तदाह—अनयोरित्यादिना। शेषे लोपः। 'अष्टन आ विभक्तौ' इत्यत 'आ विभक्तौ' इत्यनुवर्तते।

तदोः सः। त्यदादि का जो अनन्त्य तकार और दकार, उसको सकार आदेश हो, 'सु' परे रहते।

ङे प्रथमयोः। युष्मद् और अस्मद् से परे जो 'ङे' और प्रथमा द्वितीया विभक्ति उनको 'अम्' आदेश हो।

[ मपर्यन्तस्य। यह अधिकार सूत्र है ]।

त्वाहौ सौ। युष्मद् और अस्मद् शब्द के मपर्यन्त भाग को 'त्व' और 'अह' आदेश हो, 'सु' परे रहते।

शेषे लोपः। आत्व और यत्व की निमित्त जो विभक्ति, उससे इतर विभक्ति परे रहते युष्मद् अस्मद् शब्द की 'टि' का लोप हो।

१ 'तदयोरनन्त्ययोः' पा०। २ लिखितेषु नास्ति।
३ 'त्वाहौ सौ। अनयोर्मपर्यन्तस्य' इत्येवं, 'युष्मदस्मदोर्मपर्यन्तस्य त्व-अह एतावादेशौ स्तः सौ' इति च क्वचिद् वृत्तिः।

।७।२।९०। [ [1]आत्वयत्वनिमित्तेतरविभक्तौ परतो—] ऽनयोष्टिलोपः । त्वम् । अहम् ॥

युवावौ द्विवचने ।७।२।९२। द्वयोरुक्तावनयोर्मपर्यन्तस्य युवावौ स्तो विभक्तौ । प्रथमायाश्च द्विवचने भाषायाम् ।७।२।८८। औङ्येतयोरात्वं लोके । युवाम् । आवाम् । यूयवयौ जसि ।७।२।९३। अनयो-

---

विभक्ताविल्यनुवृत्तं 'शेषे' इत्यनेनान्वेति । 'युष्मदस्मदोरनादेशे', 'द्वितीयायां च', 'प्रथमायाश्च द्विवचने भाषायां', 'योऽचीं'त्यात्वयत्वयोः प्रागुक्तत्वात्तद्विषयाऽतिरिक्तविभक्तिरिह 'शेष'शब्दार्थः । 'युष्मदस्मदो'रिति चानुवृत्तन्तदाह—आत्वयत्वेति ।

युवावौ द्विवचने । 'युष्मदस्मदोरनादेशे' इत्यतो 'युष्मदस्मदो'रित्यनुवर्तते । 'मपर्यन्तस्ये'त्यधिकृतम् । उक्तिर्वचनम् । द्वयोर्वचनं-द्विवचनम् । तत्र समर्थयोरित्यर्थः । द्वित्वविशिष्टार्थवाचिनोरिति यावत् । न तु द्विवचनसंज्ञके प्रत्यये परे इत्यर्थः, वचनग्रहणसामर्थ्यात् । अन्यथा 'द्वित्वे' इत्येव ब्रूयात् । तदाह—द्वयोरुक्ताविति ।

'ङे प्रथमयो' रिति जसः स्थाने अमि कृते विशेषमाह—यूयवयौ जसि । अस्य—'युष्मदस्मदोर्मपर्यन्तस्य 'यूय' 'वय' इत्यादेशौ स्तो, जसि परत' इत्यर्थः । यूय अद् अम्, वय अद् अम् इति स्थिते पररूपे 'शेषे लोपः' इति मपर्यन्ता-

---

युवावौ । दो को जहाँ कहना हो वहाँ 'युष्मद्' और 'अस्मद्' शब्द के मपर्यन्त भाग को 'युव' और 'आव' आदेश हो, विभक्ति परे रहते ।

प्रथमायाश्च । युष्मद् और अस्मद् को आत्व हो, औङ् ( अर्थात्-प्रथमाका द्विवचन ) परे रहते, लोकमें ।

यूयवयौ । 'युष्मद्' और 'अस्मद्' शब्दके मपर्यन्त भागको 'यूय' और 'वय' आदेश हो, जस् परे रहते ।

---

१ लिखिते नास्ति क्वचित् । क्वचिच्च 'आत्वयत्वनिमित्तेतरविभक्तौ युष्मदस्मदोरन्त्यस्य लोपः स्यात्' इति पाठः ।

मपर्यन्तस्य [ [1]यूयवयौ स्तो, जसि ]। यूयम्। वयम्॥

त्वमावेकवचने ।७।२।९७। एकस्योक्तावनयोर्मपर्यन्तस्य त्वमौ स्तो विभक्तौ॥ द्वितीयायां च ।७।२।८७। अनयोरात् [ [2]स्यात् ]। त्वाम्। माम्॥ शसो न ।७।१।२९। आभ्यां शसो नः स्यात्। अमोऽपवादः। आदेः परस्य। संयोगान्तस्य लोपः। युष्मान्। अस्मान्॥

योऽचि ।७।२।८९। अनयोर्यादेशोऽनादेशेऽजादौ विभक्तौ। त्वया। मया॥ युष्मदस्मदोरनादेशे ।७।२।८६। अनयोरात्स्यादनादेशे हलादौ विभक्तौ। युवाभ्याम्। आवाभ्याम्। युष्माभिः। अस्माभिः॥

तुभ्यमह्यौ ङयि ।७।२।९५। अनयोर्मपर्यन्तस्य [ [3]तुभ्यमह्यौ स्तो-

---

च्छेषस्य अदो लोपे, परिनिष्ठितं रूपमाह—यूयम्। वयमिति।

योऽचि। 'युष्मदस्मदोरनादेशे' इत्यनुवर्तते। 'अष्टन आ विभक्तौ' इत्यतो 'विभक्ता'विति चानुवर्तते। 'अची'ति विभक्तिविशेषणम्। तदादिविधिस्तदाह—अनयोरिति। युष्मदस्मदोरन्त्यस्येत्यर्थः।

---

त्वमावेकवचने। एककी उक्तिमें 'युष्मद्' और 'अस्मद्' के मपर्यन्त भागको 'त्व' 'म' आदेश हों, विभक्ति परे रहते।

द्वितीयायां च। 'युष्मद्' और 'अस्मद्' को आत् आदेश हो, द्वितीया-विभक्ति परे रहते।

शसो न। 'युष्मद्' और 'अस्मद्' से परे जो 'शस्' उस (के आदि) को 'न' आदेश हो।

योऽचि। 'युष्मद्' और अस्मद्' को यकार आदेश हो, अनादेश हलादि विभक्ति परे रहते।

तुभ्यमह्यौ। 'युष्मद्' और 'अस्मद्' के मपर्यन्त भागको 'तुभ्य' और 'मह्य' आदेश हों, 'ङे' परे रहते।

---

१ लिखिते क्वचिन्नायं पाठः। २ लिखिते नास्ति।

३ 'अनयोर्मपर्यन्तस्ये'त्येव क्वचिल्लिखिते वृत्तिः।

ङयि ]। टिलोपः । तुभ्यम् । मह्यम् ॥ भ्यसोऽभ्यम् ।७।१।३०। आभ्यां परस्य [ [1]भ्यसोऽभ्यम् स्यात् ]। युष्मभ्यम् । अस्मभ्यम् ॥

एकवचनस्य च ।७।१।३२। [2]आभ्यां पञ्चम्येकवचनस्याऽत्स्यात् । त्वत् । मत् ॥ पञ्चम्या अत् ।७।१।३१। [3]आभ्यां पञ्चम्या भ्यसोऽत्। युष्मत् । अस्मत् ॥

तवममौ ङसि ।७।२।९६। अनयोर्मपर्यन्तस्य [ [4]तवममौ स्तो ङसि ] । युष्मदस्मद्भ्यां ङसोऽश् ।७।१।२७। तव। मम। युवयोः२। आवयोः २ ॥ साम आकम् ।७।१।३३। आभ्यां [ [5]परस्य ]

---

एकवचनस्य च । 'युष्मदस्मद्भ्यां ङसोऽश्' इत्यतो 'युष्मदस्मद्भ्या' मित्यनुवर्तते, 'पञ्चम्या अत्' इति च, तदाह—आभ्यामिति । युष्मदस्मद्भ्यामित्यर्थः । अनेकाल्त्वात् सर्वादेशः । 'न विभक्तौ' इति तस्य नेत्त्वम् ।

साम आकम् । आभ्यामिति । 'युष्मदस्मद्भ्यां ङसोऽश्' इत्यतस्तदनु-

---

भ्यसोऽभ्यम् । 'युष्मद्' और 'अस्मद्' से परे जो 'भ्यस्' उसको 'अभ्यम्' आदेश हो ।

एकवचनस्य च । 'युष्मद्' और 'अस्मद्' से परे जो पञ्चमी का एकवचन 'ङसि' उसको 'अत्' आदेश हो ।

पञ्चम्या अत् । 'युष्मद्' और 'अस्मद्' शब्दसे परे जो पञ्चमी का 'भ्यस्' उसको 'अत्' आदेश हो ।

तवममौ । 'युष्मद्' और 'अस्मद्' शब्द के मपर्यन्त भाग को 'तव' और 'मम' आदेश हों, 'ङस्' परे रहते ।

युष्मदस्मद्भ्यां । 'युष्मद्' और 'अस्मद्' से परे जो 'ङस्' उसको 'अश्' आदेश हो ।

साम आकम् । 'युष्मद्' और 'अस्मद्' से परे जो 'साम्' ( अर्थात्—

---

१ क्वाचित्कः पाठोऽयम् । २ 'आभ्यां ङसेरत्' इत्येव वृत्तिः क्वचित् ।
३ 'आभ्यां भ्यसः' इत्येव वृत्तिः क्वचित् । ४ क्वचिन्न ।
५ एकत्र दृश्यतेऽयं पाठः ।

'साम' आकम् [ स्यात् ]। युष्माकम्। अस्माकम्। त्वयि। मयि। युष्मासु। अस्मासु॥

**युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नावौ ।८।१।२०।** पदात्परयोरपादादौ स्थितयोः षष्ठ्यादिविशिष्टयोर्वान्नौ[1] [[2]इत्यादेशौ स्तस्तौ चानुदात्तौ ]॥ **बहुवचनस्य वस्नसौ ।८।१।२१।** उक्तविधयोरनयोः

---

वृत्तेरिति भावः। साम इति। सकारेण सहित आम्-साम्, तस्येत्यर्थः। ससुट्कस्य आम इति यावत्। ननु युष्मद् आम्, अस्मद् आम् इति स्थिते अवर्णात् परत्वाऽभावत् सुटो न प्रसक्तिः। नच 'शेषे लोपः' इति द्रस्य लोपे कृतेऽवर्णात् परत्वमस्तीति वाच्यम्, आकमादेशात् प्रागनादेशतया शेषे लोपस्यैवात्राऽप्रसक्तेः ससुट्कनिर्देशोऽनुपपन्नो व्यर्थश्चेति चेन्न, भाविनः सुटो निवृत्त्यर्थं तथा निर्देशात्। यदि तु 'आम आकम्' इत्येवोच्येत, तर्हि आम आकमादेशे कृते, दकारस्य शेषे लोपे सति, स्थानिवत्त्वेन आकमादेशस्य आम्त्वात्तस्य चाऽवर्णात्परत्वात् सुडागमः स्यात्। तत एत्वषत्वयोर्युष्मेषाकम्, अस्मेषाकमिति स्यात्। अतः ससुट्कनिर्देशः कृतः। यद्यपि आकमादेशप्रवृत्तिकाले सुटो न प्रसक्तिस्तथापि आकमादेशोत्तरं दकारलोपे कृते स्थानिवत्त्वेन यः सुट् भविष्यति, तस्यापि स्थानषष्ठ्याः स्वीकरणान्निवृत्तिर्भवति। अन्यथा ससुट्कनिर्देशवैयर्थ्यादिति भावः।

बहुवचनस्य वस्नसौ। उक्तविधयोरिति। षष्ठ्यादिविशिष्टयोर्युष्मदस्मदोरित्यर्थः।

---

सुट्सहित आम्) उसको 'आकम्' आदेश हो।

युष्मदस्मदोः। पद से परे और अपादके आदि में स्थित जो षष्ठी-चतुर्थी-द्वितीया-विशिष्ट 'युष्मद्' 'अस्मद्' शब्द, उनको क्रमसे 'वाम्' और 'नौ' आदेश हो।

बहुवचनस्य। पद से परे और अपाद के आदि में स्थित जो षष्ठी-चतुर्थी-

---

१ 'वान्नावौ' इत्यन्तैव लिखिते प्रायो वृत्तिः। २ अयं पाठः क्वाचित्कः।

[1] षष्ठ्यादिबहुवचनान्तयोर्वस्नसौ स्तः। [ [2]वां—नावोरपवादः ]।

तेमयावेकवचनस्य ।८।१।२२। उक्तविधयोरनयोः षष्ठीचतुर्थ्ये-कवचनान्तयोस्ते-मे एतौ स्तः॥ त्वामौ द्वितीयायाः ।८।१।२३। उक्तविधयो [ [3]रनयो ] र्द्वितीयैकवचनान्तयोस्त्वामा एतौ स्तः ॥

श्रीशस्त्वाऽवतु माऽपीह, दत्तात्ते मेऽपि शर्म सः ।
स्वामी ते मेऽपि स हरिः, पातु वामपि नौ विभुः ॥ १ ॥
सुखं वां नौ ददात्वीशः, पतिर्वामपि नौ हरिः ।
सोऽव्याद्वो नः, शिवं वो नो दद्यात्सेव्योऽत्र वः स नः ॥ २ ॥

*एकवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः। एकतिङ् वाक्यम् । तेनेह न—ओदनं पच, तव भविष्यति । [[4]इह तु स्यादेव—

---

एकवाक्ये इति । निमित्तनिमित्तिनोरेकवाक्यस्थत्वे इत्यर्थः । निघात-शब्दोऽनुदात्तवाची। एकतिङिति । तिङित्यनेन तिङन्तं विवक्षितम् । एकस्तिङ्

---

द्वितीयाबहुवचनान्त 'युष्मद्' और 'अस्मद्' शब्द उनको 'वस्' और 'नस्' आदेश हों।

तेमयौ। पद से परे और अपाद के आदि में स्थित जो षष्ठी–चतुर्थ्येक-वचनान्त 'युष्मद्' और 'अस्मद्' शब्द, उनको 'ते' और 'मे' आदेश हों ।

त्वामौ । पद से परे और अपाद की आदि में स्थित जो द्वितीयैकवचनान्त 'युष्मद्' और 'अस्मद्' शब्द, उनको 'त्वा' और 'मा' आदेश हों ।

एकवाक्ये। एकवाक्य में ही अनुदात्त और पूर्वोक्त युष्मद् अस्मद् को 'वाम्' नौ 'आदि' आदेश होते हैं।

एकतिङ् । एकतिङन्त घटित ही 'वाक्य' होता है। अर्थात्—एकतिङन्तार्थ-निष्ठमुख्यविशेष्यताप्रयोजकपदघटित ही 'वाक्य' होता है ।

---

१ अत्र वृत्तौ—'अनयो'रिति क्वचिन्न । २ क्वाचित्कः पाठोऽयम् ।
३ 'उक्तविधयोरनयोः—' क्वचित्पाठः । ४ लिखितेषु नैव दृश्यते ।

शालीनां ते ओदनं दास्यामि ]। *एते वांनावादय आदेशा अनन्वादेशे वा वक्तव्याः। अन्वादेशे तु नित्यं स्युः। धाता ते भक्तोऽस्ति। तव भक्तोऽस्तीति वा। तस्मै ते नम इत्येव।

न चवाहाहैवयुक्ते।८।१।२४। चादिपञ्चकयोगे नैते आदेशाः स्युः। 'हरिस्त्वां मां च रक्षतु।' 'कथं त्वां मां वा न रक्षे'दित्यादि॥

पश्यार्थैश्चानालोचने।८।१।२५। अचाक्षुषज्ञानार्थैर्धातुभिर्योगे नैते आदेशाः स्युः। चेतसा त्वां समीक्षते। आलोचने तु—भक्तस्त्वा पश्यति चक्षुषा॥

सपूर्वायाः प्रथमाया विभाषा।८।१।२६। विद्यमानपूर्वात्प्रथमान्तादन्वादेशेऽप्येते आदेशा[1] वा स्युः। 'भक्तस्त्वमप्यहं तेन हरिस्त्वां त्रायते स माम्'। त्वा, मेति वा॥

---

यस्येति विग्रहः। इदं च वाक्यलक्षणमेतच्छास्त्रोपयोग्येव। तेन 'पश्य मृगो धावती'त्यादौ नाऽव्याप्तिः।

---

एते वांनावादयः। ये जो (पूर्वोक्त) 'वाम्' 'नौ' 'वस्' 'नस्' आदि 'युष्मद्' 'अस्मद्' के आदेश हैं, वे अनन्वादेश में विकल्प से हों, और अन्वादेश में नित्य हों।

नचवाहा। चादि पांच के योग में पूर्वोक्त 'वाम्' 'नौ' आदि युष्मदस्मादेश नहीं हों।

पश्यार्थैः। अचाक्षुषज्ञानार्थक धातुओं के योग में पूर्वोक्त 'वाम्' 'नौ' आदि आदेश नहीं हों।

सपूर्वायाः। विद्यमान है पूर्व में जिसके ऐसा जो प्रथमान्त, उससे परे जो षष्ठ्यादिविशिष्ट युष्मद् अस्मद् शब्द उनको अन्वादेशमें भी पूर्वोक्त आदेश विकल्प करके हों।

---

१ 'देशेऽप्यादेशाः' पा०।

सामन्त्रितम् ।२।३।४८। सम्बोधने या प्रथमा तदन्तमामन्त्रित-संज्ञं स्यात् ॥ आमन्त्रितं पूर्वमविद्यमानवत् ।८।१।७२। अग्ने तव । देवाऽस्मान्पाहि ॥

नाऽऽमन्त्रिते समानाधिकरणे सामान्यवचनम् ।८।१।७३। विशेष्यं समानाधिकरणे विशेषणे आमन्त्रिते परे नाऽविद्यमानवत् । हरे दयालो नः पाहि ॥

सुपात् । सुपाद् । सुपादौ । पादः पत् ।६।४।१३०। पाच्छब्दान्तं यदङ्गं भं तदवयवस्य पाच्छब्दस्य पदादेशः । सुपदः । [1]सुपदा । सुपाद्भ्याम् ॥

अग्निमत् । अग्निमद् । अग्निमथौ । [अग्निमथः] । अग्निमद्भ्याम् ॥

अनिदितां हल उपधायाः क्ङिति ।६।४।२४। हलन्तानाम-निदितामङ्गानामुपधाया नस्य लोपः किति, ङिति च । 'उगिदचा'मिति नुम् । संयोगान्तस्य लोपः । नस्य कुत्वेन ङः । प्राङ् । प्राञ्चौ । प्राञ्चः[2] ॥

---

सामन्त्रितं । सम्बोधन में जो प्रथमा, तदन्त जो प्रातिपादिक वह 'आमन्त्रित' सञ्ज्ञक हो ।

आमन्त्रितं पूर्वं । पूर्व में स्थित जो आमन्त्रित सो अविद्यमानवत् हो ।

नामन्त्रिते । विशेष्यवाचक जो आमन्त्रित पद वह समानाधिकरण विशेषणवाचक आमन्त्रित परे रहते अविद्यमानवत् नहीं हो ।

पादः पत् । पाद्शब्दान्त जो भसञ्ज्ञक अङ्ग, तदवयव जो 'पाद्' शब्द उसको 'पद्' आदेश हो ।

अनिदितां । हलन्त जो अनिदित् अङ्ग, उसकी उपधा के नकार का लोप हो, कित और ङित् ( प्रत्यय ) परे रहते ।

---

१ क्वचिन्न । २ क्वचित्कः पाठः ।

अचः ।६।४।१३८। लुप्तनकारस्याऽञ्चतेर्भस्याऽकारस्य लोपः । चौ ।६।३।१३८। लुप्ताऽकारनकारेऽञ्चतौ परे पूर्वस्याऽणो दीर्घः । प्राचः । प्राचा । प्राग्भ्याम् ॥ प्रत्यङ् । प्रत्यञ्चौ । [ [1]प्रत्यञ्चः ] । प्रतीचः । प्रत्यग्भ्याम् ॥ उदङ् । उदञ्चौ । [2]उदञ्चः । उद ईत् ।६।३।१३९। उच्छब्दात्परस्य लुप्ताऽकारस्याऽञ्चतेर्भस्याऽकारस्य ईत् । उदीचः । [3]उदीचा । उदग्भ्याम् ॥

समः समि ।६।३।९३। वप्रत्ययान्तेऽञ्चतौ परे । [[4]समः सम्यादेशः स्यात् ] । सम्यङ् । सम्यञ्चौ । समीचः । सम्यग्भ्याम् ।

---

उदङिति । उत्=ऊर्ध्वं अञ्चतीति विग्रहे क्विन्नादिरिति भावः । शसादौ 'अचः' इति लोपे प्राप्ते—। उद ईत् । 'अचः' इति सूत्रमनुवर्तते, 'अल्लोप' इत्यतः—'अत्' इति च । 'भस्ये'त्यधिकृतं, तदाह—उच्छब्दादित्यादिना ।

समः समि । 'समी'ति लुप्तप्रथमान्तम् । 'अञ्चतावप्रत्यये' इत्यनुवर्तते । तदभिप्रेत्य शेषपूरणेन सूत्रं व्याचष्टे—वप्रत्ययेति ।

---

अचः । लुप्त हुआ है नकार जिसका ऐसा जो 'अञ्च्' धातु, उसके भसञ्ज्ञक अकार का लोप हो ।

चौ । लुप्त हुए हैं अकार और नकार जिसके ऐसा 'अञ्च्' धातु परे रहते पूर्व अण् को दीर्घ हो ।

उद ईत् । 'उद्' शब्द से परे जो लुप्ताऽकार 'अञ्च्' धातु, उसके भसञ्ज्ञक अकार को 'ईत्' आदेश हो ।

सम समि । 'व'प्रत्ययान्त 'अञ्च्' धातु परे रहते 'सम्' को 'समि' आदेश हो ।

---

१ क्वचिदेव दृश्यते । २ क्वचिदेव दृश्यते ।

३ क्वचिन्न । ४ एकत्र लिखिते दृश्यतेऽयं पाठः ।

सहस्य सध्रिः ।६।३।९५। तथा । सध्र्यङ् । [ [1]सध्र्यञ्चौ । सध्रीचः । सध्र्यग्भ्याम् ] ।

तिरसस्तिर्यलोपे ।६।३।९४। अलुप्ताऽकारेऽञ्चतौ [2]वप्रत्ययान्ते तिरसस्तिर्यादेशः । तिर्यङ् । तिर्यञ्चौ । तिरश्चः । तिरश्चा । तिर्यग्भ्याम् ॥

नाऽञ्चेः पूजायाम् ।६।४।३०। पूजार्थस्याऽञ्चतेरुपधाया नस्य लोपो न । प्राङ् । प्राञ्चौ । नलोपाऽभावादल्लोपो[3] न । प्राञ्चः । प्राङ्भ्याम् ।

---

सहस्य सध्रिः । सहस्य सध्रिः स्यादप्रत्ययान्तेऽञ्चतौ परे इति वृत्तिः ।

तिरसस्तिर्यलोपे । 'तिरि' इति लुप्तप्रथमान्तम् । 'अञ्चतावप्रत्यये' इत्यनुवर्तते । न विद्यते 'अचः' इत्यल्लोपो यस्य स–'अलोपः' तस्मिन्निति विग्रहः । तदाह—अलुप्तेत्यादिना ।

तिर्यङिति । तिरोऽञ्चतीति विग्रहे क्विन्नादि । तिरसस्तिर्यादेशे यण् ।

नाञ्चेः । 'अनिदिताम्' इति सूत्रात् 'उपधायाः' इति, 'क्ङिती'ति चानुवर्तते । 'श्नान्नलोपः' इत्यतो 'नलोप' इत्यनुवर्तते । तत्र 'न'ति लुप्तषष्ठीकम् । तदाह—पूजार्थस्येत्यादिना । पूजाया गम्यत्वे सतीत्यर्थः । न त्वञ्चुधातोः पूजार्थत्वमेवेह विवक्षितम् । अत एव 'अञ्चितं गच्छति' इत्यत्र नलोपो न । अञ्चतेरत्र समाधानमर्थः । समाहितो भूत्वा गच्छतीति तदर्थो गम्यते । समाधानं च अव्याकुलत्वम्, अव्याकुलं गच्छतीत्यर्थः । अव्याकुलगमने च पूजा गम्यते । नत्वञ्चतेरेव सोऽर्थ इति-'अञ्चोऽनपादाने' इति सूत्रे भाष्यकैयटयोः स्पष्टम् ।

---

सहस्य सध्रिः । 'व'प्रत्ययान्त ( क्विन्प्रत्ययान्त ) 'अञ्च्' धातु परे रहते सह को 'सध्रि' आदेश हो ।

तिरसस्तिरि । अलुप्ताऽकार 'व'प्रत्ययान्त 'अञ्च्' धातु परे रहते 'तिर' के स्थान में 'तिरि' आदेश हो ।

नाञ्चेः । पूजार्थक 'अञ्च्' धातु के उपधा के नकार का लोप नहीं हो ।

---

१ लिखितेषु नास्ति । २ 'वप्रत्ययान्ते परे' पा० ।

३ 'दकारस्य लोपो न' ।

प्राङ्षु । [ प्राङ्क्षु[1] ] ॥ एवं पूजार्थे-प्रत्यङ्ङादयः ॥

क्रुङ् । क्रुञ्चौ । क्रुञ्चः । क्रुङ्भ्याम् ॥

पयोमुक् ॥ पयोमुग् । पयोमुचौ । पयोमुचः । पयोमुग्भ्याम् ॥

मह पूजायाम् । वर्तमाने पृषन्महद्बृहज्जगच्छतृवच्च । एते निपात्यन्ते, शतृवच्चैषां कार्यं स्यात् । उगित्त्वान्नुम् । सान्तमहतः संयोगस्य ।६।४।१०। सान्तसंयोगस्य, महतश्च यो नकारस्तस्योपधाया दीर्घोऽसम्बुद्धौ सर्वनामस्थाने । महान् । महान्तौ । महान्तः । हे महन् । महतः । महद्भ्याम् ।

[2]अत्वसन्तस्य चाऽधातोः ।६।४।१४। अत्वन्तस्योपधाया दीर्घो, धातुभिन्नाऽसन्तस्य चाऽसम्बुद्धौ सौ । धीमान् । धीमन्तौ । धीमन्तः । हे धीमन् । शसादौ महद्वत् ॥

भातेर्डवतुः । डित्त्वसामर्थ्यादभस्यापि टेर्लोपः । भवान् । भवन्तौ ॥ शत्रन्तस्य तु भवन् ॥

---

प्राङिति । प्रपूर्वादञ्चतेः क्विन् । अत्र प्रकर्षेण पूजनमञ्चेरर्थः ।

वर्तमाने इति । उणादिसूत्रमेतत् । निपात्यन्ते इति । तत्र 'पृषु सेचने' 'बृहि वृद्धौ' अनयोर्गुणाऽभावः, महेः कर्मणि अतिप्रत्ययः, गमेर्जगादेशश्चेति विशेषः ।

---

वर्त्तमाने । वर्त्तमान काल में पृषत्, महत्, बृहत्, जगत्—ये शब्द 'अति' प्रत्ययान्त निपातित हो, और 'शतृ' (प्रत्ययान्त) की तरह इनको कार्य हो।

सान्तमहतः । सान्त संयोग का जो नकार और 'महत्' शब्दका जो नकार, उसकी उपधा को दीर्घ हो, सम्बुद्धिभिन्न सर्वनामस्थान परे रहते ।

अत्वसन्तस्य । अत्वन्त की उपधा को दीर्घ हो, और धातुभिन्न जो असन्त उसकी भी उपधा को दीर्घ हो, सम्बुद्धि भिन्न 'सु' परे रहते ।

---

१ क्वचिदपि नास्ति । २ 'अतु' इति लुप्तषष्ठीकम् ।

उभे अभ्यस्तम् ।६।१।५। षाष्ठद्वित्वप्रकरणे ये द्वे विहिते ते उभे समुदिते अभ्यस्तसंज्ञे स्तः ॥

नाऽभ्यस्ताच्छतुः ।७।१।७८।[[1]अभ्यस्तात्परस्य शतु] नुंम् न। ददत्। ददतौ ॥

जक्षित्यादयः षट् ।६।१।६। षट् धातवोऽन्ये, जक्षितिश्च सप्तम एतेऽभ्यस्तसंज्ञाः स्युः। जक्षत्। जक्षतौ। जक्षतः॥ एवं–जाग्रत्। दरिद्रत्। शासत्। चकासत्। 'दीधीङ् दीप्तिदेवनयोः'। 'वेवीङ् वेतिना तुल्ये'। –एतौ छान्दसौ। दीध्यत्। वेव्यत्॥

[2]'जक्षि जागृ दरिद्रा शास् दीधीङ् वेवीङ् चकास्तथा।
अभ्यस्तसंज्ञा विज्ञेया धातवो मुनिभाषिताः॥ १॥

गुप्। गुब्। गुपौ। गुपः। गुब्भ्याम्॥ त्यदादिषु दृशोऽनालोचने

---

उभे अभ्यस्तम्। 'एकाचो द्वे प्रथमस्य' इत्यतो 'द्वे' इत्यनुवर्तते। 'उभे'ग्रहणं समुदायप्रतिपत्त्यर्थम्। 'द्वे' इत्यनेन च षष्ठाध्यायविहितमेव द्वित्वं विवक्षितम्, 'अनन्तरस्य विधिर्वा प्रतिषेधो वा' इति न्यायात्। तदाह–षाष्ठेत्यादिना।

नाभ्यस्ताच्छतुः। 'इदितो नुम् धातो'रित्यतो 'नु'मित्यनुवर्तते। तदाह–अभ्यस्तादित्यादिना।

त्यदादिषु। चकारात् 'स्पृशोऽनुदके क्विन्' इत्यतः 'क्विन्', इत्यनुकृष्यते।

---

उभे अभ्यस्तम्। षष्ठाध्यायके द्वित्वप्रकरणमें जो दो विधान किए हैं, वे दोनों समुदित ( मिलित ) 'अभ्यस्त' सञ्ज्ञक हों।

नाभ्यस्ताच्छतुः। अभ्यस्त से परे 'शतृ' को नुम् नहीं हो।

जक्षित्यादयः। 'जागृ' आदि छै धातु और 'जक्ष' धातु–ये सात 'अभ्यस्त' संज्ञक हों।

त्यदादिषु। त्यदादि उपपद रहते अज्ञानार्थक 'दृश्' धातु से 'कञ्' प्रत्यय, हो, और ( चकार से– )'क्विन्' प्रत्यय भी होता है।

---

१ क्वचिन्न। २ अयं श्लोको 'जक्षत्, जक्षतौ' इत्यतः प्राक् क्वचित्पठ्यते।

**कञ्च** ।३।२।६०। त्यदादिषूपपदेषु अज्ञानार्थाद् दृशेर्धातोः कञ् स्यात्, चात्क्विन् ॥ **आ सर्वनाम्नः** ।६।३।९१। [[1]सर्वनाम्न आकारोऽन्तादेशः स्यात् ] दृग्दृश्वतुषु । तादृक् । तादृग् । तादृशौ । तादृशः । तादृग्भ्याम् ॥

'व्रश्चे'ति षः । जश्त्वचर्त्वे । विट् । विड् । विशौ । विशः । विड्भ्याम् ॥

**नशेर्वा** ।८।२।६३। नशेः कवर्गोऽन्तादेशो वा पदान्ते । नक् । नग् । नट् । नड् । नशौ । नशः । नग्भ्याम् । नड्भ्याम् ॥

**स्पृशोऽनुदके क्विन्** ।३।२।५८। अनुदके सुप्युपपदे स्पृशेः क्विन् । घृतस्पृक् । घृतस्पृग् । घृतस्पृशौ । घृतस्पृशः ॥

दधृक् । दधृग् । दधृषौ । दधृषः । दधृग्भ्याम् ॥

रत्नमुट् । रत्नमुड् । रत्नमुषौ । रत्नमुषः । रत्नमुड्भ्याम् ॥

षट् । षड् । षड्भिः । षड्भ्यः २ । षण्णाम् । षट्त्सु । षट्सु । यत्तु प्राचा [ [2]षण्णां ] षडणामित्युदाहृतं, तत्प्रामादिकमेव, प्रत्यये नित्यवचनात् ॥

[[3]रुत्वं प्रति षत्वस्याऽसिद्धत्वात्ससजुषोरिति [2]रुत्वम्] । **र्वोरुपधाया**

---

आलोचनमिह ज्ञानसामान्यं विवक्षितं, तदाह—त्यदादिष्वित्यादिना ।

**र्वोरुपधायाः** । र् च, व् च—र्वौ, तयोरिति विग्रहः । 'सिपि धातो रुर्वा'

---

**आ सर्वनाम्नः** । सर्वनाम को आकार अन्तादेश हो, 'दृक्' 'दृश्' परे रहते और 'वतु' प्रत्यय परे रहते ।

**नशेर्वा** । 'नश्' धातु को कवर्ग अन्तादेश हो, विकल्प करके, पदान्त में ।

**स्पृशोऽनुदके** । 'उदक' शब्द भिन्न सुबन्त उपपद रहते 'स्पृश्' धातु से 'क्विन्' प्रत्यय हो ।

**र्वोरुपधायाः** । रेफान्त और वकारान्त जो धातु, उसकी उपधा के 'इक्' को दीर्घ हो, पदान्त में ।

---

१ क्वचित्पठ्यतेऽयम् । २ अयं पाठः क्वचिन्न दृश्यते । ३ 'रुत्वं प्रती'ति क्वचिन्न ।

दीर्घ इकः ।८।२।७६। रेफवान्तस्य धातोरुपधाया इको दीर्घः पदान्ते । पिपठीः । पिपठिषौ । पिपठिषः । पिपठीर्भ्याम् ॥ नुम्विसर्जनीयशर्व्यवायेऽपि ।८।३।५८। एतैः प्रत्येकं व्यवधानेऽपीण्कुभ्यां परस्य सस्य मूर्धन्यादेशः स्यात् । ष्टुत्वेन पूर्वस्य षः । पिपठीष्षु । [ [1]वा शरि ]। पिपठीःषु ॥ चिकीः । चिकीर्षौ । [ चिकीर्षः[2] ] । चिकीर्षु ॥

विद्वान् । विद्वांसौ । हे विद्वन् । वसोः सम्प्रसारणम् ।६।४।१३१। वस्वन्तस्य भस्य सम्प्रसारणम् । विदुषः । 'वसुस्रंस्वि'ति दत्वम् । विद्वद्भ्याम् ॥

पुंसोऽसुङ् ।७।१।८९। [ [3]पुंसोऽसुङ् स्यात् ] सर्वनामस्थाने ।

---

इत्यतो 'धातो'रित्यनुवर्तते । 'वों'रिति तद्विशेषणं, ततस्तदन्तविधिः । 'पदस्ये'त्यधिकृतम् । 'स्कोः संयोगाद्यो' रित्यतो'ऽन्ते' इत्यनुवर्तते । तदाह—रेफेत्यादिना ।

'चिकीर्षु' इति । 'रोः सुपी'ति नियमान्न विसर्गः ।

पुंसोऽसुङ् । 'इतोऽत् सर्वनामस्थाने' इत्यतः 'सर्वनामस्थाने'इत्यनुवृत्तिमभिप्रेत्य शेषपूरणेन सूत्रं व्याचष्टे—सर्वनामस्थाने इति । 'पुंसोऽसुङ् स्यात् सर्वनामस्थाने' इति फलितम् ।

---

नुम्विसर्जनीय । 'नुम्' 'विसर्जनीय' और शर्—इनके प्रत्येक के व्यवधान में भी इण् और कवर्ग से परे जो सकार उसको मूर्धन्य आदेश ( अर्थात् षत्व ) हो ।

वसोः सम्प्र । वस्वन्त जो भसञ्ज्ञक अङ्ग उसको सम्प्रसारण हो ।

पुंसोऽसुङ् । 'पुम्स्' शब्द को 'असुङ्' आदेश हो, सर्वनामस्थान प्रत्यय परे रहते ।

---

१ अयं पाठः क्वचिदपि लिखिते नास्ति । २ क्वचिदेव दृश्यते ।

३ क्वचिन्न । क्वचिच्च—'सर्वनामस्थाने विवक्षिते पुंसोऽसुङ् स्यात्' इति पाठः ।

पुमान् । हे पुमन् । पुमांसौ । पुंसः । पुंभ्याम् । पुंसु ॥

'ऋदुशनेऽ'स्यनङ् । उशना । उशनसौ । *अस्य सम्बुद्धौ वाऽनङ्, नलोपश्च वा वाच्यः । हे उशन !। हे उशनन् !। हे उशनः !। उशनोभ्याम् ॥

अनेहा । अनेहसौ । अनेहसः । हे अनेहः ॥

वेधाः । वेधसौ । वेधसः । वेधोभ्याम् ॥

**अदस औ सुलोपश्च** ।७।२।१०७। [ [1]अदस औकारोऽन्तादेशः स्यात् ] सौ परे [सुलोपश्च] । 'तदो'रिति सः । असौ ॥ *औत्वप्रतिषेधः साकच्कस्य वा वक्तव्यः । [ [2]प्रतिषेधपक्षे—] सादुत्वं च । असकौ । असुकः । त्यदाद्यत्वं । पररूपत्वम् । वृद्धिः ॥

**अदसोसेर्दादु दो मः** ।८।२।८०। अदसोऽसान्तस्य दात्परस्य उदूतौ स्तो, दस्य मश्च । आन्तरतम्याद् ह्रस्वस्य उः । दीर्घस्य ऊः । अमू ।

---

'अदस्'शब्दात् सौ त्यदाद्यत्वे प्राप्ते तदपवादसूत्रमवतारयति—अदस औ इति । 'अदस' इति षष्ठी । 'औ' इत्यविभक्तिको निर्देशः । 'तदोः सः सौ' इत्यतः 'सा'वित्यनुवर्तते । तदाह—अदस इति ।

---

अस्य सम्बुद्धौ । 'उशनस्' शब्द को सम्बुद्धि परे रहते 'अनङ्' आदेश हो, विकल्प करके, और उसके नकार का लोप भी विकल्प करके हो ।

अदस औ । 'अदस्' शब्द को औकार अन्तादेश हो, 'सु' परे रहते, और 'सु' का लोप भी हो ।

औत्वप्रतिषेधः । अकच् विशिष्ट 'अदस्' शब्द को औत्व का प्रतिषेध हो विकल्प करके, और ( प्रतिषेधपक्ष में— ) सकारोत्तर अकार को उत्व भी हो ।

अदसोऽसेः । असान्त जो 'अदस्' शब्द, तदवयव दकार से परे जो ह्रस्व उसको 'उ', और दीर्घको 'ऊ' आदेश हो और दकार को मकार आदेश हो ।

---

१ अयं पाठः क्वचिदेव दृश्यते, न सर्वत्र ।

२ लिखितेषु क्वापि न दृश्यते ।

'जसः शी'। एत ईद् बहुवचने ।८।२।८१। अदसोऽसान्तस्य दात् परस्यैत ईत्, दस्य च मो, बह्वर्थोक्तौ। अमी। 'पूर्वत्राऽसिद्ध'मिति विभक्तिकार्यं प्राक्, पश्चादुत्वमत्वे। अमुम्। अमू। अमून्। मुत्वे कृते घिसञ्ज्ञायां 'ना'भावः। न मु ने ।८।२।३। 'ना'भावे कर्त्तव्ये, कृते [1]च मुभावो नाऽसिद्धः। अमुना। अमूभ्याम्। अमीभिः। अमुष्मै। अमीभ्यः। अमुष्मात्। अमुष्य। अमुयोः। अमीषाम्। अमुष्मिन्। अमुयोः। अमीषु॥

इति हलन्ताः पुंलिङ्गाः।

---

ननु तृतीयैकवचने कृतेऽपि प्रथमं मुत्वे नाभावो न संभवति, तस्मिन् कर्तव्ये मुत्वस्याऽसिद्धतया घेः परत्वाऽभावादित्यत आह—न मु ने इति। 'असिद्ध'-मित्यनुवर्तते। मु च उश्चेति समाहारद्वन्द्वः। 'ने' इति 'ना' इत्यस्य सप्तम्येकवचनम्। तन्त्रेण, आवृत्त्या वा विषयसप्तमी, [2]सत्सप्तमी च एषा। तथाच 'नाभावे कर्तव्ये, कृते चे'ति लभ्यते। तदाह—नाभावे इत्यादिना। प्रकृते च नाभावे कर्तव्ये मुत्वस्याऽसिद्धत्वाऽभावाद्धेः परत्वान्नाभावो निर्बाधः। यदि तु 'नाभावे कर्तव्ये मुभावो नासिद्ध'इत्येवाश्रीयते, तर्हि प्रकृते नाभावे कृते 'सुपि चे'ति दीर्घः प्रसज्येत दीर्घे कर्तव्ये मुत्वस्याऽसिद्धतयाऽकारस्य सत्त्वात्। अतः 'कृतेऽपी'-त्याश्रितम्। ततश्च प्रकृते 'ना'भावे कृतेऽपि दीर्घे कर्तव्ये मुत्वस्याऽसिद्धत्वाऽभावादकाराऽभावान्न दीर्घ इति बालमनोरमाकृतो वासुदेवदीक्षिताः प्राहुः।

* इति मध्यकौमुदीबालमनोरमायां हलन्तपुँल्लिङ्गप्रकरणम् *

---

इत ईत्। असान्त अदस् शब्द सम्बन्धी द कार से परे जो ए कार, उसको 'ईत्' आदेश हो, और दकार को मकार हो, बह्वर्थ की उक्ति में।

नमुने। 'ना'भाव कर्त्तव्य हो या 'ना'भाव कर भी लिया हो तब भी किसी के भी प्रति 'मु'भाव असिद्ध नहीं हो।

---

१ 'कृते चे' ति क्वचिन्न पठ्यते। २ शेखरे तु–'विषयसप्तमीय'मित्येवोक्तम्।

## [[1]अथ हलन्ताः स्त्रीलिङ्गाः] ।

**नहो धः ।८।२।३४।** [ [2]नहो हस्य धः स्यात् ] झलि, पदान्ते च । **नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ ।६।३।११६।** क्विबन्तेष्वेषु [3]पूर्वपदस्य दीर्घः । उपानत् । उपानद् । उपानहौ । उपानहः । उपानद्भ्याम् । उपानत्सु ।

[ [4]निपातनात्तलोपषत्वे ] । क्विन्नन्तत्वात्कुत्वेन [ [5]हस्य ] घः । [ [6]जश्त्वचर्त्वे ] । उष्णिक् । उष्णिग् । उष्णिहौ । उष्णिग्भ्याम् ॥

द्यौः । दिवौ । दिवः । द्युभ्याम् ॥ गीः । गिरौ । गिरः । एवं—पूः ॥

चतस्रः २ । चतसृभिः । चतसृभ्यः २ । चतसृणाम् । चतसृषु ॥

का । के । काः । सर्वावत् ॥

**यः सौ ।७।२।११०।** इदमो दस्य [[6]यः स्यात्सौ] । इदमो मः । इयम् । त्यदाद्यत्वम् । टाप् । 'दश्चे'ति मः । इमे । इमाः । इमाम् । इमे । इमाः । अनया । **हलि लोपः** । आभ्याम् । आभिः । अस्यै ।

---

नहो धः । 'हो ढः' इत्यतो 'हः' इत्यनुवर्तते । 'पदस्ये'त्यधिकृतम् । 'स्कोः संयोगे'त्यतो'ऽन्ते' इत्यनुवर्तते । 'झलो झली'त्यतो 'झली'त्यनुवर्तते । तदाह—नहो हस्येत्यादिना । 'हो ढः' इति ढत्वस्यायमपवादः ।

---

नहो धः । 'नह्' धातु के हकार को धकार आदेश हो, झल्परे रहते और पदान्त में ।

नहिवृति । क्विबन्त नह्यादि धातु परे रहते पूर्व पदस्थ अण् को दीर्घ हो ।

यः सौ । 'इदम्' शब्द के दकार को यकार आदेश हो, 'सु' परे रहते ।

---

१ लिखितेषु नास्त्ययं पाठः । २ लिखितेषु क्वचिदेव दृश्यते, न सर्वत्र ।
३ 'पूर्वस्य दीर्घः' इति, 'पूर्वस्याणो दीर्घः' इति च पा० ।
४ अयं पाठो लिखितेषु नास्ति । ५ क्वचिन्न । ६ क्वचिदपि नास्ति ।

.। अनयोः २। आसाम्। अस्याम्। आसु। [¹अन्वादेशे तु-एनाम्।
नाः। एनया। एनयोः २॥ 'ऋत्वि'गादिना स्रजेः क्विन्, अमा-
निपात्यते]। स्रक्। स्रजौ। स्रजः। स्रग्भ्याम्॥ त्यदाद्यत्वे-
स्या। त्ये। त्याः। एवम्—तद्। यद्। एतद्॥
ाक्। वाग्। वाचौ। वाचः। वाग्भ्याम् ३॥ अप्शब्दो नित्यं बहु-
ान्तः। 'अप्तृ'न्निति दीर्घः। आपः। अपः॥ अपो भि।७।४।४८।
तकारो आदौ प्रत्यये। अद्भिः। अद्भ्यः २। अपाम्। अप्सु॥ दिक्।
। दिशौ। दिशः। दिग्भ्याम्। त्यदादिष्विति दृशेः क्विन्विधानाद-
त्रापि कुत्वम्। दृक्। दृशौ। ²दृशः। दृग्भ्याम्॥ [³त्विट्। त्विषौ।
षः। त्विड्भ्याम्। त्विट्त्सु। त्विट्सु॥ 'ससजुषो'रिति रुत्वम्।
जूः। सजुषौ। सजूर्भ्याम्]॥ आशीः। आशिषौ। आशीर्भ्याम्॥
असौ। [⁴त्यदाद्यत्वं। टाप्। औङः शी]। उत्वमत्वे। अमू।
मूः। अमुया। अमूभ्याम्। अमूभिः। अमुष्यै। अमूभ्यः। अमु-
भ्याः २। अमुयोः २। अमूषाम्। अमुष्याम्। अमूषु।

इति हलन्ताः स्त्रीलिङ्गाः॥

---

ऋत्विगिति। 'सृज विसर्गे' अस्मात् क्विन्, ऋकारात् परोऽमागमः, मकार
इत्, ऋकारस्य यण्। स्रज्शब्दः स्त्रीलिङ्गः। 'माल्यं मालास्रजौ मूर्ध्नि' इत्य-
मरः। स्रगिति। 'क्विन्प्रत्ययस्य कुः' इति कुत्वं, जश्त्वचर्त्वे इति भावः।
सजूरिति। 'जुषी प्रीतिसेवनयोः' क्विप्, 'सहस्य सः संज्ञाया'मिति वा,
'ससजुषोः' इति निपातनाद्वा सहस्य सभावः, सलोपः, 'ससजुषो'रिति षस्य रुत्वं,
'र्वोरुपधायाः' इति दीर्घः।

* इति मध्यकौमुदीबालमनोरमायां हलन्तस्त्रीलिङ्गप्रकरणम् *

अपोभि। 'अप्' शब्द को तकार आदेश हो, भकारादि प्रत्यय परे रहते।

१ लिखितेऽयं पाठो नास्ति। २ क्वचिन्न।
४ लिखितेषु नास्ति।
...क्षिप्तः पाठः।

## अथ हलन्ता नपुंसकलिङ्गाः ।

स्वसोर्लुक् । दत्वम् । स्वनडुत् । स्वनडुही । 'चतुरनडुहो स्वनड्वांहि । पुनस्तद्वत् । शेषं पुंवत् ॥ वाः । वारी । वारि वार्भ्याम् ॥ चत्वारि ॥ किम् । के । कानि ॥ इदम् । इमे ।

***अन्वादेशे नपुंसके एनद्वक्तव्यः ।** एनत् । एने । एनेन । एनयोः २ ॥ [ [1]व्योम । व्योम्नी-व्योमनी । व्योमा ब्रह्म । ***संबुद्धौ नपुंसकानां नलोपो वा वाच्यः ।** हे ब्र ब्रह्मन् । ब्रह्मणी । ब्रह्माणि ॥

दत्वमिति । 'वसुस्रंसु' इत्यनेनेति शेषः । दत्वविधेः पदाधिका तदन्तेऽपि प्रवृत्तेरिति भावः । नच तत्रापि 'न लुमता' इति निषेधः दत्वस्य सुबन्तत्वरूपपदत्वनिमित्तकतयाऽङ्गकार्यत्वाऽभावादित्याहुः ।

स्वनडुदिति । दत्वे चर्त्वविकल्पः । 'उरःप्रभृतिभ्यः कप्' इति क शङ्क्यं, तत्र गणे अनड्वानित्येकवचनान्तस्यैव पाठात् । स्वनडुही 'नपुंसकाच्चे'त्यौङः शीभावः । स्वनड्वांहीति । 'जश्शसोः शिः' इति शि तस्य सर्वनामस्थानत्वादामि नुम् ।

'जायन्ते नव सौ, तथाऽमि च नव, भ्यांभिस्भ्यसां संगमे
षट्सङ्ख्यानि, नवैव सुप्यथ जसि त्रीण्येव, तद्वच्छसि ।
चत्वार्यन्यवचस्सु कस्य विबुधाः ! शब्दस्य रूपाणि त-
ज्जानन्तु प्रतिभाऽस्ति चेन्निगदितुं षाण्मासिकोऽत्रावधिः ॥'

अन्वादेशे । अन्वादेश में नपुंसक में 'इदम्' और 'एतद्' शब्द 'एनत्' आदेश विकल्प करके हो , द्वितीया, टा और ओस् परे रहते ।

सम्बुद्धौ नपुंसकानां । नपुंसकलिङ्ग में वर्तमान नकारान्त शब्दों नकार का लोप हो विकल्प करके, सम्बुद्धि परे रहते ।

[1] अयं पाठो लिखिते न दृश्यते ।

रोऽसुपि । अहः । विभाषा ङिश्योः । अह्नी-अहनी । अहानि ॥ अहन् ।८।२।६८। अहन्नित्यस्य रुः पदान्ते । अहोभ्याम् ॥ दण्डि । दण्डिनी । दण्डीनि ॥ सुपथि । टिलोपः—सुपथी । सुपन्थानि ॥ ऊर्क् । ऊर्जी । ऊर्न्जि । नरजानां संयोगः ॥ [ [1]त्यद् । त्ये । त्यानि ] । तत् । ते । तानि ॥ यत् ये । यानि ॥ एतत् । एते । एतानि ॥

[ [2]'अवङ् स्फोटायनस्ये'ति अवङ् ।

गवाक्शब्दस्य रूपाणि क्लीबेऽर्चागतिभेदतः ।
असन्ध्यवङ्पूर्वरूपैर्नवाधिकशतं मतम् ॥ १ ॥
स्वमुसुप्सु नव, षड् भादौ षट्के स्युस्त्रीणि जश्शसोः ।
चत्वारि शेषे दशके रूपाणीति विभावय ॥ २ ॥ ]

—इति प्राचीनस्य कस्यचिद्विदुषः प्रश्नस्य श्लोकद्वयेनोत्तरमाह—गवाक्छब्दस्येति । अर्चागतिभेदत इति । 'अनिदिताम्' इत्यञ्चेर्गतौ नकारस्य लोपः । पूजायां तु 'नाञ्चेः पूजायाम्' इति निषेधान्नस्य लोपो नेत्येवं गतिपूजात्मकार्थभेद-निबन्धन-नलोपतदभावाभ्यामित्यर्थः । 'असन्धी'त्यनेन प्रकृतिभावो विवक्षितः । 'असन्ध्यवङ्पूर्वरूपै'रित्यनन्तरं 'च'शब्दोऽध्याहर्तव्यः । 'शत'मित्यनन्तर-मितिशब्दश्च । तथा च गत्यर्थपूजार्थभेदनिबन्धननलोपतदभावाभ्यामसन्ध्यवङ्-पूर्वरूपैश्च गवाक्छब्दस्य रूपाणि नवाधिकशतमिति मतं = विदुषां संमतमित्यर्थः । 'एतेन 'विंशत्याद्याः सदैकत्वे संख्याः संख्येयसंख्ययो'रिति कोशात् शतशब्दस्य संख्यापरत्वे 'गवाक्छब्दस्य रूपाणा'मिति भाव्यं, संख्येयपरत्वे तु 'मत'मित्येक-वचनानुपपत्तिरिति निरस्तम् ।

'नवाधिकशत'मित्येतत् प्रपञ्चयति—स्वम्सुप्सु नवेति । 'प्रत्येक'मिति शेषः । 'रूपाणी'ति सर्वत्रान्वेति । षड्भादौ षट्के स्युरिति । भिसि, भ्यांत्रये,

अहन् । 'अहन्' शब्द को 'रु' अन्तादेश हो, पदान्त में ।

१ लिखिते नास्ति ।

२ अयं पाठो लिखितेषु नास्ति । मुद्रिते केनापि वर्द्धितः ।

गवाक्-गवाग्। गोची। गवाञ्चि। पुनस्तद्वत्। गोचा। गवाग्भ्याम्॥ [ यकृत्[1] ]॥ शकृत्। शकृती। शकृन्ति। शकृद्भ्याम्॥

ददत्। ददती। वा नपुंसकस्य।७।१।७९। अभ्यस्तात्परो यः [2]शतुरवयवस्तदन्तस्य क्लीबस्य नुम्वा स्यात्सर्वनामस्थाने। ददन्ति-ददति॥

तुदत्। आच्छीनद्योर्नुम्।७।१।८०। अवर्णान्ता[दङ्गा]त्परो यः शतुरवयवस्तदन्तस्य नुम्वा, शीनद्योः। तुदन्ती तुदती। तुदन्ति॥

भात्। भाती। भान्ति॥

पचत्। शप्श्यनोर्नित्यम्।७।१।८१। शप्श्यनोरात्परो यः शतुरवयवस्तदन्तस्य नुम्, शीनद्योः। पचन्ती। पचन्ति॥

दीव्यत्। दीव्यन्ती। दीव्यन्ति॥

धनुः। धनुषी। 'सान्ते'ति दीर्घः। नुम्विसर्जनीयेति षः। धनूंषि। धनुषा। धनुर्भ्याम्॥ एवं चक्षुर्हविरादयः॥ पयः। पयसी। पयांसि। पयोभ्याम्॥ सुपुम्। सुपुंसी। सुपुमांसि॥

अदः। विभक्तिकार्यम्। उत्वमत्वे। अमू। अमूनि। शेषं पुंवत्॥

* इति हलन्ता नपुंसकलिङ्गाः *

---

भ्यसद्वये च प्रत्येकं षडित्यर्थः। त्रीणि जश्शसोरिति। 'प्रत्येक'मिति शेषः। चत्वारि शेषे दशके इति। 'प्रत्येक'मिति शेषः।

* इति मध्यकौमुदीव्याख्यायां बालमनोरमाख्यायां हलन्तनपुंसकलिङ्गप्रकरणम् *

---

वा नपुंसकस्य। अभ्यस्त से परे जो 'शतृ' प्रत्यय (का अवयव), तदन्त जो क्लीव अङ्ग, उसको 'नुम्' का आगम हो विकल्प करके, सर्वनामस्थान परे रहते।

आच्छीनद्योः। अवर्णान्त से परे जो 'शतृ' का अवयव, तदन्त जो अङ्ग उसको 'नुम्' का आगम हो विकल्प करके, 'शी' और नदी परे रहते।

शप्श्यनोः। 'शप्' और 'श्यन्' के अकार से परे जो 'शतृ' का अवयव, तदन्त जो अङ्ग, उसको नित्य नुम् का आगम हो, 'शी' और नदी परे रहते।

---

१ लिखिते नास्ति। २ 'यः शता, तदन्तस्य' इति तु सिद्धान्तकौमुद्याम्।

## [ [1]अथाव्ययानि ] ।

स्वरादिनिपातमव्ययम् ।७।१।३७। [2]स्वरादयो, निपाताश्चाऽव्ययसञ्ज्ञाः स्युः । स्वर् । अन्तर् । प्रातर् । पुनर् । सनुतर् । उच्चैस् । नीचैस् । शनैस् । ऋधक् । ऋते । युगपत् । आरात् । पृथक् । ह्यस् । श्वस् । दिवा । रात्रौ । सायम् । चिरम् । मनाक् । ईषत् । जोषम् । तूष्णीम् । बहिस् । अवस् । समया । निकषा । स्वयम् । वृथा । नक्तम् । नञ् । हेतौ । इद्धा । अद्धा । सामि । वत् । ब्राह्मणवत् । क्षत्रियवत् ।

---

स्वरादिनिपातमव्ययम् । स्वर् आदिर्येषां ते—स्वरादयः, ते च निपाताश्चेति समाहारद्वन्द्वः । फलितमाह-स्वरादय इति । स्वरादीन् पठति-स्वरित्यादिना । स्वरादीनां, चादीनां च पृथक्पाठस्तु—'निपाता आद्युदात्ताः' इति स्वरभेदार्थः, चादीनामसत्त्ववाचिनामेवाऽव्ययत्वं, स्वरादीनां तु सत्त्ववाचिनामपि तदिति व्यवस्थार्थश्च । स्वर् स्वर्गे पारत्रिकसुखविशेषे, परलोके च । अन्तर् मध्ये । प्रातर् प्रत्यूषे । पुनर् अप्रथमे, विशेषे च । सनुतर् अन्तर्धाने । स्वराद्याः पञ्च रेफान्ताः । तेन 'स्वर्यातिः' 'प्रातरत्र'त्यादौ 'हशि च' इत्युत्वं न, तत्र 'रोः' इत्युकारानुबन्धग्रहणात् । उच्चैस् महति । नीचैस् अल्पे । शनैस् क्रियामान्द्ये । ऋधक् सत्ये । वियोगशैघ्र्यसामीप्यलाघवेष्वित्यन्ये । ऋते वर्जने । युगपत् एककाले । आरात् दूरसमीपयोः । पृथक् भिन्ने । ह्यस् अतीतेऽह्नि । श्वस् अनागतेऽह्नि । दिवा दिवसे । रात्रौ निशि । सायम् निशामुखे । चिरम् बहुकाले । मनाक्, ईषत् इदं द्वयमल्पे । जोषम् सुखे, मौने च । तूष्णीम् मौने । बहिस् अवस्-इदं द्वयं बाह्ये । समया समीप, मध्ये च । निकषा अन्तिके । स्वयम् आत्मनेत्यर्थे । वृथा व्यर्थे । नक्तम् रात्रौ । नञ् निषेधे । हेतौ निमित्ते । इद्धा प्राकाश्ये । अद्धा स्फुटावधारणयोः । तत्त्वातिशययोरित्यन्ये । सामि अर्धे, जुगुप्सिते च । वत् इत्यनेन 'तेनतुल्यं क्रिया चेद्वतिः'

---

स्वरादि । स्वरादि और निपात अव्यय सञ्ज्ञक हों ।

---

१ क्वचिन्न दृश्यते । २ वृत्तिरियं क्वचिन्न दृश्यते ।

¹सना। सनत्। सनात्। तिरस्। उपधा। अन्तरा। अन्तरेण। ज्योक्। कम्। शम्। सहसा। विना। नाना। स्वस्ति। स्वाहा। स्वधा। अलम्। वषट्। श्रौषट्। वौषट्। अन्यत्। अस्ति। उपांशु। क्षमा। विहायसा। दोषा। मृषा। मिथ्या। मुधा। पुरा। मिथो। मिथस्। प्रायस्। मुहुस्। प्रवाहुकम्। प्रवाहिका। आर्य-हलम्। अभीक्ष्णम्। साकम्। सार्धम्। नमस्। हिरुक्। धिक्। अथ। अम्। आम्। प्रताम्। प्रशाम्। प्रतान्।

---

'तत्र तस्येव' 'तदर्हम्' इति विहितो वतिप्रत्ययो गृह्यते। ब्राह्मणवत्, क्षत्रियवत् इति वतिप्रत्ययान्तस्योदाहरणम्। केवलप्रत्ययस्याऽव्ययत्वे प्रयोजनाऽभावात्।

सना, सनत्, सनात्, एतत्त्रयं नित्ये। उपधा भेदे। तिरस् अन्तर्धौ, तिर्यगर्थे, पराभवे च। अन्तरा मध्ये, विनार्थे च। अन्तरेण वर्जने। वस्तुतस्तु 'अन्तराऽन्तरेण युक्ते' इति सूत्रे भाष्ये अन्तरा–अन्तरेण इत्यनयोर्निपातत्वोक्तेरनयोः स्वरादिषु पाठः प्रक्षिप्त इति बोध्यम्। ज्योक्—कालभूयस्त्वे, प्रश्ने, शीघ्रार्थे, सम्प्रतीत्यर्थे च। कम्—वारिमूर्धनिन्दासुखेषु। शम्—सुखे। सहसा—आकस्मिकाऽविमर्शयोः। विना—वर्जने। नाना—अनेकविनार्थयोः। स्वस्ति—मङ्गले। स्वाहा—देवहविर्दाने। स्वधा—पितृहविर्दाने। अलम्—भूषणपर्याप्तिशक्तिवारणनिषेधेषु। वषट्, वौषट्, श्रौषट्—एतत्त्रयं देवहविर्दाने। अन्यत्—अन्यार्थे। अस्ति—सत्तायाम्। 'उपसर्गविभक्तिस्वरप्रतिरूपकाश्च' इति चाद्यन्तगणसूत्रादेव 'अस्ति'शब्दस्य विभक्तिप्रतिरूपकस्य अव्ययत्वसिद्धेरिह स्वरादिगणे तस्य पाठो व्यर्थ एवेति परे।

उपांशु—अप्रकाशोच्चारणे, रहस्ये च। क्षमा-क्षान्तौ। विहायसा—आकाशे। दोषा—रात्रौ। मृषा, मिथ्या—इदं द्वयं वितथे। मुधा—व्यर्थे। पुरा—अविरते, चिरातीते, भविष्यदासन्ने च। मिथो मिथस्—इदं द्वयं रहसि, सहार्थे च। प्रायस् बाहुल्ये। मुहुस् पुनरर्थे। प्रबाहुकम् समकाले, ऊर्ध्वार्थे च। प्रवाहिका इति पाठान्तरम्। आर्यहलम्—बलात्कारे। शाकटायनस्तु 'आर्येति प्रतिबन्धे, 'हल'मिति निषेधानुवादयो'रित्याह। अभीक्ष्णम्—पौनःपुन्ये। साकम् सार्धम्—इदं द्वयं सहार्थे। नमस्—नतौ। हिरुक्—वर्जने। धिक्—निन्दाभर्त्स-

---

१ 'सना। उपधा। सनत्। सनात्। तिरस्। अन्तरा' इत्येवं क्वचित्ते पाठः।

मा। माङ्। आकृतिगणोऽयम्।

च। वा। ह। अह। एव। एवम्। नूनम्। शश्वत्। युगपत्। भूयस्। कूपत्। [[1]सूपत्]। कुवित्। नेत्। चेत्। चण्। यत्र। कच्चित्। नह। हन्त। माकिः। माकिम्। नकिः। [2]नकिम्। [[3]आकीम्]। माङ्। नञ्। यावत्। त्वै। न्वै। द्वै। रै। श्रौषट्। वौषट्। स्वाहा।

---

नयोः। अम्—शैघ्र्ये, अल्पे च। आम्—अङ्गीकारे। प्रताम्—ग्लानौ। प्रशाम्—समानार्थे। प्रतान् विस्तारे। अत्र 'प्रतान्' इति नान्तस्य पुनः पाठसामर्थ्यात् प्रताम्—प्रशाम् इति पूर्वयोः 'मो नो धातोः' इति नत्वं न। प्रशान् इति नान्तपाठस्तु असाम्प्रदायिकः।

मा, माङ् एतौ निषेधे। आकृतिगणोऽयमिति। एवञ्च अन्येऽप्येवंजातीयकाः स्वरादिगणे ज्ञेयाः।

अथ चादीनाह—च वा इत्यादिना। च समुच्चयान्वाचयेतरेतरयोगसमाहारेषु। वा विकल्पादिषु। 'वा स्याद्विकल्पोपमयोरिवार्थेऽपि समुच्चये' इत्यमरः। ह प्रसिद्धौ। अह अद्भुते, खेदे च। एव अवधारणे, अनवक्लृप्तौ च। एवम् उक्तपरामर्शे। नूनम् निश्चये, तर्के च। शश्वत् पौनःपुन्ये, नित्ये, सहार्थे च। युगपत् एककाले। भूयस् पुनरर्थे, आधिक्ये च। कूपत् प्रश्ने, प्रशंसायां च। कुवित्—भूर्यर्थे, प्रशंसायां च। नेत् शङ्कायां प्रतिषेधविचारसमुच्चयेषु च। चेत् यद्यर्थे। चण् अयं चेदर्थे णित्, समुच्चयादिष्वननुबन्धकः। अनयोः स्वरे भेदः।

यत्र अनवक्लृप्त्यमर्षगर्हाश्चर्येषु। 'नावकल्पयामि, न मर्षये, गर्हे, आश्चर्यं वा यत्र भवान् वृषलं याजयेत्'। कच्चित् इष्टप्रश्ने। नह प्रत्यारम्भे। हन्त हर्षे, विषादे, अनुकम्पायां, वाक्यारम्भे च। माकिः, माकिम्, नकिः, इदं त्रयं वर्जने। माङ्नञौ स्वरादिषूक्तौ।

यावत्, तावत् इदं द्वयं साकल्यावधिमानावधारणेषु। त्वै विशेषवितर्कयोः। द्वै वितर्के। 'न्वै' इति पाठान्तरम्। रै दाने, अनादरे च। श्रौषट्, वौषट्,

---

१ क्वचिल्लिखितेषु दृश्यते। २ क्वचिन्न। ३ 'आकिम्' पा०।

स्वधा । अलम् । वषट् । तुम् । तथाहि । खलु । किल । अथ । सुष्ठु । स्म । आदह ॥ उपसर्गविभक्तिस्वरप्रतिरूपकाश्च । अवदत्तम् । अहंयुः । अस्तिक्षीरा । अ । आ । इ । ई । उ । ऊ । ए । ऐ । ओ । औ । पशु । शुकम् । यथा । कथाच । पाट् । प्याट् । अङ्ग । है । हे । भोः । अये ।

---

स्वाहा इदं त्रयं देवहविर्दाने । स्वधा पितृदाने । श्रौषडादीनामनेकाचां त्रयाणां स्वरभेदार्थं उभयत्र पाठः । तुम् तुङ्कारे । तथाहि निदर्शने । खलु निषेधवाक्यालङ्कारनिश्चयेषु । किल इवार्थे, वार्तायाम्, अलीके च । अथ मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्याधिकारप्रतिज्ञासमुच्चयेषु । अयं स्वरादावपि । तेन मङ्गलवाचकस्य सत्त्वार्थकत्वेऽप्यव्ययत्वम् ।

सुष्ठु इत्यस्य स्वरभेदार्थः पुनः पाठः । स्म अतीते, पादपूरणे च । आदह उपक्रमहिंसाकुत्सनेषु ।

उपसर्गविभक्तिस्वरप्रतिरूपकाश्चेति । चादिगणसूत्रमेतत् । उपसर्गप्रतिरूपकाः, विभक्त्यन्तप्रतिरूपकाः, अच्प्रतिरूपकाश्च चादिगणे पाठ्या इत्यर्थः ।

तत्रोपसर्गप्रतिरूपकमुदाहरति—अवदत्तमिति । अत्र अवेत्युपसर्गप्रतिरूपकं, न तूपसर्गः । ततश्च 'अच उपसर्गात्तः' इति तो न भवति । तादेशे तु 'अवत्त'मिति स्यात् । अहंयुरिति । 'अह'मिति सुबन्तप्रतिरूपकम्, अहङ्कारे । 'अहंशुभमोर्युस्' इति मत्वर्थीयो युस् । अत्र अहमिति न अस्मच्छब्दस्य प्रथमैकवचनान्तम् । तथा सति 'प्रत्ययोत्तरपदयोश्च' इति मपर्यन्तस्य मदादेशे 'मद्यु'रित्यापत्तेः । अस्तिक्षीरेति । अस्ति=विद्यमानं क्षीरं यस्या इति बहुव्रीहिः । अत्र अस्तीति तिङन्तप्रतिरूपकमव्ययं, नतु तिङन्तम् । तथा सति बहुव्रीह्यनुपपत्तेः । 'अनेकमन्यपदार्थे' इति बहुव्रीहिविधौ सुबित्यनुवृत्तेः ।

स्वरप्रतिरूपकानुदाहरति—अ इत्यादिना । अ सम्बोधने । आ वाक्यस्मरणयोः । इ सम्बोधनजुगुप्साविस्मयेषु । ई उ ऊ ए ऐ ओ औ इति सप्त सम्बोधने । पशु—सम्यगर्थे । शुकम्—शैघ्र्ये । यथाकथाच समुदायोऽयमनादरे ।

---

उपसर्गविभक्ति । उपसर्ग प्रतिरूपक ( = सदृश), विभक्त्यन्त प्रतिरूपक और स्वर ( अच् ) प्रतिरूपक का चादिगण में पाठ जानना ।

घ । विषु । एकपदे । [1]युत् । आतः । चादिरप्याकृतिगणः ॥

[ [2]तद्धितश्चाऽसर्वविभक्तिः । १ । १ । ३८। यस्मात्सर्वा विभक्ति-र्नोत्पद्यते स तद्धितान्तोऽप्यव्ययं स्यात् । परिगणनं कर्तव्यम् ]। तसिलादयः प्राक् पाशपः । शस्प्रभृतयः प्राक् समासान्तेभ्यः । अम् । आम् । कृत्वोऽर्थाः । तसिवती । नानाञौ—[ [3]इति ] । एतदन्तमप्यव्य-

पाट् प्याट् अङ्ग है हे भोः अये एते सत सम्बोधने । घ—हिंसाप्रातिलोम्यपाद-पूरणेषु । विषु—नानार्थे । एकपदे—अकस्मादित्यर्थे । युत्—कुत्सायाम् । आतः—इतोऽर्थे । चादिरप्याकृतिगण इति । तेन—यत् तत् द्वयं हेतौ । आहोस्वित् विकल्पे । सम् सर्वतोभावे । कम् पादपूरणे । सुकम् अतिशये । ननु वितर्के शम्वट् अन्तःकरणे, आभिमुख्ये च । व पादपूरणे इवार्थे च । चटु, चाटु द्वयं प्रियवाक्ये । हुम् भर्त्सने । इव सादृश्ये । अद्यत्वे इदानीमित्यर्थे । इत्या-दीनामप्यत्रान्तर्भावः । अत्र स्वरादिचाद्योराकृतिगणत्वेऽपि येषां निपातस्वर इष्टस्ते चादिषु, अन्ये तु स्वरादिषु, स्वरद्वयभाजस्तु उभयत्र बोध्या इति विवेकः।

तसिलादय इति । 'पञ्चम्यास्तसिल्' इत्यारभ्य 'द्वित्र्योश्च धमुञ्' इत्यन्ता इत्यर्थः । शस्प्रभृतय इति । 'बह्वल्पार्थात्' इत्यारभ्य 'अव्यक्तानुकरणात्' इति डाजन्ता इत्यर्थः । अम् आमिति । 'अमु च च्छन्दसि' इत्यम्, 'किमेत्ति-ङव्ययघा'त्याम् च गृह्यते । कृत्वोऽर्था इति । 'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्', 'द्वित्रिचतुर्भ्यः सुच्', 'विभाषा बहोर्धा' इति त्रय इत्यर्थः ।

तसिवती इति । 'तेनैकदिक्', 'तसिश्च' इति तसिः, 'तेन तुल्यम्' इत्या-दिविहितो वतिश्च गृह्यते । 'प्रतियोगे पञ्चम्यास्तसिः' इत्यस्य तु शस्प्रभृतित्वादेव सिद्धम् । एवं च स्वरादिषु 'व'दित्यस्य प्रयोजनं चिन्त्यम् । नानाञाविति । 'विनञ्भ्यां नानाञौ न सहे'ति विहितौ नानाञौ । इति = इत्येवं परिगणनं

तद्धितश्चा । जिससे सब विभक्ति उत्पन्न नहीं होती हों ऐसा जो तद्धितान्त वह भी अव्ययसञ्ज्ञक हो ।

1 'यत्' पा० । 2 लिखितेऽयं पाठः क्वचिन्नास्ति । 3 क्वचिन्न ।

यम् । [ [1]पचतिकल्पम् ] अत [[2]इत्यादि] ॥

कृन्मेजन्तः ।१।१।३९। कृद्यो मान्त, एजन्तश्च तदन्तमप्यव्ययम्। स्मारं स्मारम् । जीवसे । पिबध्यै ॥

क्त्वातोसुन्कसुनः ।१।१।४०। एतदन्तमप्यव्ययम् । कृत्वा । उदेतोः । विसृपः । अव्ययीभावश्च ।१।१।४१। [ अव्ययं [3]स्यात् ] अधिहरि ॥

---

कर्तव्यमित्यन्वयः । गणे परिगणनेनैव सिद्धेः 'तद्धितश्चे'ति सूत्रं न कर्तव्यमिति भावः ।

कृन्मेजन्तः । कृत् मेजन्त इति छेदः । म् च एच्च मेचौ, तौ अन्ते यस्येति बहुव्रीहिः । तदाह—कृद्यो मान्त इति । तदन्तमिति । केवलस्य कृतः प्रयोगानर्हत्वात् संज्ञाविधावपि तदन्तविधिरिति भावः । स्मारं स्मारमिति । 'आभीक्ष्ण्ये णमुल् च' इति स्मृधातोर्णमुल्, 'अचो ञ्णिति' इति वृद्धिः, रपरत्वम्, 'नित्यवीप्सयोः' इति द्वित्वं, मान्तकृदन्तत्वादव्ययत्वम् ।

जीवसे इति । 'तुमर्थे सेसेनसे' इत्यादिना असेप्रत्ययः । पिबध्यै इति । 'तुमर्थे से' इत्यादिना शध्यैप्रत्ययः । शित्त्वात् सार्वधातुकत्वम् । 'पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदाम्' इति पिबादेश इति भावः । शप् तु न, कर्त्रर्थे सार्वधातुके तद्विधेः, 'अव्ययकृतो भावे' इति सिद्धान्तादित्याहुः ।

क्त्वातोसुन्कसुनः । कृत्वेति । 'समानकर्तृकयोः' इति क्त्वा । उदेतोरिति । उत्पूर्वादिणो 'भावलक्षणे' इत्यादिना तोसुन् । विसृप इति । 'सृपितृदोः कसुन्' । अव्ययीभावश्चेति । 'अव्ययसंज्ञः स्या'दिति शेषः । अधिहरीति । विभक्त्यर्थेऽव्ययीभावः । हरावित्यर्थः ।

---

कृन्मेजन्तः । कृत् जो मान्त और कृत् जो एजन्त, तदन्त की भी अव्यय सञ्ज्ञा हो ।

क्त्वातोसुन् । 'क्त्वा' 'तोसुन्' 'कसुन्' प्रत्ययान्त की भी अव्यय सञ्ज्ञा हो ।

अव्ययीभावश्च । अव्ययीभाव समासकी भी अव्यय सञ्ज्ञा हो ।

---

[1] लिखिते न दृश्यते । [2] क्वचिन्न । [3] क्वाचित्कः पाठः ।

अव्ययादाप्सुपः ।२।४।८२। अव्ययाद्विहितस्याऽऽपः, सुपश्च लुक्। तत्र शालायाम्। [1]अथ। विहितविशेषणान्नेह—अत्युच्चैसौ। अव्ययसंज्ञायां यद्यपि तदन्तविधिरस्ति तथापि न गौणे ॥

आब्ग्रहणं व्यर्थम्, अव्ययस्याऽलिङ्गत्वात्। तथा च श्रुतिः—

'सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥ १ ॥'
वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः।
आपं चैव हलन्तानां यथा वाचा निशा दिशा ॥ २ ॥

अवगाहः। वगाहः। अपिधानम्। पिधानम् ॥

इत्यव्ययानि ॥

* इति सुबन्तप्रकरणम् *

---

अव्ययादाप्सुप इति। आप् च सुप् च आप्सुप्, तस्य आप्सुपः, समाहारद्वन्द्वात् षष्ठी। 'ण्यक्षत्रियार्ष'त्यतो लुगित्यनुवर्तते। तदाह—अव्ययाद्विहितस्येति। तत्र शालायामिति। तत्रेत्यस्याव्ययत्वादापो लुक्। स्त्रीत्वबोधनाय प्रकृते 'शालाया'मिति। अत्युच्चैसाविति। अत्र सुपो न लुक्।

आब्ग्रहणं व्यर्थमिति। 'अव्ययादाप्सुप इति सूत्रे' इति शेषः। अलिङ्गत्वादिति। अव्ययानां लिङ्गाऽभावादित्यर्थः। तथाच वार्तिकम्,—'अव्ययादाब्लुग्वचनानर्थक्यं लिङ्गाभावादि'ति। इति—सिद्धान्तकौमुदीव्याख्यायां बालमनोरमायां श्रीवासुदेवदीक्षिताः प्राहुरिति शम्।

* इति मध्यकौमुदीव्याख्यायां बालमनोरमायामव्ययप्रकरणम् *

---

अव्ययादाप्सुपः। अव्यय से विहित जो आप् और सुप्, उनका लुक् हो।

सदृशं त्रिषु। तीनों लिङ्गों मे, सब विभक्तियों में, सब वचनों में जिसका समान ही रूप हो, कुछ भी भेद नहीं हो, वह 'अव्यय' कहलाता है।

वष्टि भागुरिः। भागुरि आचार्य—'अव' और 'अपि' उपसर्ग के अकार का लोप चाहते हैं। और हलन्त स्त्रीलिङ्ग शब्दों से 'आप्' ( टाप् ) भी चाहते हैं। जैसे—'वाच्'शब्द में 'वाचा', 'निश्' में 'निशा', 'दिश्' में 'दिशा' ॥

---

१ इदं हि लिखितेषु दृश्यते।

॥ श्रीगणेशाय नमः ॥

# अथ मध्यसिद्धान्तकौमुद्याम्—तिङन्तप्रकरणम् ।

## अथ तिङन्ते भ्वादयः ।

[ [1]धातोः ।३।१।९१। अधिकारोऽयम् । वक्ष्यमाणाः प्रत्यया धातोर्ज्ञेयाः ] ।

[2]लट् । लिट् । लुट् । लृट् । लेट् । लोट् । लङ् । लिङ् । लुङ् । लृङ् । एषु पञ्चमो लकारश्छन्दोमात्रगोचरः । लः कर्मणि च भावे चाऽकर्मकेभ्यः ।३।४।६९। लकाराः सकर्मकेभ्यः कर्मणि, कर्तरि च स्युरकर्मकेभ्यो भावे, कर्तरि च । वर्तमाने लट् ।३।२।१२३।

※ श्रीगुरुप्रसन्नशास्त्रिसङ्कलिता बालमनोरमा ※

एषु = दशसु लकारेषु । पञ्चमः = लेट्लकारः । छन्दोमात्रेति । 'छन्दसि लुङ्लङ्लिटः' इत्यतश्छन्दसीत्यनुवर्त्त्य 'लिङर्थे लेट्' इत्यनेन लेटो विधानाद्वेदे एव 'भवाती'त्यादौ लेट् प्रयुज्यते, न लोके इत्यर्थः । लः कर्मणीति । अत्र 'लः कर्मणि च'इत्येकं वाक्यं । चकारेण च 'कर्त्तरि कृ'दित्यतः 'कर्त्तरी'त्यनुकृष्यते । तेन 'लकाराः कर्मणि कर्त्तरि च धातोः स्यु'रित्यर्थो लभ्यते । सकर्मकधातुविषयकञ्चेदं वाक्यम्, अकर्मकेषु 'कर्मणी'त्यंशस्य बाधितत्वात् । 'भावे चाऽकर्मकेभ्यः' इति चाऽपरं वाक्यम् । चकारेण कर्त्तुरनुकर्षः, तेन अकर्मकेभ्यो धातुभ्यो भावे, कर्त्तरि च लकारा भवन्तीत्यर्थो लभ्यते । तदाह—अकर्मकेभ्य इति ।

[ धातोः । 'धातोः' यह अधिकार है ] ।

लः कर्मणि च । लकार–सकर्मक धातु से कर्म और कर्त्ता अर्थ में हों, और अकर्मक धातु से भाव और कर्त्ता में ( लकार ) हों ।

वर्त्तमाने लट् । वर्त्तमानकालिकक्रियावाचि धातु से लट् लकार हो ।

१ अयं पाठो त्रिष्वपि लिखितादर्शेषु नास्ति । मन्ये मुद्रिते केनापि प्रक्षिप्तः ।
२ इतः पूर्वम् "श्रीगणेशाय नमः । अविघ्नमस्तु । ॐ" इति लिखितेषु पाठो दृश्यते ।

भ्वा

~~~~मनेपदं स्यात्। **स्वरितञितः कर्त्रभिप्राये क्रियाफले ।१।३।७२।**
वरितेतो, ञितश्च धातोरात्मनेपदं [1]स्यात् कर्तृगामिनि क्रियाफले।
**शेषात्कर्तरि परस्मैपदम् ।१।३।७८।** आत्मनेपदनिमित्तहीनाद्धातोः
कर्तरि [ [2]लस्य ] परस्मैपदं स्यात्।

**तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः ।१।४।१०१।** तिङ
उभयोः पदयोस्त्रयस्त्रिकाः क्रमादेतत्संज्ञाः स्युः। **तान्येकवचनद्विवचन-
बहुवचनान्येकशः ।१।४।१०२।** लब्धप्रथमादिसंज्ञानि तिङस्त्रीणि
त्रीणि [ वचनानि[2] ] प्रत्येकमेकवचनादिसञ्ज्ञानि स्युः।

**युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः ।१।४।१०५।**

---

ऋत्विग्गामित्वेऽपि वेदबोधितस्वर्गादिफलस्य ऋत्विग्गामित्वाऽभावान्नात्मनेपदम्।
नापि 'भृत्यः पाचकः पचती'त्यादौ द्रव्यलाभरूपफलस्य पाचकगामित्वेऽपि
पचेरात्मनेपदं, मुख्यस्य तृप्तिरूपलोकसिद्धफलस्य पक्तृगामित्वाऽभावात्।

'तानी'ति तच्छब्देन लब्धप्रथमादिसञ्ज्ञानि तिङस्त्रीणि त्रीणि परामृश्यन्ते,
तदाह—लब्धेति। एकशः—अव्ययपदम्। शेषं प्रथमान्तम्।

---

स्वरितञितः। स्वरितेत् धातु और ञित् धातु से 'आत्मनेपद' हो
कर्तृगामी क्रियाफल में।

शेषात्कर्तरि। आत्मनेपदनिमित्त से हीन जो धातु उससे परे जो कर्त्रर्थ
लकार, उसके स्थान में 'परस्मैपद' हो।

तिङस्त्रीणि। तिङ् सम्बन्धी आत्मनेपद और परस्मैपद के जो तीन
त्रिक, वे क्रमसे–प्रथम, मध्यम, उत्तम ( पुरुष ) सञ्ज्ञक हों।

तान्येकवचन। लब्ध हुई है प्रथम (पुरुष) आदि सञ्ज्ञा जिसको ऐसे जो तिङ्
के तीन तीन वचन, वे प्रत्येक करके एकवचन, द्विवचन, बहुवचनसञ्ज्ञक हों।

युष्मद्युपपदे। तिङ्वाच्यकारकवाची जो युष्मद् शब्द वह अप्रयुज्यमान
हो या प्रयुज्यमान हो तो भी मध्यम पुरुष हो।

---

1 'स्याद'दिति क्वाचित्कम्। 2 लिखितादर्शेषु क्वापि नास्ति।
~~~~

वर्तमानक्रियावृत्तेर्धातोर्लट् स्यात्। अटावितौ। उच्चारणसामर्थ्यान्न स्येत्त्वम्[1]। भू सत्तायाम्। कर्तृविवक्षायां 'भू-ल्' इति स्थिते। लस्य ।३।४।७७। [इत्यधिकृत्य[3]]। तिप्तस्झि-सिप्थस्थ-मिब्वस्मस्-तातांझ-थासाथांध्व-मिड्वहिमहिङ् ।३।४।७८। एतेऽष्टादश लादेशाः स्युः।

लः परस्मैपदम् ।१।४।९९। लादेशाः परस्मैपदसंज्ञाः स्युः। तङानावात्मनेपदम् ।१।४।१००। तङ्प्रत्याहारः, शानच्कानचौ चैतत्संज्ञाः स्युः। पूर्वसञ्ज्ञाऽपवादः। अनुदात्तङित आत्मनेपदम् ।१।३।१२। अनुदात्तेत, उपदेशे यो ङित्तदन्ताच्च धातोर्लस्य स्थाने

---

अत्र चकारेण कर्मणस्तु नाऽनुकर्षः, अकर्मकेषु कर्मणोऽसम्भवात्। सकर्मकत्वञ्च-फलव्यधिकरणव्यापारवाचकत्वम्। फलसमानाधिकरणव्यापारवाचकत्वञ्चाऽकर्मकत्वम्। तदुक्तं—'फलव्यापारयोरेकनिष्ठतायामकर्मकः' इति।

तिप्तसिति। समाहारद्वन्द्वे प्रथमैकवचनान्तमेतत्। लस्येत्यधिकृतं, तच्च स्थानषष्ठ्यन्तं, तदाह—लादेशा इति।

लः परेति। लः षष्ठ्यन्तं, परस्मैपदं—प्रथमान्तम्। धातोरिति। 'विहितस्य (लस्य) स्थाने' इति शेषः। क्रियाफलञ्च यदुद्देशेन लोकतो, वेदतो वा क्रियासु प्रवृत्तिस्तदेव। तेन 'ऋत्विग्यजती'त्यादौ दक्षिणालाभरूपफलस्य

---

[ लस्य। यह अधिकार सूत्र है ]।

तिप्तस्। लकार के स्थान में तिबादि अठारह १८ आदेश हों।

लः परस्मैपदम्। लस्थानिक जो आदेश, उनकी 'परस्मैपद' सञ्ज्ञा हो।

तङानावात्मने। 'तङ्' प्रत्याहार और 'शानच्' 'कानच्' ये 'आत्मनेपद' सञ्ज्ञक हों।

अनुदात्तङितः। अनुदात्तेत् धातु और उपदेश में जो ङित्, तदन्त जो उससे परे जो लकार, उसके स्थान में 'आत्मनेपद' हो।

---

1 स्येत्त्वं न'—इति तु मुद्रिते पाठः। २ क्वाचित्कः पाठः। ३ लिखिते नास्ति।

तिङ्वाच्यकारकवाचिनि [1]युष्मद्यप्रयुज्यमाने, प्रयुज्यमाने च मध्यमः।

अस्मद्युत्तमः ।१।४।१०७। तथाभूतेऽस्मद्युत्तमः। शेषे प्रथमः ।१।४।१०८। मध्यमोत्तमयोरविषये प्रथमः स्यात्। भू-ति[2] इति जाते।

तिङ्शित्सार्वधातुकम् ।३।४।११३। तिङः, शितश्च धात्वधिकारोक्ता एतत्संज्ञाः स्युः। कर्तरि शप् ।३।१।६८। कर्त्रर्थे सार्वधातुके परे

---

युष्मदीति। 'समानाधिकरणे युष्मदि उपपदे' इत्यन्वयः। 'अधिकरण'-शब्दोऽभिधेयवचनः। तेन 'समानार्थे' इत्यर्थलाभः। सामानाधिकरण्यञ्च भिन्न-प्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः, तच्च लकारेणैव, 'लः परस्मैपद'-मित्यतो 'ल' इत्यनुवृत्तेः। लस्य च लोकेऽप्रयोगात्फलितमाह—तिङ्वाच्येति। लकारवाच्यकर्त्रादिकारकवाचिनीति यावत्। 'त्वं भवसी'त्यत्र युष्मदो लकार-वाच्यकर्तृवाचकत्वान्मध्यमः पुरुषः। 'त्वमनुभूयसे'इत्यत्र च लकारवाच्यकर्म-वाचकत्वान्मध्यमः पुरुष इत्यवधेयम्। समीपोच्चारितं पदमत्रोपपदं, 'तत्रोपपद'-मित्युपपदस्यात्राऽसम्भवात्। स्थानी हि आदेशेनापहाराल्लक्ष्ये न प्रयुज्यते इति स्थानिपदेनाऽप्रयुज्यमान इह गृह्यते, तदाह—अप्रयुज्येति।

'अपि'शब्दबललब्धमाह—प्रयुज्येति। तथाभूते = तिङ्वाच्यकारकवाचि-न्यस्मदि अप्रयुज्यमाने प्रयुज्यमाने च।

---

अस्मद्युत्तमः। तिङ्वाच्य कारक वाची जो अस्मद् शब्द वह अप्रयुज्यमान हो या प्रयुज्यमान भी हो तो उत्तम पुरुष हो।

शेषे प्रथमः। मध्यम और उत्तम पुरुष का जहाँ विषय नहीं है वहाँ प्रथम पुरुष हो।

तिङ् शित्। धात्वधिकारोक्त जो तिङ् और शित् प्रत्यय वे सार्वधातुक सञ्ज्ञक हों।

कर्त्तरि शप्। कर्त्रर्थक सार्वधातुक परे रहते धातु से 'शप' प्रत्यय हो।

---

१ 'युष्मदि प्रयुज्यमाने' इति तु मुद्रिते पाठः। २ 'भू-तिप्' पा०।

धातोः शप् [ स्यात्[1] ]। **सार्वधातुकार्द्धधातुकयोः** ।७।३।८४। अनयोः परयोरिगन्ताङ्गस्य गुणः स्यात्[1]। [ [2]'एचोऽयवायाव' इति-] अवादेशः। भवति। भवतः। **झोऽन्तः** ।७।१।३। प्रत्ययावयवस्य झस्याऽन्तादेशः [ स्यात्[3] ]। **अतो गुणे**। भवन्ति। भवसि। भवथः। भवथ। **अतो दीर्घो यञि** ।७।३।१०१। अतोऽङ्गस्य दीर्घो, यञादौ सार्वधातुके [ परे[4] ]। भवामि। भवावः। भवामः।

स भवति। तौ भवतः। ते भवन्ति। त्वं भवसि। युवां भवथः। यूयं भवथ। अहं भवामि। आवां भवावः। वयं भवामः।

**शेषे विभाषाऽकखादावषान्त उपदेशे** ।१।४।१८। उपदेशे कादिखादिषान्तवर्जे गदनदादेरन्यस्मिन्धातौ परे उपसर्गस्थान्निमित्तात्परस्य नेर्णत्वं वा स्यात्[5]। प्रणिभवति। प्रनिभवति॥

**परोक्षे लिट्** ।३।२।११५। भूताऽनद्यतनपरोक्षार्थवृत्तेर्धातोर्लिट्

---

शेषे इति। 'नेर्गदे'तिपूर्वसूत्रापेक्षयाऽत्र 'शेष' इत्यत आह—गदनदादेरिति। अनद्यतनेति। व्यतीताया रात्रेः पश्चार्द्धेन, आगामिन्याश्च पूर्वार्द्धेन सहितो दिवसः—अद्यतनः, तद्भिन्नोऽनद्यतनः। परोक्ष इति। यद्यप्यधिश्रयणादि-

---

**सार्वधातुकार्द्ध**। सार्वधातुक और आर्द्धधातुक प्रत्यय परे रहते इगन्त अङ्गको गुण हो।

**झोन्तः**। प्रत्ययावयव 'झ' को 'अन्त' आदेश हो।

**अतो दीर्घो यञि**। अदन्त अङ्गको दीर्घ हो, यञादि सार्वधातुक परे रहते।

**शेषे विभाषा**। उपदेश में जो कादि खादि षकारान्तधातु, उनसे अतिरिक्त जो गदनदादिधातुओं से भिन्न धातु, वे परे रहते उपसर्गस्थनिमित्त ( रेफ षकार ) से परे जो 'नि' का नकार उसको णत्व हो, विकल्प करके।

**परोक्षे लिट्**। भूतानद्यतनपरोक्षार्थवृत्ति जो धातु उससे 'लिट्' लकार हो।

---

१ 'स्या'दिति क्वचिन्न। २ क्वचिल्लिखितेऽयं पाठो दृश्यते। ३ क्वचिन्न। 'स्या'दिति क्वाचित्कः पाठः। ५ 'स्याद्वा' इति प्रायः पाठो दृश्यते।

।३।४।११५। लिडादेशस्तिङार्द्धधातुकसंज्ञः [ स्यात्[1] ]। आर्द्धधातुकस्येड्वलादेः ।७।२।३५। वलादेरार्द्धधातुकस्येडागमः[2] स्यात्। बभूविथ। बभूवथुः। बभूव। बभूव। बभूविव। बभूविम॥

अनद्यतने लुट् ।३।३।१५। भविष्यत्यनद्यतनेऽर्थे धातोर्लुट्।

स्यतासी लृलुटोः ।३।१।३३। धातोरेतौ स्तो, लृलुटोः परतः। शवाद्यपवादः। 'लृ' इति लृङ्लृटोर्ग्रहणम्॥

आर्द्धधातुकं शेषः ।३।४।११४। तिङ्शिद्भ्योऽन्यो 'धातो'रिति विहितः प्रत्यय एतत्संज्ञः स्यात्। इट्।

लुटः प्रथमस्य डारौरसः ।२।४।८५। [ [3]एते क्रमादादेशाः स्युः]। [4]डित्त्वसामर्थ्यादभस्यापि टेर्लोपः। भविता॥

तासस्त्योर्लोपः ।७।४।५०। [5]सादौ प्रत्यये [ [4]परे ]॥ रि च

---

लृ इतीति। 'त्यक्तानुबन्धग्रहणे सामान्यग्रहण' मिति परिभाषयेत्याशयः।

---

आर्द्धधातुकस्येट्। वलादि अर्द्धधातुक को 'इट्' आगम हो।

अनद्यतने लुट्। भविष्यत् अनद्यतन अर्थ में धातु से 'लुट्' लकार हो।

स्यतासी। धातु से 'स्य' और तास् प्रत्यय हो, ( क्रमसे ) 'लृ' और 'लुट्' परे रहते।

आर्द्धधातुकं शेषः। तिङ् और शित् से भिन्न जो 'धातोः' इस अधिकार में विहित प्रत्यय वह 'आर्द्धधातुक' सञ्ज्ञक हो।

लुटः प्रथमस्य। 'लुट्' सम्बन्धी प्रथम पुरुष के स्थान में क्रम से 'डा' 'रौ' 'रस्' ये आदेश हों।

तासस्त्योर्लोपः। तास् और अस्ति के सकार का लोप हो सादि प्रत्यय परे रहते।

---

१ स्यादिति क्वचिन्न। २ 'इट् स्यात्। क-टा वितौ' इति पाठान्तरम्।

३ क्वचिदेवेयं वृत्तिर्दृश्यते। ४ अयं पाठो न सार्वत्रिकः।

५ 'तासेरस्तेश्च लोपः स्यात्सादौ प्रत्यये परे' इति पा०।

।७।४।५१। रादौ प्रत्यये तथा। भवितारौ। भवितारः। भवितासि। भवितास्थः। भवितास्थ। भवितास्मि। भवितास्वः। भवितास्मः॥

लृट् शेषे च।३।३।१३। भविष्यदर्थाद्धातोर्लृट् क्रियार्थायां क्रियायामसत्यां, सत्यां च। [ [1]स्यः]। इट्। भविष्यति। भविष्यतः। भविष्यन्ति। भविष्यसि। भविष्यथः। भविष्यथ। भविष्यामि। भविष्यावः। भविष्यामः॥

लोट् च।३।३।१६२। विध्यादिष्वर्थेषु धातोर्लोट्। आशिषि लिङ्लोटौ।३।३।१७३। एरुः।३।४।८६। लोट इकारस्य उः। भवतु। तुह्योस्तातङाशिष्यन्यतरस्याम्।७।१।३५। आशिषि तुह्योस्तातङ् वा। परत्वात्सर्वादेशः। ननु 'ङिच्चे'त्यस्य क्वावकाश इति चेच्छृणु, अनन्यार्थङकारयुक्ताऽनङादिष्विति गृहाण। भवतात्॥

---

परत्वादिति। 'ङिच्चे'त्यपेक्षयाऽनेकालित्यस्य परत्वादित्यर्थः। ननु तुल्यबलविरोधे सत्येव हि परस्य बलवत्त्वं 'विप्रतिषेधे पर' इत्यनेन बोध्यते। तुल्यबलविरोधश्च अन्यत्राऽन्यत्र लब्धावकाशयोः शास्त्रयोरेकत्र लक्ष्ये समावेशे एव। 'ङिच्चे'ति शास्त्रन्तु नाऽन्यत्र लब्धावकाशमिति अनवकाशत्वान्ङिच्चेति सर्वादेशत्वापवाद एवेति कथमनयोस्तुल्यबलतेत्याशङ्कते—नन्विति।

उत्तरयति—अनन्येति। 'अनङ् सा'वित्यनङो ङकारस्याऽन्त्यादेशसम्पादनातिरिक्तं गुणवृद्धिप्रतिषेधसम्प्रसारणादिकं न किञ्चित् प्रयोजनमिति 'सखे'त्यत्र 'ङिच्चे'ति

---

रिच। तास् और अस्ति के सकार का लोप हो, रादि प्रत्यय परे रहते।

लृट् शेषे च। भविष्यत्कालिकक्रियावृत्ति धातु से 'लृट्' लकार हो, यदि क्रियार्था क्रिया हो, या नहीं हो।

लोट् च। विध्यादि अर्थ में धातु से 'लोट्' लकार हो।

आशिषि लिङ्। आशीर्वाद अर्थ में धातु से 'लिङ्' और 'लोट्' लकार हों।

एरुः। 'लोट्' सम्बन्धी इकार को 'उ' आदेश हो।

तुह्योस्तातङ्। आशीरर्थक लोट् सम्बन्धी 'तु' और 'हि' के स्थान में 'तातङ' आदेश हो, विकल्प करके।

---

१ क्वाचित्कः पाठः।

**लोटो लङ्वत्** ।३।४।८५। लोटस्तामादयः, सलोपश्च। **तस्थस्थमिपां तान्तन्ताऽमः** ।३।४।१०१। ङितश्चतुर्णां[[1]तसादीनां] तामादयः स्युः । भवताम् । भवन्तु । **सेर्ह्यपिच्च** ।३।४।८७। लोटः सेर्हिः, सोऽपिच्च॥

**अतो हेः** ।६।४।१०५। लुक्[2] । भव । भवतात् । भवतम् । भवत । **मेर्निः** ।३।४।८९। [3]लोटः । **आडुत्तमस्य पिच्च** ।३।४।९२। लोडुत्तमस्याऽऽट् स पिच्च । हिन्योरुत्वं न, इकारोच्चारणसामर्थ्यात् । भवानि ।

---

चरितार्थम् , तातङो ङित्त्वस्य तु 'लीढात्' इत्यादौ गुणवृद्धिप्रतिषेधसम्प्रसारणादीनि सन्ति प्रयोजनान्तराणीति तत्र प्रवर्त्तमानं 'ङिच्चे'ति शास्त्रं परत्वात्सर्वादेशो बाधते, अन्यत्र चारितार्थ्येनोत्सर्गापवादयोरिह समबलत्वात् ।

'हि-' इति लुप्तप्रथमान्तम् । भवतादिति । लुगपेक्षया परत्वाद्धे स्तातङ्, 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधते' इति न्यायस्तु नेह प्रवर्त्तते, ज्ञापकसिद्धत्वेनाऽनित्यत्वात् । 'ज्ञापकसिद्धं न सर्वत्रे'त्यभियुक्तोक्तेः ।

---

लोटो लङ्वत् । लोट् को लङ् की तरह कार्य हो। [अर्थात् लोट् सम्बन्धी तसादि को 'ताम्' आदि आदेश हों और 'वस्' 'मस्' के सकार का लोपभी हो]।

तस्थस्थमिपां । ङित् लकार सम्बन्धी तसादि चार के स्थान में 'ताम्' आदि आदेश हों ।

सेर्ह्यपिच्च । लोट् सम्बन्धी 'सि' के स्थान में 'हि' आदेश हो, और वह अपित् हो ।

अतो हेः । ह्रस्व अकार से परे 'हि' का लुक् हो ।

मेर्निः । लोट् सम्बन्धी 'मि' के स्थान में 'नि' आदेश हो ।

आडुत्तमस्य । लोट् सम्बन्धी उत्तम पुरुष को 'आट्' का आगम हो और वह आट् पित् भी हो ।

---

१ एकत्रायं पाठो दृश्यते ।

२ 'अतः परस्य हेर्लुक् स्यात्' इति पा० ।

३ 'लोटो मेर्निः स्यात्' इति पा० ।

ते प्राग्धातोः ।१।४।८०। ते=गत्युपसर्गसंज्ञका[1] धातोः प्रागेव प्रयोक्तव्याः । आनि लोट् ।८।४।१६। उपसर्गस्थान्निमित्तात्परस्य लोडादेशस्या'ऽऽनी'त्यस्य नस्य णः स्यात् । प्रभवाणि । *दुरः षत्वणत्वयोरुपसर्गत्वप्रतिषेधो वक्तव्यः । दुःस्थितिः । दुर्भवानि । *अन्तःशब्दस्याऽङ्किविधिणत्वेषूपसर्गत्वं वाच्यम् । अन्तर्भवाणि ।

नित्यं ङितः ।३।४।९९। सकारान्तस्य ङिदुत्तमस्य नित्यं लोपः [ [2]स्यात् ]। 'अलोऽन्त्यस्ये'ति सलोपः । भवाव । भवाम

अनद्यतने लङ् ।३।२।१११। अनद्यतनभूतार्थवृत्तेर्धातोर्लङ् । लुङ्लङ्लृङ्क्ष्वडुदात्तः ।६।४।७१। एष्वङ्गस्याऽट् । इतश्च ।३।४।१०० । ङितो लस्य परस्मैपदमिकारान्तं यत्तस्य लोपः । अभवत् । अभवताम् ।

'ते' इत्यस्य व्याख्यानं-गत्युपसर्गसञ्ज्ञका इति । षत्वणत्वयोरित्यस्य—

आनि लोट् । उपसर्गस्थ निमित्त ( =रेफ और षकार ) से परे जो लोट्स्थानिक 'आनि' उस के नकार को णत्व हो ।

दुरःषत्व । 'दुर्' की उपसर्ग सञ्ज्ञा नहीं हो, षत्व और णत्व कर्त्तव्य हो तो ।

अन्तःशब्दस्य । 'अङ्' विधि, 'कि' विधि और णत्व कर्त्तव्य हो तो 'अन्तर्' शब्द की भी उपसर्गसञ्ज्ञा हो ।

नित्यं ङितः । ङित् लकार सम्बन्धी जो सकारान्त उत्तम पुरुष, उसके सकार का नित्य लोप हो ।

अनद्यतने लङ् । अनद्यतन भूतार्थ वृत्ति धातु से 'लङ्' लकार हो ।

लुङ्लङ्लृङ्क्षु । लुङ् लङ् लृङ् परे रहते अङ्ग को अट् का आगम हो ।

इतश्च । ङित् लकार सम्बन्धी जो इकारान्त परस्मैपद, उस [ के अन्त ] का लोप हो ।

ते प्राग्धातोः । गतिसञ्ज्ञक और उपसर्गसञ्ज्ञक का धातु से प्राक् (पहिले) ही प्रयोग होता है ।

[1] 'सञ्ज्ञा' पा० । [2] क्वचिन्न ।

अभवन्। अभवः। अभवतम्। अभवत। अभवम्। अभवाव। अभवाम॥

**विधिनिमन्त्रणाऽऽमन्त्रणाऽधीष्टसंप्रश्नप्रार्थनेषु लिङ् ।३।३।१६१।** एष्वर्थेषु धातोर्लिङ्। **यासुट् परस्मैपदेषूदात्तो ङिच्च ।३।४।१०३।** लिङः परस्मैपदानां यासुडागमो, ङिच्च। ङित्त्वोक्तेर्ज्ञायते–'क्वचिदनुबन्धकार्येऽप्यनल्विधाविति प्रतिषेध' इति, तेन 'वक्ष्यमाणे'त्यत्र [ टित्त्वादुगित्त्वाच्च[1]] ङीप्। **लिङः सलोपोऽनन्त्यस्य ।७।२।७९।** सार्वधातुकलिङोऽनन्त्यस्य सस्य लोपः। इति प्राप्ते। **अतो येयः ।७।२।८०।** अतः परस्य सर्वधातुकावयवस्य 'यास्' इत्यस्य इय्। गुणः। 'लोपो व्योर्वलि'। भवेत्। भवेताम्।

**झेर्जुस् ।३।४।१०८।** लिङो [ 'झेर्जुस्' ]।

---

'कर्त्तव्ययो'रिति शेषः। एवञ्च दुःस्थितिरित्यत्रोपसर्गात्परत्वाभावादुपसर्गात्सुनोती'ति न षत्वम्। एवं दुर्भवानीत्यत्राऽऽनि लोडिति न णत्वम्।

विधीति। विधिः=भृत्यादेः स्वापकृष्टस्य प्रेरणम्। निमन्त्रणम्= आवश्यके श्राद्धभोजनादौ दौहित्रादेः प्रवर्त्तनम्। आमन्त्रणं—'यथेच्छं कुर्वि'त्यनुज्ञानम्। अधीष्टं—सत्कारपूर्वकं नियोजनम्। संप्रश्नः—'इदं करणीयं, नवे'ति विचार्य निर्धारणम्।

---

विधिनिमन्त्रणा। विध्यादि अर्थों में धातु से लिङ् लकार हो।

यासुट् परस्मै। लिङ्सम्बन्धी परस्मैपद को 'यासुट्' आगम हो और वह यासुट् ङित् हो।

लिङः सलोपो। सार्वधातुक लिङ् ( अर्थात् विधिलिङ् ) सम्बन्धी अनन्त्य सकार का लोप हो।

अतो येयः। ह्रस्व अकार से परे जो सार्वधातुकावयव 'यास्' उसको 'इय' आदेश हो।

झेर्जुस्। लिङ्सम्बन्धी 'झि' को जुस् आदेश हो।

---

[1] क्वचिदेव दृश्यते, न सार्वत्रिकोऽयं पाठः।

[ [1]उस्यपदान्तात् ।६।१।९६। अपदान्तादवर्णादुसि परे पररूपमेकादेशः स्यात् । इति प्राप्ते । परत्वान्नित्यत्वाच्चाऽतो येय इति प्राञ्चः । यद्यप्यन्तरङ्गत्वात्पररूपं न्याय्यं, तथापि 'यास्' इत्यस्य 'इय्' इति व्याख्येयम्। एवञ्च सलोपस्याऽपवाद इय्। अतो येय' इत्यत्र तु सधिरार्षः]।

भवेयुः । भवेः । भवेतम् । भवेत । भवेयम् । भवेव । भवेम ॥

लिङाशिषि ।३।४।११६। आशिषि लिङस्तिङार्द्धधातुकसंज्ञः स्यात् । किदाशिषि ।३।४।१०४। आशिषि लिङो यासुट् कित्स्यात्[2] । 'स्को'रिति सलोपः । क्ङिति च ।१।१।५। गित्किन्ङिन्निमित्ते इग्लक्षणे गुणवृद्धी न स्तः । भूयात् । भूयास्ताम् । भूयासुः । भूयाः । भूयास्तम् । भूयास्त । भूयासम् । भूयास्व । भूयास्म ।

लुङ् ।३।२।११०। [3]भूतार्थे धातोर्लुङ् । माङि लुङ् ।३।३।१७५। [ [4]माङ्युपपदे धातोर्लुङ् स्यात् ]। सर्वलकाराऽपवादः। स्मोत्तरे लङ्

---

किदिति । लिङो ङित्वेऽपि यासुटः कित्करणमुच्या—दित्यादौ 'वचिस्वपी'ति सम्प्रसारणार्थम् । अपवाद इति । 'माऽस्तु' इत्यादौ तु माशब्दोऽतिरिक्त एव, न त्वयं माङ्शब्द इति न दोषः । गृह्येते इति । 'गाती'तिविकरणशून्यनिर्देशा· ल्लुग्विकरण इणादेशो गापदेन गृह्यते । 'लुग्विकरणाऽलुग्विकरणयो'रिति परिभाषया च अलुग्विकरणस्य पिबतेर्ग्रहणं, न लुग्विकरणस्य पातेरित्यर्थः ।

---

उस्यपदान्तात् । अपदान्त अवर्ण से 'उस्' परे रहते पूर्व परके स्थान में पररूप एकादेश हो ।

लिङाशिषि । आशीः अर्थ में जो लिङ उसकी आर्द्धधातुक सञ्ज्ञा हो ।

किदाशिषि । आशीर्लिङ् सम्बन्धी 'यासुट्' कित् हो ।

क्ङिति च । गित्, कित् और ङित् को निमित्त मानकर इग्लक्षण गुण और वृद्धि नहीं हो ।

लुङ् । भूतार्थवृत्ति धातु से लुङ् लकार हो ।

---

१ प्रक्षिप्तः पाठः । लिखितेषु क्वापि नास्ति । २ 'स्या'दिति क्वाचित्कम् ।
३ 'भूतार्थवृत्तेर्धातोर्लुङ् स्यात्' पा० । ४ क्वचिदेव दृश्यते ।

च ।३।३।१७६। स्मोत्तरे माङि लङ् स्याल्लुङ् च । च्लि लुङि ।३।१।४३। शबाद्यपवादः । च्लेः सिच् ।३।१।४४। [ [1]इचावितौ ] ।

गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु ।२।४।७७। [ [2]एभ्यः परस्य सिचो ] लुक् [ स्यात् परस्मपदेषु[2] ] । गापाविहेणादेशपिबती गृह्येते । भूसुवोस्तिङि ।७।३।८८। 'भू' 'सू' एतयोः सार्वधातुके तिङि [ [1]परे ] गुणो न । अभूत् । अभूताम् । अभूवन् । अभूः । अभूतम् । अभूत । अभूवम् । अभूव । अभूम ॥

न माङ्योगे ।६।४।७४। [ [3]माङ्योगे ] अडाटौ न स्तः । मा भवान्भूत् । मा स्म भवन् । मा स्म भूत् ॥

लिङ्निमित्ते लृङ् क्रियातिपत्तौ ।३।३।१३९। हेतुहेतुमद्भावादि लिङ्निमित्तं, तत्र भविष्यदर्थाद्धातोर्लृङ्, क्रियाया अनिष्पत्तौ गम्यमानायाम् । अभविष्यत् । अभविष्यताम् । अभविष्यन् । अभविष्यः । अभविष्यतम् । अभविष्यत । अभविष्यम् । अभविष्याव । अभविष्याम ।

---

माङि लुङ् । 'माङ्' उपपद रहते धातु से लुङ् लकार हो ।

स्मोत्तरे लङ् । स्मोत्तर 'माङ्' उपपद रहते धातुसे लङ् और लुङ् लकार हो ।

च्लि लुङि । 'लुङ्' परे रहते धातु से 'च्लि' प्रत्यय हो ।

च्लेः सिच् । च्लि के स्थान में 'सिच्' आदेश हो ।

गातिस्था । इणादेश गा, और स्था, घुसञ्ज्ञक, पा, भू—इन धातुओं से परे जो 'सिच्' उसका लुक् हो, परस्मैपद परे रहते ।

भूसुवो । 'भू' और 'सू' धातुओंको गुण नहीं हो सार्वधातुक तिङ् परे रहते ।

न माङ्योगे । 'माङ्' के योग में अङ्ग को 'अट्' और 'आट्' आगम नहीं हो ।

लिङ् निमित्ते । भविष्यत् अर्थ में विद्यमान जो धातु उससे हेतुहेतुमद्भावादि अर्थों में 'लृङ्' लकार हो, यदि क्रिया की अनिष्पत्ति गम्यमान हो तो ।

---

१ क्वाचित्कः पाठः । २ क्वाचित्को वर्द्धितः पाठः । ३ क्वाचित्कः पाठः ।

'सुवृष्टिश्चेदभविष्यत्तदा सुभिक्षमभविष्यत्' इत्यादि ज्ञेयम् ।

'प्रणिभवती'त्यादौ उपसर्गाणामसमस्तत्वेऽपि संहिता नित्या । तदुक्तम्—

'संहितैकपदे नित्या, नित्या धातूपसर्गयोः ।
नित्या समासे, वाक्ये तु सा विवक्षामपेक्षते ॥१॥'
[ [1]'धात्वर्थं बाधते कश्चित्कश्चित्तमनुवर्त्तते ।
विशिनष्टि तमेवाऽर्थमुपसर्गगतिस्त्रिधा ॥ २ ॥ इति ]।

सत्ताद्यर्थनिर्देशश्चोपलक्षणं, 'यागात्स्वर्गो भवती'त्यादौ 'उत्पद्यते' इत्याद्यर्थात् । उपसर्गास्त्वर्थविशेषस्य द्योतकाः । प्रभवति । पराभवति । सम्भवति । अनुभवति । अभिभवति । उद्भवति । परिभवति—इत्यादौ विलक्षणार्थावगतेः । उक्तञ्च—

उपसर्गेण धात्वर्थो [2]बलादन्यत्र नीयते ।
प्रहारा-ऽऽहार-संहार-विहार-परिहारवत् ॥ १ ॥ इति ।

---

ननु णत्वविधौ संहिताऽधिकारात्संहितायामविवक्षितायां णत्वाऽभावः, तद्विवक्षायां तु णत्वमिति 'प्रणिभवती'-त्यत्र णत्वविकल्पसिद्धेः 'शेषे विभाषे'त्यत्र विभाषाग्रहणं व्यर्थमत आह—नित्येति । 'एकपदे' इत्येव सिद्धे 'समास'ग्रहणं गोबलीवर्दन्यायेनेति बोध्यम् ।

उपलक्षणमिति । अतएव-'कुर्द खुर्द गुर्द गुद क्रीडायामेवे'त्यत्र एवकारो-

---

संहितैकपदे । एकपद में संहिता नित्य होती है, एवं धातु और उपसर्ग की संहिता भी नित्य होती है, तथा समास में भी संहिता नित्य होती है । परन्तु वाक्य में संहिता विवक्षाधीन अर्थात् ( ऐच्छिक ) होती है ।

धात्वर्थं । कोई उपसर्ग तो धात्वर्थ को बाध कर नवीन ही अर्थ का बोध कराता है, कोई धात्वर्थ का ही अनुवर्त्तन करता है, और कोई उपसर्ग धात्वर्थ का विशेषण होता है । इस प्रकार उपसर्ग की तीन तरह की गति हैं ।

उपसर्गेण । नाना उपसर्गों के कारण धात्वर्थ भी अन्यान्य रूप से प्रतीत

---

१ प्रक्षिप्तः पाठोऽयं, लिखितेष्वसत्त्वात् । २ 'अन्यः प्रतीयते' इत्यपि पाठः ।

अत सातत्यगमने । २ । अतति । [ [1]अततः । अतन्ति । अतसि । अतथः । अतथ । अतामि । अतावः । अतामः ] ।

अत आदेः ।७।४।७०। अभ्यासस्याऽऽदेरतो दीर्घः स्यात् । पररूपाऽपवादः । आत । आततुः । आतुः । आतिथ । आतथुः । आत । आत । आतिव । आतिम । अतिता । अतिष्यति । अततु ।

आडजादीनाम् ।६।४।७२। अजादेरङ्गस्याऽऽड् लुङ्-लङ्-लृङ्क्षु । आतत् । अतेत् । अत्यात् । [2]अत्यास्ताम् । लुङि सिचि[3]इडागमे कृते । अस्तिसिचोऽपृक्ते ।७।३।९६। विद्यमानात्सिचोऽस्तेश्च परस्याऽपृक्तस्य हल ईडागमः । इट ईटि ।८।२।२८। इटः परस्य सस्य लोपः स्यादीटि ।

---

पादानम् । अत एव च 'सेधतेर्गता'वित्यत्र च 'गता'वित्युपात्तम् ।

अस्तिसिच इति । सिच्च अस्चेति समाहारद्वन्द्वः, सिच्छब्दस्य सौत्रं भत्वं, तेन चस्य न जश्त्वम् । ततोऽस्तीत्यव्ययेन कर्मधारयः,ततः पञ्चम्याः सौत्रो लुक् । तदाह—विद्यमानादिति ।

---

होता है । जैसे—हरणार्थक 'हृञ्' धातु अनेकविध उपसर्गों के योग से अनेकार्थक प्रतीत होता है । जैसे-प्रहार = आघात । आहार = भोजन । संहार= विनाश । विहार =क्रीडा । परिहार = समाधान इत्यादि ।

अत आदेः । अभ्यासके आदिभूत [ह्रस्व] अकार को दीर्घ हो ।

आडजादीनाम् । अजादि अङ्ग को आट् का आगम हो, लुङ् लङ् और लृङ् परे रहते ।

अस्तिसिचो । विद्यमान 'सिच्' और 'अस्' धातु से परे जो अपृक्तहल् उसको 'ईट्' आगम हो ।

इट ईटि । 'इट्' से परे ( सिच् के ) सकार का लोप हो 'ईट्' परे रहते ।

---

१ प्रक्षिप्तोऽयं पाठः । २ क्वचिदेव दृश्यते । ३ 'सिच इडागमे' पा० ।

*सिज्लोप एकादेशे सिद्धो वाच्यः । आतीत् । आतिष्टाम् । सिजभ्यस्तविदिभ्यश्च ।३।४।१०९। सिचोऽभ्यस्ताद्विदेश्च परस्य ङित्सम्बन्धिनो झेर्जुस् । आतिषुः । आतीः । आतिष्टम् । आतिष्ट । आतिषम् । आतिष्व । आतिष्म । आतिष्यत् ।

एवम्—अव रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसाऽऽदानभागवृद्धिषु । ३ । अवतीत्यादि ।

षिध गत्याम् ।४। पुगन्तलघूपधस्य च ।७।३।८६। पुगन्तस्य, लघूपधस्य चाऽङ्गस्येको गुणः, सार्वधातुकार्धधातुकयोः । 'धात्वादेः' रिति सः । सेधति । षत्वम् । सिषेध ॥

सेक्सृप्सृस्तृसृजस्तृस्त्या-
ऽन्ये दन्त्याऽजन्तसादयः ।
एकाचः षोपदेशाः ष्वष्क्-
ष्विद्स्वद्स्वञ्जस्वपस्मिङः ॥१॥

सेगिति । सेकादिधात्वतिरिक्ता ये एकाचो दन्त्याऽजन्तसादिधातवस्ते षोपदेशा इत्यर्थः । दन्त्यश्च अच्च दन्त्याचौ, तावन्ते यस्य स दन्त्याजन्तः, दन्त्याजन्तश्चासौ सश्च—दन्त्याजन्तसः, स आदिर्येषान्ते—दन्त्याजन्तसादय इति विग्रहः ।

सिज्लोप एकादेशे । एकादेश कर्त्तव्य हो तो सिज्लोप सिद्ध हो रहे, 'पूर्वत्राऽसिद्ध' इस सूत्र करके असिद्ध नहीं हो ।

सिजभ्यस्त । 'सिच्', अभ्यस्तसञ्ज्ञक धातु, 'विद्' धातु—इनसे परे जो ङित् लकार सम्बन्धी 'झि' उसको 'जुस्' आदेश हो ।

पुगन्तलघू । पुगन्त जो अङ्ग और लघूपध जो अङ्ग, तदवयव जो इक उसको गुण हो, सर्वधातुक और आर्द्धधातुक परे रहते ।

सेक्सृप् । सेक्, सृप्, सृ, स्तृ, सृज्, स्तृ, स्त्यै—इन धातुओं से भिन्न जो दन्त्यान्त और अजन्त—सकारादि धातु वे षोपदेश हैं । और ष्वष्क्, ष्विद्, स्वद्, स्वञ्ज्, स्वप्, स्मिङ्—ये धातु भी षोपदेश हैं ।

दन्त्यः केवलदन्त्यो, न तु दन्त्योष्ठजोऽपि, ष्वष्कादीनां पृथग् ग्रहणात्।

**असंयोगाल्लिट्कित्** ।१।२।५। असंयोगात्परोऽपिल्लिट् कित्स्यात्। सिषिधतुः। सिषिधुः। सिषेधिथ। सिषिधथुः। सिषिध। सिषेध। सिषिधिव। सिषिधिम। सेधिता। सेधिष्यति। सेधतु। असेधत्। सेधेत्। सिध्यात्। असेधीत्। असेधिष्यत्।

**सात्पदाद्योः** ।८।३।१११। [ १सातेः, पदादेश्च ] सस्य षो न। इति निषेधे प्राप्ते—। **उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम्** ।८।३।६५। उपसर्गस्थान्निमित्तादेषां सस्य षः। **सदिरप्रतेः** ।८।३।६६। प्रतिभिन्नादुपसर्गात्सदेः सस्य षः।

**स्तन्भेः** ८।३।६७। स्तन्भेः सौत्रस्य सस्य षः। **अवाच्चालम्बनाविदूर्ययोः** ।८।३।६८। अवात्स्तन्भेरेतयोरर्थयोः सस्य षः। **वेश्च स्वनो**

---

असंयोगात्। असंयोग से परे जो पित् भिन्न लिट् सो कित् हो।

सात्पदाद्योः। 'साति' प्रत्यय के सकार को और पद के आदि के सकार को षत्व नहीं हो।

उपसर्गात्सुनोति। उपसर्गस्थ निमित्त ( अर्थात्-इण् और कवर्ग ) से परे जो सुनोत्यादि धातुओं का सकार उसको षत्व हो।

सदिरप्रतेः। 'प्रति'भिन्न-उपसर्गस्थ निमित्त से परे जो 'सद्' धातु का सकार उसको षत्व हो।

स्तम्भेः। उपसर्गस्थ निमित्त से परे जो सौत्र 'स्तन्भ' धातु का सकार उसको षकार हो।

अवाच्चा। 'अव' उपसर्ग से परे जो 'स्तन्भ' धातु का सकार उसको षकार हो, आलम्बन और आविदूर्य ( समीप्य ) अर्थ में।

वेश्च स्वनो। 'वि' और 'अव' उपसर्ग से परे जो स्वन् धातु, उसके सकार को षकार हो।

---

१ क्वाचित्कः पाठोऽयम्।

भोजने ।८।३।६९। व्यवाभ्यां स्वनतेः सस्य षो, भोजने। परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम् ।८।३।७०। परिनिविभ्यः परेषामेषां सस्य षः स्यात्। निषेधति।

प्राक् सितादड्व्यवायेऽपि ।८।३।६३। 'सित'-शब्दात्प्राग्ये सुनोत्यादयस्तेषामड्व्यवायेऽपि सस्य षः [1]स्यात्। न्यषेधत्। न्यषेधीत्। न्यषेधिष्यत्। स्थादिष्वभ्यासेन चाऽभ्यासस्य ।८।३।६४। प्राक्सितात्स्थादिष्वभ्यासेन व्यवायेऽपि षत्वं स्यात्, एषामेव चाऽभ्यासस्य न तु सुनोत्यादीनाम्। निषिषेध। निषिषिधतुः। सेधतेर्गतौ ।८।३।११३। गत्यर्थस्य सेधतेः सस्य षो न। गङ्गां विसेधति॥

एवम्-ष्विती संज्ञाने। ५। शुच शोके। ६।

गद व्यक्तायां वाचि ।७। गदति। नेर्गद-नद-पत-पद-घु-मा-स्यति-हन्ति-याति-वाति-द्राति-प्साति-वपति-वहति-शाम्यति-चिनोति-

---

एतयोः—आलम्बनाऽऽविदूर्ययोः। विसेधतीति। गच्छतीत्यर्थः।
अव्यक्ते शब्दे = अव्यक्ताक्षरे ध्वनौ। नादे इति यावत्।

---

परिनिविभ्यः। परि, नि और वि इन् उपसर्गों से परे 'सेव्' आदि के सकार को षकार हो।

प्राक्सिता। 'सित' शब्द से पूर्व जो सुनोत्यादि धातु, उनके सकार को 'अट्' के व्यवधान में भी षत्व हो।

स्थादिषु। 'स्था' धातु से लेकर 'सित' शब्द से पूर्व २ जो धातु, उनके सकार को अभ्यास के व्यवधान में भी षत्व हो। और इनके ही ( स्थादि सितप्राग्वर्त्ती धातुओं के ही ) अभ्यास को षत्व हो, सुनोत्यादि के अभ्यास को षत्व नहीं हो।

सेधतेर्गतौ। उपसर्गस्थ निमित्त से परे गत्यर्थ 'सिध्' धातु के सकार को षत्व नहीं हो।

नेर्गदनद। उपसर्गस्थ निमित्त ( अर्थात्-रेफ और षकार ) से परे जो 'नि' का नकार उसको णत्व हो, 'गद' आदि धातु परे रहते।

---

१ स्यादिति क्वचिन्न।

देर्गदिषु च।८।४।१७। उपसर्गस्थान्निमित्तात्परस्य नेर्णः [स्यात्] गदादिषु परेषु। प्रणिगदति। कुहोश्चुः।७।४।६२। अभ्यासकवर्गहकारयोश्चवर्गादेशः॥

अत उपधायाः।७।२।११६। [[1]उपधाया अतो] वृद्धिः स्याञ्ञिति, णिति च प्रत्यये। जगाद। जगदतुः। जगदुः। जगदिथ। जगदथुः। जगद।

णलुत्तमो वा।७।१।९१। [[1]उत्तमो णल् वा] णित्स्यात्[2]। जगाद। जगद। गदिता। गदिष्यति। गदतु। अगदत्। गदेत्। गद्यात्।

अतो हलादेर्लघोः।७।२।७। हलादेर्लघोरतो[3] वृद्धिर्वेडादौ सिचि परस्मैपदे। अगादीत्। अगदीत्। अगदिष्यत्॥

णद अव्यक्ते शब्दे।८। णो नः।६।१।६५। धात्वादेर्णस्य नः [4]स्यात्। णोपदेशास्त्वनर्द्-नाटि-नाथ्-नाध्-नन्द्-नक्क-नॄ-नृतः॥

---

अनर्दिति। नर्द-नाटि-नाथ-नाध-नन्दादिभिन्ना नकारादिधातवोऽपि णोपदेशा इत्यर्थः। एते उपदेशकालिकणकारवन्त इत्यर्थः। असमासेऽपीति। असमासग्रहणाऽभावे 'समासेऽङ्गुलेः' इत्यतः समासग्रहणाऽनुवृत्तौ समासे एव णत्वं

---

कुहोश्चुः। अभ्यास सम्बन्धी कवर्ग और हकार को चवर्ग आदेश हो।

अत उपधायाः। उपधाके अकार को वृद्धि हो, ञित् और णित् प्रत्यय परे रहते।

णलुत्तमो वा। उत्तम पुरुष सम्बन्धी 'णल्' णित् हो, विकल्प करके।

अतो हलादेः। हलादि लघु अकार को वृद्धि हो विकल्प करके, परस्मैपदपरक इडादि सिच् परे रहते।

णो नः। धातु के आदि णकार को नकार हो।

णोपदेशास्त्वनर्द्। नर्द्, नाटि, नाथ्, नाध्, नन्द्, नक्क, नृत्, इन

---

१ एकत्रादर्शेऽयं पाठो दृश्यते। २ 'णिद्वा स्यात्'। ३ 'लघोरकारस्य'। ४ क्वचिन्न।

**उपसर्गादसमासेऽपि णोपदेशस्य ।८।४।१४।** उपसर्गस्थान्निमित्तात्परस्य णोपदेशस्य धातोर्नस्य णः [ [1]स्यात्समासेऽसमासेऽपि ]। प्रणदति । प्रणिनदति । [ [2]नदति ] । ननाद ।

**अत एकहल्मध्येऽनादेशादेर्लिटि ६।४।१२०।** लिण्निमित्तादेशादिकं न भवति यदङ्गं, तदवयवस्याऽसंयुक्तहल्मध्यस्थस्याऽत एत्वमभ्यासलोपश्च, किति लिटि। नेदतुः। नेदुः। **थलि च सेटि ।६।४।१२१।** इड्वति थलि च प्रागुक्तं स्यात्। नेदिथ। नेदथुः। नेद। ननाद। ननद। नेदिव। नेदिम। नदिता। नदिष्यति। नदतु। अनदत्। नदेत्। नद्यात्। अनादीत्। अनदीत्। अनदिष्यत्॥

---

स्यात्, 'असमास'ग्रहणे चाऽसमासे एव स्यात्, अतोऽत्राऽपिशब्दघटितमसमासग्रहणङ्कृतम्। तेन अपिशब्दात्समासेऽपीत्यर्थलाभः।

इटा सहितः सेट्, तस्मिन्—सेटीति विग्रहः, तदाह—इड्वतीति। 'प्रागुक्त'मित्यनेन एत्वमभ्यासलोपश्च ग्राह्यौ।

---

धातुओं से भिन्न जो नकारादि धातु वे णोपदेश हैं। [ अर्थात् उनके आदि में उपदेश अवस्था में णकार ही है, नकार नहीं है ]।

उपसर्गादसमासेऽपि। उपसर्गस्थ निमित्त ( अर्थात्-रेफ षकार ) से परे जो णोपदेश धातु का नकार, उसको णकार हो, असमास में, और (अपि शब्दात्) समास में भी।

अत एकहल्। 'लिट्'को निमित्त मानकर आदेश आदि नहीं हुए हैं जिसको ऐसा जो अङ्ग, तदवयव जो असंयुक्त हल्मध्यस्थ ह्रस्व अकार-उसको एत्व हो, और अभ्यासका लोप भी हो, कित् लिट् परे रहते।

थलि च सेटि। लिट्निमित्तक आदेश आदि नहीं हुए हैं जिसको ऐसा जो अङ्ग, तदवयव असंयुक्तहल्मध्यस्थ ह्रस्व अकार को एत्व हो, और अभ्यास का लोप हो, सेट् थल् ( अर्थात्-इट्सहित थल् ) परे रहते।

---

१ क्वचिदपि लिखिते नास्ति। २ क्वचिन्न।

श्च्युतिर् क्षरणे ।९। * इर इत्संज्ञा वाच्या । श्च्योतति । शर्पूर्वाः खयः ।७।४।६१। शिष्यन्तेऽभ्यासस्य[1] । हलादिःशेषापवादः । चुश्च्योत ।

इरितो वा ।३।१।५७। इरितो धातोश्च्लेरङ् वा, परस्मैपदे । अश्च्युतत् । अश्च्योतीत् ॥

यकाररहितोऽप्ययम् । श्चोतति । चुश्चोत । अश्चुतत् । अश्चोतीत् ॥

च्युतिर् आसेचने ।१०। च्योतति ।

टुनदि समृद्धौ ।११। आदिर्ञिटुडवः ।१।३।५। उपदेशे धातोराद्या एते इतः स्युः । इदितो नुम् धातोः ।७।१।५८। नन्दति । ननन्द । नन्दिता । नन्दिष्यति । नन्दतु । अनन्दत् । नन्देत् । इदित्त्वान्नलोपो न । नन्द्यात् । अनन्दीत् । अनन्दिष्यत् ॥ एवं-कुथि १२ पुथि १३ लुथि १४ मथि १५ [[2]मन्थ] हिंसासंक्लेशनयोः। विदि अवयवे । १६। बिन्दति । 'भिदी'ति पाठान्तरम् । भिन्दति । गडि वदनैकदेशे

---

शर्पूर्वा इति । 'अभ्यासस्य शर्पूर्वाः खयः शिष्यन्तेऽन्ये हलो लुप्यन्ते' इत्यर्थः । इदित इति । अन्त्येदितो धातोर्नुम् स्यादित्यर्थः । इदित्त्वादिति । 'अनिदिता'मिति पर्युदासादिति भावः । संक्लेशनं—पीडनम् । अवयवे = तत्क्रियायामित्यर्थः । खण्डशः करणे इति यावत् ।

वदनैकदेशे—मुखैकदेशगण्डस्थलक्रियायामित्यर्थः ।

---

इर इत्सञ्ज्ञा । 'इर्' की इत्सञ्ज्ञा हो ।

शर्पूर्वाः खयः । अभ्याससम्बन्धी शर्पूर्वक खय् शेष रहें, और अन्य हलों का लोप हो ।

आदिर्ञिटुडवः । उपदेशमें धातुके आदिमें वर्त्तमान जो–ञि, टु, डु– इनकी इत्सञ्ज्ञा हो ।

इदितो नुम् । इदित् धातुको 'नुम्' आगम हो ।

---

१ 'अभ्यासस्य शर्पूर्वाः खयः शिष्यन्ते, अन्ये हलो लुप्यन्ते' इति क्वचिदादर्शे पठ्यते । २ 'मन्थे'त्यपि धातुरत्र क्वचित्पठ्यते ।

।१७। गण्डति। चदि आह्लादने ।१८। चन्दति। त्रदि चेष्टायाम् ।१९। त्रन्दति। कदि २० क्रदि २१ क्लदि २२ आह्वाने, रोदने च। क्लिदि परिदेवने ।२३। तकि कृच्छ्रजीवने ।२४। युगि २५ जुगि २६ वुगि २७ वर्जने। मघि मण्डने ।२८। शिघि आघ्राणे ।२९। मन्थ विलोडने ।३०। मन्थति। ममन्थ। किंत्त्वान्नलोपः। मथ्यात्।

अर्च पूजायाम् ।३१। अर्चति। तस्मान्नुड् द्विहलः ।७।४।७१। द्विहलो धातोर्दीर्घीभूतादकारात् परस्य नुट्। आनर्च। आनर्चतुः। [ [1]आनर्चुः ]। अर्चिता। अर्चिष्यति। अर्चतु। आर्चत्। अर्चेत्। अर्च्यात्। आर्चीत्। आर्चिष्यत्॥ एवम्—अर्द गतौ याचने च ।३२। अति ३३ अदि ३४ बन्धने। वन ३५ षण ३६ संभक्तौ। वनति। ववान। न शसददवादिगुणानाम् ।६।४।१२६। शसेर्ददेर्वकारादीनां, गुणशब्देन [2]भावितो योऽत्, तस्य च एत्वाभ्यासलोपौ न [ स्तः[3] ]। ववनतुः। [ ववनुः[4] ]। सनति। ससान। सेनतुः। [ सेनुः[4] ]। ये विभाषा ।६।४।४३। जनसनखनामात्वं वा [ स्यात्[3] ] यादौ क्ङिति।

---

किंत्त्वात्=यासुटः कित्वात् 'अनिदिता'मिति—नलोप इत्यर्थः। तस्मादिति।

---

तस्मान्नुड्। लिट् लकारमें द्विहल् धातुका जो दीर्घीभूत अकार, उससे जो परे उसको नुट् का आगम हो।

न शसदद। 'शस्' धातु, 'दद्' धातु, वकारादि धातु और 'गुण' शब्दसे भावित जो अकार—उनको एत्वाभ्यासलोप नहीं हो।

ये विभाषा। जन्, सन्, खन्, इन-धातुओं को आत्व हो, यकारादि कित् ङित् परे रहते।

---

१ लिखिते नास्ति। २ 'विहितो योऽत्' पा०।
३ क्वाचित्कः पाठः। ४ लिखितेषु नास्ति।

सायात्। सन्यात्।

वज ३७ व्रज ३८ गतौ। व्रजति। वव्राज। व्रजिता। व्रजिष्यति। व्रजतु। अव्रजत्। व्रजेत्। व्रज्यात्। वदव्रजहलन्तस्याऽचः ।७।२।३। एषामचो वृद्धिः [स्यात्[1]] परस्मैपदे[2] सिचि। अव्राजीत्। अव्रजिष्यत्॥

कटे वर्षाऽऽवरणयोः। ३९। कटति। चकाट। कटिता। कटिष्यति। कटतु। अकटत्। कटेत्। कट्यात्। ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम् ।७।२।५। हमयान्तस्य, क्षणादेर्ण्यन्तस्य, श्वयतेरेदितश्च वृद्धिर्नडादौ सिचि[3]। अकटीत्। अकटिष्यत्॥

गुपू रक्षणे ।४०। गुपूधूपविच्छिपणिपनिभ्य आयः ।३।१।२८। [[4]एभ्य 'आय' प्रत्ययः स्यात्] स्वार्थे। [[5]'अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ती'ति न्यायात्]। सनाद्यन्ता धातवः ।३।१।३२।

---

'त'च्छब्देन दीर्घीभूताऽकारपरामर्शः। सायादिति। सनधातोराशीर्लिङि रूपद्वयमेतत्। अव्राजीदिति। हलन्तत्वादेव सिद्धे वदव्रजोर्ग्रहणं 'नेटी'ति निषेधबाधनार्थम्।

हमयान्तस्य—हकारमकारयकारान्तस्य। गुपूधूपेति। एभ्य आय-

---

वदव्रज। 'वद' धातु, 'व्रज' धातु और हलन्त धातु—इनके अच् को वृद्धि हो, परस्मैपदपरक सिच् परे रहते।

ह्म्यन्तक्षण। हकारान्त, मकारान्त, यकारान्त धातु, और 'क्षण्' 'श्वस्' 'जागृ' धातु, ण्यन्त धातु, श्वि धातु और एदित् धातु इनको वृद्धि नहीं हो, इडादि सिच् परे रहते।

गुपूधूप। 'गुपू' आदि धातुओं से 'आय' प्रत्यय हो, स्वार्थ में।

सनाद्यन्ताः। 'सन्' को आदि लेकर 'कर्मणिङ्' इस 'णिङ्' पर्यन्त जो प्रत्यय, वे हैं अन्त में जिसके उनकी धातु सञ्ज्ञा हो।

---

१ क्वचिन्न। २ 'परस्मैपदे सिचि' इति, 'सिचि परस्मैपदेषु' इति च पा०।
३ 'सिचि परस्मैपदेषु' इति मुद्रिते पाठः।
४ लिखितेषु क्वचित्पाठः। ५ लिखितेषु—क्वापि नास्ति।

सनादयः कसेर्णिङन्ताः प्रत्यया अन्ते येषां ते धातुसंज्ञाः[1] स्युः ।

सन्-क्यच्-काम्यच्-क्यङ्-क्यषोऽथा-
ऽऽचारक्विब् णिज्यङौ तथा ।
यगाय-ईयङ्-णिङ् चेति
द्वादशाऽमी सनादयः ॥ १ ॥

'सनाद्यन्ता धातव' इत्यस्याऽनन्तरं 'भूवादय' इत्येव सूत्रयितुं युक्तम् । धातुत्वाल्लडादयः । गोपायति ।

**आयादय आर्द्धधातुके वा ।३।१।३१।** आर्द्धधातुकविवक्षाया-मायेयङ्णिङो वा स्युः । ***कास्यनेकाच आम्वक्तव्यो लिटि ।** कास आम्विधानान्मस्य नेत्त्वम् । **अतो लोपः ।६।४।४८।** आर्द्धधातुकोपदेशे

---

प्रत्ययः स्यात्स्वार्थे इत्यर्थः । धातुत्वात् = 'गोपाये'त्यस्यानेन धातुत्वात् । 'आर्द्धधातुके'इति विषयसप्तमी, तदाह—विवक्षायामिति । नेत्त्वमिति । आमो मित्त्वे 'मिदचोऽन्त्या'दिति परिभाषया कास आकारात्पर आम् स्यात्, ततश्च सवर्णदीर्घे सति आमि सत्यसति वा विशेषाऽभावादास्कासोराम्विधानं व्यर्थं स्यात्, तदेवमास्कासोराम्विधानान्मस्य नेत्त्वमिति लभ्यते इति भावः ।

---

**सन्क्यच्** । सन्, क्यच्, काम्यच्, क्यङ्, क्यष्, आचारार्थक क्विप्, णिच्, यङ्, यक्, आय, ईयङ्, णिङ्—ये बारह १२ सनादि हैं ।

**आयादयः** । आर्द्धधातुक की विवक्षा में ही 'आय' 'ईयङ्' णिङ्' प्रत्यय हों, विकल्प करके ।

**कास्यनेकाचः** । 'कास्' धातु से और अनेकाच् धातुओं से 'आम्' हो, लिट् परे रहते ।

**अतो लोपः** । आर्द्धधातुक के उपदेश काल में जो अदन्त, उसके अकार का लोप हो, आर्द्धधातुक परे रहते ।

---

१ 'धातुसञ्ज्ञकाः' इति लिखितेषु पाठः ।

यददन्तं, तस्याऽतो लोप, आर्द्धधातुके। आमः ।२।४।८१। आमः परस्य लुक्।

कृञ्चाऽनुप्रयुज्यते लिटि ।३।१।४०। आमन्ताल्लिट्पराः कृभ्वस्तयोऽनुप्रयुज्यन्ते। तेषां द्वित्वादि। उरत् ।७।४।६६। अभ्यासस्य ऋतोऽत्स्यात्प्रत्यये[1]। [प्रत्यये किं—[2]वव्रश्च]। वृद्धिः। गोपायाञ्चकार। द्वित्वात्परत्वाद्यणि प्राप्ते।

द्विर्वचनेऽचि ।१।१।५६। द्वित्वनिमित्तेऽचि [परे[3]] अच आदेशो न [स्याद्[4]] द्वित्वे कर्तव्ये। गोपायाञ्चक्रतुः। गोपायाञ्चक्रुः।

एकाच उपदेशेऽनुदात्तात् ।७।२।१०। उपदेशे यो धातुरेकाज-

---

कृञ्चेति। कृञिति प्रत्याहारः, स च 'कृभ्वस्तियोगे सम्पद्य कर्त्तरिच्वि' रित्यत आरभ्य 'कृञो द्वितीयतृतीयशम्बबीजात्कृषा'विति ञकारेण। तेन कृभ्वस्तिसम्पदीनां लाभः। तत्र कृभ्वस्तय एवानुप्रयुज्यन्ते, सम्पदिस्तु कृञ्प्रत्याहारेऽन्तर्भूतोऽप्यनन्विताथत्वान्न प्रयुज्यते। आम्प्रकृतीनां क्रियाविशेषवाचित्वात्कृभ्वस्तीनां क्रियासामान्यवाचित्वात्तेषामभेदान्वयः, 'सामान्यविशेषयोरभेदान्वय' इत्यभियुक्तोक्तः। सम्पदेस्तु क्रियाविशेषवाचितयाऽऽम्प्रकृत्या-सहाऽभेदान्वयासम्भवात्स नानुप्रयुज्यते इत्याशयः। तेषाम्=अनुप्रयुज्यमानकृञादीनाम्। द्वित्वादि=द्वित्वमभ्यासकार्यञ्च।

---

आमः। 'आम्' से परे लिट् का लुक् हो।

कृञ्चानु। आमन्तसे लिट्परक कृ, भू, अस् धातुओं का अनुप्रयोग हो।

उरत्। अभ्याससम्बन्धी ऋवर्ण को अत् आदेश हो, प्रत्यय परे रहते।

द्विर्वचनेऽचि। द्वित्वनिमित्तक अच् परे रहते अजादेश नहीं हो, द्वित्वकर्त्तव्य हो तो।

एकाच उपदेशे। उपदश में जो एकाच् अनुदात्त धातु, उनसे परे वलादि आर्द्धधातुक को इट् नहीं हो।

---

१ 'प्रत्यये' इति क्वाचित्कम्। २ एकत्रादर्शेऽयं पाठो दृश्यते।
३ क्वाचित्कः पाठः। ४ लिखितेषु नास्ति।

नुदात्तश्च, ततः परस्य वलादेरार्द्धधातुकस्येण्न ।

ऊदृदन्तैर्यौति-रु-क्ष्णु-शी-स्नु-नु-क्षु-श्वि-डीङ्-श्रिभिः ।
वृङ्-वृञ्भ्यां च विनैकाचो-ऽजन्तेषु निहताः स्मृताः ॥१॥

कान्तेषु-शक्लेकः । चान्तेषु-पच्-मुच्-रिच्-वच्-विच्-सिचः षट् । छान्तेषु-प्रच्छ्येकः । जान्तेषु-त्यज्-निजिर्-भज्-भञ्ज्-भुज्-भ्रस्ज्-मस्ज्-यज्-युज्-रुज्-रञ्ज्-विजिर्-सञ्ज्-स्वञ्ज्-सृजः पञ्चदश । दान्तेषु-अद्-क्षुद्-खिद्-छिद्-तुद्-नुद्-पद्य-भिद्-विद्य-विनद्-विन्द्-शद्-सद्-स्विद्य-स्कन्द्-हदः षोडश । धान्तेषु-क्रुध्-क्षुध्-बुध्य-बन्ध्-युध्-रुध्-राध्-व्यध्-शुध्-साध्-सिध्या एकादश । नान्तेषु-मन्य-हनौ द्वौ । पान्तेषु-आप्-क्षिप्-छुप्-तप्-तिप्-तृप्य-दृप्य-लिप्-लुप्-वप्-शप्-स्वप्-सृपस्त्रयोदश । भान्तेषु-यभ्-रभ्-लभस्त्रयः । मान्तेषु-गम्-नम्-रम्-यमश्चत्वारः । शान्तेषु-क्रुश्-दंश्-दिश्-दृश्-मृश्-रिश्-रुश्-लिश्-विश्-स्पृशो दश । षान्तेषु-कृष्-त्विष्-तुष्-द्विष्-दुष्-पुष्य-पिष्-विष्-शिष्-शुष्-श्लिष्या एकादश । सान्तेषु-घस्-वसती द्वौ । हान्तेषु-दह्-दुह्-दिह्-नह्-मिह्-रुह्-लिह्-वहोऽष्टौ ।

अनुदात्ता हलन्तेषु धातवस्त्र्यधिकं [1]शतम् ॥

गोपायाञ्चकर्थ । गोपायाञ्चक्रथुः । गोपायाञ्चक्र । गोपायांञ्चकार । गोपायाञ्चकर । गोपायाञ्चकृव । गोपायाञ्चकृम ॥ गोपायाम्बभूव । गोपायामास । जुगोप । जुगुपतुः । जुगुपुः ॥

---

ऊदृदन्तैः । दीर्घ ऊकारान्त धातु, दीर्घ ॠकारान्त धातु, 'यु' धातु और 'रु' 'क्ष्णु' 'शीङ्' 'स्नु' 'नु' 'क्षु' 'श्वि' 'डीङ्' 'श्रि' 'वृङ्' 'वृञ्' धातु—इनसे भिन्न जो एकाच् और अजन्त धातु—वे अनुदात्त हैं ।

अनुदात्ता हलन्तेषु । हलन्त धातुओं में १०३ धातु अनुदात्त हैं ।

---

१ 'धातवो द्व्यधिकं शत'मिति पाठान्तरम् । विन्दन्तेरग्रहणाच्चेयं १०२ सङ्ख्याऽपि सम्भवत्येव ।

**स्वरतिसूतिसूयतिधूञूदितो वा ।७।२।४४।** स्वरत्यादेरूदितश्च परस्य वलादेरार्द्धधातुकस्येड् वा [ स्यात्[1] ]। जुगोपिथ । जुगोप्थ । गोपायिता । गोपिता । गोप्ता । गोपायिष्यति । गोपिष्यति । गोप्स्यति । गोपायतु । अगोपायत् । गोपायेत् । गोपाय्यात् । गुप्यात् । अगोपायीत् ।

**नेटि ।७।२।४।** इडादौ सिचि हलन्तलक्षणा वृद्धिर्न [ स्यात्[1] ]। अगोपीत् । अगौप्सीत् । **झलो झलि ८।२।२६।** झलः परस्य सस्य लोपः [2]स्याज्झलि [ [3]परे ]। अगौप्ताम् । अगौप्सुः । अगौप्सीः । अगौप्तम् । अगौप्त । अगौप्सम् । अगौप्स्व । अगौप्स्म । अगोपायिष्यत् । अगोपिष्यत् । अगोप्स्यत् ।।

**क्षि क्षये ।४१।** क्षयति । चिक्षाय । चिक्षियतुः । चिक्षियुः । 'एकाच' इति निषेधे प्राप्ते–।

**कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि ।७।२।१३।** क्रादिभ्य एव लिट

---

जुगोप्थेति । ऊदित्त्वादिड् वा । 'अगोपी'दित्यत्र 'वदव्रजहलन्तस्याच' इति हलन्तलक्षणा वृद्धिः प्राप्ता, तन्निरासाय सूत्रमवतारयति—नेटीति ।

एकाच इति । परिगणिताऽजन्ताऽतिरिक्तत्वेनाऽनुदात्ततया 'एकाच'इतीण्नि-

---

स्वरतिसूति । स्वरत्यादि धातु और ऊदित् धातुओं से परे जो वलादि आर्द्धधातुक, उसको इट् आगम हो, विकल्प करके ।

नेटि । इडादि सिच् परे रहते ['वदव्रजहलन्तस्याचः' इस सूत्र से] हलन्त लक्षणा वृद्धि नहीं हो ।

झलो झलि । झल् से परे ( सिच्के ) सकार का लोप हो, झल् परे रहते ।

कृसृभृवृ । 'कृ' आदि धातुओं से परे जो लिट् उसको ही इट् नहीं हो । और क्रादि से अन्य जो अनिट् धातु उनसे भी 'इट्' हो ।

---

१ क्वाचित्कः पाठः । २ 'सिचो लोपो झलि' पा० ३ क्वचिदेव दृश्यते ।

इण्न स्यात्, अन्यस्मादनिटोऽपि स्यात्।

**अचस्तास्वत्थल्यनिटो नित्यम्** ।७।२।६१। उपदेशेऽजन्तो यो धातुस्तासौ नित्यानिट् ततः [ परस्य[1] ] थल इण्न [ स्यात्[2] ] ।

**उपदेशेऽत्वतः** ।७।२।६२। उपदेशेऽकारवतस्तासौ नित्याऽनिटः परस्य थल इण्न। **ऋतो भारद्वाजस्य** ।७।२।६३। तासौ नित्याऽनिट ऋदन्तादेव थलो नेट् भारद्वाजस्य मतेन[3] । तेनाऽन्यस्य स्यादेव। अयमत्र सङ्ग्रहः—

अजन्तोऽकारवान्वा यस्तास्यनिट् थलि वेडयम् ।
ऋदन्त ईदृङ् नित्याऽनिट्, क्राद्यन्यो लिटि सेड्भवेत् ॥१॥

---

षेधे प्राप्ते इत्यर्थः। अत्र = क्रादिविषये। अजन्तो यथा—पा-या-वादिधातुः। अकारवान्–पचादिधातुः। स थलि वेट्। तेन पपिथ–पपाथ। पेचिथ–पपक्थ-

---

अचस्तास्वत्। उपदेश में अजन्त और तास् परे रहते नित्याऽनिट् जो धातु, उससे परे जो थल्, उसको इट् नहीं हो।

उपदेशेऽत्वतः। उपदेश में अकारवान्, और 'तास्' परे रहते नित्यानिट् जो धातु, उससे परे 'थल्' को इट् नहीं हो।

ऋतो भारद्वाजस्य। 'तास्' परे रहते नित्याऽनिट् जो ऋदन्त धातु, उससे ही परे जो 'थल्' उसको ही इट् नहीं हो, भारद्वाज के मत में। अतएव— ऋदन्त से अतिरिक्त जो अनिट् धातु इससे परे जो थल्, उसको तो इट् हो ही जाता है।

अजन्तोऽकारवान्। १ अजन्त या अकारवान् और तास् परे रहते नित्य अनिट् जो धातु, वह थल् परे रहते वेट् होता है। [अर्थात्–उससे परे थल् को विकल्प से इट् होता है]। २ और तास् परे रहते नित्य अनिट् जो ऋदन्त धातु वह भी थल् परे रहते नित्याऽनिट् होता है। ३ और कृसभृ आदि ८ धातुओं से

---

१ 'परस्ये'ति लिखितेषु नास्ति।

२ क्वाचित्कः पाठः। ३ 'भारद्वाजमते' पा०।

चिक्षयिथ । चिक्षेथ । चिक्षियथुः । चिक्षिय । चिक्षाय—चिक्षय । चिक्षियिव । चिक्षियिम । क्षेता । क्षेष्यति । क्षयतु । अक्षयत् ।

**अकृत्सार्वधातुकयोर्दीर्घः ।७।४।२५।** अजन्ताऽङ्गस्य दीर्घः स्याद्यादौ प्रत्यये[1], न तु कृत्सार्वधातुकयोः । क्षीयात् ।

**सिचि वृद्धिः परस्मैपदेषु ।७।२।१।** इगन्ताङ्गस्य वृद्धिः परस्मैपदे[2] सिचि । अक्षैषीत् । अक्षेष्यत् ॥

तप सन्तापे । ४२ । तपति । ततापं । तेपतुः । तेपुः । तेपिथ । ततप्थ । तप्ता । तप्स्यति । तपतु । अतपत् । तपेत् । तप्यात् । अताप्सीत् । अताप्ताम् । अतप्स्यत् ।

**निसस्तपतावनासेवने ।८।३।१०२।** षः स्यात् । आसेवनं = पौनःपुन्यं, ततोऽन्यस्मिन्विषये । निष्टपति ।

क्रमु पादविक्षेपे । ४३ । **वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः**

---

स्यादि रूपाणि भवन्ति । ईदृक् = तासि परतो नित्याऽनिट् । एवंविध ऋदन्तस्थलि नित्यमनिट् इत्यर्थः । क्राद्यन्यः = कृसभृवृस्त्वाद्यतिरिक्तः ।

तेपतुरित्यत्र 'अत एक हल्मध्ये' इत्येत्वाभ्यासलोपौ । निस इति । निसः

---

अन्य जो अनिट् धातु, वह थलतिरिक्त लिट् में सेट् ही होता है ।

अकृत्सार्व । अजन्त अङ्ग को दीर्घ हो, यादि प्रत्यय परे रहते । परन्तु यकारादि कृत् और सार्वधातुक परे रहते यह दीर्घ नहीं हो ।

सिचि परस्मै । इगन्त अङ्ग को वृद्धि हो, परस्मैपदपरक सिच् परे रहते ।

निसस्तपतौ । पौनःपुन्य से अन्य अर्थ में निस के सकारको षत्व हो, तप् धातु परे रहते ।

वा भ्राश । 'भ्राश' आदि धातुओं से 'श्यन्' प्रत्यय हो, विकल्प करके, कर्त्रर्थक सार्वधातुक परे रहते । [ पक्ष में शप् हो ] ।

---

१ 'प्रत्यये' परे पा० । २ 'परस्मैपदपरे' पा० —इति पा० ।

।३।१।७०। एभ्यः श्यन्वा, कर्तरि सार्वधातुके। पक्षे शप्। क्रमः परस्मैपदेषु ।७।३।७६। [1]क्रमेर्दीर्घः, परस्मैपदे शिति। क्राम्यति। क्रामति। चक्राम। स्नुक्रमोरनात्मनेपदनिमित्ते ।७।२।३६। अत्रैवेट्। क्रमिता। क्रमिष्यति। क्राम्यतु-क्रामतु। अक्राम्यत्-अक्रामत्। क्राम्येत्-क्रामेत्। क्रम्यात्। अक्रमीत्। अक्रमिष्यत्॥

चमु ४४ छमु ४५ जमु ४६ झमु ४७ अदने। ष्ठिवुक्लमुचमां शिति ।७।३।७५। [2]एषामचो दीर्घः स्याच्छिति। * आङि चम इति वक्तव्यम्। आचामति। आङि किम्? चमति। विचमति। अचमीत्॥

स्खल संचलने। ४८। स्खलति। चस्खाल। अतो ल्रान्तस्य। ७।२।२। अतः समीपौ यौ ल्रौ, तदन्तस्याऽङ्गस्याऽतो वृद्धिः,परस्मैपदपरे[3] सिचि। अस्खालीत्। [ [4]अस्खलिष्यत् ]॥

त्सर छद्मगतौ। ४९। अत्सारीत्॥

पा पाने। ५०। पा-घ्रा-ध्मा-स्था-म्ना-दाण्-दृश्य-र्ति-सर्ति-शद-

---

सस्य षः स्यादपौनःपुन्ये इत्यर्थः। स्नुक्रमोरिति। आत्मनेपदनिमित्तहीनाभ्यामाभ्यां परस्य वलादेरार्धधातुकस्येडित्यर्थः। स्नुक्रमोः सेट्त्वात्पुनरिड्विधानं नियमार्थमित्याशयः। छद्मगतिः—कौटिल्यम्।

---

क्रमः परस्मै। क्रम धातु को दीर्घ हो, परस्मैपदपरक शित् परे रहते।

स्नुक्रमो। 'स्नु' और 'क्रमु' धातु जहाँ आत्मनेपदनिमित्त नहीं हो वहीं उनसे परे जो वलादि आर्द्धधातुक उसको इट् हो, अन्यत्र नहीं हो।

पाघ्राध्मा। 'पा' आदि धातुओं को क्रमसे 'पिब' आदि आदेश हो, इत्सञ्ज्ञकशकारादि प्रत्यय परे रहते।

---

१ 'क्रमो दीर्घः' पा०। २ 'अचो दीर्घ' इत्येव प्राचीनपुस्तकेषु प्रायो वृत्तिः। ३ 'परस्मैपदे सिचि' पा०। ४ लिखितेषु नास्ति।

सदां पिब-जिघ्र-धम-तिष्ठ-मन-यच्छ-पश्य-र्च्छ-धौ-शीय-सीदाः ।७।३।७८। पादीनां पिबादयः स्युरित्संज्ञकशकारादौ प्रत्यये [ [1]परे ] पिबादेशोऽदन्तस्तेन न गुणः । पिबति । आत औ णलः ।७।१।३४। आदन्ताद्धातोर्णल औकारादेशः [ [2]स्यात् ]। पपौ ।

आतो लोप इटि च ।६ ४।६४। अजाद्योरार्द्धधातुकयोः क्ङिदिटोः परयोरातो लोपः[3] । पपतुः । पपुः । पपिथ-पपाथ । पपथुः । पप । पपौ । पपिव । पपिम । पाता । पास्यति । पिबतु । अपिबत् । पिबेत् ।

एर्लिङि ।६।४।६७। घुसंज्ञानां [4]मास्थागापिबतिजहातिस्यतीनां चाऽऽत [5]एत्वमार्द्धधातुके क्ङिति लिङि । पेयात् ।

[[6]'लुग्विकरणाऽलुग्विकरणयोरलुग्विकरणस्यैव ग्रहणं',तेन'पा रक्षणे' इत्यस्य नैत्त्वम् ]।

'गातिस्थे'ति सिचो लुक् । अपात् । अपाताम् । आतः ।३।४।११०।

---

न गुण इति । उपधायामिकोऽभावेन पुगन्तेति न गुण इत्यर्थः ।

---

आत औ । आदन्त धातुसे परे जो 'णल्' उसको औकार आदेश हो ।

आतो लोपः । अजादि कित् ङित् आर्द्धधातुक और इट् परे रहते आकार का लोप हो ।

एर्लिङि । घुसञ्ज्ञक धातुओं के और मा, स्था, गा, पा, जहाति, स्यति इन धातुओं के आकार को एत्व हो, आर्द्धधातुक कित् लिङ् परे रहते ।

आतः । सिच्का यदि लुक् हुआ हो तो आदन्त धातुसे ही परे जो 'झि' उसको ही जुस् हो, [ अन्य झि को जुस् नहीं हो ] ।

---

१ क्वचित्कः पाठः । २ क्वचिन्न ।

३ इतोऽग्रे-"द्वित्वात्परत्वाल्लोपे प्राप्ते । 'द्विर्वचनेऽची'ति निषेधाद् द्वित्वे कृते आलोपः" इति पाठोऽधिक एकत्रादर्शे ।

४ 'मास्थागैपिबति' इति प्रायः पाठः । ५ 'च एत्वं' पा० । 'आत' इति च क्वचिन्नास्ति ।

६ लिखितेषु नास्ति ।

सिज्लुकि आदन्तादेव झेर्जुस् । उस्यपदान्तात् ।६।१।९६। अपदान्ता-दवर्णादुसि पररूपमेकादेशः । अपुः । अपास्यत् ।

ग्लै ५१ म्लै ५२ हर्षक्षये । ग्लायति । आदेच उपदेशेऽशिति ।६।१।४५। उपदेशे एजन्तस्य धातोरात्वं, न तु शिति । जग्लौ । ग्लाता । ग्लास्यति । ग्लायतु । अग्लायत् । ग्लायेत् । वाऽन्यस्य संयोगादेः ।६।४।६८। घुमास्थादेरन्यस्य संयोगादेर्धातोरात एत्वं वा, आर्द्धधातुके किति लिङि । ग्लेयात्-ग्लायात् । यमरमनमातां सक् च ।७।२।७३। एषां सक् स्यात्, एभ्यः सिच इट्, परस्मैपदेषु । अग्लासीत् । अग्लास्यत् ॥ एवं-म्लायतीत्यादि ॥

धेट् पाने । ५३ । धयति । दधौ । [ धाता[1] । धास्यति । धयतु । अधयत् । धयेत् ] । दाधा घ्वदाप् ।१।१।२०। दारूपा, धारूपाश्च

---

हर्षक्षयः = धातुक्षयः । ( 'उदास होना' 'मलिन होना' ) । वाऽन्यस्येति । अन्यत्वं पूर्वसूत्रविषयापेक्षयेत्याह—घुमास्थादेरन्यस्येति ।

---

उस्यपदान्तात् । अपदान्त अवर्ण से उस् परे रहते पूर्वपर के स्थानमें पररूप एकादेश हो ।

आदेच उपदेशे । उपदेशमें जो एजन्त धातु उसको आत्व हो, परन्तु शित्परे रहते यह आत्व नहीं हो ।

वाऽन्यस्य । घुमास्थादि धातुओं से अन्य जो संयोगादि आदन्त धातु, उनके आकार को एत्व हो, विकल्प करके, आर्द्धधातुक कित् लिङ् परे रहते ।

यमरम । यम्, रम्, नम् और आदन्त जो धातु उनको सक् आगम हो, और उनसे परे जो 'सिच्' उसको इट् आगम हो, परस्मैपद परे रहते ।

दाधा घ्व । दारूप और धारूप जो धातु वे 'घु' सञ्ज्ञक हों, 'दाप्' और 'दैप्' को छोडकर ।

---

१ लिखितेषु नास्ति ।

धातवो घुसंज्ञाः स्युर्दाप्दैपौ विना। धेयात्।

विभाषा धेट्श्व्योः ।३। १।४६। आभ्यां च्लेश्चङ् वा।

चङि ।६।१।११। अनभ्यासधात्ववयवस्य प्रथमस्यैकाचो द्वे स्तोऽजादेर्द्वितीयस्य। अदधत्। [1]अदधताम् [ [2]अदधन् ]।

विभाषा घ्राधेट्शाच्छासः ।२।४।७८। एभ्यः सिचो लुग्वा [ [2]स्यात् ] परस्मैपदे। अधात्। अधाताम्। अधुः। पक्षे इट्सकौ। अधासीत्। अधासिष्टाम्। [ [3]अधासिषुः ]॥

ग्लै न्यक्करणे। ५४। द्यायति॥ द्रै स्वप्ने। ५५। द्रायति॥ ध्रै तृप्तौ। ५६। ध्रायति॥ ध्यै चिन्तायाम्। ५७। ध्यायति। दध्यौ। रै शब्दे। ५८। रायति॥ स्त्यै ५९ ष्ट्यै ६० शब्दसङ्घातयोः। स्त्यायति। षोपदेशस्यापि सत्वे कृते रूपं तुल्यम्, षोपदेशफलं तु

चङीति। चङि परेऽनभ्यासधात्ववयवस्य प्रथमस्यैकाचो द्वे स्तोऽजादेर्द्वितीयस्येत्यर्थः।

न्यक्करणं = तिरस्कारः। अस्य 'ध्रै'धातोरेव—णिचि 'ध्रापयती'तिरूपं [ध्रापणं = धपाना। तृप्त करना]। सङ्घातः—ग्रन्थः, घनीभावो वा (जमना)।

षोपदेशस्य = ष्ट्यैधातोः। तुल्यं = स्त्यैधातुना तुल्यमेव रूपम्। षोपदेशस्य आदेशरूपसकारेणादेशप्रत्यययोरिति षत्वे तिष्ट्यासतीति रूपं, सोपदेशस्य तु

विभाषा धेट्। 'धेट्' धातु और 'श्वि' धातु से परे जो 'च्लि' उसको 'चङ्' आदेश हो, विकल्प करके।

चङि। अनभ्यास धातु का अवयव जो प्रथम एकाच् उसको द्वित्व हो, और अजादि के द्वितीय एकाच् उसको द्वित्व हो, चङ् परे रहते।

विभाषा घ्रा। घ्रा, धेट्, शो, छो, षो—इन धातुओं से परे जो सिच् उसका लुक् हो, विकल्प करके, परस्मैपद परे रहते।

१ क्वाचित्कमेतत्। २ लिखितेषु न दृश्यते। ३ क्वचिन्न।

'तिष्ठ्यासतीत्यादौ भविष्यति ।। खै खदने । ६१ । खायति ।।

क्षै ६२ जै ६३ षै ६४ क्षये । क्षायति । जायति । सायति । 'घुमास्थे'-त्यत्र, 'विभाषा घ्राधेट्' इत्यत्र च स्यतेरेव ग्रहणं, न त्वस्य, तेन एत्व-सिज्लुकौ न । सायात् । असासीत् । कै ६५ गै ६६ शब्दे ।। शै ६७ श्रै ६८ पाके। पै ६९ ओवै ७० शोषणे । पायात् । अपासीत् । 'घुमास्थे'तीत्वं, तद-पवाद 'एर्लिङी'त्येत्वं, 'गातिस्थे'ति सिज्लुक् च न,[1] 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहण'मिति पारूपस्य लाक्षणिकत्वात् ।। ष्टै वेष्टने । ७१ । स्तायति ।। स्नै ७२ वेष्टने, शोभायां चेत्येके । स्नायति ।।

दैप् शोधने । ७३ । दायति । अघुत्वादेत्वसिज्लुकौ न । दायात् । अदासीत् ।। घ्रा गन्धोपादाने । ७४ । जिघ्रति । घ्रायात्-घ्रेयात् । अघ्रासीत् । अघ्रात् । अघ्रास्यत् । ध्मा शब्दाऽग्निसंयोगयोः ।७५। धमति ।।

ष्ठा गतिनिवृत्तौ । ७६ । तिष्ठति । 'स्थादिष्वि'ति षत्वम् । अधितष्ठौ । 'उपसर्गा'दिति षत्वम् । अधिष्ठाता । स्थेयात् । सत्वे कृते प्रकृतिस्तवर्गः[2]स्यात् । उक्तञ्च—

'नकारजावनुस्वारपञ्चमौ झलि धातुषु ।
सकारजः शकारश्चे षाट्टवर्गस्तवर्गजः ।।'

---

तिस्त्यासतीति भेद इत्याशयः । खदनं = भक्षणम् । स्यतेः = दैवादिकस्य 'षोऽन्तकर्मणी'त्यस्य, नत्वस्य 'षै'धातोः ।

एत्वम्—'एर्लिङीत्यनेन, विभाषा घ्राधे'ङि'त्यनेन सिचो लुक् च नेत्यर्थः । इति=इत्यनया नेत्यर्थः । लाक्षणिकत्वात् = 'आदेच उपदेशे' इति लक्षणवश-सम्पन्नत्वात् । अघ्रादिति । 'विभाषा घ्राधेङि'ति वा सिचो लुक ।

नकारजाविति । धातुषु—झलि परतोऽनुस्वारपरसवर्णौ नकारस्थानिकौ ।

---

नकारजौ । धातुओं में—झल् परे रहते जो अनुस्वार हैं और पञ्चम 'ङ'

---

1 'सिचो लुक् च न' पा० । 2 'स्या'दिति क्वचिन्न ।

'गातिस्थे'ति सिचो लुक्। अस्थात्॥

स्ना अभ्यासे । ७७ । मनति ॥ दाण् दाने ।७८। प्रणियच्छति ॥

ह्वृ कौटिल्ये । ७९ । ह्वरति । ऋतश्च संयोगादेर्गुणः ।७।४।१०। ऋदन्तस्य संयोगादेरङ्गस्य गुणो, लिटि । [1]उपधाया वृद्धिः । जह्वार । जह्वरतुः। जह्वरुः। जह्वर्थ । जह्वरथुः । जह्वर । जह्वार। जह्वर । जह्वरिव । जह्वरिम । ह्वर्ता । ऋद्धनोः स्ये ।७।२।७०। ऋतो, हन्तेश्च स्यस्य इट्। ह्वरिष्यति । ह्वरतु । अह्वरत् । ह्वरेत् । गुणोऽर्तिसंयोगाद्योः।७।४।२९। अर्तेः, संयोगादेर्ऋदन्तस्य च गुणो, यकि, [2]यादावार्द्धधातुके लिङि च। ह्वर्यात् । अह्वार्षीत् । अह्वरिष्यत् ॥

स्वृ शब्दोपतापयोः । ८० । स्वरति । 'स्वरती'ति वेट् । सस्वरिथ-

---

एवं धातुषु-चे=चकारे परतः-शकारः-सकारजः=सकारस्थानिकः । (एवं धातुषु-) रेफषकारात्परष्टवर्गश्च तवर्गस्थानिक इत्यर्थः ।

उपतापः=रोगः । सन्तापश्च ।

---

'ञ' ण' आदि अक्षर हैं, ये नकारस्थानिक हैं। और चकार परे रहते जो शकार है । वह सकार स्थानिक है । और रेफ और षकारसे परे जो टवर्ग है वह तवर्ग स्थानिक है ।

ऋतश्च संयो । ऋदन्त जो संयोगादि अङ्ग उसको गुण हो, लिट् परे रहते ।

ऋद्धनोः स्ये । ऋदन्त धातु और हन् धातु से परे जो 'स्य' उसको 'इट्' आगम हो ।

गुणोर्त्ति । 'ऋ' धातु को और संयोगादि ऋदन्त धातु को गुण हो, 'यक्' परे रहते और यकारादि आर्द्धधातुक लिङ् परे रहते ।

---

१ 'उपधावृद्धिः' पा० । 'अत उपधायाः वृद्धिः' इति च पा० ।

२ 'याद्यार्द्धधातुके' पा० ।

सस्वर्थ। वमयोस्तु स्वरत्यादिविकल्पं बाधित्वा पुरस्तात् प्रतिषेध-काण्डारम्भसामर्थ्यात् 'श्र्युकः किती'ति निषेधे प्राप्ते, क्रादिनियमान्नित्यमिट्। सस्वरिव। सस्वरिम। परत्वाद्धनोरिति नित्यमिट्। स्वरिष्यति। [[२]अस्वारीत्। अस्वार्षीत्]। स्मृ चिन्तायाम्।८१। स्मरति।

ह्वृ संवरणे।८२। ह्वरति॥ सृ गतौ।८३। क्रादित्वान्नेट्। [[२]ससार] ससर्थ। ससृव। [३]ससृम। रिङ् शयग्लिङ्क्षु।७।४।२८। शे, यकि यादावार्द्धधातुके लिङि च ऋतो रिङ्। रीङि प्रकृते रिङ्विधिसामर्थ्यान्न[४] दीर्घः। स्त्रियात्। असार्षीत्। [५]असरिष्यत्।

शीघ्रगतौ तु 'पाघ्रे'ति शिति धौरादेशः। धावति॥

गृ ८४ घृ ८५ सेचने। [[५]गरति। [५]घरति]। ध्वृ हूर्च्छने।८६। ध्वरति॥ दृशिर् प्रेक्षणे।८७। पश्यति। [[५]ददर्श]। *ऋदुपधेभ्यो

'ह्वृ'—संवरणे' इत्येवाऽत्र लिखितेष्वपि पाठः। 'ह्वृ संवरणे' इति त्वयुक्तः पाठः। अस्यैव धातोर्ह्वारमिति हि रूपं भवति। 'ह्वृ' इति क्वाचित्को मुद्रितेषु पाठस्तु न शोभनः, तस्य कौटिल्येऽनुपदमेव गतत्वात्। लिखितादर्शेषु च 'ह्वृ' इत्यस्य स्पष्टमुल्लेखात्। 'ह्वृ' इति क्वचिल्लेखस्तु लेखकप्रमादात्। एवमेव सिद्धान्त-कौमुद्यामपि प्रचलितो मुद्रितः 'ह्वृ' इति पाठो लेखकप्रमादादेवेति बोध्यम्।
संवरणम् = आच्छादनम्। हूर्च्छनं = कुटिलीभावः। धूर्त्तता। वृकशब्दो वा।

रिङ् शय। ऋत् को 'रिङ' आदेश हो, शकार और यक् [ परे रहते, ] और यकारादि आर्द्धधातुक लिङ् परे रहते।

ऋदुपधेभ्यो। ऋदुपध धातुओं से परे जो लिट् वह गुण की अपेक्षा से पूर्वविप्रतिषेध करके कित् ही हो।

१ लिखिते नास्ति। २ क्वाचित्कोयं पाठः।
४ 'अकृत्सार्वधातुकयो'रिति दीर्घो न' पा०। ५ लिखितेषु नास्ति।

लिटः किरवं गुणात्पूर्वविप्रतिषेधेन। ददृशतुः। [1]ददृशुः ]। **विभाषा सृजिदृशोः** ।७।२।६५। आभ्यां थल इड् वा। **सृजिदृशोर्झल्यमकिति** ।६।१।५८। अनयोरमागमः स्याज्झलादावकिति। दद्रष्ठ-ददर्शिथ। द्रष्टा। **षढोः कः सि** ।८।२।४१। [2]षस्य, ढस्य च कः स्यात्सकारे परे। द्रक्ष्यति। दृश्यात्। इरित्त्वादङ् वा। **ऋदृशोऽङि गुणः** ।७।४।१६। [ [3]ऋवर्णान्तानां, दृशेश्च गुणः स्यादङि ]। अदर्शत्। अङभावे—। **न दृशः** ।३।१।४७। [ [3]दृश—] इच्लेर्वक्ष्यमाणः क्सो न। अद्राक्षीत्। अद्रक्ष्यत्।

**श्रु श्रवणे** ।८८। **श्रुवः शृ च** ।३।१।७४। श्रुवः 'शृ' आदेशः, श्नुप्रत्ययश्च, कर्तरि सार्वधातुके। शृणोति। **सार्वधातुकमपित्**

---

वक्ष्यमाणः='शल इगुपधा'दिति वक्ष्यमाणः क्सः।

---

विभाषा सृजि। 'सृज्' और 'दृश्' धातु से परे जो 'थल्' उसको 'इट्' आगम हो, विकल्प करके।

सृजिदृशो। 'सृज्' और 'दृश्' धातु को 'अम्' आगम हो, झलादि अकित् ( प्रत्यय ) परे रहते।

षढोः कः सि। षकार और ढकारको 'क' आदेश हो, सकार परे रहते।

ऋदृशोऽङि। ऋवर्णान्त जो धातु और दृश् धातु-इनको गुण हो, अङ् परे रहते।

न दृशः। दृश् धातु से परे जो 'च्लि' उसको वक्ष्यमाण 'क्स' आदेश नहीं हो।

श्रुवः शृच। 'श्रु' धातु को 'शृ' आदेश हो और उससे 'श्नु' प्रत्यय भी हो, कर्त्रर्थक सार्वधातुक परे रहते।

सार्वधातुकमपित्। अपित् सार्वधातुक ङिद्वत् हो।

---

१ लिखितेष्वयं पाठो नास्ति। २ इयं वृत्तिर्न सार्वत्रिकी।
३ एकत्रादर्शेऽयं पाठो दृश्यते।

।१।२।४। अपित्सार्वधातुकं ङिद्वत्स्यात्। शृणुतः। हुश्नुवोः सार्वधातुके ।६।४।८७। [1]जुहोतेः, श्नुप्रत्ययान्तस्याऽनेकाचोऽङ्गस्याऽसंयोगपूर्वोवर्णस्य यणस्यादचि[2]सार्वधातुके। शृण्वन्ति। शृणोषि। शृणुथः। शृणुथ। शृणोमि। लोपश्चाऽस्याऽन्यतरस्यां म्वोः ।६।४।१०७। असंयोगपूर्वस्य प्रत्ययोकारस्य लोपो वा, म्वोः परयोः। शृण्वः। शृणुवः। शृण्मः। शृणुमः।

शुश्राव। शुश्रुवतुः। शुश्रुवुः। शुश्रोथ। शुश्रुवथुः। शुश्रुव। शुश्राव। शुश्रव। शुश्रुव। शुश्रुम। श्रोता। श्रोष्यति।

शृणोतु-शृणुतात्। शृणुताम्। शृण्वन्तु। उतश्च प्रत्ययादसंयोगपूर्वात् ।६।४।१०६। [3]असंयोगपूर्वात्प्रत्ययोतो हेर्लुक्। शृणु-शृणुतात्। शृणुतम्। शृणुत। गुणावादेशौ। शृणवानि। शृणवाव। शृणवाम।

अशृणोत्। अशृणुताम्। अशृण्वन्। अशृणोः। अशृणुतम्। अशृणुत। अशृणवम्। अशृण्व-अशृणुव। अशृण्म-अशृणुम। शृणुयात्। शृणुयाताम्। [ [4]उस्यपदान्तात् ।६।१।९६। अपदान्तादवर्णादुसि पररूपमेकादेशः स्यात् ]। शृणुयुः। शृणुयाः। शृणुयातम्।

---

हुश्नुवोः। हुधातु और श्नुप्रत्ययान्त जो अनेकाच् अङ्ग, तदवयव जो असंयोगपूर्वक उवर्ण, उसको यण् हो, अजादि सार्वधातुक परे रहते।

लोपश्चास्या। असंयोग पूर्वक जो प्रत्यय का उकार, उसका लोप हो, विकल्प करके, मकार और वकार परे रहते।

उतश्च प्रत्यया। असंयोगपूर्वक जो प्रत्यय का उकार, उससे परे 'हि' का लुक्।

उस्यपदान्तात्। अपदान्त अवर्ण से 'उस्' परे रहते पूर्वपरके स्थान में पररूप एकादेश हो।

---

१ 'हुश्नुवोरनेकाचोऽसंयोगपूर्वोवर्णस्य' पा०। २ 'अजादौ' पा०।

३ 'असंयोगपूर्वो यः प्रत्ययोकारस्तदन्ताद‌ङ्गात्परस्य हेर्लुक स्यात्' पा०।

४ लिखितेष्वयं पाठो नास्ति।

शृणुयात। [[1]शृणुयाम्। शृणुयाव। शृणुयाम]। श्रूयात्। अश्रौषीत्। अश्रोष्यत्। [गम्लृ ८९ सृप्लृ ९० गतौ]। [2]इषुगमियमां छः ।७।३।७७। [[3]इषगमियमां छः] शिति। गच्छति। जगाम। गमहन-जनखनघसां लोपः क्ङित्यनङि ।६।४।९८। एषामुपधाया लोपः [4]स्यादजादौ क्ङिति, न त्वङि। जग्मतुः। जग्मुः। जगमिथ-जगन्थ। जग्मथुः। जग्म। जगाम-जगम। जग्मिव। जग्मिम। [[5]गन्ता]।

गमेरिट् परस्मैपदेषु ।७।२।५८। गमेः [[5]परस्य] सादेरार्द्धधातुकस्येट् परस्मैपदेषु। गमिष्यति। गच्छतु। अगच्छत्। [5]गच्छेत्। गम्यात्।

पुषादिद्युताद्यॢदितः परस्मैपदेषु ।३।१।५५। श्यन्विकरणपुषादे-र्द्युतादेर्ऌदितश्च परस्य च्लेरङ्, परस्मैपदेषु। अगमत्। अगमिष्यत्।

सर्पेति। अनुदात्तस्य चर्दुपधस्याऽन्यतरस्याम् ।६।१।५९।

---

श्रूयादिति। 'अकृत्सार्वधातुक' इति दीर्घः। जगमिथेति। भारद्वाजमते इट्। अन्येषान्तु 'अचस्तास्व'दित्नीणिनिषेध इति विवेकः। इडभावे उदाहरति—जगन्थेति। जग्मिवेति। क्रादिनियमान्नित्यमिट्, 'क्राद्यन्यो लिटि से' ङि-

---

इषगमि। इष, गम्, यम्—इन धातुओंको छकार अन्तादेश हो, शित्प्रत्यय परे रहते।

गमहन। गमादिकी उपधा का लोप हो, अजादि कित् ङित् परे रहते। परन्तु अङ् परे रहते यह लोप नहीं हो

गमेरिट्। 'गम्' धातु से परे जो सादि आर्द्धधातुक उसको इट् आगम हो, परस्मैपद परे रहते।

पुषादि। श्यन् विकरण पुषादि और द्युतादि और ऌदित् धातुओंसे परे जो 'च्लि' उसको अङ् आदेश हो, परस्मैपद परे रहते।

अनुदात्तस्य। उपदेश में जो अनुदात्त ऋदुपध धातु उसको 'अम्'

---

१ क्वाचित्कः पाठः। २ 'इषुगमि' पा०।

३ आवृत्त्याऽस्माभिर्योजितः, ग्रन्थकृता तन्त्रेण निर्दिष्टत्वात्।

४ 'स्या'दिति क्वचिन्न। ५ क्वचिन्न।

उपदेशेऽनुदात्तो य ऋदुपधस्तस्याऽम्वा,झलादावकिति । स्रप्ता । सर्प्ता । [[1]स्रप्स्यति । सर्प्स्यति] । असृपत् ।

ञिक्ष्विदा ९१ अव्यक्ते शब्दे । क्ष्वेदति ॥ यभ ९२ मैथुने । यभति । [[1]वेट् ] । येभिथ । झषस्तथोर्धोऽधः ।८।२।४०। झषः परयोस्तथयोर्धः स्यान्न तु दधातेः । ययब्ध । यब्धा । [2]णम ९३ प्रह्वत्वे, शब्दे च । नेमिथ । ननन्थ । नन्ता । नंस्यति । अनंसीत् । अनंसिष्टाम् ॥

त्यज हानौ ।९४। त्यजति । [[3]तत्याज] । तत्यजिथ—तत्यक्थ । त्यक्ता । अत्याक्षीत् । [ [3]अत्याक्ताम् । अत्यक्ष्यत् ] ।

अक्षू व्याप्तौ ।९५। अक्षोऽन्यतरस्याम् ।३।१।७५। [ [4]अक्षोऽन्यतरस्यां ] श्नुः स्यात्कर्तरि सार्वधातुके । पक्षे शप् । अक्ष्णोति । अक्षति । आनक्ष । [ [5]आनक्षतुः । आनक्षुः ] । आनक्षिथ-आनष्ठ ।

---

त्युक्तेः । वेडिति । अकारवत्त्वेन थलि वेडित्यर्थः । इड्विकल्पश्च मतभेदनिबन्धन इत्यवधेयम् । येभिथेति । अत्र 'थलि च सेटी'त्येत्वाभ्यासलोपौ ।

प्रह्वत्वे = करशिरःसंयोगानुकूलव्यापारे । अनंसीदित्यादौ 'यमरमनमाता'मितीट्सकौ ।

हानिः = त्यागः । (छोड़ना) । 'आनक्षिथे'त्यादौ 'स्वरतिसूती'ति वेट् ।

---

आगम हो, झलादि अकित् परे रहते ।

झषस्तथो । झष् से परे जो तकार और थकार, उनको धकार आदेश हो, परन्तु दधाति को नहीं हो ।

अक्षोन्य । अक्षधातु से 'श्नु' प्रत्यय हो, विकल्प करके, कर्त्रर्थक सार्वधातुक परे रहते ।

---

१ एकत्र दृश्यतेऽयम् । २ 'णमु' इति सर्वत्र पाठो दृश्यते ।

३ लिखितेषु नास्त्ययं पाठः ।

४ अस्माभिर्वर्द्धितोऽयं पाठः । 'श्नुः स्याद्वा कर्त्तरि सार्वधातुके' इति च पा० ।

५ लिखिते नास्ति ।

अक्षिता-अष्टा । अक्षिष्यति । 'स्को'रिति कलोपः । **षढो कः सि** [।८।२।४१।] अक्ष्यति। अक्ष्णोतु। अक्ष्णुहि। अक्ष्णवानि। आक्ष्णोत्। आक्ष्णवम्। अक्ष्णुयात्। [ [1]अक्ष्णुयाताम् ]। अक्ष्णुयुः। अक्ष्यात्। आक्षीत्। आक्षिष्टाम्। [ [2]आष्टाम् ]। [ [1]आक्षिषुः ]।

**तक्षू ९६ त्वक्षू ९७ तनूकरणे। तनूकरणे तक्षः।३।१।७६।** [ [3]तनूकरणे तक्षः] श्नुर्वा शब्विषये। तक्ष्णोति, तक्षति वा काष्ठम्। ततक्ष। ततक्षिथ-ततष्ठ। अतक्षीत्। अतक्षिष्टाम्। अताक्षीत्। अताष्टाम्। तनूकरणे किम्? वाग्भिः सन्तक्षति। भर्त्सयतीत्यर्थः॥ **रक्ष पालने** ।९८। रक्षति॥

**णिक्ष चुम्बने** ।९९। प्रणिक्षति॥ **त्रक्ष रोषे** ।१००। संघाते इत्येके। त्रक्षति। **मृक्ष संघाते** ।१०१। **मक्ष** इत्येके॥ **तक्ष त्वचने** ।१०२। त्वचनं-संवरणम्, त्वचो ग्रहणं च॥ **पक्ष परिग्रहे** १०३ इत्येके॥ **सूर्क्ष आदरे** ।१०४। सूर्क्षति। सुसूर्क्ष॥ **काक्षि १०५ वाक्षि १०६ माक्षि १०७ काङ्क्षायाम्॥ द्राक्षि १०८ ध्राक्षि १०९ ध्वाक्षि ११० घोरवाशिते च॥ चूष पाने** ।१११। **तूष तुष्टौ** ।११२। **पूष वृद्धौ** ।११३। **मूष स्तेये** ।११४। **लूष ११५ रूष ११६ भूषायाम्॥ शूष प्रसवे** ।११७। **यूष हिंसायाम्** ।११८। **जूष च॥ भूष अलङ्कारे** ।११९।

**जि जये** । १२०। जयति। **सँल्लिटोर्जेः** ।७।३।५७। सँल्लिण्निमित्तादभ्यासात्परस्य जेः कुत्वम्। जिगाय। [ [1]जिग्यतुः ]। जिगयिथ।

---

त्वचो ग्रहणं=सन्तक्षणम् ( छीलना )।

---

तनूकरणे। तक्ष धातु से तनूकरण ( सूक्ष्म करना ) अर्थ में श्नुप्रत्यय हो, विकल्प करके शप् के विषय में।

सँल्लिटोर्जेः। सन् और लिट् निमित्तक अभ्यास से परे 'जि' धातुको कुत्व हो।

---

१ लिखिते नास्ति। २ लिखितेऽयं पाठः। ३ शेषपूरणमिदमस्मदीयम्।

जिगेथ। जीव प्राणधारणे ।१२१। जीवति ॥ पीव १२२ मीव १२३ तीव १२४ णीव १२५ स्थौल्ये। पीवति। पिपीव ॥ र्घुर्वी बन्धने।१२६।

उपधायां च ।८।२।७८। धातोरुपधाभूतयो रेफवकारयोर्हल्परयोः परत इको दीर्घः स्यात्। घूर्वति ॥ पुर्व १२७ पर्व १२८ मर्व पूरणे ।१२९। पूर्वति। पर्वति। मर्वति ॥ चर्व अदने ।१३०। चर्वति ॥

कष १३१ खष १३२ शिष १३३ जष १३४ झष १३५ शष १३६ वष १३७ मष १३८ रुष १३९ रिष १४० [1]हिंसार्थाः। शेषति। शिशेष। [ [2]शेष्टा ]। शल इगुपधादनिटः क्सः ३।१।४५। इगुपधो यः शलन्तस्तस्मादनिटश्च्लेः क्सादेशः। अशिक्षत। तीषसहलुभरुषरिषः ।७।२।४८। इच्छत्यादेः परस्य तादेरार्द्धधातुकस्येड्वा। रोषिता। रोष्टा। [ [3]रेषिता। रेष्टा ]। भष भर्त्सने।१४१। इह भर्त्सनं—श्वरवः ॥

घोरवाशिते=काकादिशब्दे। जिगेथेति। अजन्तत्वात्थलि वेट् मतभेदेन। अदनं=प्रकृते चर्वणम्।

तीषसहेति। 'ती'ति सप्तम्यन्तम्। 'यस्मिन्विधि'रिति परिभाषया च तादेरित्यर्थः। आर्द्धधातुकस्येत्यनुवर्त्तते। श्वरवः = कुक्कुरशब्दः। ( भूँकना )।

उपधायां च। धातुका उपधाभूत जो हल्परक रेफ और वकार, वह परे रहते इक् को दीर्घ हो।

शल इगुपधा। इगुपध जो शलन्तधातु उससे परे जो अनिट् 'च्लि' उसको 'क्स' आदेश हो।

तीषसह। इच्छत्यादि से परे जो तादि आर्द्धधातुक उसको इट् आगम हो, विकल्प करके।

१ इतोऽग्रे—'तृतीयषष्ठौ तालव्योष्मादौ। सप्तमो दन्त्योष्ठ्यादिः' इति क्वचित्पाठो दृश्यते। २ लिखितेषु नास्ति। ३ लिखिते क्वचिद् दृश्यते।

पुष ।१४२। पोषिता । अनुदात्तेषु 'पुष्ये'ति श्यना निर्देशादयमुदात्तः । अङ्विधौ दैवादिकस्य ग्रहणान्नाऽङ् । अपोषीत् ॥ श्रिषु १४३ श्लिषु १४४ प्रुषु १४५ प्लुषु दाहे ।१४६। श्रेषति । श्लेषति । प्रोषति । प्लोषति ॥

इति परस्मैपदप्रक्रिया ॥

---

अथात्मनेपदप्रक्रिया ।

एध १ वृद्धौ । टित आत्मनेपदानां टेरे ।३।४।७९। टितो लस्यात्मनेपदानां टेरेत्वम् । एधते । आतो ङितः ।७।२।८१। अतः परस्य ङितामात इय् स्यात्[1] । एधेते । एधन्ते । थासः से ।३।४।८०। टितो लस्य [[2]थासः से स्यात्] । एधसे । एधेथे । एधध्वे । एधे । एधावहे । एधामहे । इजादेश्च गुरुमतोऽनृच्छः ।३।१।३६। इजादिर्यो धातुर्गुरुमानृच्छत्यन्यस्तत आम् लिटि ।

आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य ।१।३।६३। आम्प्रकृत्या तुल्य-

---

उदात्त इति । तेनायं सेडित्यर्थः । अङ्विधौ = 'पुषादिद्युतादी'ति सूत्रे ।

टित इति । 'लस्ये'त्यभिक्रियते । 'टित' इति च तद्विशेषणम् ।

---

टित आत्मने । टित् लकार स्थानिक जो आत्मनेपद, उसकी 'टि'को एत्व हो ।

आतो ङितः । अत् से परे जो ङित् सम्बन्धी आकार उसको 'इय्' आदेश हो ।

थासः से । टित् लकार स्थानिक जो 'थास्' उसके स्थान में 'से' आदेश हो ।

इजादेश्च । इजादि और गुरुमान्, ऋच्छति से अन्य जो धातु—उससे 'आम्' प्रत्यय हो, लिट् परे रहते ।

आम्प्रत्ययवत् । आम्प्रकृतिकी तुल्य ही अनुप्रयुज्यमान कृञ् धातु से भी आत्मनेपद हो ।

---

१ 'स्या' दिति क्वचिन्न । २ क्वचिदेवायं पाठो लभ्यते ।

मनुप्रयुज्यमानात्कृञोऽप्यात्मनेपदं स्यात्[1] । **लिटस्तझयोरेशिरेच्** ।३।४।८१। [ [1]लिडादेशयोस्तझयोरेश् इरेच् एतौ स्तः ]। एकारोच्चारणं ज्ञापकं—'तङादेशानां टेरेत्वं ने'ति । तेन डारौरसां न। एधाञ्चक्रे। एधाञ्चक्राते । एधाञ्चक्रिरे। एधाञ्चकृषे। एधाञ्चक्राथे ।

**इणः षीध्वंलुङ्लिटां धोऽङ्गात्** ।८।३।७८। [2]इणन्तादङ्गात्परेषां षीध्वंलुङ्लिटां धस्य ढः। एधाञ्चकृढ्वे। एधाञ्चक्रे। एधाञ्चकृवहे। एधाञ्चकृमहे। एधाम्बभूव। एधामास। अनुप्रयोगसामर्थ्यादस्तेर्भूभावो न, अन्यथा हि 'कृञ्चानुप्रयुज्यते' इति, 'कृभ्वि'ति वा ब्रूयात्। एधिता। एधितारौ। एधितारः। एधितासे। एधितासाथे। **धि च** ।८।२।२५। धादौ प्रत्यये सलोपः [ स्यात्[3] ]। एधिताध्वे। **ह एति** ।७।४।५२। तासस्त्योः सस्य हः [ [4]स्यादेति परे ] एधिताहे। एधितास्वहे। एधितास्महे। एधिष्यते। एधिष्येते। एधिष्यन्ते। एधिष्यसे। एधिष्येथे। एधिष्ये। एधिष्यावहे। एधिष्यामहे।

---

ज्ञापकमिति। इशि, इरिचि च विधातव्ये एकारविधानं प्रकृतार्थे ज्ञापकम्, एवञ्च तङादेशानामेशिरेजादीनां टेरेत्त्वाऽप्रसक्त्या एकारोच्चारणं चरितार्थमित्याशयः।

---

लिटस्तझयोः। लिडादेश जो 'त' और 'झ' उनके स्थान में 'एश्' और 'इरेच्' आदेश हों ( क्रम से )।

इणः षीध्वं। इणन्त अङ्गसे परे जो षीध्वं और लुङ् लिट् सम्बन्धी धकार उसको ढकार आदेश हो।

धि च। धादि प्रत्यय परे रहते सकार का लोप हो।

ह एति। तास् और अस्ति के सकार को हकार आदेश हो, एत् परे रहते।

---

१ क्वचिन्न। २ 'इणणन्ता' पा०। ३ क्वचिन्न। ४ क्वचिदपि न दृश्यते।

आमेतः ३।४।९०। लोट एत आम्[1]। एधताम्। एधेताम्। एधन्ताम। सवाभ्यां वामौ ।३।४।९१। सवाभ्यां परस्य लोडेतः क्रमाद्वाऽमौ स्तः। एधस्व। एधेथाम्। एधध्वम्।

एत ऐ ।३।४।९३। लोडुत्तमस्य [एत[2] ऐ स्यात्]। आमोऽपवादः। एधै। एधावहै। एधामहै। आटश्च। ऐधत। ऐधेताम्। ऐधन्त। ऐधथाः। ऐधेथाम्। ऐधध्वम्। ऐधे। ऐधावहि। ऐधामहि।

लिङः सीयुट् ।३।४।१०२। [[3]लिङादेशानां सीयुडागमः स्यादात्मनेपदे। 'सुट्तिथोः'। 'लिङः सलोपोऽनन्त्यस्ये'ति —] सलोपः। [[4]लोपो व्योर्वलि ।६।१।६६। ] एधेत। एधेयाताम्। झस्य रन् ।३।४।१०५। लिङो [[5]झस्य रन्]। एधेरन्। एधेथाः। एधेयाथाम्।

---

एत इति। एतः—षष्ठ्यन्तम्, ऐ—इति लुप्तप्रथमान्तम्। 'लोटो लङ्वदि'त्यतो 'लोट' इति, 'आडुत्तमस्ये'त्यत उत्तमस्येति चानुवर्त्तते। आटश्चेति। 'अनेन वृद्धि'रिति शेषः। लिङः सीयुडिति। परस्मैपदानां लिङादेशानां यासुडागमविधानादात्मनेपदमात्रविषयमिदं सूत्रम्। क्वचिल्लिखितादर्शेतु—आतम-

---

आमेतः। लोट् सकार को आम् आदेश हो।

सवाभ्यां। सकार और वकार से परे जो लोट् सम्बन्धी एकार उसको क्रमसे 'व' और 'अम' आदेश हो।

एत ऐ। लोट् उत्तम पुरुष सम्बन्धी एकार को ऐकार आदेश हो।

लिङः सीयुट्। लिङ् को 'सीयुट्' आगम हो।

लोपो व्योर्वलि। वकार और यकारका लोप हो वल् परे रहते।

झस्य रन्। लिङ् सम्बन्धी 'झ' को 'रन्' आदेश हो।

---

१ 'लोट एकारस्य आम् स्यात्' इति पा०। २ क्वचिदेव दृश्यते।

३ एकात्रादर्शेऽयं पाठो लभ्यते, न सर्वत्र। ४ लिखितेपु नास्ति।

५ क्वाचित्कः पाठः।

एधेध्वम् ॥ इटोऽत् ।३।४।१०६। लिङादेशस्य [ [1]इटोऽत्स्यात ] ।
एधेय । एधेवहि । एधेमहि ।

सुट् तिथोः ।३।४।१०७। [2]लिङस्तथोः सुट् [ स्यात्[1] ] । यलोपः ।
एधिषीष्ट । एधिषीयास्ताम् । एधिषीरन् । एधिषीष्ठाः । एधिषीयास्थाम् ।
एधिषीध्वम् । एधिषीय । एधिषीवहि । एधिषीमहि ।

ऐधिष्ट । ऐधिषाताम् । आत्मनेपदेष्वनतः ।७।१।५।
अनकारात्परस्याऽऽत्मनेपदेषु झस्य अत् स्यात् । ऐधिषत । ऐधिष्ठाः ।
ऐधिषाथाम् । ऐधिढ्वम् । ऐधिषि । ऐधिष्वहि । ऐधिष्महि ।

ऐधिष्यत । ऐधिष्येताम् । ऐधिष्यन्त । ऐधिष्यथाः । ऐधिष्येथाम् ।
ऐधिष्यध्वम् । ऐधिष्ये । ऐधिष्यावहि । ऐधिष्यामहि ।

कमु २ कान्तौ । कमेर्णिङ् ।३।१।३०। [[3]कमेर्णिङ् स्यात् ] स्वार्थे ।
कामयते । अयामन्ताल्वाय्येत्न्विष्णुषु ।६।४।५५। एषु णेरय

---

नेपदे इत्येवं वृत्तिरेव दृश्यते, तत्फलितार्थपरं बोध्यम् । ऐधिढ्वमिति । 'इणः षीध्वं'मिति ढत्वम् । इटः सिङ्भक्तत्वेन सिजन्ताङ्गान्तर्भूततया सिचो लोपे 'ऐधि' इत्यस्येणन्ताङ्गत्वात् ।

---

इटोऽत् । लिङादेश जो इट् उसके स्थान में अत् आदेश हो ।

सुट् तिथोः । लिङ् के तकार और थकार को सुट् आगम हो ।

आत्मनेपदेष्व । अनकार से परे जो आत्मनेपदसम्बन्धी 'झ' उसको 'अत्' आदेश हो ।

कमेर्णिङ् । 'कम्' धातु से 'णिङ्' प्रत्यय हो, स्वार्थ में ।

अयामन्ता । 'आम्' 'अन्त' 'आलु' 'आय्य' 'इत्नु' 'इष्णु'—ये परे रहते 'णि' को 'अय्' आदेश हो ।

---

१ क्वाचित्कः पाठोऽयम् ।

२ क्वचित्तु—'आत्मनेपदे लिङस्तथोः सुट्' इति वृत्तिर्दृश्यते ।

३ अयं पाठोऽस्माभिर्वर्द्धितः, वृत्तिकृता तन्त्रेण निर्देशात् ।

[ [1]आदेशः ]। कामयाञ्चक्रे। 'आयादय' इति वा [ [2]णिङ् ]। चकमे। चकमाते। चकमिरे। चकमिषे। चकमाथे। चकमिध्वे। चकमे। चकमिवहे। चकमिमहे। कामयिता। कमिता। कामयिष्यते। कमिष्यते। कामयताम्। अचकामयत। कामयेत। कामयिषीष्ट। कमिषीष्ट।

णिश्रिद्रुस्रुभ्यः कर्तरि चङ् ।३।१।४८। ण्यन्तात्, श्र्यादिभ्यश्च च्लेश्चङ्, कर्त्रर्थे लुङि। [अ[2]] कामि अ त इति स्थिते णेरनिटि।६।४।५१। अनिडादावार्द्धधातुके परे णेर्लोपः। णौ चङ्युपधाया ह्रस्वः ।७।४।१ चङ्परे णौ यदङ्गं, तस्योपधाया ह्रस्वः। [ [3]चङि ]। सन्वल्लघुनि चङ्परेऽनग्लोपे ।७।४।९३। चङ्परे णौ यदङ्गं, तस्य योऽभ्यासो लघुपर-

---

कान्तिः = इच्छा। सन्वदिति। चङ् परो यस्मादिति बहुव्रीहिः। णिश्चाऽन्यपदार्थः। अङ्गस्येत्यनुवर्तते। 'चङ्परे' इति 'अङ्गस्ये'ति च द्वयमावर्त्तते। तेन—अङ्गसञ्ज्ञानिमित्तं यच्चङ्परं, ( णिरिति यावत् ), तत्परं यल्लघु, तत्परो योऽङ्गस्याऽभ्यासस्तस्य सनीव कार्यं स्याण्णावग्लोपेऽसतीत्यर्थः। फलितमाह—चङ्परे इति।

---

णिश्रिद्रु। ण्यन्त धातु और 'श्रि' 'द्रु' 'स्रु' धातु—इनसे परे जो 'च्लि' उसको 'चङ्' आदेश हो, कर्त्रर्थक लुङ् परे रहते।

णेरनिटि। अनिडादि आर्द्धधातुक परे रहते 'णि' का लोप हो।

णौ चङि। 'चङ्' परक 'णि' परे रहते जो अङ्ग उसकी उपधाको ह्रस्व हो।

सन्वल्लघुनि। चङ् परक णि परे रहते जो अङ्ग, तदवयव जो लघुपरक अभ्यास, उसको सन्वद्भाव हो। [ अर्थात्—सन् परे रहते जो कार्य होता हो वह हो ]।

---

१ क्वचिदयं पाठो दृश्यते। क्वचित्तु—'आम्, अन्त, आलु, आय्य, इत्नु, इष्णु, एषु णेरयादेशः' इति पाठः।

२ अयं पाठः क्वापि लिखिते नास्ति।

३ क्वचिदयं पाठो दृश्यते।

स्तस्य सनीव कार्यं स्याण्णावग्लोपेऽसति ।

सन्यतः ।७।४।७९। अभ्यासस्याऽत [1]इत्सनि । दीर्घो लघोः ।७।४।९४। लघोरभ्यासस्य दीर्घः, सन्वद्भावविषये । अचीकमत ।

णिङभावपक्षे—*कमेश्च्लेश्चङ् वाच्यः । [ [2]णेरभावान्न दीर्घसन्वद्भावौ ] । अचकमत । अकामयिष्यत । अकमिष्यत ॥

भाम ३ क्रोधे । भामते । बभामे ॥ क्षमूष् ४ सहने । क्षमते । चक्षमे । चक्षमिषे । चक्षंसे । [ [3]चक्षमाथे ] । [4]चक्षमिवहे ।

म्वोश्च ।८।२।६५। मान्तस्य धातोर्मस्य नः स्यान्म्वोः [5]परयोः । [6]चक्षण्वहे । चक्षमिमहे । चक्षण्महे ॥

गाधृ ५ प्रतिष्ठालिप्सयोर्ग्रन्थे च । गाधते ॥ बाधृ ६ लोडने । लोडनं—प्रतिघातः । [7]बाधते । नाथृ ७ नाधृ ८ याच्ञोपतापैश्वर्याऽऽशीःषु । *आशिषि नाथ इति वाच्यम् । अस्याऽऽशिष्येवात्मनेपदं स्यात् । नाथते । अन्यत्र—नाथति ॥ नाधते ॥

दध ९ धारणे । दधते ॥ स्कुदि १० आप्रवणे । आप्रवणम्—उत्प्लवनमुद्धरणं च । स्कुन्दते । चुस्कुन्दे ॥ श्विदि ११ श्वैत्ये । श्विन्दते ।

---

'चक्षमिषे' इत्यत्र उदित्त्वादिट् ।

---

सन्यतः । अभ्याससम्बन्धी ह्रस्व अकार को इत्त्व हो, सन्परे रहते ।

दीर्घो लघोः । अभ्यासावयव लघु को दीर्घ हो, सन्वद्भाव के विषय में ।

म्वोश्च । मान्त धातु के मकार को नकार आदेश हो, मकार और वकार परे रहते ।

---

१ 'इत्स्यात्सनि' पा० । २ क्वचिदयं पाठो दृश्यते । ३ क्वचिन्न ।
४ 'चक्षमिवहे । चक्षमिमहे' इति पा० । ५ 'परतः' पा० ।
६ 'चक्षण्वहे । चक्षमिवहे । चक्षण्महे । चक्षमिमहे' इति पा० । ७ क्वचिन्न ।

शिश्विन्दे। वदि १२ अभिवादनस्तुत्योः । वन्दते । ववन्दे ॥

भदि १३ कल्याणे सुखे च। भन्दते। [1]बभन्दे ॥ मदि१४ स्तुतिमोदमदस्वप्नकान्तिगतिषु। मन्दते । [ [1]ममन्दे ]। स्पदि १५ किंचिच्चलने। स्पन्दते। [ [2]स्पन्देते। पस्पन्दे ] । मुद १६ हर्षे। मोदते। मुमुदे ॥ उर्द १७ माने, क्रीडायां च। ऊर्दते। ऊर्दाञ्चक्रे। कुर्द १८ खुर्द १९ गुर्द २० गुद २१ क्रीडायामेव । कूर्दते। खूर्दते । गूर्दते। गोदते। जुगुदे।

षूद २२ क्षरणे । सूदते । सुषूदे । ह्राद २३ अव्यक्ते शब्दे। ह्रादते । जह्रादे। ह्लादी २४ सुखे च । चादव्यक्ते शब्दे। ह्लादते ॥

स्वाद२५ आस्वादने। स्वादते।

पर्द २६ कुत्सिते शब्दे। गुदरवे इत्यर्थः। पर्दते । [ [3]पपर्दे ]॥ यती २७ प्रयत्ने। यतते । येते । श्रथि २८ शैथिल्ये । श्रन्थते॥

ग्रथि २९ कौटिल्ये। ग्रन्थते। कत्थ ३० श्लाघायाम्। कत्थते। चकत्थे॥ श्लोकृ ३१ सङ्घाते। सङ्घातो ग्रन्थः। स चेह ग्रथ्यमानस्य व्यापारो, ग्रन्थितुर्वा । आद्येऽकर्मको, द्वितीये सकर्मकः । श्लोकते। शुश्लोके॥ शकि ३२ शङ्कायाम् । शङ्कते । शशङ्के ॥

अकि ३३ लक्षणे। अङ्कते। आनङ्के।

ककि ३४ वकि ३५ श्वकि ३६ त्रकि ३७ ढौकृ ३८ त्रौकृ ३९

---

माने = परिमाणे, उन्माने, निमाने च ।

श्रन्थते = ग्रन्थिं शिथिलयति। कत्थनम् = श्लाघा, अतिप्रशंसा। ( 'डींग हांकना' बड़ाई करना ) । ग्रथ्यमानस्य = काव्यादेः । ग्रन्थितुः = कवेः ।

---

१ क्वचिन्न । २ क्वचिदेव दृश्यते । ३ लिखितेषु नास्ति ।

ष्वष्क ४० वस्क ४१ मस्क ४२ टिकृ ४३ टीकृ ४४ तिकृ ४५ तीकृ ४६ रघि ४७ लघि ४८ गत्यर्थाः । कङ्कते । वङ्कते । श्वङ्कते । त्रङ्कते । ढौकते । डुढौके । त्रौकते । तुत्रौके ।

*सुब्धातुष्ठिवुष्वष्कतीनां सत्वनिषेधः । ष्वष्कते । षष्वष्के । वस्कते । ववस्के । मस्कते । ममस्के । टेकते । टीकते । तेकते । तीकते । रङ्घते । लङ्घते ।

श्लाघृ ४० कत्थने । श्लाघते [1]शश्लाघे । षचि ४१ व्यक्तीकरणे । षञ्चते । [2]षषञ्चे ॥ ऋज ४२ गतिस्थानार्जनोपार्जनेषु । अर्जते । नुड्विधौ ऋकारैकदेशो रेफो हल्त्वेन गृह्यते । तेन द्विहल्त्वान्नुट् । आनृजे । ऋजि ४३ भृजी ४४ भर्जने । ऋञ्जते । [[2]ऋञ्जाञ्चक्रे] । आनृञ्जे । भर्जते ॥

एजृ ४५ भ्रेजृ ४६ भ्राजृ ४७ दीप्तौ । एजते । [ एजाञ्चक्रे ] । भ्रेजते । बिभ्रेजे । भ्राजते । बभ्राजे ॥

वेष्ट ४८ वेष्टने । वेष्टते । विवेष्टे ॥ चेष्ट ४९ चेष्टायाम् । चेष्टते । चिचेष्टे ॥ स्फुट ५० विकसने । स्फोटते । पुस्फुटे ॥

टुवेपृ ५१ कम्पने । वेपते ॥ कपि ५२ चलने । कम्पते ॥

भिक्ष ५३ भिक्षायामलाभे, लाभे च । [1]भिक्षते । [[2]बिभिक्षे] ॥ दीक्ष ५४ मौण्ड्येज्योपनयननियमव्रतादेशेषु । दीक्षते । दिदीक्षे ॥ भाष ५५ व्यक्तायां वाचि । भाषते । [बभाषे] । वर्ष ५६ स्नेहने । वर्षते । [ववर्षे] ।

---

सत्वनिषेधः='धात्वादेः षः सः' इति प्राप्तस्य षत्वस्य निषेधः ।
कत्थनं=प्रशंसा ।
मौण्ड्यं = मुण्डनम् । इज्या = यजनम् ।

---

सुब्धातु । सुब्धातु (अर्थात्–नामधातु), ष्ठिव्धातु और ष्वष्क धातु–इनके षकारको सत्व नहीं हो ।

---

१ क्वचिन्न । २ क्वाचित्कः पाठः ।

ईह ५७ चेष्टायाम् । ईहते । [1]ईहांचक्रे ॥ गर्ह ५८ गल्ह ५९ कुत्सायाम् । गर्हते । गल्हते ॥ काशृ ६० दीप्तौ । काशते । ऊह ६१ वितर्के । ऊहते । ऊहाञ्चक्रे । कथम्—'अनुक्रमप्यूहति पण्डितो जनः' इति ? । अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यम् । अनुदात्तेतश्चक्षिङो ङित्करणाज्ज्ञापकात् । तेन 'उदयति यदि भानुः'– स्फायन्निर्मोकसन्धि'-रित्यादि सिद्धमित्याहुः ॥

अय ६२ गतौ । अयते ॥

उपसर्गस्याऽयतौ ।८।२।१९। [2]अयतावुपसर्गरेफस्य लत्वम् । प्लायते । पलायते । दयायासश्च ।३।१।३७। एभ्य आम्लिटि । अयाञ्चक्रे । अयिता । अयिष्यते । अयताम् । आयत । अयेत । अयिषीष्ट ॥

विभाषेटः ।८।३।७९। इणः परो य इट्, ततः परेषां षीध्वंलुङ्लिटां धस्य वा ढः । अयिषीढ्वम् । अयिषीध्वम् । आयिष्ट । आयिढ्वम् । आयिध्वम् । आयिष्यत ॥

---

ङित्करणादिति । अनुदात्तत्त्वेनैवात्मनेपदे सिद्धे पुनश्च ङित्करणं व्यर्थं सदुक्तज्ञापकमित्याशयः ।

---

उपसर्गस्या । 'अय्' धातु परे है जिसके ऐसा जो उपसर्ग, उसके रेफ को लत्व हो ।

दयायासश्च । 'दय्' 'अय्' 'आस्'–इन धातुओं से 'आम्' प्रत्यय हो, लिट् परे रहते ।

विभाषेटः । इण् से परे जो इट्, उससे परे जो षीध्वं, लुङ् और लिट् सम्बन्धी–धकार, उसको ढकार हो, विकल्प करके ।

---

१ क्वचिन्न । २ 'अयतिपरस्योपसर्गस्य यो रेफस्तस्य लत्वं स्या'दिति सरलोऽर्थः ।

द्युत ६३ दीप्तौ । द्योतते । द्युतिस्वाप्योः सम्प्रसारणम् ।७।४।६७। [1]अभ्यासस्य । दिद्युते । द्योतिता । द्योतिष्यते । द्योतताम् । अद्योतत । द्योतेत । द्योतिषीष्ट । द्युद्भ्यो लुङि ।१।३।९१। द्युतादिभ्यः परस्मैपदं वा [2]स्याल्लुङि । 'पुषादी'त्यङ् । अद्युतत् । अद्योतिष्ट । अद्योतिष्यत ।

एवं—श्विता ६४ वर्णे । ञिमिदा ६५ स्नेहने । ञिष्विदा ६६ स्नेहनमोचनयोः । मोहनयोरित्येके । ञिक्ष्विदा चेत्येके । रुच ६७ दीप्तावभिप्रीतौ च ॥ घुट ६८ परिवर्त्तने ॥ शुभ ६९ दीप्तौ ।

क्षुभ ७० सञ्चलने । णभ ७१ तुभ ७२ हिंसायाम् । स्रंसु ७३ ध्वंसु ७४ भ्रंसु ७५ अवस्रंसने । ध्वंसु ७६ गतौ च । स्रम्भु ७७ विश्वासे ।

वृतु ७८ वर्त्तने । वर्त्तते । [ *[3]ऋदुपधेभ्यो लिटः कित्वं गुणात्पूर्वविप्रतिषेधेन ] । ववृते । वर्त्तिता । वृद्भ्यः स्यसनोः ।१।३।९२। वृतादिभ्यः पञ्चभ्यो वा परस्मैपदं, स्ये, सनि च । न वृद्भ्यश्चतुर्भ्यः

---

अद्युतदिति । अङो ङित्वाल्लघूपधगुणो न ।

परिवर्त्तनं = घोटनम्, आलोडनञ्च । दीप्तिः = शोभा ।

---

द्युतिस्वाप्योः । 'द्युत्' धातु और णिजन्त, स्वप् धातु के अभ्यास को सम्प्रसारण हो ।

द्युद्भ्यो लुङि । द्युतादि धातुओं से परस्मैपद हो, विकल्प करके, लुङ् परे रहते ।

[ ऋदुपधेभ्यः । ह्रस्व ऋकारोपध धातुओं से परे जो लिट्स्थानिक आदेश उनको गुण की अपेक्षा से पहिले ही पूर्वविप्रतिषेध से–कित्व ही हो ।

वृद्भ्यः स्यसनोः । वृतादि पांच धातुओं से परस्मैपद हो, विकल्प करके, 'स्य' और 'सन्' परे रहते ।

न वृद्भ्यश्चतुर्भ्यः । वृतादि चार धातुओं से परे जो सादि आर्द्धधातुक, उसको इट् नहीं हो, तङ् और आन के अभाव में ।

---

१ 'द्युतिस्वाप्योरभ्यासस्य सम्प्रसारणं स्यात्' इति पा० ।

२ 'स्या'दिति क्वाचित्कः पाठः । ३ लिखितादर्शेषु न दृश्यते ।

।७।२।५९। वृतु-वृधु-शृधु-स्यन्दूभ्यः सादेरार्द्धधातुकस्येण्न[स्या]त्तङान-योरभावे। वर्त्स्यति। वर्त्तिष्यते। वर्त्तासाम्। अवर्त्तत। वर्त्तेत। वर्त्तिषीष्ट। अवृतत्। अवर्त्तिष्ट। अवर्त्स्यत्। अवर्त्तिष्यत।

एवं—वृधु ७९ वृद्धौ। शृधु ८० शब्दकुत्सायाम्॥

स्यन्दू ८१ प्रस्रवणे। स्यन्दते। सस्यन्दे। सस्यन्दिषे। सस्यन्त्से। सस्यन्दिध्वे। सस्यन्ध्वे। स्यन्दिता। स्यन्त्ता। 'वृद्भ्यः स्यसनो'रिति परस्मैपदे कृते ऊदिल्लक्षणमन्तरङ्गमपि विकल्पं बाधित्वा चतुर्ग्रहणसामर्थ्यान्न वृद्भ्य इति निषेधः। स्यन्त्स्यति। स्यन्दिष्यते। स्यन्त्स्यते। स्यन्देत। स्यन्दिषीष्ट। स्यन्त्सीष्ट। 'द्युद्भ्यो लुङी'ति परस्मैपदपक्षेऽङ्। नलोपः। अस्यदत्। अस्यन्दिष्ट। अस्यन्त्त। अस्यन्त्साताम्। ['अस्यन्त्सत। अस्यन्त्थाः। अस्यन्द्ध्वम्। अस्यन्त्सि]। अस्यन्त्स्यत्। अस्यन्दिष्यत। अस्यन्त्स्यत।

अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु ।८।३।७२। एभ्यः परस्याऽप्राणिकर्तृकस्य स्यन्दतेः सस्य षो वा। अनुष्यन्दते, अनुस्यन्दते वा जलम्। अप्राणिषु किम्? अनुस्यन्दते हस्ती॥

कृपू ८२ सामर्थ्ये। कृपो रो लः ।८।२।१८। कृपः उः ['रः लः]

---

शब्दकुत्सायाम्=अपानशब्दे। गुदरवे इति यावत्। 'सस्यन्त्से' इति। अत्र ऊदित्त्वादिट्। नलोपः='अनिदिता'मिति नलोपः।

अप्राणिष्विति। पर्युदासोऽयं, तेन प्राणिभिन्ने इत्यर्थलाभः, तेन 'मत्स्योदके अनुष्यन्दते' इत्यत्रापि पाक्षिकं षत्वं भवत्येव, प्राणिभिन्नस्योदकस्य कर्त्तुः सत्त्वात्। 'प्राणिषु ने'त्युच्यमाने तु इह षत्वं न स्यात्, प्राणिनो मत्स्यस्य कर्त्तुर्वर्त्तमानत्वादित्यवधेयम्। अनुस्यन्दते हस्ती। प्रचलतीत्यर्थः। छेद इति।

---

अनुविपर्यभिनिभ्यः। 'अनु' 'वि' 'परि' 'अभि' और 'नि' इन उपसर्गों से परे जो अप्राणिकर्त्तृक स्यन्द धातु—उसके सकार को षकार हो, विकल्प करके।

---

१ लिखितेषु नास्ति।

इति च्छेदः। कृपे रेफस्य लः। कृपेर्ऋकारस्याऽवयवो यो रः = रेफसदृशस्यस्य च [ [1]लः = ] लकारसदृशः स्यात्। कल्पते। चक्लृपे। चक्लृपिषे। चक्लृप्से। इत्यादि 'स्यन्दि'वत्। लुटि च क्लृपः ।१।३।९३। लुटि, स्यसनोश्च क्लृपेः परस्मैपदं वा। तासि च क्लृपः ।७।२।६०। क्लृपेः परस्य तासेः, सादेरार्द्धधातुकस्येण्न, तङानयोरभावे। कल्प्तासि। कल्पितासे। कल्प्तासे। कल्प्स्यति। कल्पिष्यते। कल्प्स्यते। कल्पिषीष्ट।

लिङ्सिचावात्मनेपदेषु ।१।२।११। इक्समीपाद्धलः परौ झलादी लिङ्, आत्मनेपदपरः सिचेत्येतौ कितौ स्तः। क्लृप्सीष्ट। अक्लृपत्। अकल्पिष्ट। अक्लृप्त। अकल्प्स्यत्। अकल्पिष्यत। अकल्प्स्यत।

इति द्युतादयः॥

दद ८३ दाने। ददते। दददे। ददाते। ददिरे। ददिता। ददिष्यते। ददताम्। अददत। ददेत। ददिषीष्ट। अददिष्ट। अददिष्यत॥

---

सन्धिरार्षः। कृपः—षष्ठ्यन्तम्, उः—षष्ठ्यन्तं, रः—षष्ठ्यन्तं, लः—प्रथमान्तम्। कल्प्तासीत्यत्र उदित्त्वाद्वेट्कतया इडभावः। ददे इति। 'न शश-

---

कृपो रो लः। 'कृप्' धातु के रेफ को लत्व हो। और 'कृप्' धातु के ऋकार का अवयव जो रेफसदृशभाग उसको लकारसदृश आदेश हो।

लुटि च। 'क्लृप्' धातु से परस्मैपद हो विकल्प करके, 'लुट्' 'स्य' और 'सन्' परे रहते।

तासि च क्लृपः। क्लृप् से परे जो तास् और सादि आर्द्धधातुक उसको इट् नहीं हो, तङ् और 'आन'के अभावमें। [अर्थात् आत्मनेपदके अभावमें]।

लिङ्सिचौ। इक्समीप हल् से परे जो झलादि लिङ् और आत्मनेपद परक झलादि सिच् वह कित् हो।

---

1 लिखितादर्शेषु क्वापि नास्ति।

त्रपूष् ८४ लज्जायाम्। त्रपते । तृफलभजत्रपश्च ।६।४।१२२। एषामत एत्वमभ्यासलोपश्च, किति लिटि, सेटि थलि च। त्रेपे। त्रपिता। त्रप्ता। त्रपिष्यते। त्रप्स्यते। त्रपताम्। अत्रपत। [ त्रपेत[1]। त्रपिषीष्ट। त्रप्सीष्ट। अत्रपिष्ट। अत्रप्त। अत्रपिष्यत। अत्रप्स्यत ]॥

घट ८५ चेष्टायाम्। घटते। जघटे।

व्यथ ८६ भयसञ्चलनयोः। व्यथते। व्यथो लिटि ।७।४।६८। व्यथेरभ्यासस्य संप्रसारणं [ [2]स्याल्लिटि परे ]। हलादिःशेषापवादः। विव्यथे॥

प्रथ ८७ प्रख्याने। प्रथते। पप्रथे॥ प्रस ८८ विस्तारे। प्रसते। पप्रसे। म्रद ८९ मर्दने। म्रदते। स्खद ९० स्खदने। स्खदनं-विद्रावणम्। स्खदते। क्रप ९१ कृपायां, गतौ च। क्रपते। ञित्वरा ९२ संभ्रमे। त्वरते।

टुभ्राजृ ९३ टुभ्राशृ ९४ टुभ्लाशृ ५९ दीप्तौ। भ्राजते। फणां च सप्तानाम् ।६।४।१२५। फण्-राजृ-भ्राजृ-भ्राशृ-भ्लाशृ-स्यमु-स्वन्-

---

दद'ेति निषेधादेत्त्वाभ्यासलोपौ न। ऊदित्त्वाद्वेट्, तदाह—त्रपिता-त्रप्तेति। अत्रप्तेति। 'झलो झली'ति सिचः सस्य लोपः। प्रख्यानं=प्रसिद्धिः। विस्तारे=प्रसारणे। ( 'पसारना' 'फैलाना' )। विद्रावणं=निस्सारणं,

---

तृफलभज। इन धातुओंके ह्रस्व अकारको एत्व हो, और इनके अभ्यासका लोप हो, कित् लिट् और सेट् थल् परे रहते।

व्यथो लिटि। 'व्यथ्' धातुके अभ्यासको सम्प्रसारण हो, लिट् परे रहते।

फणां च सप्तानाम्। फणादिको सात धातुओं के अकारको एत्व हो और इनके अभ्यासका लोप हो, कित् लिट् और सेट् थल् परे रहते।

---

१ क्वचिन्न। २ लिखितेषु नास्ति।

—एषां वा एत्वाऽभ्यासलोपौ स्तः, किति लिटि, सेटि थलि च। भ्रेजे। बभ्राजे। 'वा भ्राशे'ति श्यन्वा। भ्राश्यते। भ्राशते। भ्रेशे। बभ्राशे। भ्लाश्यते। भ्लासते। भ्लेशे। बभ्लाशे। [1]रम ९६ क्रीडायाम्। रमते। रेमे। [ रन्ता[2] ]। जभि ९७ जृभी ९८ गात्रविनामे।

रधिजभोरचि ।७।१।६१। [ [3]रधिजभोरचि ] नुम। जम्भते। जजम्भे। जृम्भते। जजृम्भे ॥

॥ इत्यात्मनेपदिप्रक्रिया ॥

श्रिञ् १ सेवायाम्। श्रयति। श्रयते। शिश्राय। शिश्रिये। श्रयितासि। श्रयितासे। श्रयिष्यति। श्रयिष्यते। श्रयतु। श्रयताम्। अश्रयत्। अश्रयत। श्रयेत्। श्रयेत। श्रीयात्। श्रयिषीष्ट। [[3]'णिश्री'ति— ] चङ्। अशिश्रियत्। अशिश्रियत। अश्रयिष्यत्। अश्रयिष्यत ॥

भृञ् २ भरणे। भरति। भरते। बभार। बभ्रतुः। बभ्रुः। बभर्थ। बभृव[3]। बभृम। बभ्रे। बभृषे। भर्तासि। भर्तासे। [[4]भरिष्यति। भरिष्यते। भरतु। भरताम्। अभरत्। अभरत। भरेत्। भरेत ]। भ्रियात्।

उश्च ।१।२।१२। ऋवर्णात्परौ झलादी लिङ्-आत्मनेपदपरः सिच्चै-

---

( खदेडना )। गात्रविनामे = जृम्भणे; ( जम्भाई लेना )। शिश्रायेति। शिश्रियतुः, शिश्रियुः। शिश्रयिथ। शिश्रियथुः—इत्यादिरूपाणि बोध्यानि।

अशिश्रियदिति। अत्र 'णिश्री'ति च्लेश्चङि द्वित्वेऽभ्यासकार्ये इयङ्। बभर्थेति। अत्र, बभृवेत्यादौ च क्राद्यन्तर्गतत्वान्नेट्। भ्रियादिति। अत्र 'रिङ्शये'ति रिङ-

---

रधिजभोरचि। 'रध' और 'जभ्' धातुको 'नुम्' आगम हो, अजादि प्रत्यय परे रहते।

उश्च। ऋवर्ण से परे जो झलादि लिङ् और आत्मनेपदपरक झलादि सिच्—वह कित् हो।

---

१ 'रमु' पा०। जजृम्भे' इत्यस्याऽग्रेच क्वचिद्रमधातोः पाठो दृश्यते।

२ क्वाचित्कः पाठः। ३ अयं पाठोऽस्माभिः पूरितः, ग्रन्थकृता लाघवाय तन्त्रेणोच्चारणात्। ४ लिखितेषु प्रायो नास्ति।

त्येतौ स्तः। भृषीष्ट। भृषीयास्ताम्। अभार्षीत्।

ह्रस्वादङ्गात् ।८।२।२७। [[1]ह्रस्वादङ्गात्परस्य] सिचो लोपो, झलि। अभृत। अभरिष्यत्। अभरिष्यत।

हृञ् ३ हरणे। हरति। हरते। जहार। जह्रतुः। जह्रुः। जहर्थ। जह्रिव। जह्रिम। जह्रे। जह्रिषे। हर्ता। [ हर्तासि [2]। हर्तासे ]। हरिष्यति। हरिष्यते॥

[3]धृञ् ४ धारणे। धरति॥

णीञ् ५ प्रापणे। नयति। नयते। [ निनाय [3] ]।

डुपचष् ६ पाके। पचति। पचते। पपाच। पेचिथ। पपक्थ। पेचे। पक्ता। पक्ष्यति। पक्ष्यते। [ अपक्त[4]। अपक्षाताम् ]। भज ७ सेवायाम्। भजति। भजते। भेजे। भक्ता २। [ [4]भक्तासि। भक्तासे ]। भक्ष्यति। भक्ष्यते। भजतु। भजताम्। अभाक्षीत्। अभक्त। अभक्षाताम्। [ अभक्ष्यत्[3]। अभक्ष्यत ]॥

यज ८ देवपूजा-सङ्गतिकरण-दानेषु। यजति। यजते। लिट्यभ्यासस्योभयेषाम् ।६।१।१७। वच्यादीनां, ग्रह्यादीनां चाऽभ्यासस्य

---

देशः। अभार्षीदिति। अत्र 'सिचिवृद्धि'रितिवृद्धिः। जहर्थेति। अत्र ऋदन्तत्वान्नेट्। जह्रिवेति। अत्र क्रादिनियमादिट्। हरिष्यतीति। अत्र 'ऋद्धनोः स्ये'इतीट्। सङ्गतिकरणं = मैत्रीकरणम्।

---

ह्रस्वादङ्गात्। ह्रस्वान्त अङ्गसे परे सिच्‌का लोप हो, झल्‌ परे रहते।

लिट्यभ्यास। वच्यादि और ग्रह्यादि धातुओं के अभ्यासको सम्प्रसारण हो, लिट् परे रहते।

---

१ अस्माभिः पूरितोऽयं पाठः। २ लिखितेषु न दृश्यते।
३ काचित्कः पाठः। ४ लिखितेषु नास्ति।

संप्रसारणं स्याल्लिटि। इयाज। वचिस्वपियजादीनां किति ।६।१।१५। वचिस्वप्योर्यजादीनां च संप्रसारणं, किति।

'यजिर्वपिर्वहिश्चैव वसि-वेञ्-व्येञ इत्यपि।
ह्वेञ्वदी श्वयतिश्चैव यजाद्याः स्युरिमे नव ॥[१]॥

ईजतुः। ईजुः। इयजिथ—इयष्ठ। ईजे। यष्टा। ['षढोः कः सि[१]']। यक्ष्यति। यक्ष्यते। [[२]यजतु। यजताम्। अयजत्। अयजत। यजेत्। यजेत]। इज्यात्। यक्षीष्ट। अयाक्षीत्। अयष्ट॥

वह ६ प्रापणे। वहति। वहते। उवाह। ऊहतुः। ऊहुः। उवहिथ। ['हो ढः[३]']। 'झषस्तथोर्धोऽधः' [।८।२।४०। [४]झषः परयोस्तथोर्धः स्यान्न तु दधातेः। 'ष्टुना ष्टुः']।

'ढो ढे लोपः' [।८।३।१३।[५]ढस्य लोपः स्याड्ढे परे]। सहिवहोरोदवर्णस्य ।६।३।११२। [[६]अनयोरवर्णस्य ओत्स्यात्—] ढलोपे। उवोढ। ऊहे। वोढा। वक्ष्यति। [[३]वक्ष्यते। वहतु। वहताम्। अवहत्। अवहत। वहेत्। वहेत। उह्यात्। वक्षीष्ट]।

अवाक्षीत्। अवोढाम्। अवाक्षुः। अवाक्षीः। अवोढम्। अवोढ। अवाक्षम्। अवाक्ष्व। अवाक्ष्म॥ अवोढ। अवक्षाताम्। अवक्षत। अवोढाः। अवक्षाथाम्। अवोढ्वम्। अवक्षि। अवक्ष्वहि। अवक्ष्महि।

---

सहिवहोरिति। अनयोरवर्णस्य ओत्स्यात्, ढलोपे इत्यर्थः।

---

वचिस्वपि। वचि, स्वपि और यजादिको सम्प्रसारण हो, कित्परे रहते।

ढो ढे लोपः। ढकारका लोप हो, ढकार परे रहते।

सहिवहोरो। 'सह्' धातु और 'वह्' धातुके अकार को ओत् हो, ढकारका लोप होने पर।

---

१ काचित्कः पाठः। २ लिखितेषु नास्ति। ३ काचित्कः पाठः। ४ एकत्रादर्शेऽयं पाठो लभ्यते। ५ लिखितेषु नैव दृश्यते। ६ इयती वृत्तिर्लिखितेषु नास्ति।

[ [1]अवक्ष्यत् । अवक्ष्यत ] ।

डुवप् १० बीजसन्ताने । बीजसन्तानं = क्षेत्रे वि[illegible]णं, गर्भाधानं च । अयं छेदनेऽपि । केशान्वपति । वपते । उवाप । ऊपे । वप्ता । [ [2]वप्स्यति । वप्स्यते ] । उप्यात् । वप्सीष्ट । प्रण्यवाप्सीत् । अवप्त ॥

वेञ् ११ तन्तुसन्ताने । वयति । वयते । **वेञो वयिः ।२।४।४१।** [ [3]वेञो वयिर्वा ] स्याल्लिटि । इकार उच्चारणार्थः । उवाय ।

**ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च ।६।१।१६।** [4]चात्किति संप्रसारणम् । इति [5]यकारस्य प्राप्ते—।

**लिटि वयो यः ।६।१।३८।** वयो यस्य संप्रसारणं न [6]स्याल्लिटि । ऊयतुः । ऊयुः ।

**वश्चास्याऽन्यतरस्यां किति ।६।१।३९।** वयो यस्य वो वा स्यात्किति लिटि । ऊवतुः । ऊवुः । वयस्तासावभावात्थलि नित्यमिट् ।

---

विकिरणं = धान्यप्रक्षेपः । यथा--'धान्यं वपती'ति । प्रण्यवाप्सीदिति । 'नेर्गदे'ति णत्वम् । यकारस्य प्राप्ते = यकारस्य इकारे सम्प्रसारणे प्राप्ते । तासावभावात् = वयादेशस्य लिट्येव सत्त्वेन लुटि तासौ वयादेशाऽभावादुपदेशेऽत्वत इत्यस्य, 'ऋतो भारद्वाजस्ये'त्यस्य चाऽप्रवृत्त्या, थलि नित्यमिट् = क्रादिनियमान्नित्यमिडित्यर्थः ।

---

वेञो वयिः । 'वेञ्'को 'वय्' आदेश हो, लिट् परे रहते ।

ग्रहिज्या । ग्रहि ज्या आदि धातुओं को सम्प्रसारण हो, कित् और ङित् परे रहते ।

लिटि वयो । 'वय्' के यकारको सम्प्रसारण नहीं हो, लिट् परे रहते ।

वश्चास्या । 'वय्' के यकारको वकार आदेश हो विकल्प करके, कित् लिट् परे रहते ।

---

१ क्वचिदेव दृश्यते । २ लिखितेषु नास्ति । ३ अस्माभिः पूरितोऽयं पाठः ।
४ एषां किति ङिति च सम्प्रसारणं स्यात्'—इति वृत्तिः क्वचित्पठ्यते ।
५ 'यस्य' पा० । ६ 'स्या'दिति क्वचिन्न ।

ववयिथ । स्थानिवत्त्वेन ञित्त्वात्तङ् । ऊये । ऊवे ।

वयादेशाऽभावे- । वेञः ६।१।४०। [वेञः[1]] संप्रसारणं न[स्यो]ल्लिटि ।

ववौ । ववतुः । ववुः । वविथ । ववाथ । ववे । ववाते । [ [2]वविरे ]। वाता । ऊयात् । वासीष्ट । [ [2]इट्सकौ ]। अवासीत् । अवासिष्टाम् । [ [2]अवासिषुः । अवास्त । अवासाताम् ] ।

व्येञ् १२ संवरणे । व्ययति । व्ययते । न व्यो लिटि ।६।१।४६। [ [1]व्येञ ] आत्वं [ [1]न स्याल्लिटि ]। परमपि हलादिःशेषं बाधित्वा यस्य संप्रसारणम् , 'उभयेषां' ग्रहणसामर्थ्यात् । अन्यथा वच्यादीनां, ग्रह्यादीनां चानुवृत्त्यैव सिद्धे, किं तेन ? । विव्याय । विव्यतुः । विव्युः ।

इडत्त्यर्तिव्ययतीनाम् ।७।२।६६। अद्-ऋ-व्येञ्-एभ्यस्थलो नित्य-मिट् । विव्ययिथ । [विव्यथुः[3]। विव्य] । विव्याय । विव्यय । [विव्यिव[3] । विव्यिम ]। विव्ये । व्याता । व्यास्यति । वीयात् । व्यासीष्ट । अव्यासीत् । अव्यास्त ।

ह्वेञ् १३ स्पर्द्धायां, शब्दे च । ह्वयति । ह्वयते । अभ्यस्तस्य च ।६।१।३३। अभ्यस्तीभविष्यतो ह्वेञः संप्रसारणं [2]स्यात् । जुहाव । जुहुवे । ह्वाता । ह्वास्यति । ह्वास्यते । लिपिसिचिह्वश्च ।३।१।५३।

---

वेञः । वेञ् धातुको सम्प्रसारण नहीं हो, लिट् परे रहते ।

न व्यो लिटि । 'व्येञ्' धातुको आत्व नहीं हो, लिट् परे रहते ।

इडत्यर्त्ति । अद् , ऋ, व्येञ्–इन धातुओंसे परे जो थल् , उसको नित्य इट् आगम हो ।

अभ्यस्तस्य च । अभ्यस्त सञ्ज्ञक [होनेवाले] ह्वेञ् धातुको सम्प्रसारण हो ।

लिपिसिचि । लिप् , सिच् , और ह्वेञ्–इन धातुओंसे परे जो 'च्लि' उसको 'अङ्' आदेश हो ।

---

१ शेषपूरणमिदम् । २ क्वचिन्न । ३ लिखितेषु नास्ति ।

[ लिपिसिचिह्वश्च[1] ] च्लेरङ् । आत्मनेपदेष्वन्यतरस्याम् ।३।१।५४। [ [2]एभ्यश्च्लेरङ् वा स्यादात्मनेपदे परतः ] । अह्वत । अह्वताम् । [[3]अह्वन् ] । अह्वत । अह्वास्त । राजृ १४ दीप्तौ । राजति । राजते । [ [3]रराज ] । रेजतुः । रराजतुः । [ रेजुः[3] । रराजुः ] । रेजे । रराजे ।

हिक्क १५ अव्यक्ते शब्दे । हिक्कति । हिक्कते । अञ्चु १६ गतौ, याचने च । अञ्चति । अञ्चते । 'अच' इत्येके । 'अचि' इत्यपरे । टुयाचृ १७ याच्ञायाम् । याचति । याचते । बुधिर् १८ बोधने । बोधति । बोधते । [ इरित्त्वादङ् वा[4] ] । अबुधत् । अबोधीत् । अबोधिष्ट ॥

खनु १९ अवदारणे । खनति । खनते । चखान । चख्नतुः । [ [4]चख्नुः ] । चख्ने । खायात् । खन्यात् । चीवृ २० आदान-संवरणयोः । चीवति । चीवते । चायृ २१ पूजा-निशामनयोः । चायति । चायते । व्यय २२ गतौ । व्ययति । व्ययते । [ विव्याय[5] । विव्यये ] ।

दाशृ २३ दाने । दाशति । दाशते । भेषृ २४ भये । गतावि-

---

रेजतुरिति । अत्र फणादित्वात्फणां च सप्तानामिति एत्वाभ्यासलोपौ वा । अव्यक्ते शब्दे = हिक्कायाम् । अबुधदिति । इरित्त्वादङ् वा । चख्नतुरिति । अत्र 'गमहने'त्युपधालोपः । खायादिति । अत्र 'ये विभाषे'ति वैकल्पिकमात्वम् । गतिरत्र—व्ययः । आदानं = ग्रहणम् ।

---

आत्मनेपदेष्वन्य । लिप्, सिच् और ह्वेञ्—इन धातुओं से परे जो 'च्लि' उसके स्थानमें 'अङ्' आदेश हो, विकल्प करके, आत्मनेपद परे रहते ।

---

१ अस्माभिः पूरितः पाठोऽयम् । 'एभ्यः परस्य च्लेरङ्' इत्यर्थः ।
२ अस्माभिः पूरितोऽयं पाठः, ग्रन्थकृता तन्त्रेण निर्दिष्टत्वात् ।
३ लिखितेषु नास्ति ।　　४ क्वाचित्कः पाठः ।　　५ लिखितेषु नास्ति ।

त्येके। भेषति। भेषते। [1]अस २५ गतिदीप्त्यादानेषु। [1]असति। असते। आस। आसे। अयं षान्तोऽपि। स्पश २६ बाधनस्पर्शनयोः। स्पर्शनं—ग्रन्थनम्। स्पशति। स्पशते॥

लष २७ कान्तौ। लष्यति। लषति। लष्यते[2]। लषते। चष २८ भक्षणे। चषति। चषते। झष २९ आदान-संवरणयोः। झषति। झषते॥ दासृ ३० दाने॥ दासति। दासते॥

धावु ३१ गतिशुद्ध्योः। धावति। धावते।

॥ *इति[3] भ्वादिप्रकरणम्* ॥१॥

---

## —अथाऽदादिप्रकरणम्—

ऋतेरीयङ्।३।१।२९। [ऋतेरीयङ् प्रत्ययः स्यात्] स्वार्थे। ऋतिः सौत्रः। जुगुप्सायामिति बहवः। कृपायां चेत्येके। ऋतीयते। ऋतीयाञ्चक्रे। 'आयादय' इति ईयङभावपक्षे [4]शेषत्वात् परस्मैपदम्। [ [5]द्वित्वेऽभ्यासलोपे च जाते, 'उरत्'। 'तस्मान्नुड्द्वि'ति नुट्। गुणः ]। आनर्त्त। अर्त्तिता। अर्त्तिष्यतीत्यादि॥

---

कान्तिः=इच्छा। लष्यतीति। 'वा भ्राशे'ति श्यन् वा। आदानं-ग्रहणम्। (झँसना)। इति भ्वादयः।

---

स्वार्थे इति। अनिर्दिष्टार्थप्रत्ययत्वादिति भावः।

---

ऋतेरीयङ्। सौत्र 'ऋत्' धातुसे 'ईयङ्' प्रत्यय हो, स्वार्थमें।

---

१ तालव्यान्तपाठः क्वचित्। २ क्वचिन्न।

३ 'इति भ्वादिः' इति, 'इति भ्वादयः' इति च लिखितेषु पाठः।

४ 'शेषात्कर्त्तरीति परस्मैपदम्' इति तु मुद्रिते पाठः।

५ एकत्र लिखितेऽयं पाठो दृश्यते।

अद १ भक्षणे । अदिप्रभृतिभ्यः शपः ।२।४।७२। [ [1]अदिप्रभृतिभ्यः शपो ] लुक् स्यात् । अत्ति । अत्तः । अदन्ति । अत्सि । अत्थः । अत्थ । अद्मि । अद्वः । अद्मः । लिट्यन्यतरस्याम् ।२।४।४०। अदो घस्लृ वा स्याल्लिटि । जघास । उपधालोपः । [[2]'खरि चे'ति] घस्य चर्त्वं- । शासिवसिघसीनां च ।८।३।६०। इण्कुभ्यामेषां सस्य षः । जक्षतुः । जक्षुः । [ [3]घसस्तासावभावात्थलि नित्यमिट्- ] । जघसिथ ॥ आद । आदतुः ।

अदिप्रभृतिभ्य इति । 'ण्यक्षत्रियार्षञितः' इत्यतो 'लु'गित्यनुवर्तते इत्यभिप्रेत्य शेषपूरणेन सूत्रं व्याचष्टे—लुक् स्यादिति । अदादिभ्यः परस्य शपो लुगिति फलितम् । क्वचित्तथैव पाठः । अत्तीति । शपो लुकि दस्य चर्त्वेन तकारः ।

लिट्यन्यतरस्याम् । 'अदो जग्धि'रित्यतोऽद इति, 'लुङ्सनोर्घस्लृ' इत्यतो 'घस्लृ' इति चानुवर्तते । तदाह—अद इति । आदेशे लृकार इत् । घसादेशोऽनिट् । जघासेति । अकित्त्वात् 'गमहने'त्युपधालोपो नेति भावः ।

जक्षतुरिति । अत्र जघस्—अतुसिति स्थिते सकारस्य आदेशप्रत्ययावयवत्वाऽभावादाह—शासीति । थलि तु क्रादिनियमान्नित्यमिट् । 'उपदेशेऽत्वत' इति निषेधस्य तासौ नित्याऽनिड्विषयत्वात् । घस् तु तासौ न विद्यते एव, कुतस्तस्य तासावनिट्कत्वम् । 'यस्तासावस्ति, अनिट् च' इति हि भाष्यम् । तदाह—घसस्तासाविति । जघसिथेति । जक्षथुः । जक्ष । जघास—जघस, जक्षिव, जक्षिम ।

अदिप्रभृतिभ्यः । अदादि धातुओं से परे जो शप् उसका लुक् हो ।

लिट्यन्यतरस्याम् । 'अद्' धातुको 'घस्लृ' आदेश हो, विकल्प करके, लिट् परे रहते ।

शासिवसि । इण् और कवर्गसे परे जो 'शास्' और 'वस्' धातुका सकार, उसको षकार आदेश हो ।

१ अस्माभिः पूरितोऽयं पाठः । 'अदादिभ्यः शपो लुक्'—पाठान्तरम् ।

२ क्वाचित्कः पाठः । ३ एकत्रादर्शे दृश्यतेऽयं पाठः ।

आदुः । [ 'इडत्यर्त्तिव्ययतीना'मिति नित्यमिट्[1]–] । आदिथ । अत्ता। अत्स्यति । अत्तु । अत्तात । अत्ताम् । अदन्तु ॥

हुझल्भ्यो हेर्धिः ।६।४।१०१। होर्झलन्तेभ्यश्च हेर्धिः स्यात्। अद्धि । अत्तात् । अत्तम् । अत्त । अदानि । अदाव । अदाम ।

अदः सर्वेषाम् ।७।३।१००। अदः परस्याऽपृक्तसार्वधातुकस्य अट् स्यात्, सर्वमतेन[2] । आदत् । आत्ताम् । आदन् । आदः । आत्तम् । आत्त। आदम् । आद्व । आद्म । अद्यात् । अद्याताम् । अद्युः । अद्यात् । अद्यास्ताम् । अद्यासुः । लुङ्सनोर्घस्लृ ।२।४।३७। अदः [[3]लुङ्सनोर्घस्लृ]। [ [4]लृदित्त्वात्—] अङ् । अघसत् । आत्स्यत् ॥

---

घसादेशाऽभावपक्षे त्वाह—आदेति । थलि भारद्वाजनियमादिड्विकल्पे प्राप्ते आह—इडत्त्यर्तीति । आदिथेति । आदथुः, आद । आद, आदिव, आदिम ।

अदः सर्वेषाम् । 'अद' इति पञ्चमी । 'तस्मादित्युत्तरस्ये'ति परिभाषया 'परस्ये'ति लभ्यते । 'गुणोऽपृक्ते'—इत्यतः—'अपृक्ते' इति, 'तुरुस्तुशम्यमः' इत्यतः 'सार्वधातुके' इति चानुवर्तते । सप्तमीद्वयं च षष्ठ्या विपरिणम्यते। 'अड् गार्ग्यगालवयो'रित्यतोऽडित्यनुवर्त्तते । 'गार्ग्यगालवयो'रित्यस्याऽनुवृत्तिनिवृत्तये-'सर्वेषा'मिति । तदाह—अद इति ।

---

हुझल्भ्यो । 'हु'धातु और झलन्त धातुओंसे परे जो 'हि' उसको 'धि' आदेश हो ।

अदः सर्वेषाम् । 'अद्' धातुसे परे जो अपृक्त सार्वधातुक उसको 'अट्' आगम हो, सब आचार्यों के मत में ।

लुङ्सनोर्घस्लृ । 'अद्' धातुको 'घस्लृ' आदेश हो, लुङ् और सन् परे रहते ।

---

१ लिखितेष्वयं पाठो नास्ति । २ क्वचिन्न ।

३ अस्माभिः पूरितोऽयं पाठः । 'अदो घस्लृस्याल्लुङि सनि च' पा० ।

४ क्वाचित्कः पाठः ।

हन २ हिंसागत्योः। हन्ति। अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति ।६।४।३७। [ [1]'अनुनासिके' ति लुप्तषष्ठीकं, वनतीतरेषां विशेषणम् ]। अनुनासिकान्तानामेषां [ [2]वनतेश्च ] लोपः [ [2]स्याज्झलादौ क्ङिति परे ]। यमि-रमि-नमि-गमि-हनि-मन्यतयोऽनुदात्तोपदेशाः। तनु-षणु-क्षणु-क्षिणु-ऋणु-तृणु-घृणु-वनु-मनु-तनोत्यादयः। हतः। घ्नन्ति। हंसि। हथः। हथः। हथ। हन्मि।

वमोर्वा ।८।४।२३। उपसर्गस्थान्निमित्ताद्धन्तेर्नस्य णो [ [3]वा स्याद्वमोः परयोः ]। प्रहण्मि। प्रहन्मि। [ प्रहण्वः। [4]प्रहन्वः। प्रहण्मः। प्रहन्मः ]। हन्वः। हन्मः। जघान। जघ्नतुः। जघ्नुः।

अभ्यासाच्च ।७।३।५५। [ [3]अभ्यासात्परस्य ] हन्तेर्हस्य कुत्वं स्यात्। जघनिथ। जघन्थ। जघ्नथुः। जघ्न। जघान। जघन। जघ्निव।

---

हत इति। तसि अनुदात्तोपदेशाऽनुनासिकान्तत्वान्नकारलोपः। 'सार्वधातुकमपित्' इति तसो ङित्त्वात्। घ्नन्तीति। अजादिङित्परकत्वात् 'गमहनेत्युपधालोपे, 'हो हन्ते' रिति कुत्वेन हस्य घः। हंसि, हथः, हथ।

वमोर्वा। 'उपसर्गादसमासेऽपि' इत्यत 'उपसर्गा'दित्यनुवर्तते। 'रषाभ्यां नो णः' इति सूत्रमनुवर्तते। 'हन्तेरत्पूर्वस्ये'त्यतो 'हन्ते'रिति च। तदाह—उपसर्गस्थान्निमित्तादिति। जघन्थेति। इडभावे नकारस्याऽनुस्वारपरसवर्णौ।

---

अनुदात्तोपदेश। अनुनासिकान्त जो—अनुदात्तोपदेश और तनोत्यादि, तथा वन् धातु इनका लोप हो, झलादि कित् ङित् परे रहते।

वमोर्वा। उपसर्गस्थ निमित्त से परे जो हन्तिका नकार उसको णकार हो, विकल्प करके, वकार और मकार परे रहते।

अभ्यासाच्च। अभ्याससे परे हन् धातुके हकारको कुत्व हो।

---

१ एकत्रादर्शे दृश्यतेऽयं पाठः। २ क्वाचित्कः पाठः।
३ एकत्रादर्शेऽयं पाठ उपलभ्यते। ४ लिखितेषु नास्ति।

जघ्निम । हन्ता । हनिष्यति । हन्तु । हतात् । हताम् । घ्नन्तु । **हन्तेर्जः ।६।४।३६।** [ [1]हन्तेजः स्यात् ] हौ [ परे[1] ] ।**असिद्धवदत्राऽऽभात् ।६।३।२२।** इत ऊर्ध्वमापादपरिसमाप्तेराभीयम् । समानाश्रये तस्मिन्कर्त्तव्ये तदसिद्धं स्यात् ।—इति जस्याऽसिद्धत्वान्न हेर्लुक् । जहि । हतात् । हतम् । हत । हनानि । हनाव । हनाम ।

अहन् । अहताम् । अघ्नन् । अहन् । अहतम् । अहत । अहनम् । अहन्व । अहन्म । हन्यात् । **आर्द्धधातुके ।२।४।३५।** [ [2]आर्द्धधातुके ] इत्यधिकृत्य । **हनो वध लिङि ।२।४।४२। लुङि च ।२।४।४३।** [ [3]वधादेशोऽदन्तः । 'आर्द्धधातुके' इति विषयसप्तमी, तेनाऽर्द्धधातुकोपदेशेऽकारान्तत्वादतो लोपः ] । वध्यात् । वध्यास्ताम् । अवधीत् । अहनिष्यत् ॥

---

जघ्नथुः, जघ्न । जघान—जघन, जघ्निव, जघ्निम । इत्यधिकृत्येति । 'अदो जग्धि'रित्यादिविधयो वक्ष्यन्ते' इति शेषः । तदधिकारस्थं सूत्रमाह—हनो वधेति । 'वधे'ति लुप्तप्रथमाकम् । हनो वधादेशः स्यादार्द्धधातुके लिङीत्यर्थः । लुङि च । हनो वधादेशः स्याल्लुङीत्यर्थः ।

अवधीदिति । सिचि अल्लोपे कृते वधादेशस्य धकारान्ततया एकाच्त्वेऽप्यादेशोपदेशे अनेकाच्त्वेन 'एकाच उपदेशे' इति निषेधाऽभावात् सिच इट् ।

---

हन्तेर्जः । हन् धातुको 'ज' आदेश हो, 'हि' परे रहते ।

असिद्धवदत्राभात् । इस सूत्र [ ६।३।२२ ] से लेकर षष्ठाध्यायके तृतीय पादकी समाप्ति पर्यन्त 'आभीय' कहलाता है । समानाश्रय आभीय कर्त्तव्य हो तो आभीय शास्त्र असिद्ध हो ।

आर्द्धधातुके । यह अधिकार सूत्र है ।

---

१ एकत्र लिखितेऽयं पाठो दृश्यते । न सर्वत्र ।

२ शेषपूरणमिदमस्मत्कर्तृकम् । ३ अयं पाठो लिखितादर्शेषु नास्त्येव ।

यु ३ मिश्रणाऽमिश्रणयोः । उतो वृद्धिर्लुकि हलि ।७।३।८९।
लुग्विषये उतो वृद्धिः स्यात्पिति हलादौ सार्वधातुके, [[1]न त्वभ्यस्तस्य] । यौति । युतः । युवन्ति । यौषि । युथः । युथ । यौमि । युवः । युमः । युयाव । [ [2]युयुवतुः । युयुवुः । युयविथ । युयोथ । युयुवथुः । युयुव । युयाव । युयव । युयुविव । युयुविम ] । यविता । यविष्यति । यौतु । युतात् । अयौत् । अयुताम् । अयुवन् । युयात् । इह वृद्धिर्न, भाष्ये 'पिच्च ङिन्न, ङिच्च पिन्न'ेति व्याख्यानात् । [ [3]विशेषविहितेन ङित्त्वेन

'अतो हलादे'रिति वृद्धिस्तु न भवति, 'अचः परस्मिन्' इत्यल्लोपस्य स्थानिवत्त्वात् । एतदर्थमेव हि वधादेशस्याऽदन्तत्वमाश्रितम् ।

यु मिश्रणेति । अमिश्रणं = पृथग्भावः । सेडयम् । उतो वृद्धिर्लुकि हलि । 'नाभ्यस्तस्याचि पिति सार्वधातुके' इति सूत्रम् चिवर्जमनुवर्तते । लुकीति विषयसप्तमी, दर्शनाभावस्य लुकः परत्वाऽसंभवात् । तदाह–लुग्विषय इत्यादिना ।

यौतीति । गुणं बाधित्वाऽनेन वृद्धिः । युत इति । अपित्वान्न वृद्धिः । युवन्तीति । अपित्वाद् वृद्ध्यभावे ङित्वाद्गुणाऽभावे उवङिति भावः । यौषि, युथः, युथ । यौमि, युव, युमः । युयावेति । युयुवतुः, युयुवुः । युयविथ, युयुवथुः, युयुव । युयाव–युयव, युयुविव,युयुविम । यवितेति । उवङं बाधित्वा परत्वाद्गुणः । यविष्यति । यौतु–युतात्, युताम्, युवन्तु । हावपित्वान्न वृद्धिः । युहि । युतात्, युतम्, युत । आटः पित्त्वेऽपि हलादित्वाऽभावान्न वृद्धिः । पित्त्वेन ङित्त्वाऽभावाद् गुणः । यवानि, यवाव, यवाम । अयौत्, अयुताम्, अयुवन् । अयौः, अयुतम्, अयुत । अयवम्, अयुव, अयुम ।

'युया'दित्यत्र यासुडागमसहितस्य तिपः पित्त्वादुतो वृद्धिमाशङ्क्याह—इह वृद्धिर्नेति । कुत इत्यत आह—भाष्ये इति । व्याख्यानादिति । 'हलः श्नः

उतो वृद्धिर्लुकि । लुक् के विषय में–ह्रस्व उकार को वृद्धि हो, हलादि पित् सार्वधातुक परे रहते । परन्तु अभ्यस्तसञ्ज्ञक धातु को यह वृद्धि नहीं हो ।

१ लिखितेषु नाऽयं पठ्यते । २ लिखितेषु नास्ति ।
३ लिखितेषु नास्त्ययं पाठः ।

पित्त्वस्य बाधात् ]। शुयाताम्। शुयुः। यूयात्। यूयास्ताम्। यूयासुः। अयावीत्। अयविष्यत्।

या ४ प्रापणे। याति। यातः। यान्ति। ययौ। याता। यास्यति। यातु। अयात्। अयाताम्। लङः शाकटायनस्यैव ।३।४।१११। आदन्ताल्लङो झेर्जुस्वा। अयुः। अयान्। यायात्। यायाताम्। यायुः। यायात्। यायास्ताम्। यायासुः। अयासीत्। [ [1]अयासिष्टाम् ]। अयास्यत्।

एवं—वा ५ गतिगन्धनयोः। भा ६ दीप्तौ। ष्णा ७ शौचे। 'वाऽन्यस्य संयोगादे'रित्येत्त्वम्। स्नेयात्। स्नायात्। श्रा ८ पाके। द्रा ९ कुत्सायां गतौ। प्सा १० भक्षणे। पा ११ रक्षणे। रा १२ दाने। ला १३ आदाने। दाप् १४ लवने। ख्या १५ प्रकथने। अयं सार्वधातुक एव प्रयोक्तव्यः। [ ख्याति[2] ]॥

शानज्ञौ' इति सूत्रव्याख्यावसरे वचनादित्यर्थः। ननु यासुडागमसहितस्य तिपः पित्त्वात् 'पिच्च ङिन्नेत्युक्तवचनेन 'यासुट् परस्मैपदेषु' इति ङित्त्वस्याऽप्यभावात् 'क्ङिति च' इति गुणनिषेधाऽभावाद् गुणः स्यादिति चेदत आह—विशेषविहितेनेत्यादि। 'यासुट् परस्मैपदेषु' इति विशेषविहितेन यासुटो ङित्त्वेन तत्सहितस्य तिपो 'ङिच्च पिन्न'ति पित्त्वप्रयुक्तङित्त्वनिषेधस्य बाधान्ङित्त्वाद् गुणनिषेधो निर्बाध इत्यर्थः।

यूयादिति। आर्द्धधातुकत्वान्न वृद्धिः। 'अकृत्सार्वधातुकयो'रिति दीर्घः। यूयास्तामित्यादि रूपाणि। लुङ्याह—अयावीदिति। 'सिचि वृद्धि'रिति वृद्धिः। 'इट ईटी'ति सिज्लोपः। अयाविष्टामित्यादि रूपाणि। अयविष्यत्। अयविष्यताम्। अयविष्यन्।

लङः शाकटा। आदन्त धातु से परे जो लङ्स्थानिक 'झि' उसको 'जुस्' आदेश हो, विकल्प करके।

१ क्वचित्कः पाठः। २ लिखितेषु नास्ति।

विद् १६ ज्ञाने । विदो लटो वा ।३।४।८३। वेत्तेर्लटः परस्मैपदानां णलादयो वा [[1]स्युः] । वेद । विदतुः । विदुः । वेत्थ । विदथुः । विद । वेद । विद्व । विद्म । पक्षे—वेत्ति । वित्तः । विदन्ति ।

उषविदजागृभ्योऽन्यतरस्याम् ।३।१।३८। एभ्यो लिट्याम् वा [स्यात्[1]] । विदेरदन्तत्वप्रतिज्ञानादामि न गुणः । विदाञ्चकार । विवेद । वेदिता । वेदिष्यति । विदाङ्कुर्वन्त्वित्यन्यतरस्याम् ।३।१।४१। वेत्तेर्लोट्याम्, गुणाभावो, लोटो लुक्, लोडन्तकरोत्यनुप्रयोगश्च वा

---

विद् ज्ञाने इति । अनिट्सु लुग्विकरणस्याऽग्रहणादयं सेट् । विदो लटो वा । 'परस्मैपदानां णलतुस्' इत्यादिसूत्रमनुवर्तते । 'विद' इति पञ्चमी, तदाह—वेत्तेर्लट इति । विन्दतिविद्यत्योस्तु श्नेन, श्यना च व्यवधानान्नैते आदेशाः ।

आमीति । 'आम्पक्षे न लघूपधगुण' इत्यन्वयः । कुत इत्यत आह—अदन्तत्वप्रतिज्ञानादिति । 'उषविदे'ति सूत्रे विदेरयकारान्तत्वमाम्संनियोगेन निपात्यते इत्यर्थः । आमि अतो लोपः । तस्य स्थानिवत्त्वान्न लघूपधगुण इति भावः ।

विदाङ्कुर्वन्त्वित्यन्यतरस्याम् । 'कृञ् चानुप्रयुज्यते लिटी'त्युत्तरमिदं सूत्रम् । इतिशब्दः प्रकारे । एवंजातीयकं वैकल्प्येन प्रत्येतव्यमित्यर्थः । वेत्तेरिति । लुग्विकरणाद्विदधातोर्लोटि परे आम्प्रत्ययो निपात्यते इत्यर्थः ।

लोडन्तेति । आमन्ताद्विदेः लोडन्तकृञ्धातोरनुप्रयोगश्च निपात्यत इत्यर्थः । ननु 'विदांकुर्वन्तु' इति लोटि प्रथमपुरुषबहुवचनस्यैव सूत्रे निर्देशात् कथं

---

विदो लटो वा । विद् धातु से परे जो लट् सम्बन्धी परस्मैपद उनको णलादि आदेश हो, विकल्प करके ।

उषविद । उष, विद और जागृ धातु—से आम् प्रत्यय हो, विकल्प करके, लिट् परे रहते ।

विदाङ्कुर्वन्त्वि । 'विद्' धातु से लोट् परे रहते विकल्प से 'आम्' हो, और गुण का अभाव हो, और लोट् का लुक् हो, और लोडन्त कृधातु का अनुप्रयोग हो, विकल्प करके ।

---

1 क्वाचित्कः पाठः ।

निपात्यते। पुरुषवचने न विवक्षिते। [ इतिशब्दात्[1] ]।

**तनादिकृञ्भ्य उः ।३।१।७९।** [[2]तनादेः, कृञश्च उप्रत्ययः स्यात्]। शपोऽपवादः। विदाङ्करोतु। **अत उत्सार्वधातुके ।६।४।११०।** उप्रत्ययान्तस्य कृञोऽत[3] उत्स्यात्सार्वधातुके क्ङिति। विदाङ्कुरुतात्। विदाङ्कुरुताम्। विदाङ्कुर्वन्तु। [ [4]'उतश्चे'ति हेर्लुक्। आभीयत्वेन लुकोऽसिद्धत्वादुत्त्वम् ]। विदाङ्कुरु। विदाङ्करवाणि। वेत्तु। अवेत्। अवित्ताम्। अविदुः।

**दश्च ।८।२।७५।** धातोर्दस्य पदान्तस्य सिपि रुर्वा। अवेः। अवेत्। विद्यात्। [5]विद्याताम्। [ विद्युः[6] ]। विद्यात्। विद्यास्ताम्। [ विद्यासुः[6] ]। अवेदीत्। अवेदिष्यत्।

---

लोडन्तसामान्यानुप्रयोग इत्यत आह—पुरुषेति। सूत्रे कुर्वन्त्विति प्रथमपुरुषो, बहुवचनं च न विवक्षितमित्यर्थः। तयोस्तु नान्तरीयकमुच्चारणमिति भावः। इतिशब्दादिति। तस्य प्रकारवचनस्य लोकप्रयोगानुसारित्वादिति भावः।

अवेदिति। सिपो हल्ङ्यादिलोपे, दकारस्य रुत्वविकल्पः। अवित्तम्, अवित्त। अवेदम्, अविद्व, अविद्म। विद्यात्, विद्याताम्। विद्यात्, विद्यास्ताम्। अवेदीत्। अवेदिष्यत्—इत्यादिरूपाणि।

---

तनादिकृञ्भ्यः। तनादि धातु और कृञ् धातु से उ प्रत्यय हो, कर्त्रर्थक सार्वधातुक परे रहते।

अत उत्। उप्रत्ययान्त कृञ् धातु के ह्रस्व अकार को उत् आदेश हो, सार्वधातुक कित् ङित् परे रहते।

दश्च। धातु का जो पदान्त दकार उसको रुत्व हो, विकल्प करके, सिप् परे रहते।

---

१ लिखितादर्शेषु नास्ति। २ एकत्रादर्शे दृश्यतेऽयं पाठः।
३ 'कृञोऽकारस्य उत्' पा०। ४ एकत्रादर्शेऽयं पाठ उपलभ्यते।
५ लिखिते क्वचिन्न दृश्यते। ६ लिखितेषु नास्ति।

अस् १७ भुवि । अस्ति । श्नसोरल्लोपः ।६।४।१११। श्नस्याऽस्तेश्चाऽतो लोपः, सार्वधातुके क्ङिति । स्तः । सन्ति । [ [1]'तासस्त्यो'रिति सलोपः]। असि । स्थः । स्थ । अस्मि । स्वः । स्मः । अस्तेर्भूः ।२।४।५२। [ [2]अस्तेर्भूः ] आर्द्धधातुके । बभूव । भविता । भविष्यति । अस्तु । स्तात् । स्ताम् । सन्तु । घ्वसोरेद्धावभ्यासलोपश्च ।६।४।११९। घोरस्तेश्चैत्वं हौ, अभ्यासलोपश्च । आभीयत्वाद्धेर्धिः । एधि । स्तात् । स्तम् । स्त । असानि । असाव । असाम । आसीत् । आस्ताम् । आसन् । स्यात् । स्याताम् । स्युः । भूयात् । अभूत् । अभविष्यत् ।

---

अस् भुवीति । भवनं भूः । भुवि । सत्तायामित्यर्थः ।

अस्तीति । सस्य चर्त्वेऽपि सकार एव भवति, नतु तकारः, अल्पप्राणतया प्रयत्नभेदात् । श्नसोरल्लोपः । 'अ'दिति लुप्तषष्ठीकं पदम् । श्न अस् अनयोर्द्वन्द्वात्षष्ठीद्विवचनम् । शकन्ध्वादित्वात् पररूपम् । 'श्ने'ति श्नम्प्रत्ययैकदेशनिर्देशः । 'अत उत्सार्वधातुके' इत्यतः 'सार्वधातुके' इत्यनुवर्तते, 'गमहने'त्यतः 'क्ङिती'ति च । तदाह—अस्येत्यादिना ।

अस्तेर्भूः । अस्धातोर्भूभावः स्यादार्द्धधातुके विवक्षिते इत्यर्थः ।

घ्वसोरेद्धावभ्यासलोपश्च । घु अस्—अनयोर्द्वन्द्वः । एत्-हौ-इति च्छेदः ।

ननु—अस् हि-इति स्थिते 'हुझल्भ्यो हेर्धि'रिति धित्वं परत्वाद्बाधित्वा 'घ्वसो'रिति सकारस्य एत्वे कृते, हुझल्भ्यः परत्वाऽभावात् कथं धिभाव इत्यत आह—आभीयत्वादिति ।

---

श्नसोरल्लोपः । 'श्नम्' प्रत्यय और 'अस्' धातु के अकार का लोप हो, सार्वधातुक कित् और ङित् प्रत्यय परे रहते ।

अस्तेर्भूः । 'अस्' धातु को 'भू' आदेश हो, आर्द्धधातुक परे रहते ।

घ्वसोरेद्धौ । घुसञ्ज्ञक धातु और 'अस्' धातु को एत्व हो , और अभ्यास का लोप हो, 'हि' परे रहते ।

---

१ एकत्रादर्शे दृश्यते । २ शेषपूरणमिदम् ।

उपसर्गप्रादुर्भ्यामस्तिर्यच्परः ।८।३।८७। उपसर्गेणः, प्रादुसश्च परस्याऽस्तेः सस्य षो, यकारेऽचि च परे। निष्यात्। प्रादुःष्यात्। निषन्ति। प्रादुःषन्ति। यच्परे किम्? अभिस्तः।

रु१८शब्दे। तुरुस्तुशम्यमः सार्वधातुके।७।३।९५। एभ्यः [परस्य] सार्वधातुकस्य हलादेस्तिङ ईड् वा स्यात्[1]। 'नाभ्यस्तस्ये'त्यतोऽनुवृत्तिसम्भवे पुनः 'सार्वधातुक'ग्रहणमपिदर्थम्। रवीति। रौति। रुवीतः। रुतः। हलादेः किम्? रुवन्ति। तिङः किम्? शाम्यति। सार्वधातुके किम्? आशिषि–रूयात्। विध्यादौ तु–रुयात्। रुवीयात्। अरावीत्। अराविष्यत्।

'तु'इति सौत्रो धातुः–गतिवृद्धिहिंसासु। तवीति। तौति। तुवीतः। तुतः। तुवन्ति। तुताव। तोता। तोष्यति।

णु१९ स्तुतौ। नौति। नुनाव। नविता। टु क्षु२० शब्दे। क्षौति। चुक्षाव। क्षविता। क्ष्णु२१तेजने। क्ष्णौति। क्ष्णविता। [[2]अक्ष्णावीत्]।

---

रौतीति। ईडभावे 'उतो वृद्धि'रिति वृद्धिरिति भावः। रुत इति। अपित्त्वेऽपि ईड्विकल्प इति भावः। रुवन्तीति। अन्तादेशे कृते हलादित्वाऽभावादीडभावे उवङिति भावः। शाम्यतीति। श्यनस्तिङ्त्वाऽभावादीण्नेति भावः। आशिषि-रूयादिति। आर्द्धधातुकत्वादीडभावे 'अकृत्सार्वधातुकयो'रिति दीर्घः। विध्यादौ त्विति। आदिना–निमन्त्रणादिसंग्रहः।

रुवीयादिति। हलादिसार्वधातुकत्वादीड्विकल्प इति भावः। ईडभावपक्षे तु हलादौ पिति सार्वधातुके 'उतो वृद्धि'रिति बोध्यम्।

---

उपसर्गप्रादुर्भ्या। उपसर्गसम्बन्धी इण् से और 'प्रादुस्' से परे जो 'अस्' धातु का सकार, उसको षत्व हो, यकार और अच् परे रहते।

तुरुस्तुशम्यमः। इन धातुओं से परे जो हलादि तिङ् सार्वधातुक उसको ईट् आगम हो, विकल्प करके।

---

१ 'स्या'दिति क्वचिन्न। २ लिखितेषु नास्ति।

ष्णु २२ प्रस्रवणे। स्नौति। [1]सुष्णाव। स्नविता। षु २३ प्रसवैश्वर्ययोः। प्रसवोऽभ्यनुज्ञानम्। सौति। सुतः। सुषाव। सोता। असौषीत्। कु २४ शब्दे। कौति। चुकाव। कोता॥

इण् २५ गतौ। एति। इतः। इणो यण् ।६।४।८१। [ [2]इणो यण्स्यात् ] अजादौ प्रत्यये [ [3]परे ]। इयङोऽपवादः। यन्ति।

अभ्यासस्याऽसवर्णे ।६।४।७८। अभ्यासस्य[4] इ-उवर्णयोरियङुवङौ स्तोऽसवर्णेऽचि [ [4]परे ]। इयाय।

दीर्घ इणः किति ।७।४।६९। इणोऽभ्यासस्य दीर्घः [ [3]स्यात् ] किति लिटि [[3]परे]। ईयतुः। ईयुः। इययिथ। इयेथ। [[5]एता। एष्यति। एतु]।

---

इण् गताविति। 'इणो यण्' इत्यादौ विशेषणार्थो णकारः। एतीति। शपो लुकि तिपः पित्त्वेन ङित्त्वाऽभावाद् गुणः। इत इति। अपित्त्वेन ङित्त्वान्न गुणः। यन्तीति। एषि, इथः, इथ। एमि, इवः, इमः।

इयायेति। द्वित्वे सति उत्तरखण्डवृद्धावायादेशे 'अभ्यासस्यासवर्णे' इति इयङ्। अतुसि तु द्वित्वे कित्त्वाद् गुणाऽभावे इ इ अतुस् इति स्थिते 'इणो यण्' इत्युत्तरखण्डस्य यणि इयतुरिति स्थिते—दीर्घ इण इति। 'अत्र लोप' इत्यतोऽभ्यासस्येति, 'व्यथो लिटि' इत्यतो 'लिटी'ति चानुवर्तते। तदाह—इणोऽभ्यासस्येति।

ईयतुरिति। भारद्वाजनियमात्थलि वेडिति स्मारयन्नाह—इययिथ। इयेथेति। इयथुः, ईय। इयाय–इयय, ईयिव, ईयिम। एता। एष्यति। एतु—इतात्,

---

इणो यण्। इण् धातुको यण् हो, अजादि प्रत्यय परे रहते।

अभ्यासस्यासवर्णे। अभ्यास सम्बन्धी इकार और उकार को इयङ् और उवङ् आदेश हो, असवर्ण अच् परे रहते।

दीर्घ इणः। 'इण्' धातुके अभ्यास को दीर्घ हो, कित् लिट् परे रहते।

---

१ 'सुस्नाव' इति पा०। २ शेषपूरणमिदमस्माकम्। ३ क्वचित्पठ्यते। ४ इवर्णोवर्णयोः', मु० पा०। ५ लिखितेषु नास्ति।

ऐत । ऐताम् । आयन् । इयात् । ईयात् ।

एतेर्लिङि ।७।४।२४। उपसर्गात्परस्य इणोऽणो ह्रस्वः स्यादार्द्धधातुके किति लिङि । निरियात् । [1]अन्तादिवच्च ।६।१।८५। योऽयमेकादेशः स पूर्वस्याऽन्तवत्परस्याऽऽदिवत्स्यात् । उभयत आश्रयणे नान्तादिवत् । अभीयात् । अणः किम् ? समेयात् । [ [2]'समीया'दिति प्रयोगस्तु भौवादिकस्य ] ।

---

इताम्, यन्तु । इहि—इतात्, इतम्, इत । अयानि, अयाव, अयाम ।

ऐदिति । लङि तिप इकारलोपे, इकारस्य गुणे, आटि वृद्धिः ।

आयन्निति । झेरन्तादेशे इकारलोपे तकारलोपे, इ अन् इति स्थिते 'इणो यण्' इति यणि कृते तस्याऽऽभीयत्वेनासिद्धत्वादाडिति भावः । ऐः, ऐतम्, ऐत । आयम्, ऐव, ऐम । विधिलिङ्याह—इयादिति । इयाताम्, इयुरित्यादि ।

नन्वभीयादित्यत्रापि ह्रस्वः स्यादित्यत आह—उभयत इति । अत्र एकादेशस्य ईकारस्य पूर्वान्तत्वे तूपसर्गानुप्रवेशादिण्धातुत्वं न संभवति । परादित्वेन इण्धातुत्वाश्रयणे तु नोपसर्गात्परत्वम्, उपसर्गैकदेशस्य इकारस्य ईकारात्मना सत्त्वेन 'अभ्' इत्यस्य उपसर्गत्वाऽभावात् । 'एकादेशस्य आदिवत्त्वमाश्रित्य इण्धातुत्वम्, अन्तवत्त्वमाश्रित्य च तस्य उपसर्गानुप्रवेशश्चे'त्यपि न संभवति, पूर्वपरशब्दाभ्यां अन्तादिशब्दाभ्यां च विरोधस्य पुरस्स्फूर्तिकतया विरुद्धातिदेशद्वयस्य युगपदसंभवादित्यर्थः ।

समेयादिति । आ इयात्—एयात् । 'समेया'दित्यत्र एकारस्य अनण्त्वान्न ह्रस्वः । ग्रहणकसूत्रादन्यत्र पूर्वेणैव णकारेण प्रत्याहाराश्रयणादिति भावः ।

---

एतेर्लिङि । उपसर्ग से परे जो 'इण्' धातु का अण् उसको ह्रस्व हो, आर्द्धधातुक कित् लिङ् परे रहते ।

उभयतः । उभयतः आश्रयणमें अन्तादिवद्भाव नहीं हो ।

---

1 लिखिते एकत्रादर्शे दृश्यतेऽयं पाठः ।

2 असार्वत्रिकः पाठः, एकत्रैवोपलम्भात् ।

इणो गा लुङि।२।४।४५। [[1]इणो गादेशः स्याल्लुङि]। 'गातिस्थे'ति सिचो लुक्। अगात्। अगाताम्। अगुः। ऐष्यत्॥

इक् २६ स्मरणे। अयमधिपूर्व एव, 'अधीगर्थदयेशां कर्मणी'ति लिङ्गात्। [ [2]अन्यथा हीगर्थेत्येव ब्रूयात्]। ※ इण्वदिक इति वक्तव्यम्। अधियन्ति। अध्यगात्। केचित्त्वार्द्धधातुकाधिकारोक्तस्यैवातिदेशमाहुः। तन्मते यण्न। तथा च भट्टिः—'ससीतयो राघवयोरधीय'न्निति।

वी २७ गतिव्याप्तिप्रजनकान्त्यसनखादनेषु। प्रजनो-गर्भग्रहणम्। असनं-क्षेपणम्। वेति। वीतः। वियन्ति। वेषि। वेमि। वीहि। अवेत्। अवीताम्। अवियन्।

---

केचित्त्विति। 'आर्द्धधातुके' इत्यधिकारे 'इणो गा लुङी'ति सूत्रे एतद्वार्तिकपाठस्य भाष्ये दर्शनात्तदधिकारोक्तानामेव कार्याणामुपस्थितत्वादिति भावः। तन्मते यण् नेति। 'इणो यण्' इत्यस्यार्द्धधातुकाधिकारस्थत्वाऽभावान्नातिदेश इत्यर्थः। तेन श्नोऽन्तादेश इयङि सवर्णदीर्घे अधीयन्तीत्याद्यूह्यम्। राघवयोरधीयन्निति। अत्र 'राघवयो'रिति 'अधीगर्थे'ति कर्मणि षष्ठी। राघवौ स्मरन्नित्यर्थः।

वी गतीति। 'अजेर्व्यघञपो'रिति सूत्रभाष्यरीत्या अस्य आर्द्धधातुके नास्ति प्रयोग इति शब्देन्दुशेखरकृतः। वियन्तीति। एकाच्त्वाद्यणभावादियङिति भावः। लोटि-वेतु—वीतात्, वियन्तु।

वीहीति। हेरपित्त्वेन ङित्वान्न गुण इति भावः। वीतात्, वीतम्, वीत। वयानि, वयाव, वयाम।

लङ्याह—अवेदिति। अवियन्निति। वी-अन्निति स्थिते परत्वादडागमात् प्रागियङि कृतेऽडागम इति भावः।

---

इणो गा। इण् धातु को 'गा' आदेश हो, लुङ् परे रहते।

इण्वदिकः। इण् धातुकी तरह ही इक् धातु को भी कार्य हों।

---

१ शेषपूरणमेतत्। २ असार्वत्रिकः पाठः, एकत्रैवोपलम्भात्।

[1]अटि सत्यनेकाच्त्वाद्यणिति केचित्। अय्यन्॥

अत्र ईकारोऽपि धात्वन्तरं प्रश्लिष्यते। एति। ईतः। इयन्ति। ईयात्[2]। ऐषीत्॥

वच २८ परिभाषणे। वक्ति। वक्तः। अयमन्तिपरो न प्रयुज्यते। बहुवचनपर इत्यन्ये। झिपर इत्यपरे। वक्तु। वग्धि। वच्यात्। उच्यात्।

अस्यतिवक्तिख्यातिभ्योऽङ् ।३।१।५२। [2]एभ्यश्च्लेरङ् स्यात्॥

वच उम् ।७।४।२०। [ [3] वच उमागमः स्याद्—] अङि। अवोचत्। अवक्ष्यत्।

[4]मृजू २६ शुद्धौ। मृजेर्वृद्धिः ।७।२।११४। [5]मृजेरिको वृद्धिः

---

मतान्तरमाह—अटि सतीति। 'लावस्थायामड्'इति पक्षे इयङं बाधित्वा अनेकाच्त्वाद्यणि 'अय्य'न्निति केचिदाहुरित्यर्थः। केचिदित्यस्वरसं सूचयति। तद्बीजं तु कृतेऽप्यटि यणि कर्तव्ये आभीयतया अटोऽसिद्धत्वादनेकाच्त्वाऽभावाद्यणभावादियङेवोचित इत्यास्तां विस्तरः।

अत्रेति। वी-ई इति सवर्णदीर्घेण 'वी गतौ'त्यादिनिर्देश इति भावः। ईयादिति। विधिलिङि, आशीर्लिङि च रूपमिदं समानम्। 'स्कोरि'ति सलोपः। तत्र विधिलिङि—ईयातामित्यादि, आशिषि तु—ईयास्तामित्यादिरूपाणीति विशेषः। ऐषीदिति। 'सिचि वृद्धि'रिति वृद्धिः।

---

वच उम्। 'वच्' को 'उम्' आगम हो, अङ् परे रहते।

मृजेर्वृद्धिः। 'मृज्' धातु के इक् को वृद्धि हो, धातुत्वधिकार विहित प्रत्यय परे रहते।

---

१ 'अडागमे सति' पाठः।

२ 'च्लेः' इत्येव प्रायो वृत्तिर्लिखितेषु दृश्यते। तत्र शेषपूरणं कार्यमिति ग्रन्थकृदाशयो बोध्यः। ३ शेषपूरणमिदम्। ४ 'मृजूष्' पा०।

५ 'मृजेरिको वृद्धिः स्याद्धातुप्रत्यये परे' इति क्वचित्पाठः। 'इको धातुप्रत्यये परे' इत्येव च क्वचित्पाठः।

स्याद्धातुप्रत्यये। ['[1]व्रश्चे'तिषः]। मार्ष्टि। मृष्टः। *क्ङित्यजादौ वेष्यते। मार्जन्ति। मृजन्ति। [[1]मार्क्षि]। ममार्ज। ममृजतुः। ममार्जतुः। ममार्जिथ। ममार्ष्ठ। मार्जिता। मार्ष्टा। मार्ष्टु। मृड्ढि। अमार्ट्। अमार्ड्। अमार्जम्। अमार्जीत्। [[1]['षढोः कः सि']। अमार्क्षीत्। अमार्क्ष्यत्। [2]अमार्जिष्यत्॥

[3]रुदिर् ३० अश्रुविमोचने। रुदादिभ्यः सार्वधातुके।७।२।७६।' रुद् स्वप् श्वस् अन् जक्ष् एभ्यो वलादेः सार्वधातुकस्येट् स्यात्'। रोदिति। रुदितः। हौ—परत्वादिटि धित्वं न। रुदिहि। रुदश्च पञ्चभ्यः।७।३।९८। [[2]रुदादेः परस्य] हलादेः पितः सार्वधातुकस्याऽपृक्तस्य ईट स्यात्।

[3]अड् गार्ग्यगालवयोः।७।३।९९। अरोदीत्। अरोदत्। अरु-

---

अमार्ट् इति। तिप इकारलोपे वृद्धौ रपरत्वे हल्ङ्यादिना तकारलोपे व्रश्चादिना जस्य षः, तस्य जश्त्वचर्त्वे इति भावः। अमृष्टाम्, अमार्जन्-अमृजन्। अमार्ट्, अमार्ड्, अमृष्टम्, अमृष्ट। अमार्जमिति। अमृज्व, अमृज्म। मृज्यात्। मृज्याताम्। मृज्यास्ताम्। अमार्जीत् अमार्क्षीदिति। ऊदित्वादिड्विकल्प इति भावः। इट्पक्षे-अमार्जिष्टाम्, अमार्जिषुरित्यादि। इडभावे तु अमार्ष्टाम्-अमार्क्षुः। अमार्क्षीः, अमार्ष्टम्, अमार्ष्ट। अमार्क्षम्, अमार्क्ष्व, अमार्क्ष्म। अमार्जिष्यत्-अमार्क्ष्यत्।

---

क्ङित्यजादौ। 'मृज्' धातु के इक् का वृद्धि हो, विकल्प करके, अजादि कित् ङित् प्रत्यय परे रहते।

रुदादिभ्यः। रुदादि पांच धातुओं से परे जो वलादि सार्वधातुक उसको इट् आगम हो।

रुदश्च पञ्चभ्यः। रुदादि पांच धातुओं से परे जो हलादि पित् अपृक्त सार्वधातुक उसको 'ईट्' आगम हो।

अड्गार्ग्य। रुदादि पाँच धातुओं से परे जो हलादि पित् अपृक्त सार्व-धातुक उसको 'अट्' आगम हो, गार्ग्य और गालव आचार्यों के मत में।

---

१ क्वाचित्कः पाठः। २ लिखितेषु नास्ति। ३ 'रुदादेः परस्य हलादेः पितः सार्वधातुकस्याऽपृक्तस्य अट् स्याद्गार्ग्यगालवमते'—इति वृत्तिर्बोध्या।

दिताम् । अरुदन् । अरोदीः । अरोदः । प्रकृतिप्रत्ययविशेषाऽपेक्षाभ्या-मडीड्भ्यामन्तरङ्गत्वाद्यासुट्, असिद्धं बहिरङ्गमन्तरङ्गे [–[1]इति परिभाषणात् ]। रुद्यात् । अरुदत् । अरोदीत् । अरोदिष्यत् ।

ञिष्वप् ३१ शये । स्वपिति । स्वपितः । सुष्वाप । सुषुपतुः । सुष्वपिथ । सुष्वप्थ ।

सुविनिर्दुर्भ्यः सुपिसूतिसमाः ।८।३।८८। एभ्यः सुप्यादेः सस्य षः [1]स्यात् । 'पूर्वं धातुरुपसर्गेण[2]युज्यते ।' किति लिटि—परत्वा-त्सम्प्रसारणे,षत्वे च कृते द्वित्वम् । पूर्वत्राऽसिद्धीयमद्विर्वचने । सुषुपतुः । सुषुपुः ।

अकिति तु–द्वित्वेऽभ्यासस्य संप्रसारणम् । षत्वस्याऽसिद्धत्वात्ततः पूर्वं 'हलादिः शेषः' । नित्यत्वाच्च । ततः सुपिरूपाऽभावान्न षः । सुसुष्वाप । सुस्वप्ता । अस्वपीत् । अस्वपत् । स्वप्यात् । सुप्यात् । सुप्या-स्ताम् । सुषुप्यात् । [3]अस्वाप्सीत् । अस्वप्स्यत् ॥

श्वस ३२ प्राणने । [[3]प्राणनं—जीवनम् ] । श्वसिति । श्वसितः । शश्वास । श्वसिता । श्वसिष्यति । श्वसितु । अश्वसीत् । अश्वसत् । अश्वसिताम् । अश्वसन् । श्वस्यात् । श्वस्याताम् । [ श्वस्युः[3] ] । श्वस्यात् । श्वस्यास्ताम् । [श्वस्यासुः[3]] । 'ह्मयन्ते'ति न वृद्धिः । अश्वसीत् । [[3]अश्वसिष्यत् ] ।

---

सुविनिर्दुर्भ्यः । सु, वि, निर्, दुर् इन उपसर्गों से परे जो सुप्यादि धातु, उनके सकार को षत्व हो ।

पूर्वत्राऽसिद्धीयम । द्वित्व भिन्न कार्य कर्त्तव्य हो तभी 'पूर्वत्राऽसिद्ध' यह सूत्र प्रवृत्त होता है । परन्तु यदि द्वित्व कर्त्तव्य हो तो यह सूत्र नही प्रवृत्त होता है ।

---

१ क्वाचित्कः पाठोऽयम् । २ क्वचिन्न । ३ क्वचिदेव दृश्यते ।

अन ३३ च । अनिति । आन । अनिता । [ अनिष्यति ] । आनीत् । आनत् । अनितेः ।८।४।१९। उपसर्गस्थान्निमित्तात्परस्याऽनितेर्नस्य णः [ [1]स्यात् ] । प्राणिति ।

जक्ष ३४ भक्ष-हसनयोः । जक्षिति । जक्षितः । अदभ्यस्तात् ।७।१।४। [2]अभ्यस्तात्परस्य झस्य अत्स्यात् । अन्ताऽपवादः । जक्षति । अजक्षीत् । अजक्षत् । अजक्षिताम् । 'सिजभ्यस्ते'ति [3]झेर्जुस् । अजक्षुः ।

जागृ ३५ निद्राक्षये । जागर्ति । जागृतः । जाग्रति । [ 'उषविदे'-त्याम्वा ] । जागराञ्चकार । जजागार ।

जाग्रोऽविचिण्णल्ङित्सु ।७।३।८५। जागर्तेर्गुणः स्याद्विचिण्णल्ङिद्भ्योऽन्यस्मिन्वृद्धिविषये, प्रतिषेधविषये च । जजागरतुः । जजागरुः । जागरिता । [ [4]जागरिष्यति ] । अजागः । अजागृताम् । [ [4]अभ्यस्तत्वाज् जुस् ] ।

---

जागृधातुरयं ऋकारान्तः सेट् । जागर्तीति । तिपि शपो लुकि ऋकारस्य गुणे रपरत्वम् । जागृत इति । अत्र ङित्त्वान्न गुणः । जाग्रतीति । 'जक्षित्यादयः षट्' इत्यभ्यस्तसंज्ञायाम् 'अदभ्यस्तात्' इति झेरदादेशः । ङित्वाद् गुणनिषेधे ऋकारस्य यणिति भावः । जागर्षि, जागृथः, जागृथ । जागर्मि, जागृवः, जागृमः ।

---

अनितेः । उपसर्गस्थ निमित्त [जो रेफ षकार, उन]से परे जो अन् धातुका नकार उसको णत्व हो ।

अदभ्यस्तात् । अभ्यस्तसञ्ज्ञक से परे जो 'झ' उसको 'अत्' आदेश हो ।

जाग्रोऽविचिण्णल् । 'जागृ' धातु को गुण हो । विन् प्रत्यय और चिण् णल् —इन से भिन्न वृद्धिविषयप्रत्यय, और ङित् से भिन्न प्रतिषेध विषय प्रत्यय परे रहते ।

---

१ क्वाचित्कः पाठः । २ 'अदभ्यस्तात् ।। 'झस्य' इत्येव क्वचिद् वृत्तिः ।
३ 'झे'रिति क्वचिन्न । ४ क्वाचित्कः पाठः ।

जुसि च ।७।३।८३। अजादौ जुसि इगन्ताङ्गस्य गुणः[स्यात् ]। अजागरुः। अजादौ किम् ? जागृयुः। आशिषि तु—जागर्यात्। जागर्यास्ताम्। जागर्यासुः। अजागरीत्।

दरिद्रा ३६ दुर्गतौ। दरिद्राति। इद्दरिद्रस्य ।६।४।११४। [[1]दरिद्रातेरिकारः स्या]द्धलादौ क्ङिति सार्वधातुके। दरिद्रितः।

श्नाभ्यस्तयोरातः ।६।४।११२। [ [2]श्नाऽभ्यस्तयोरातो ] लोपः [ स्यात् ] क्ङिति सार्वधातुके। दरिद्रति। अनेकाच्त्वादाम्। दरिद्राञ्चकार। 'आत औ णलः' इत्यत्र 'ओ' इत्येव सिद्धे 'औ'विधानं दरिद्रातेरालोपे कृते श्रवणार्थम्। अत एव ज्ञापकादाम्नेत्येके। ददरिद्रौ।

* दरिद्रातेरार्द्धधातुके विवक्षिते आलोपो वाच्यः ॥ लुङि वा।

---

विवक्षिते इति। 'आतो लोप इटि चे'त्यालोपो दरिद्रातेर्भवन् क्ङिति, अक्ङिति च अजादावार्द्धधातुके भवति। स च आर्द्धधातुके विवक्षिते ततः प्रागेव भवतीति वक्तव्यमित्यर्थः। तेन दरिद्रातीति दरिद्रः। अत्र आल्लोपे कृते पचाद्यच् सिध्यति। आर्द्धधातुके परे आल्लोपप्रवृत्तौ तु 'श्याद् व्यधा'-इत्या-

---

जुसि च। इगन्त अङ्गको गुण हो, अजादि जुस् प्रत्यय परे रहते।

इद्दरिद्रस्य। 'दरिद्रा' धातु को इत् अन्तादेश हो, हलादि कित् ङित् सार्वधातुक परे रहते।

श्नाभ्यस्तयो। श्ना प्रत्यय और अभ्यस्तसञ्ज्ञक धातु के आकार का लोप हो, कित् ङित् सार्वधातुक परे रहते।

दरिद्रातेरार्द्धधातुके। आर्द्धधातुक की विवक्षा में दरिद्रा धातुके आकार का लोप हो।

लुङि वा। दरिद्रा धातु के आकार का लोप हो, विकल्प करके, लुङ् परे रहते।

---

१ 'दरिद्रातेरिकारः स्या'दित्यंशः क्वचिन्न।

२ 'अनयोरातो लोपः स्यात् क्ङिति सार्वधातुके' इति पा०।

*सनि, ण्वुलि, ल्युटि च न। दरिद्रिता। अदरिद्रात्। अदरिद्रिताम्। अदरिद्रुः। दरिद्रियात्। दरिद्र्यात्। अदरिद्रीत्। [[1]पक्षे—] इट्सकौ। अदरिद्रासीत्।

चकासृ ३७ दीप्तौ। चकास्ति। चकास्तः। चकासति। चकासाञ्चकार। चकासिता। [चकास्तु। '[2]धि चे'ति सलोपः सिच एवेत्येके। तन्मते-चकाद्धि। 'चकाधि' इत्येव तु भाष्यम्]।

तिप्यनस्तेः ।८।२।७३। पदान्तस्य सस्य दः [[2]स्यात्तिपि, नत्वस्तेः]। अचकात्। [अचकाद्। [3]अचकास्ताम्]। अचकासुः॥

सिपि धातो रुर्वा ।८।२।७४। पदान्तस्य [[4]धातोः] सस्य [[5]रुर्वा स्यात्सिपि]। पक्षे दः। अचकाः। अचकात्। [[6]अचकाद्]।

---

दन्तलक्षणो णप्रत्ययः स्यात्। ततश्च कृते णप्रत्यये आल्लोपं बाधित्वा 'आतो युक् च्विण्कृतो'रिति युकि 'दरिद्राय' इति रूपं स्यात्। आर्द्धधातुके विवक्षिते ततः प्रागेव आल्लोपे कृते तु आदन्तत्वाऽभावाण्णप्रत्ययाऽभावे पचाद्यच्प्रत्ययो निर्बाधः।

अदरिद्रुरिति। जक्षित्यादित्वेन अभ्यस्तत्वाज्जुसिति भावः। अदरिद्राः, अदरिद्रितम्, अदरिद्रित। अदरिद्राम्, अदरिद्रिव, अदरिद्रिम।

---

सनि ण्वुलि। दरिद्रा धातु के आकार का लोप नहीं हो, सन् ण्वुल् और ल्युट् परे रहते।

तिप्यनस्तेः। पदान्त सकार को दकार आदेश हो, तिप् परे रहते, अस् धातुके सकार को छोड़ कर। [अर्थात्—अस् धातुके पदान्त सकार को दकार नहीं हो]।

सिपि धातोः। धातुके पदान्त सकारको रुत्व हो, विकल्प करके, सिप् परे रहते। पक्षमें—दकार भी हो।

---

१ क्वाचित्कः पाठः। २ क्वचिदयं पाठ उपलभ्यते। ३ लिखिते नास्ति। ४ क्वाचित्कः पाठः। ५ 'रुर्वा स्यात्' पा०। ६ क्वचिदुपलभ्यते।

शासु ३८ अनुशिष्टौ । शास्ति । शास इदङ्हलोः ।६।४।३४। शास उपधाया इत्स्यादङि, हलादौ क्ङिति च । [ [1]'शासिवसी'ति षः । ष्टुत्वम् ] । शिष्टः । शासति । शशास । शशासतुः । शास्तु । शिष्टात् । शिष्टाम् । शासतु ।

शा हौ ।६।४।३५। शास्तेः [ [2]शादेशः स्याद्धौ परे ] । तस्याऽऽभीयत्वेनाऽसिद्धत्वाद्धेर्धिः । शाधि । अशात् । [ [1]अशाद् ] । अशिष्टाम् । अशासुः । अशाः । अशात् । शिष्यात् ।

सर्तिशास्त्यर्तिभ्यश्च ।३।१।५६। एभ्यश्च्लेरङ् [3]स्यात्कर्त्रर्थे लुङि । अशिषत् । अशासिष्यत् ॥

इति अदादौ परस्मैपदप्रक्रिया ॥

अथाऽऽत्मनेपदप्रक्रिया ।

शीङ् १ स्वप्ने । शीङः सार्वधातुके गुणः ।७।४।२१। [ [4]शीङो

---

अशादिति । 'खिपि धातो'रिति रुत्वदत्वविकल्प इति भावः । अशिष्टम्, अशिष्ट । अशासम् , अशिष्व, अशिष्म ।

शिष्यादिति । 'शास इ'दितीत्वे 'शासिवसी'ति ष इति भावः । अशिषदिति । 'सर्त्तिशास्त्यर्त्तिभ्यश्चे'त्यङि 'शास'इतीत्वमिति भावः ।

शीङ् स्वप्ने । सेट् । ङित्वात्तङ् । शीङः सार्वधातुके । ननु 'सार्वधातु-

---

शास इदङ् । 'शास्' धातुकी उपधाको इत्व हो, अङ् [परे रहते] और हलादि कित् ङित् प्रत्यय परे रहते ।

शा हौ । 'शास्' धातुको 'शा' आदेश हो, 'हि' परे रहते ।

सर्त्तिशास्यर्त्ति । 'सृ' शास्' और 'ऋ' धातुसे परे जो 'च्लि' उसको 'अङ्' आदेश हो, कर्त्रर्थक लुङ् परे रहते ।

शीङः सार्वधातुके । 'शीङ्' धातुको गुण हो, सार्वधातुक परे रहते ।

---

१ क्वाचित्कः पाठः । २ बहुष्वादर्शेषूपलभ्यते ।
३ 'कर्तृलुङि' पा० । ४ शेषपूरणमिदम् ।

गुणः स्यात्सार्वधातुके । [1]'क्ङिति चे' त्यस्यापवादः ] शेते । शयाते ।

शीङो रुट् ।७।१।६। [ शीङः परस्य ] झादेशस्याऽतो [[2]रुडागमः स्यात् ] । शेरते । शेषे । शयाथे । शेध्वे । शये । शेवहे । शेमहे । शिश्ये । शयिता । शयिष्यते । शेताम् । अशेत । अशयाताम् । अशेरत । शयीत । शयीयाताम् । शयीरन् । शयिषीष्ट । अशयिष्ट । अशयिष्यत ।

इङ् २ अध्ययने । इङिकावध्युपसर्गतो न व्यभिचरतः । अधीते । अधीयाते । अधीयते ।

---

कार्द्धधातुकयो'रित्येव सिद्धे किमर्थमिदमिति चेन्न; 'क्ङि ते चे'त्यस्यापवादत्वार्थमस्याऽऽवश्यकत्वात् ।

झस्य अदादेशे सति 'शे अते' इति स्थिते आह—शीङो रुट् । 'झोऽन्त' इत्यतो 'झ' इत्यनुवर्तते । 'अदभ्यस्तात्' इत्यतोऽदित्यनुवृत्तं षष्ठ्या विपरिणम्यते । तदाह—शीङः परस्य झादेशस्येति । रुटि उकार उच्चारणार्थः । टित्वादाद्यवयवः । शेध्वे इति । 'षीध्वंलुङ्लिटाम्' इत्युक्तेर्न ढ इति श्रीवासुदेवदीक्षिता व्याचख्युः ।

शिश्ये इति । शिश्यिषे । शिश्यिढ्वे—शिश्यिध्वे । शयितेति । शयिष्यते । शेताम्, शयाताम्, शेरताम् । शेष्व, शयाथाम्, शेध्वम् । शयै, शयावहै, शयामहै । अशेत, अशयाताम्, अशेरत । अशेथाः, अशयाथाम्, अशेध्वम् । अशयि, अशेवहि, अशेमहि । शयीत । शयिषीष्ट ।

अशयिष्टेति । अशयिष्यतेत्यपि ज्ञेयम् ।

न व्यभिचरत इति । 'अधीते' इत्यत्र धातुरुपसर्गं न व्यभिचरती'ति भूवादिसूत्रे भाष्ये उक्तम् । अधीते इति । 'सार्वधातुकमपित्' इति ङित्वात् गुणनिषेधे सवर्णदीर्घः । अजादौ तु इयङ् । तदाह—अधीयाते इति । अधीषे, अधीयाथे, अधीध्वे । अधीये, अधीवहे, अधीमहे ।

---

शीङो रुट् ।' शीङ्' धातुसे परे जो झादेश 'अत्' उसको 'रुट्' आगम हो।

---

1 क्वचित्पठ्यते । 2 शेषपूरणमिदमस्मदीयम् ।

गाङ् लिटि ।२।४।४९। इङो [ [1]गाङ् स्याल्लिटि ] । अधिजगे । अध्येता । अध्येष्यते । अधीताम् । अधीष्व । अधीयाथाम् । अधीध्वम् । अध्ययै । अध्ययावहै । [ [1]अध्ययामहै ] । अध्यैत । अध्यैयाताम् । अध्यैयत । अध्यैथाः । अध्यैयाथाम् । अध्यैध्वम् । अध्यैयि । अध्यैवहि । अध्यमहि । अधीयीत । अधीयीयाताम् । [ अधीयीरन्[1] ] । अधीयीध्वम् । अध्येषीष्ट ।

विभाषा लुङ्लृङोः ।२।४।५०। इणो गाङ् [ [2]वा स्याल्लुङ्लृङोः ] । गाङ्कुटादिभ्योऽञ्णिन्ङित् ।१।२।१। गाङादेशात्कुटादिभ्यश्चाऽञ्णितः प्रत्यया ङितः स्युः ।

घु-मा-स्था-गा-पा-जहाति-सां हलि ।६।४।६६। एषामात ईत्स्या-

---

अधिजगिरे इति । अधिजगिषे, अधिजगाथे, अधिजगिध्वे । अधिजगे, अधिजगिवहे, अधिजगिमहे । अध्यैयतेति । अधि आ इ त इति स्थिते 'आटश्च' इति वृद्धौ यणिति भावः । अध्यैयाताम् । अध्यैयतेति । 'आत्मनेपदेष्वनत' इत्यदादेशः । अध्यैथाः, अध्यैयाथाम्, अध्यैध्वम् । अध्यैयि, अध्यैवहि, अध्यैमहीति । अधीयीध्वमिति । ध्वमि सीयुटि सलोपे यलोपे अधि इ ई ध्वमिति स्थिते इङ इयङि सवर्णदीर्घ इति भावः ।

---

गाङ् लिटि । 'इङ्' धातु को 'गाङ्' आदेश हो, लिट् परे रहते ।

विभाषा लुङ् । 'इङ्' धातुको 'गाङ्' आदेश हो, विकल्प करके, लुङ् और लृङ् परे रहते ।

गाङ्कुटादिभ्यो । इण्स्थानिक गाङ् आदेश और कुटादिधातु—इनसे परे जो ञित्-णित्-भिन्न प्रत्यय वे ङित् हों ।

घुमास्था । घुसञ्ज्ञक और मा, स्था, गा, पा, हा, और 'षो' धातु—इनके आकारको ईत्त्व हो, हलादि कित् ङित् आर्द्धधातुक परे रहते ।

---

१ 'क्वाचित्कम् । २ शेषपूरणमिदमस्मदीयम् ।

ङ्लादौ क्ङित्याद्र्धधातुके। अध्यगीष्ट। अध्यैष्ट। [ [1]अध्यगीष्यत। अध्यैष्यत ]॥

ईर ३ गतौ, कम्पने च। ईर्त्ते। ईराञ्चक्रे। ईरिता। [ [2]ईरिष्यते ]। ईर्त्ताम्। ईर्ष्व। ईर्ध्वम्। ऐरिष्ट।

[ [2]कश ४ गतिशासनयोः। कष्टे। कशाते ]।

ईड ४ स्तुतौ। ईट्टे। ईशः से ।७।२।७७। ईड्जनोर्ध्वे च ।७।२। ७८। ईशीड्जनां सेध्वेशब्दयोः सार्वधातुकयोरिट् स्यात्। योगविभागो वैचित्र्यार्थः। ईडिषे। ईडिध्वे। एकदेशविकृतस्याऽनन्यत्वात्— ईडिष्व। ईडिध्वम्। विकृतिग्रहणेन प्रकृतेरग्रहणात्—ऐड्ढ्वम्।

ईश ५ ऐश्वर्ये। ईष्टे। ईशिषे। ईशिध्वे॥

आस ६ उपवेशने। आस्ते। 'दयायासश्च' स्याम्। आसाञ्चक्रे। आस्स्व। आध्वम्। आसिष्ट।

---

अध्यगीष्टेति। अधि अगा स् त इत्यत्र आकारस्य ईकारे, यणि, सिचः षत्वे तकारस्य ष्टुत्वेन टकार इति भावः। 'गातिस्था' इति न सिज्लोपः, परस्मैपदाऽभावात्। अध्यगीषाताम्, अध्यगीषत। अध्यगीष्ठाः, अध्यगीषाथाम्, अध्यगीढ्वम्। अध्यगीषि, अध्यगीष्वहि, अध्यगीष्महि।

अध्यैष्टेति। अधि आ इ स् त इति स्थिते इकारस्य गुणे आटो वृद्धौ यणि षत्वष्टुत्वे इति भावः। अध्यैषाताम्, अध्यैषत। अध्यैष्ठाः, अध्यैषाथाम्, 'धि च' इति सलोपः। अध्यैढ्वम्। अध्यैषि, अध्यैष्वहि, अध्यैष्महि।

आस्ते इति। आसाते, आसते। आस्से, आसाथे। 'धि च' इति सलोपः। आध्वे। आसे, आस्वहे, आस्महे। आसिता। आसिष्यते। आस्ताम्, आसाताम्। आस्स्वेति। सकारद्वयमत्र बोध्यम्। आसाथाम्। आध्वमिति।

---

ईशः से। ईड्जनोर्ध्वे च। 'ईश्' 'ईड्' और 'जन्' धातुसे परे जो सार्वधातुक 'से' और 'ध्वे' शब्द, उनको 'इट्' आगम हो।

---

१ क्वाचित्कः पाठः। २ लिखितेष्वयं धातुर्नोपलभ्यते।

आङः शासु ७ इच्छायाम् । आशास्ते । आशासाते । [¹आशशासे]।

वस ८ आच्छादने । वस्ते । वस्से । वध्वे । ववसे । वसिता ॥

णिसि ९ चुम्बने । निंस्ते । णिजि १० शुद्धौ । 'चोः कुः' । निङ्क्ते । निङ्क्षे । [¹निनिञ्जे]। निञ्जिता । निञ्जिष्यते । वृजी ११ वर्जने । वृक्ते । वृजाते । इदित्यन्ये । वृङ्क्ते । पृची १२ संपर्चने । पृक्ते । [पपृचे]।

षूङ् १३ प्राणिगर्भविमोचने । सूते । [¹सुषुवे । सुषुवाते । सुषुविरे]। सुषुविषे । सोता । सविता । [²'भूसुवो'रिति गुणनिषेधः ]। सुवै । सविषीष्ट । सोषीष्ट । असविष्ट । असोष्ट ॥

---

'धि च' इति सलोपः । आसै, आसावहै, आसामहै । आस्त, आसाताम्, आसत । आस्थाः, आसाथाम्, आध्वम् । आसि, आस्वहि, आस्महि । आसीत, आसीयाताम् । आसिषीष्ट, आसिषीयास्ताम् ।

आसिष्टेति । आसिषातामित्यादि । आसिष्यत ।

आङः शासु इच्छायामिति । आङः परः शासधातुरिच्छायामित्यर्थः ।

वस आच्छादने इति । परिधाने इत्यर्थः । वध्वे इति । 'धि चे'ति सलोपः । ववसे इति । वादित्वाभ्यासलोपौ नेति भावः ।

वसितेति । अनिट्सु शब्विकरणस्यैव वसेर्ग्रहणमिति भावः । वसिष्यते । वस्ताम् । अवस्त । वसीत । वसिषीष्ट । अवसिष्ट । अवसिष्यत ।

सूते इति । सुवाते, सुवते । सूषे, सुवाथे, सूध्वे । सुवे, सूवहे, सूमहे । सुषुविषे इति । 'स्वरती'ति इड्विकल्पं बाधित्वा 'श्र्युकः किति' इति निषेधे प्राप्ते क्रादिनियमान्नित्यमिट् । 'स्वरतिसूती'ति इड्विकल्पादाह—सोता सवितेति । तिङ्स्तासा व्यवधानात् 'भूसुवो'रिति न गुणनिषेध इति भावः । सोष्यते-सविष्यते । सूताम् । सुवाताम् । सुवताम् । सूष्व, सुवाथाम्, सूध्वम् । आटः पित्त्वाद् गुणस्तु न,—'भूसुवो'रिति निषेधात् ।

सुवै इति । सुवावहै, सुवामहै । असूत । सुवीत । सविषीष्ट-सोषीष्टेत्यादि ।

---

१ एकत्र पाठोऽयं दृश्यते । २ क्वाचित्कः पाठः ।

चक्षिङ् १४ व्यक्तायां वाचि। अयं दर्शनेऽपि। इकारोऽनुदात्तो [ [1]युजर्थः ]। नुम्तु न, 'अन्त्येदित' इति व्याख्यानात्। [ [2]ङकारस्तु 'अनुदात्तेत्त्वप्रयुक्तमात्मनेपदमनित्य'मिति ज्ञापनार्थः। तेन 'स्फाय-न्निर्मोकसन्धि'रित्यादि सिद्धिः। 'स्कोः'रिति कलोपः]। चष्टे। चक्षाते।

'आर्द्धधातुके'। चक्षिङः ख्याञ्।२।४।५४। वा लिटि।२।४।५५। अत्र भाष्ये 'क्शा'दिरयमादेशः। असिद्धकाण्डे-'शस्य यो वा' इति स्थितम्। ञित्त्वात्पदद्वयम्। चख्यौ। चख्ये। चक्शौ। चक्शे। [ '[3]चयो द्वितीयाः शरि पौष्करसादे' रिति तु न, चर्त्वस्याऽसिद्धत्वात् ]। चचक्षे। ख्याता। क्शाता। ख्यास्यति। ख्यास्यते। क्शास्यति। क्शास्यते। चष्टाम्। अचष्ट। चक्षीत। [4]ख्यायात्। ख्येयात्। क्शा-यात्। क्शेयात्। 'अस्यतिवक्ती'त्यङ्। अख्यत्। अख्यत। [ 'यमरमे'-तीट्-सकौ[3] ]। अक्शासीत्। अक्शास्त।

---

चचक्षे इति। चचक्षिषे, चचक्षिध्वे। चचक्षिवहे।

ख्यास्यते इति। चष्टाम्, चक्षाताम्, चक्षताम्। चक्ष्व, चक्षाथाम्, चड्ढ्वम्। चक्षै, चक्षावहै, चक्षामहै। अचष्टेति। अचक्षाताम्, अचक्षत। अचष्ठाः, अचक्षाथाम्, अचड्ढ्वम्। अचक्षि, अचक्ष्वहि, अचक्ष्महि।

ख्यायात्-ख्येयादिति। 'वाऽन्यस्ये'त्येत्त्वविकल्पः।

अक्शासीदिति। अङ्विधौ 'ख्याती'ति यकारनिर्देशाद्यत्वाऽभावपक्षे अङ् न भवति। किं तु आदन्तत्वलक्षणौ सगिटौ। अक्शासिष्टामित्यादि।

अक्शास्तेति। आत्मनेपदे लुङि रूपम्। अक्शासातामित्यादि। अख्या-

---

चक्षिङः ख्याञ्। 'चक्षिङ्' धातु को 'ख्याञ्' ( ख्याञ् ) आदेश हो।

वा लिटि। चक्षिङ् धातु को 'ख्याञ्' ( ख्याञ् ) आदेश विकल्प करके हो, लिट् परे रहते।

---

१ 'युजर्थ' इति लिखितेषु नास्ति। २ एकत्रादर्शेऽयं पाठ उपलभ्यते।

३ एकत्रादर्शेऽयं पाठ उपलभ्यते।

४ 'ख्यायात् क्शायात्, ख्येयात् क्शेयात्'—इति क्वचित्पाठः।

* वर्जने ख्शाञ् नेष्टः । समचक्षिष्टेत्यादि ।

इत्यात्मनेपदप्रक्रिया ।

---

अथोभयपदप्रक्रिया ।

द्विष[1] १ अप्रीतौ । द्वेष्टि । द्विष्टे । [ दिद्वेष । दिद्विषे । द्वेष्टा[2] ] । द्वेक्ष्यति । [ द्वेष्टु-द्विष्टात् ] । द्विड्ढि । द्विक्ष्व । द्वेषाणि । द्वेषै । अद्वेट् । द्विषश्च[1] ।३।४।११२। [ द्विषः परस्य[2] ] लङो झेर्जुस्वा ।

---

स्यत्, अख्यास्यत । अक्शास्यत्, अक्शास्यत ।

समचक्षिष्टेति । अवर्जयदित्यर्थः । लुङि रूपम् ।

द्विष अप्रीताविति । अनिट् । द्वेष्टीति । पित्त्वेन ङित्त्वाऽभावाल्लघूपधगुण इति भावः । द्विष्टः । द्विषन्ति । द्वेक्षि, द्विष्ठः, द्विष्ठ । द्वेष्मि, द्विष्वः, द्विष्मः ।

तङि उदाहरति—द्विष्टे इति । ङित्त्वान्न गुणः । द्विषाते, द्विषते । द्विक्षे, द्विषाथे, द्विड्ढ्वे । द्विषे, द्विष्वहे, द्विष्महे । द्विड्ढीति । हेर्धिः, षस्य जश्त्वेन डः, ष्टुत्वेन ढः । द्विष्टात्, द्विष्टम्, द्विष्ट । द्वेषाणीति । आटः पित्त्वेन ङित्त्वाऽभावाद् गुणः, षात्परत्वाण्णत्वम् । द्वेषाव, द्वेषाम । द्विष्टाम्, द्विषाताम्, द्विषताम् । द्विक्ष्व, द्विषाथाम्, द्विड्ढ्वम् ।

द्वेषै इति । आटः पित्वेन ङित्वाऽभावाद् गुण इति भावः ।

अद्वेडिति । लङस्तिप् । गुणः । इकारलोपः । हल्ङ्यादिलोपः । 'वाऽवसाने' इति, 'झलां जश्' इति च चर्त्वजश्त्वे इति भावः । अद्विष्टाम् ।

द्विषश्च । 'झेर्जुस्' इति 'लङः शाकटायनस्ये'ति चानुवर्तते इत्यभिप्रेत्य सूत्रं व्याचष्टे—लङो झेरिति । अद्विषन्निति । अद्वेट्, अद्विष्टम्, अद्विष्ट । अद्वेषम्,

---

वर्जने ख्शाञ् । वर्जन अर्थ में 'चक्षिङ्' धातुको 'ख्शाञ्' आदेश नहीं हो।

द्विषश्च । 'द्विष्' धातु से परे जो लङ्सम्बन्धी झि उसको जुस् आदेश हो, विकल्प करके ।

---

१ द्विषधातुरयमेकत्राऽऽदर्शे नैव दृश्यते । २ शेषपूरणमिदम् ।

अद्विषुः । अद्विषन् । [ अद्विष्टम्[1] । अद्वेषम् । द्विषीत । द्विक्षीष्ट । 'शल इगुपधे'ति क्सः ] । अद्विक्षत् । अद्वेक्ष्यत् ।

दुह २ । प्रपूरणे 'दादेर्धातोर्घः' इति हस्य घः । [[2]'झषस्तथोर्धोऽधः'] । दोग्धि । दुग्धः । दुहन्ति । ['एकाचो बशो भ'षिति दकारस्य धकारः ] । धोक्षि । [ [1]दुग्धः । दुग्ध । दोह्मि । दुह्वः । दुह्मः ] । दुग्धे । दुहाते । दुहते । धुक्षे । दुहाथे । धुग्ध्वे । [ दुहे ] । दुह्वहे । दुह्महे । दुदोह । दुदुहे । दोग्धा । धोक्ष्यति । धोक्ष्यते । दोग्धु । दुग्धात् । दुग्धाम् । दुहन्तु । दुग्धि । दुग्धात् । दुग्धम् । दुग्ध । दोहानि । दुग्धाम् । दुहाताम् । दुहताम् । धुक्ष्व । दुहाथाम् । धुग्ध्वम् । दोहै । दोहावहै । दोहामहै ।

---

अद्विष्व, अद्विष्म । द्विक्षीष्टेत्यत्र । 'लिङ्सिचावात्मनेपदेषु' इति कित्त्वान्न गुणः । द्विक्षीयास्तामित्यादि । अद्विक्षदिति । 'शल इगुपधात्' इति क्सः । अद्विक्षताम्, अद्विक्षन्नित्यादि । तङि-अद्विक्षत, अद्विक्षाताम्, अद्विक्षन्तेत्यादि । अद्वेक्ष्यत् । अद्वेक्ष्यत ।

दुह प्रपूरणे इति । अयमनिट् । दोग्धीति । 'दादेः' इति हस्य घः, 'झषस्तथो' रिति तकारस्य धकारः, घस्य जश्त्वेन गः । धोक्षीति । हस्य घः, चर्त्वेन कः, षत्वमिति भावः । दुग्धः, दुग्ध । दोह्मि, दुह्वः, दुह्मः ।

धुक्षे इति । हस्य घः, दस्य भष्भावे धकारः, घस्य कः, षत्वम् । दुहाथे । धुग्ध्वे इति । हस्य घः, भष्भावः, घस्य गः । दुह्वहे । दुह्महे । दुदोह, दुदुहतुः, दुदुहुः । अजन्ताऽकारवत्त्वाऽभावात् क्रादिनियमान्नित्यमिट्—दुदोहिथ, दुदुहथुः, दुदुह । दुदोह, दुदुहिव, दुदुहिम । दुदुहे, दुदुहाते, दुदुहिरे । दुदुहिषे, दुदुहाथे, दुदुहिढ्वे-दुदुहिध्वे । दुदुहे, दुदुहिवहे, दुदुहिमहे । दोग्धा । धोक्ष्यति । धोक्ष्यते । दोग्धिवति । दुग्धात्, दुग्धाम्, दुहन्तु । दुग्धीति । हेर्धिः, घत्वजश्त्वे । दुग्धात्, दुग्धम्, दुग्ध । दोहानीति । आटः पित्त्वादङित्त्वाद् गुणः । दोहाव, दोहाम । दुग्धाम्, दुहाताम्, दुहताम् । धुक्ष्वेति । घत्वं, भष्, जश्त्वचर्त्वे, षत्वम् । दुहाथाम् । धुग्ध्वमिति । हस्य घः, भष्, घस्य जश्त्वम् । दोहै इति । आटः पित्त्वादङित्त्वाद् गुण इति भावः । दोहावहै, दोहामहै ।

---

१ एकत्रादर्शेऽयं पाठो दृश्यते ।

अधोक्। अधोग्। अदुग्धाम्। अदुहन्। अदोहम्॥ अदुग्ध। अदुहाताम्। अदुहत। अदुग्धाः। अदुहाथाम्। अधुग्ध्वम्। दुह्यात्। दुहीत। ['लिङ्सिचावात्मनेपदेषु']। धुक्षीष्ट। 'शल इगुपधे'ति क्सः। अधुक्षत्।

लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये ।७।३।७३। एषां क्सस्य लुग्वा, दन्त्ये तङि। अधुक्षत—अदुग्ध। क्सस्याऽचि ।७।३।७२। अजादौ तङि क्सस्य लोपः स्यात्। अधुक्षाताम्। अधुक्षन्त। अधुक्षथाः—अदुग्धाः। अधुक्षाथाम्। अधुक्षध्वम्—अधुग्ध्वम्। अधुक्षि। अधुक्षावहि—अदुह्वहि। अधुक्षामहि। अधोक्ष्यत्। अधोक्ष्यत।

---

अधोगिति। तिप्, इकारलोपः, हल्ङ्यादिलोपः, हस्य घः, दस्य भष्, घस्य चर्त्वविकल्पः। अदुग्धाम्, अदुहन्। अधोक्, अधोग्, अदुग्धम्, अदुग्ध। अदोहमिति। अदुह्व, अदुह्म। लङस्तङ्याह—अदुग्धेति। हस्य घः, तकारस्य धः, घस्य गः। अदुहाताम्, अदुहत। अदुग्धाः, अदुहाथाम्।

अधुग्ध्वमिति। हस्य घः, दस्य भष्भावः, घस्य गः। अदुहि, अदुह्वहि, अदुह्महि। अधुक्षदिति। 'शल इगुपधात्' इति क्सः। हस्य घः, दस्य भष्भावः, घस्य चर्त्वं, षत्वम्। अधुक्षताम्, अधुक्षन्-इत्यादि। अधुक्षतेति। 'क्सस्याचि'। अधुक्षाताम्, अधुक्षन्त। अधुक्षथाः, अधुक्षाताम्, अधुक्षध्वम्। अधुक्षि, अधुक्षावहि, अधुक्षामहि। लुग्वेति। त, थास्, ध्वम्, वहि,—एषु चतुर्षु दन्त्यादिषु परेषु 'लुग्वा दुहे'ति क्सस्य लुक्पक्षे लङीव रूपाणीत्यर्थः। तथाच अदुग्ध, अदुग्धाः,अधुग्ध्वम्, अदुह्वहि—इत्यपि रूपाणीति फलितम्। अधोक्ष्यत्। अधोक्ष्यत।

---

लुग्वा दुहदिह। दुहादि धातुओं से परे जो 'क्स' उसका लुक् हो, विकल्प करके, दन्त्य तङ् परे रहते।

क्सस्याचि। अजादि तङ् परे रहते 'क्स' ( के अन्त ) का लोप हो।

एवं—दिह ३ उपचये। उपचयो–वृद्धिः। [ [1]प्रणिदेग्धि। देग्धु। दिग्धि ]।

लिह ४ आस्वादने। ['ह्रोढः'। 'ढो ढे लोपः']। लेढि। लीढः। लिहन्ति। लेक्षि। लीढे। लिहाते। लिहते। लिक्षे। लिहाथे। लीढ्वे। लेढु। लीढात्। लीढाम्। लिहन्तु। लीढि। लेहानि। लीढाम्। अलेट्। [[2]अलेड्। अलीढाम्। अलिक्षत्–अलिक्षत]। अलीढ। [ अलेक्ष्यत्[2]—अलेक्ष्यत ]।

ब्रूञ् ५ व्यक्तायां वाचि। ब्रुवः पञ्चनामादित आहो ब्रुवः ।३।४।८४। [3]ब्रुवो लटस्तिबादीनां पञ्चानां णलादयः पञ्च वा स्युर्ब्रुवश्चाऽऽहादेशः। [ [4]अकार उच्चारणार्थः ]। आह। आहतुः। आहुः।

आहस्थः ।८।२।३५। [ [5]आहस्थकारोऽन्तादेशः स्याज्झलि ]। चर्त्त्वम्। आत्थ। आहथुः।

---

दिह उपचये इति। उपचयो वृद्धिः। अनिट्।

ब्रुवः पञ्चानाम्। 'परस्मैपदानां णलतुस्' इत्यत उत्तरसूत्रमिदम्। 'विदो लटो वा' इत्यतो 'लटो वे'त्यनुवर्तते। तदाह—ब्रुवो लट इति।

पञ्चानामिति। तिप्, तस्, झि, सिप्, थस् इत्येषामित्यर्थः। णलादयः पञ्चेति। णल्, अतुस्, उस्, थल्, अथुस् इत्येते पञ्चेत्यर्थः।

---

ब्रुवः पञ्चानां। 'ब्रू' धातु से परे जो लट् सम्बन्धी तिबादि पांच, उनको णलादि पांच आदेश हों, विकल्प करके। और 'ब्रू' को 'आह' आदेश भी हो।

आहस्थः। 'आह्' को थकार अन्तादेश हो, झल्परे रहते।

---

१ क्वाचित्कः पाठः। २ क्वचिन्न।

३ 'ब्रुवो लटः परस्मैपदानामादितः पञ्चानां' पा०।

४ क्वाचित्कोऽयं पाठः। ५ अस्माभिः पूरितोऽयं पाठः।

ब्रुव ईट् ।७।३।९३। ब्रुवः [[1]परस्य] हलादेः पित ईट् [[1]स्यात्] । ब्रवीति । ब्रूतः । ब्रुवन्ति । ब्रूते । ब्रुवाते । ब्रुवते । ब्रुवो वचिः ।२।४।५३। [[3]ब्रुवो वच्यादेशः स्या- ]दार्द्धधातुके । उवाच । ऊचतुः । ऊचुः । उवचिथ । उवक्थ । ऊचे । वक्ता । वक्ष्यति । वक्ष्यते ।

ब्रवीतु । ब्रूतात् । ब्रूताम् । [ [1]ब्रुवन्तु ] । ब्रूहि । [ [1]ब्रूतात् । ब्रूतम् । ब्रूत ] । ब्रवाणि । [ ब्रवाव । ब्रवाम ] । ब्रूताम् । ब्रवै । अब्रवीत् । [ [1]अब्रूताम ] । अब्रूत । ब्रूयात् । ब्रुवीत । उच्यात् । वक्षीष्ट । अवोचत् । अवोचत । अवक्ष्यत्[2] ।

❋चर्करीतञ्च । 'चर्करीत'मिति यङ्लुगन्तं तददादौ बोध्यम् ।

---

ब्रुव ईट् । 'नाभ्यस्तस्य' इत्यतः 'पिती'ति, 'उतो वृद्धिः' इत्यतो 'हली'ति चानुवर्तते । तदाह–ब्रुवः परस्येत्यादिना । ब्रवाणीति । आटः पित्त्वेन ङित्त्वाऽभावान्न गुणनिषेध इति भावः । ब्रवाव, ब्रवाम । ब्रूताम् , ब्रुवाताम् ब्रुवताम् । ब्रूष्व, ब्रुवाथाम् , ब्रूध्वमिति । ब्रवै इति । आटः पित्त्वेन ङित्त्वाऽभावाद् गुणः । ब्रवावहै, ब्रवामहै । लङि-अब्रवीत् , अब्रूताम्, अब्रुवन् । अब्रवीः, अब्रूतम्, अब्रूत । अब्रवम्, अब्रूव, अब्रूम ।

उच्यादिति । वच्यादेशे 'वचिस्वपी'ति संप्रसारणमिति भावः ।

---

ब्रुव ईट् । 'ब्रू' धातु से परे जो हलादि पित् उसको 'ईट्' आगम हो ।

ब्रुवो वचिः । 'ब्रू' धातु को 'वच्' आदेश हो, आर्द्धधातुक परे रहते ।

चर्करीतञ्च । यङ्लुगन्त धातुओं को भी अदादिगण में जानना ।

---

१ क्वचिन्न ।

२ इतोऽग्रे–"वश कान्तौ । कान्तिरिच्छा । वष्टि । उष्टः । उशन्ति । वक्षि । उवाश । ऊशतुः । ऊशुः । वशिता । वष्टु । उष्टात् । उड्ढि । अवट् । औष्टाम् । औशन् । अवशम् । उश्यात् । उश्यातास् ।" इति क्वचित्पाठो दृश्यते ।

ऊर्णुञ् ६ आच्छादने। **ऊर्णोतेर्विभाषा** ।७।२।६। [ [1]ऊर्णोते- ]-वृद्धिर्वा [2]स्याद्धलादौ पिति सार्वधातुके। ऊर्णौति। ऊर्णोति। ऊर्णुतः। ऊर्णुवन्ति। ऊर्णुते। ऊर्णुवाते। ऊर्णुवते।

*ऊर्णोतेराम्नेति वाच्यम्। **न न्द्राः संयोगादयः** ।६।१।३। अचः पराः संयोगादयो न-द-रा द्विर्न भवन्ति। 'नुशब्दस्य द्वित्वम्। [ [3]णत्वस्याऽसिद्धत्वात। 'पूर्वत्राऽसिद्धीयमद्विर्वचने' इति त्वनित्यम्, 'उभौ साभ्यासस्ये'ति लिङ्गात् ]। ऊर्णुनाव। ऊर्णुनुवतुः। ऊर्णुनुवुः।

---

लिटि 'इजादेः' इति 'कास्यनेकाच्' इति च आमि प्राप्ते आह—ऊर्णोतेराम् नेति। ऊर्णोतेर्नुवद्भावस्य वक्ष्यमाणतया इजादित्वस्य, अनेकाच्त्वस्य चाभावादिति भावः। णलि ऊर्णु अ इति स्थिते 'अजादेर्द्वितीयस्य' इति 'नु' इति रेफसहितस्य द्वित्वे, हलादिशेषेण नकारस्य निवृत्तौ, ऊरुनावेति प्राप्ते आह—न न्द्राः संयोगादयः। 'एकाचो द्वे प्रथमस्ये'त्यतो द्वे इत्यनुवर्तते। 'अजादेर्द्वितीयस्ये'त्यतोऽजादेरिति। अचासौ आदिश्चेति कर्मधारयात्पञ्चमी। न्, द्, र् एषां द्वन्द्वः। तदाह—अचः परा इति। ननु णु इत्यस्य द्वित्वे खण्डद्वयेऽपि णकारः श्रूयेतेत्यत आह—नुशब्दस्य द्वित्वमिति। धातुपाठे हि 'ऊर्णु' इति नकारस्य कृतणत्वस्य निर्देशः। द्वित्वे कर्तव्ये तस्य णत्वस्याऽसिद्धत्वादित्यर्थः।

लिङ्गादिति। 'उभौ साभ्यासस्ये'त्यस्यायमर्थः—'साभ्यासस्यानितेरुपसर्गस्थान्निमित्तात्परौ खण्डद्वयगतौ नकारौ णत्वं प्राप्नुत' इति। प्राणिणदित्युदाहरणम्।

---

ऊर्णोतेर्विभाषा। 'ऊर्णुञ्' धातु को वृद्धि हो विकल्प करके, हलादि पित् सार्वधातुक परे रहते।

ऊर्णोतेराम्नेति। 'ऊर्णुञ्' धातु को 'आम्' नहीं हो, लिट् परे रहते।

न न्द्राः संयोगा। अच् से परे जो संयोग के आदिभूत नकार दकार और रेफ, उनको द्वित्व नहीं हो।

---

१ शेषपूरणमिदम्।　　२ 'स्या'दिति क्वाचित्कम्।

३ क्वचितेष्वयं पाठो नास्ति।

**विभाषोर्णोः** ।१।२।३। [[1]ऊर्णोतेः पर] इडादिप्रत्ययो वा ङित् स्यात्। ऊर्णुनुविथ । ऊर्णुनविथ । ऊर्णुविता । ऊर्णविता । ऊर्णौतु । ऊर्णोतु । ऊर्णवानि । ऊर्णवै ।

**गुणोऽपृक्ते** ।७।३।९१। ऊर्णोतेर्गुणः [2]स्यादपृक्ते हलादौ पिति सार्वधातुके । [ [3]वृद्ध्यपवादः ] । और्णोत् । और्णोः । और्णुतम् । ऊर्णुयात् । ऊर्णुयाताम् । [ऊर्णुयुः । ऊर्णुयाः । इह वृद्धिर्न, 'ङिच्च पिन्न'ेति व्याख्यानात्] । ऊर्णूयात् । ऊर्णूयास्ताम् । ऊर्णूयासुः । ऊर्णुविषीष्ट । ऊर्णविषीष्ट । और्णुवीत् । और्णुविष्टाम् । **ऊर्णोतेर्विभाषा** ।७।३।९०। [[4]ऊर्णोते- ]रिडादौ

---

अत्र 'अनितेः' इति णत्वे कृते 'पूर्वत्रासिद्धीयमद्विर्वचने' इति णत्वस्याऽसिद्धत्वाऽभावमाश्रित्य 'णि' इत्यस्य द्वित्वादेव खण्डद्वये णकारश्रवणसिद्धेः 'उभौ साभ्यासस्य' इति वचनं 'पूर्वत्रासिद्धीयमद्विर्वचने' इत्यस्याऽनित्यतां गमयतीत्यर्थः । ऊर्णुनावेति । नुशब्दस्य द्वित्वे पूर्वनकारस्य 'रषाभ्याम्' इति णत्वम् ।

ऊर्णुनुविथेति । ङित्त्वपक्षे गुणाऽभावादुवङ् । ऊर्णुनविथेति । ङित्त्वाऽभावपक्षे गुणः। ऊर्णुयादिति । अत्र 'विभाषोर्णोः' इति वृद्धिविकल्पस्तु न, 'ङिच्च पिन्न'ेत्यादि भाष्यात् । तथा च यासुटो ङित्त्वेन पित्त्वाऽभावान्न वृद्धिविकल्प इति भावः । नचैवं सति गुणनिषेधोऽपि न स्यादिति शङ्क्यं, विशेषविहितेन

---

विभाषोर्णोः । 'ऊर्णुञ्' धातु से परे जो इडादि प्रत्यय, वह ङित् हो विकल्प करके ।

गुणोऽपृक्त । 'ऊर्णुञ्' धातु को गुण हो, हलादि पित् अपृक्त सार्वधातुक परे रहते ।

ऊर्णोतेर्विभाषा । 'ऊर्णुञ्' धातुको वृद्धि हो, विकल्प करके, परस्मैपदपरक इडादि सिच् परे रहते ।

---

१ शेषपूरणमिदं बोध्यम् । २ 'स्या'दिति क्वचिन्न ।
३ क्वाचित्कः पाठः । ४ 'ऊर्णोते'रिति शेषपूरणम् ।

परस्मैपदपरे सिचि वा वृद्धिः स्यात्। पक्षे गुणः। और्णावीत्। और्णाविष्टाम्। और्णवीत्। और्णविष्टाम्॥

इत्यदादिः॥ २॥

## अथ जुहोत्यादिः।

हु१ दानाऽऽदनयोः। जुहोत्यादिभ्यः श्लुः।२।४।७५। [[1]जुहोत्यादिभ्यः परस्य] शपः [श्लुः [1]स्यात्]। श्लौ।६।१।१०। धातोर्द्वे स्तः [श्लौ]। जुहोति। जुहुतः। 'हुश्नुवो'रिति यण्। जुह्वति।

भीह्रीभृहुवां श्लुवच्च।३।१।३९। एभ्यो लिट्याम् वा स्यादामि श्लाविव कार्यं च। जुहवाञ्चकार। जुहाव। होता। होष्यति। जुहोतु। जुहुतात्। जुहुताम्। जुह्वतु। [हेर्धिः[2]]। जुहुधि। [[2]आटि परत्वाद् गुणः]। [2]जुहवानि। अजुहोत्। अजुहुताम्। [[2]परत्वाज्जुसि चेति

यासुटो ङित्त्वेन 'ङिच्चपिन्ने'ति पित्त्वप्रयुक्तङित्वनिषेधस्य बाध इति 'यु मिश्रणाऽमिश्रणयो'रिति धातावेवोक्तत्वादिति भावः।

❀ इत्यदादिप्रकरणम् ❀

दानेति। दानञ्चेह प्रक्षेपः। स च आहवनीयादौ विधिबोधिते आधारे विधिबोधितस्य हविरादेश्चेति स्वभावाल्लभ्यते। तेन पाषाणप्रक्षेपादौ न 'प्रस्तरं जुहोती'ति प्रयोगः।

जुहुधीति। 'हुझल्भ्य' इति हेर्धित्वम्। जुहवानीति। आटि परत्वाद् गुणः।

जुहोत्यादिभ्यः। जुहोत्यादि गणपठित धातुओं से परे जो शप् उसका 'श्लु' (अर्थात्-लोप) हो।

श्लौ। धातु को द्वित्व हो, श्लु के विषय में।

भीह्रीभृहुवाम्। भी, ह्री, भृ, हु,-इन धातुओं से 'आम्' प्रत्यय हो,विकल्प करके, लिट् परे रहते। और 'आम्' परे रहते 'श्लु' की ही तरह द्वित्व आदि कार्य भी हों।

१ शेषपूरणमेतत्। २ लिखिते क्वचिदयं पाठो दृश्यते।

गुणः]। अजुहवुः। जुहुयात्। हूयात्। अहौषीत्। अहोष्यत्।

ञिभी२ भये। बिभेति। भियोऽन्यतरस्याम्।६।४।११५। [भियं] [1]इद्वा स्याद्धलादौ सार्वधातुके क्ङिति। बिभितः। बिभीतः। [[2]'एरनेकाच' इति यण्]। बिभ्यति। बिभयाञ्चकार। बिभाय। भेता। भेष्यति। बिभेतु। बिभितात्। बिभीतात्। [ [3]बिभिताम्। बिभीताम्]। अबिभेत्। बिभियात्। बिभीयात्। भीयात्। अभैषीत्। अभेष्यत्।

ह्री३ लज्जायाम्। जिह्रेति। जिह्रीतः। जिह्रियति। जिह्रयाञ्चकार। जिह्राय। ह्रेता। ह्रेष्यति। जिह्रेतु [[3] जिह्रीतात्]। अजिह्रेत्। जिह्रीयात्। ह्रीयात्। अह्रैषीत्। अह्रेष्यत्।

पॄ४ पालन-पूरणयोः। अर्त्तिपिपर्त्योश्च।७।४।७७। अभ्यासस्य [4]इत्स्यात् श्लौ। पिपर्त्ति। उदोष्ठ्यपूर्वस्य।७।१।१०२। अङ्गावयवौष्ठ्यपूर्वो य ॠत्तदन्तस्याऽङ्गस्य उः स्यात्।

हलि च।८।२।७७। रेफ-वान्तस्य धातोरुपधाया इको दीर्घो

---

अजुहवुरिति। 'जुसि चे'ति गुणः। हूयादिति। 'अकृत्सार्वे'ति दीर्घः। अहौषीदिति। 'सिचिवृद्धि'रिति वृद्धिः। पिपर्त्तीति। गुणवृद्धी परत्वादुदादेशं बाधेते।

---

भियोऽन्तरस्याम्। 'भी' धातु को ह्रस्व हो, विकल्प करके, हलादि कित् ङित् सार्वधातुक परे रहते।

अर्त्तिपिपर्त्योश्च। अर्त्ति ( ॠ ), और पिपर्त्ति ( पॄ ) धातु के अभ्यास को ह्रस्व हो, श्लु के विषय में।

उदोष्ठ्य। अङ्ग का अवयव ओष्ठ्य पूर्व में है जिसके ऐसा जो दीर्घ ॠकार, तदन्त जो अङ्ग, उसको उत् आदेश हो।

हलि च। रेफान्त और वान्त धातु की उपधा में वर्तमान जो इक् उसको दीर्घ हो, हल् परे रहते।

---

१ 'इकारो वा स्यात्' पा०। २ क्वाचित्कः पाठोऽयम्। ३ क्वचिन्न। ४ 'इकारोऽन्तादेशः स्यात्' इति। 'अभ्यासस्य इः श्लौ' इति च पा०।

हलि। पिपूर्तः। पिपुरति। पपार। **शृदॄप्रां ह्रस्वो वा** ।७।४।१२। [ शृदॄप्रां ह्रस्वो वा स्यात् [1] ] किति लिटि। पप्रतुः। पप्रुः।

**ऋच्छत्यॄताम्** ।७।४।११। तौदादिकऋच्छेर्ऋधातो ॠतां च गुणो, लिटि। पपरतुः। पपरुः।

**वॄतो वा** ।७।२।३८। वृङ्वृञ्भ्यामॄदन्ताच्चेटो दीर्घो वा स्यान्नतु लिटि। परिता। परीता। परिष्यति। परीष्यति। पिपर्त्तु। पिपुरतु। पिपूर्हि। अपिपः। अपिपूर्त्ताम्। अपिपरुः। पिपूर्यात्। [ पिपूर्युः ]। पूर्यात्। अपारीत्।

**सिचि च परस्मैपदेषु** ।७।२।४०। अत्र वॄत इटो न दीर्घः। अपारिष्टाम्। अपरिष्यत्। अपरीष्यत्।

**ओहाक् ५ त्यागे।** जहाति। **जहातेश्च** ।६।४।११६। इद्वा

---

पिपूर्त्त इति। उत्वं, रपरत्वं, 'हलि चे'ति दीर्घः।
किति लिटि 'ऋच्छत्यॄता' मिति गुणे प्राप्ते आह--शृदॄ इति।
पपरतुरिति। ह्रस्वाऽभावपक्षे 'ऋच्छे'ति गुणः।
पपरुरिति। 'ऋच्छत्यॄता' मिति गुणः। ह्रस्वपक्षे तु यण्। अपिपरिति।

---

शृदॄप्रां। शॄ दॄ पॄ धातुओं को ह्रस्व हो, विकल्प करके, कित् लिट् परे रहते।

ऋच्छत्यॄताम्। तौदादिक 'ऋच्छ' धातु, 'ऋ' धातु और दीर्घ ॠका-रान्त धातु–उनको गुण हो, लिट् परे रहते।

वॄतो वा। वृङ्, वृञ् और दीर्घ ॠदन्त धातुसे परे जो इट् उसको दीर्घ हो, विकल्प करके। परन्तु यह दीर्घ लिट् में नहीं हो।

सिचि च पर। वृङ्, वृञ् और दीर्घ ॠकारान्त धातुसे परे जो इट् उसको दीर्घ नहीं हो, परस्मैपदपरक सिच् परे रहते।

जहातेश्च। जहाति ( ओहाक् ) धातु को इत्त्व हो, विकल्प करके, हलादि कित् ङित् प्रत्यय परे रहते।

---

१ शेषपूरणमिदं सूत्राक्षरलभ्यम्।

स्याद्धलादौ क्ङिति सार्वधातुके। जहितः।

**ई हल्यघोः ।६।४।११३।** श्नाभ्यस्तयोरात ईत्स्यात्सार्वधातुके क्ङिति हलि। जहीतः। जहति। जहौ। हाता। हास्यति। जहातु। जहितात्। जहीतात्।

**आ च हौ ।६।४।११७।** [1]जहातेर्हौ परे आत्स्यात्। चादीदितौ। जहाहि। जहिहि। जहीहि। अजहात्। अजहुः।

**लोपो यि ।६।४।११८।** जहातेरालोपो, यादौ सार्वधातुके। जह्यात्। [2]'एर्लिङि' [—इत्येत्वम्[2]]। हेयात्। अहासीत्। अहास्यत्।

**ऋ ६ गतौ** [ [3]'अर्त्तिपिपर्त्योश्चे' त्यभ्यासस्य इकारः। 'अभ्यासस्याऽसवर्णे']। इयर्ति। इयृतः। इयूरति। आर। आरतुः। आरुः। 'इडत्त्यर्ती'ति नित्यमिट्। आरिथ। अर्त्ता। अरिष्यति। इयर्तु। इयराणि। ऐयः। ऐयृताम्। ऐयरुः। इयृयात्। [[3]'गुणोऽर्त्ती'ति गुणः]।

---

'हल्ङ्या'बिति तिपस्तकारस्य लोपः। जहतीति। 'श्नाभ्यस्तयो'रित्यात्लोपः। अजहुरिति। 'सिजभ्यस्ते'तिझेर्जुस्। अहासीदिति। 'यमरमे'तीट्सकौ। इयर्तीति। ऋधातोर्लटि तिपि शपि श्लौ द्वित्वे—'ऋ ऋ ति' इत्यत्र 'अर्त्तिपिपर्त्यो'श्चेतीत्त्वे, रपरत्वे, हलादिशेषे, 'सार्वधातुकार्द्धधातुकयो'रित्यभ्यासोत्तरस्य ऋकारस्य गुणे, रपरत्वे 'अभ्यासस्ये'तीयङि 'इयर्त्ती'ति सिध्यति।

ऐय इति। ऋधातोर्लङि तिपि शपि श्लौ द्वित्वे आटि इत्त्वे रपरत्वे हलादिशेषे वृद्धौ गुणे इयङि इतश्चेतीकारलोपे हल्ङ्यादिलोपे रुत्वे विसर्गे च 'ऐयः'

---

ईहल्यघोः। 'श्ना' और अभ्यस्तके आकारको ईत्त्व हो, हलादि कित् ङित् सार्वधातुक परे रहते।

आच हौ। जहातिको आत्व हो। चकारसे—इत्व और ईत्त्व भी हो।

लोपो यि। जहातिके आकारका लोप हो, यकारादि सार्वधातुक परे रहते।

---

१ 'जहातेरात्, चादिदीतौ' पा०। २ काचित्कः पाठोऽयम्।

३ काचित्कः पाठोऽयम्।

अर्यात्। [ [1]'सर्त्तिशास्त्यर्त्तिभ्यश्चे'त्यङ् ]। आरत्। ['ऋद्धनोः [1]स्ये']। आरिष्यत्।

इति जुहोत्यादिगणे परस्मैपदिनः।

माङ् ७ माने, शब्दे च। भृञामित् ।७।४।७६। भृञ् माङ् ओहाङ् एषामभ्यासस्येत्स्याच्छ्लौ। ['ई हल्यघोः' [1]]। मिमीते। मिमाते। 'श्नाभ्यस्तेः'ति आतो लोपः। मिमते। ममे। माता। मास्यते। मिमीताम्। अमिमीत। मिमीत। मासीष्ट। अमास्त। अमास्यत।

ओहाङ् ८ गतौ। जिहीते। जिहाते। जिहते। जहे। हाता। हास्यते। जिहीताम्। अजिहीत। जिहीत। हासीष्ट। अहास्त। अहास्यत।

इत्यात्मनेपदिनः।

अथोभयपदिनः।

डुभृञ् ९ धारण-पोषणयोः। बिभर्त्ति। बिभृतः। बिभ्रति। बिभृते। बिभ्राते। बिभ्रते। बिभराञ्चकार। बभार। बभर्थ। बभृव। [ [1]बभृम]। बिभराञ्चक्रे। बभ्रे। भर्त्ता। भर्त्ता। भरिष्यति। भरिष्यते। बिभर्तु। [ बिभृहि ]। बिभराणि। बिभृताम्। [ [1]बिभृध्वम् ]। अबिभः।

---

इति रूपम्। इयृयादिति। यासुटो ङित्वाद्गुणनिषेधः। 'अर्यादिति'। गुणोऽर्तीति गुणः। आरदिति। 'सर्तिशास्ती'त्यङ्। 'ऋदृशोऽङी'ति गुणः। आरिष्यदिति। 'ऋद्धनो'रितीट्। मिमीते इति। 'ई हल्यघो'रितीत्त्वम्। अमिमीतेति। अमिमाताम्, अमिमत। अमिमीथाः, अमिमाथाम्, अमिमीध्वम्। अमिमि, अमिमीवहि, अमिमीमहि। जिहत इति। श्नाभ्यस्तयो'रित्यालोपः।

बभर्थेति। क्रादित्वादिट् न। अबिभरिति। हल्ङ्यादिलोपः।

---

भृञामित्। भृञ्, माङ्, ओहाङ्—इन धातुओंके अभ्यासको इत्व हो, श्लुके विषयमें।

---

१ एकत्रैवादर्शेऽयं पाठ उपलभ्यते।

[ अबिभृताम्[१] ]। अबिभरुः। अबिभृत। [ [१]बिभृयात् ] बिभ्रीत। [ [१]'रिङ्शये'ति रिङ्। भ्रियात्। [ 'उश्च' ] भृषीष्ट। अभार्षीत्। [ [१]'ह्रस्वादङ्गात्' ]। अभृत। अभरिष्यत्। अभरिष्यत।

डुदाञ् १० दाने। [२]प्रणिदाति। दत्तः। ददति। दत्ते। ददाते। ददते। ददौ। ददे। दाता। दास्यति। दास्यते। ददातु। [ [१]'घ्वसोरेद्धावभ्यासलोपश्च' ]। देहि। दत्ताम्। अददात्। अदत्ताम्। अददुः। अदत्त। दद्यात्। ददीत [ [१]'एर्लिङि' ]। देयात्। दासीष्ट। [ 'गातिस्थे'ति सिचो लुक् ]। अदात्। अदाताम्। अदुः।

स्थाघ्वोरिच्च ।१।२।१७। अनयोरिदन्तादेशः [३]स्यात्, सिच्च कित्स्यादात्मनेपदेषु। अदित। अदास्यत्। अदास्यत ॥

डुधाञ् ११ धारण-पोषणयोः। दधाति। दधस्तथोश्च ।८।२।३८। द्विरुक्तस्य झषन्तस्य धाञो बशो भष्, तथयोः, स्ध्वोश्च परतः। धत्तः। दधति। दधासि। धत्थः। धत्ते। दधाते। धत्से। धद्ध्वे। [ [४]'घ्वसो'रित्येत्त्वम् ]। धेहि। [ [४]अदधात्। अधत्ताम्। अदधुः।

---

भृषीष्टेति। 'उश्चे'ति कित्त्वम्। अभार्षीदिति। 'सिचि वृद्धि'रिति वृद्धिः। अभृतेति। 'ह्रस्वादङ्गा'दिति सिचो लोपः। 'उश्चे'ति कित्त्वम्।

देयादिति। अत्र 'एर्लिङी'त्येत्त्वम्। अदादिति। 'गातिस्थे'ति सिचो लुक्। अदितेति। अत्र 'ह्रस्वादङ्गा'दिति सिचो लोपः।

धेहीति। 'घ्वसोरेद्धा'-वित्येत्त्वाभ्यासलोपौ।

---

स्थाघ्वोरिच्च। स्था और घुसञ्ज्ञक धातुको इत् अन्तादेश हो, और उनसे परे जो सिच् सो कित् हो, आत्मनेपद परे रहते।

दधस्तथोश्च। द्विरुक्त झषन्त धाञ् धातुके 'बश्'को भष् हो, तकार, थकार, सकार और 'ध्व' परे रहते।

---

१ क्वाचित्कः पाठः। २ 'ददाती'त्येव क्वचित्पाठः।
३ स्यादिति क्वचिन्न। ४ असार्वत्रिकः पाठः।

अदधाः । अधत्तम् । अधत्त । अदधाम् । अदध्व । अदध्म । अधत्त । अदधाताम् । अदधत । अधत्थाः । अदधाथाम् । अधद्ध्वम् । अदधि । अदध्वहि । अदध्महि । दध्यात् । दधीत । दधीयाताम् । धेयात् । धासीष्ट । अधात् । अधाताम् । अधित । अधिषाताम् । अधास्यत् । [[1]अधास्यत ] ।

णिजिर् १२ शौचपोषणयोः । **निजां त्रयाणां गुणः श्लौ** ।७।४।७५। निज्-विज्-विषामभ्यासस्य गुणः स्याच्छ्लौ । नेनेक्ति । नेनिक्तः । नेनिजति । नेनिक्ते । निनेज । निनिजे । नेक्ता २ । नेक्ष्यति । नेक्ष्यते । नेनेक्तु । नेनिग्धि ।

**नाऽभ्यस्तस्याऽचि पिति सार्वधातुके** ।७।३।८७। [[2]अभ्यस्तस्याऽचि पिति सार्वधातुके] लघूपधगुणो न । नेनिजानि । नेनिक्ताम् । अनेनेक् । अनेनिक्ताम् । अनेनिजुः । अनेनिजम् । अनेनिक्त । नेनिज्यात् । नेनिजीत । निज्यात् । निक्षीष्ट । अनिजत् । अनैक्षीत् । अनिक्त । अनेक्ष्यत् । अनेक्ष्यत । एवं-विजिर् १३ पृथग्भावे । विष्लृ १४ व्याप्तौ ॥

*** इति जुहोत्यादिः * ॥३॥**

---

अधितेति । 'लिङ्सिचा'विति कित्त्वम् ।

अनिजदिति । इरित्वादिरितो वेति वा अङ् । अनैक्षीदिति । अङभावे 'वदव्रजे'ति वृद्धिः । अनिक्तेति । अत्र 'झलो झली'ति सिचो लोपः । 'लिङ्सिचा'विति कित्त्वम् । एवमिति । तेन वेवेक्ति, वेविक्तः, वेविजति । वेविक्ते । विवेज । विविजे । वेक्ता । वेवेक्तु । वेविग्धि । वेविजानि । अवेवेक् । विज्यात् । विक्षीष्ट । अविजत् , अवैक्षीत् , अविक्तेत्यादिपूर्ववदेव रूपाणि ।

विषधातोर्लुङि—अविषत् , अवैक्षीत् , अविष्टेतिरूपाणि । इति जुहोत्यादिः ।

---

निजां त्रयाणाम् । निज् , विज् , विष्—इन धातुओंके अभ्यासको गुण हो, श्लुके विषयमें ।

नाऽभ्यस्तस्याचि । अभ्यस्तसञ्ज्ञक धातुको गुण नहीं हो, अजादि पित् सार्वधातुक परे रहते ।

---

१ क्वचिन्न । २ शेषपूरणमेतत् ।

## अथ दिवादिप्रकरणम् ।

**दिवु १** क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु। **दिवादिभ्यः श्यन्** ।३।१।६९। [ दिवादिभ्यः श्यन्प्रत्ययः स्यात् ] कर्तरि सार्वधातुके । शपोऽपवादः। 'हलि चे'ति दीर्घः। दीव्यति । दिदेव । देविता । देविष्यति । दीव्यतु । अदीव्यत् । दीव्येत् । दीव्यात् । अदेवीत् । अदेविष्यत् ।

एवं–षिवु २ तन्तुसन्ताने । **सिवादीनां वाऽड्व्यवायेऽपि** ।८।३।७१। परिनिविभ्यः परेषामेषा [ अड्व्यवायेऽपि ] वा सस्य षः । पर्यषीव्यत । पर्यसीव्यत् ।

**नृती ३** गात्रविक्षेपे । नृत्यति । ननर्त्त । नर्त्तिता । **सेऽसिचि कृतचृतछृदतृदनृतः** ।७।२।५७। एभ्यः सिज्भिन्नस्य सादेरार्द्धधातुकस्येड् वा स्यात् । नर्त्तिष्यति। नर्त्स्यति । नृत्यात् । अनर्त्तीत् । [ [1]अनर्त्तिष्यत् । अनर्त्स्यत् ] ।

**त्रसी ४** उद्वेगे । 'वा भ्राशे'ति श्यन्वा । त्रस्यति । त्रसति । तत्रास ।

---

जेतुमिच्छा—विजिगीषा । व्यवहारः—क्रयविक्रयव्यवहारः । द्युतिः=कान्तिः। तन्तुसन्तानं-सूचीकर्म । ( सीना )। सिवादीनामिति । सिवादयः—'परिनिविभ्य' इत्यत्र पठिताः—सिवु-सह-सुट्-स्तु-स्वञ्जः । तत्र सुट्—आगमः । गात्रेति । गात्रविक्षेपो-नृत्यम् ।

---

दिवादिभ्यः श्यन् । दिवादिगणपठित धातुओंसे श्यन् प्रत्यय हो, कर्त्रर्थक सार्वधातुक परे रहते ।

सिवादीनां वाऽड् । परि, नि, वि—इन उपसर्गों से परे जो सिवादि, उनके सकारको अट्के व्यवधानमें भी षकार हो, विकल्प करके ।

सेऽसिचि । 'कृत' आदि धातुओंसे परे जो सिज् भिन्न सकारादि आर्द्धधातुक, उसको इट् आगम हो विकल्प करके ।

---

1 क्वचिन्न ।

वा जॄभ्रमुत्रसाम् ।६।४।१२४। एषां किति लिटि सेटि, थलि च एत्वाभ्यासलोपौ वा स्तः[1] । त्रेसतुः । तत्रसतुः । त्रेसिथ । तत्रसिथ । त्रसिता ।

शो ५ तनूकरणे । ओतः श्यनि ।७।३।७१। [[2]ओतो ] लोपः [[2]स्यात् ] श्यनि । श्यति। श्यतः । श्यन्ति । ['[2]आदेच उपदेशेऽशिति'] । शशौ । शशतुः । शशुः । शाता । शास्यति । [ [2]श्यतु । अश्यत् । श्येत् । शायात् । 'विभाषा घ्राधेट्'इति सिचो वा लुक् ] । अशात् । अशाताम् । [ [2]लुगभावे 'यमरमे'ति[2]] इट्सकौ । अशासीत् । अशासिष्टाम् । [[2]अशास्यत् ] ।

छो ६ छेदने । छ्यति । [ [2]चच्छौ । चच्छतुः ] । षो ७ अन्तकर्मणि । स्यति । ससौ । [ [2]अभिष्यति । अभिससौ । साता । सास्यति । स्यतु । अभ्यष्यत् ] । सेयात् । दो ८ अवखण्डने । द्यति । ददौ । [[2]प्रणिदाता । दास्यति] । देयात् । अदात् । [[2]अदास्यत] ।

व्यध ९ ताडने । [ 'ग्रहिज्ये'ति सम्प्रसारणम्[2] ] । विध्यति । विव्याध । विविधतुः । [2]विविधुः । विव्यद्ध । विव्यधिथ । व्यद्धा । व्यत्स्यति । विध्येत् । विध्यात् । अव्यात्सीत् ।

पुष १० पुष्टौ । पुष्यति । पुपोष । पुपोषिथ । पोष्टा । पोक्ष्यति । 'पुषादी'त्यङ्–आपरस्मैपदात् । अपुषत् । [ [2]अपोक्ष्यत् ] । शुष ११

---

ओतः श्यनीति । ओकारस्य लोपः स्यात् श्यनि परत इत्यर्थः । अन्तकर्म–नाशः । सेयादिति । 'एर्लिङी'त्येत्वम् ।

अदादिति । 'गातिस्थे'ति सिचो लुक् । आ परस्मैपदादिति । परस्मैपदपर्यन्तं पुषादिगणः, तेन पुषादित्वादेभ्यश्च्लेरङ्–इत्यर्थः ।

---

वा जॄ । 'जॄ' 'भ्रमु' 'त्रस्' धातुओंको एत्व हो, और इनके अभ्यास का लोप हो, विकल्प करके कित् लिट् और सेट् थल् परे रहते ।

ओतः श्यनि । ओकारका लोप हो, श्यन् परे रहते ।

---

१ क्वाचित्कम् । २ क्वचिदेव दृश्यते ।

शोषणे। शुष्यति। शुशोष। [[1]शोष्टा। शोक्ष्यति। शुष्यतु। अशुष्यत्]। अशुषत्। [[1]अशोक्ष्यत्]। णश १२ अदर्शने। नश्यति। ननाश। नेशतुः। [[1]नेशुः]। रधादिभ्यश्च।७।२।४५। रध् नश् तृप् दृप् द्रु द्रुह् मुह् ष्णुह् ष्णिह्—एभ्यो वलाद्यार्द्धधातुकस्य वेट् [[2]स्यात्] नेशिथ।

**मस्जिनशोर्झलि** ।७।१।६०। [[3]मस्जिनशो] नुम् स्यात् [झलि]। ननंष्ठ। नेशिव। नेश्व। [नेशिम। नेश्म[4]]। नशिता। [4]नंष्टा। नशिष्यति। नङ्क्ष्यति। [[4]नश्यतु। अनश्यत्]। नश्येत्। नश्यात्। अनशत्। प्रणश्यति। **नशेः षान्तस्य** ।८।४।३६। [[3]षान्तस्य नशेः] णत्वं न स्यात्। प्रनंष्टा। 'अन्त'ग्रहणं भूतपूर्वप्रतिपत्त्यर्थम्। प्रनङ्क्ष्यति।

रध १३ हिंसा-संराद्ध्योः। रध्यति। **रधिजभोरचि** ।७।१।६१। [[3]रधिजभोरचि] नुम्। स्यात्। ररन्ध। ररन्धतुः। ररन्धिथ। ररद्ध। ररन्धथुः। ररन्धिव। रेध्व।

**नेट्यलिटि रधेः** ।७।१।६२। लिड्वर्जे इटि रधेर्नुम्न स्यात्। रधिता। रद्धा। रधिष्यति। रत्स्यति। अङि नुम्। 'अनिदिता'मिति नलोपः। अरधत्॥

---

अदर्शनं—नाशः। संराद्धिः = निष्पत्तिः। ('रान्धना' 'सिजाना')।

---

**रधादिभ्यश्च**। रधादि धातुओंसे परे जो वलादि आर्द्धधातुक, उसको इट् आगम हो, विकल्प करके।

**मस्जिनशोः**। मस्ज् और नश् धातुको नुम् आगम हो, झलादि प्रत्यय परे रहते।

**नशेः षान्तस्य**। षान्त नश् धातुको णत्व नहीं हो।

**रधिजभोः**। रध् और जभ् धातुको नम् आगम हो, अजादि प्रत्यय परे रहते।

**नेट्यलिटि**। लिट् वर्ज इट् परे रहते रध् धातुको नुम् नहीं हो।

---

१ क्वचिन्न। २ 'इड् वा स्यात्' पाठः। ३ शेषपूरणमेतत्। ४ क्वाचित्कः पाठः।

तृप १४ प्रीणने। तृप्यति। [ [1]ततर्प। ततृपतुः। ततृपुः। रधादित्वाद्वेट् ]। ततर्पिथ—ततर्प्थ—तत्रप्थ। तर्पिता—तर्प्ता—त्रप्ता। * स्पृशमृशकृषतृपदृपां च्लेः सिज्वा वाच्यः। अतर्पीत्—अत्राप्सीत्—अतार्प्सीत्—अतृपत्।

दृप १५ हर्ष-मोहनयोः। [ [1]मोहनं-गर्वः ]। दृप्यति इत्यादि। 'रधादित्वादिमौ वेट्कावमर्थमनुदात्तता'।

द्रुह १६ जिघांसायाम्। द्रुह्यति [ [1]दुद्रोह। दुद्रुहतुः। दुद्रुहुः ]। 'वा द्रुहे'ति वा घः। पक्षे ढः। 'झषस्तथोर्धोऽधः'। दुद्रोग्ध—दुद्रोढ—दुद्रोहिथ। [ [1]दुद्रुहथुः। दुद्रुह। दुद्रोह। दुद्रुहिव। दुद्रुहिम ]। द्रोहिता। द्रोग्धा। द्रोढा। [ [1]द्रोहिष्यति। ध्रोक्ष्यति। ढत्वघत्वयोस्तुल्यं रूपम् ]। अद्रुहत्। [ [1]अद्रोहिष्यत्। अध्रोक्ष्यत् ]।

मुह १७ वैचित्त्ये। वैचित्त्यम्—अविवेकः। मुह्यति। [ [1]मुमोह। मुमुहतुः। मुमुहुः]। मुमोहिथ—मुमोग्ध—मुमोढ। मोहिता-मोग्धा-मोढा। मोहिष्यति-मोक्ष्यति। [ [1]मुह्यतु। अमुह्यत्। मुह्येत्। मुह्यात् ]। अमुहत्। [ [1]अमोहिष्यत्। अमोक्ष्यत् ]।

---

प्रीणनं—तृप्तिः, तर्पणा च।

तत्रप्थेति। 'अनुदात्तस्य चर्दुपधस्ये'त्यम्वा। इमौ वेट्काविति। इमौ=तृपदृपौ। अमर्थम्— 'अनुदात्तस्ये'त्यमर्थम्।

द्रुहेति। जिघांसा—हन्तुमिच्छा। द्रोहः।

---

स्पृशमृश। 'स्पृश्' आदि धातुओंसे परे जो 'च्लि', उसको 'सिच्' आदेश हो, विकल्प करके।

रधादित्वात्। ये 'तृप्' और 'दृप्' धातु रधादि गणमें पठित होनेसे इनसे विकल्पसे ही इट् होता है। इनका अनुदात्त धातुओंमें पाठ करनेका फल तो 'अम्' आगम होना ही है। अनुदात्त पाठका इट् निषेध होना यहां फल नहीं है।

---

१ एकत्रादर्शेऽयं पाठ उपलभ्यते।

ष्णुह १८ उद्गिरणे। स्नुह्यति। सुष्णोह। [[1]सुस्नुहतुः। सुस्नुहुः]। सुष्णोहिथ। सुष्णोग्ध-सुष्णोढ। [[1]सुष्णुहथुः। सुष्णुह। सुष्णोह]। सुष्णुहिव। सुष्णुह्व। [ [1]सुष्णुहिम। सुष्णुह्म ]। स्नोहिता-स्नोग्धा-स्नोढा। स्नोहिष्यति-स्नोक्ष्यति। स्नुह्यतु। अस्नुहत्। [ [1]अस्नोहिष्यत्। अस्नोक्ष्यत् ]।

[1]ष्णिह १९ प्रीतौ। स्निह्यति। सिष्णेह। [ [1]सिष्णिहतुः। सिष्णिहुः। सिष्णेहिथ-सिष्णेग्ध-सिष्णेढ ]। स्नेहिता। स्नेग्धा। स्नेढा। [ स्नेहिष्यति। स्नेक्ष्यति ]। [1]स्निह्यतु। अस्निहत्। [ अस्नेहिष्यत्-अस्नेक्ष्यत् ]। वृत्। [ रधादयः समाप्ताः ]।

तुष २० तुष्टौ। तुष्यति। [ तुतोष। तोष्टा। तोक्ष्यति। तुष्यतु ]।

दुष २१ वैकृत्ये। दुष्यति। [ दुदोष। दोष्टा। दोक्ष्यति। दुष्यतु ]।

श्लिष २२ आलिङ्गने। श्लिष्यति। श्लिष आलिङ्गने ।३।१।४६। [ [2]श्लिष-] श्च्लेः क्सः [ [2]स्यादालिङ्गने ]। '[3]अश्लिक्षत् कन्यां देवदत्तः'। आलिङ्गने किम्? [4]समश्लिषज्जतु काष्ठम्। [5]प्रत्यासत्ताविह श्लिषिः।

क्रुध २४ क्रोधे। क्रुध्यति। [ [1]चुक्रोध ]। क्रोद्धा। क्रोत्स्यति। [ [1]क्रुध्यतु ]। क्षुध २५ बुभुक्षायाम्। क्षुध्यति। [ [1]चुक्षोध। क्षोद्धा। क्षोत्स्यति ]। शुध २६ शौचे। शुध्यति। [ [1]शुशोध ]। शोद्धा।

---

प्रीतिः—स्नेहः। शुध्यतीति। शुशोध। शोद्धा। शोत्स्यति। शुध्यतु। अशुध्यत्। शुध्येत्। शुध्यात्। अशुधत्। अशोत्स्यत्।

---

श्लिष आलिङ्गने। श्लिष् धातु से परे जो 'च्लि' उसको आलिङ्गन अर्थ में (ही) 'क्स' आदेश हो।

---

१ क्वाचित्कः पाठोऽयं, न सार्वत्रिकः। २ शेषपूरणमिदम्।
३ आश्लिक्षत्' पा०। ४ 'समाश्लिषत्' ५ 'अत्यासक्तौ' पा०।

शोत्स्यति। षिधु २७ संराद्धौ। सिध्यति। [ [1]सिषेध। सेद्धा। सेत्स्यति। असिधत्। असेत्स्यत् ]।

शमु २८ उपशमे। शमामष्टानां दीर्घः श्यनि ।७।३।७४। शम-तम्-दम्-श्रम्-भ्रम्-क्षम्-क्लम्-मदामचो [2]दीर्घः श्यनि। प्रणिशाम्यति। [[1]शशाम]। शेमतुः। शेमुः। शेमिथ। शमिता। [[1]शमिष्यति। शाम्यतु]। अशमत्। [ [1]अशमिष्यत् ]।

तमु २९ काङ्क्षायाम्। ताम्यति। [[1]ततास]। तमिता। [ [1]तमिष्यति। ताम्यतु ]। अतमत्। [ [1]अतमिष्यत् ]।

दमु ३० उपशमे। दाम्यति। [[1]ददाम]दमिता। [[1]दमिष्यति। दाम्यतु]। अदमत्। [[1]अदमिष्यत् ]। श्रमु ३१ तपसि, खेदे च। श्राम्यति। [[1]शश्राम। श्रमिता। श्रमिष्यति। श्राम्यतु]। अश्रमत्। [[1]अश्रमिष्यत्]।

भ्रमु ३२ अनवस्थाने। 'वा भ्राशे'ति श्यन्वा। भ्राम्यति। भ्रमति। 'वा जॄभ्रमुत्रसाम्'। भ्रेमतुः। बभ्रमतुः। पुषादित्वादङ्। अभ्रमत्। [ [1]शेषं भ्वादिवत् ]।

क्षमू ३३ सहने। क्षाम्यति। [ [1]चक्षाम। चक्षमतुः। चक्षमुः ]। चक्षमिथ। [[1]चक्षन्थ। चक्षमिव]। चक्षण्व। [[1]चक्षमिम। चक्षण्म]। क्षमिता। क्षन्ता। [[1]क्षमिष्यति। क्षंस्यति। क्षाम्यतु]। अयं न षित्।

'अषितः क्षाम्यतेः क्षान्तिः, क्षमूषः क्षमतेः क्षमा'।

---

सिद्ध्यतीति। सिषेध। सेद्धा। सेत्स्यति। सिध्यतु। असिधत्। असेत्स्यत्।

चक्षण्वेति। 'म्वोश्चे'ति मस्य नत्वे णत्वम्।

क्षाम्यतेः=दिवाधिपठितस्य क्षमूधातोः। क्षान्तिरिति। क्तिनि 'अनुना-

---

शमामष्टानां। शमादि आठ धातुओं के अच् को दीर्घ हो, श्यन् परे रहते।

अषितः क्षाम्यतेः। दिवादिगणपठित अषित् 'क्षमू' धातु से स्त्रीलिङ्ग

---

1 क्वाचित्कः पाठोऽयम्। 2 मदामुपधायाः' पा०।

क्लमु ३४ क्लान्तौ। 'ष्ठिवुक्लमुचमा'मिति दीर्घः। क्लाम्यति। [[1]चक्लाम] क्लमिता। [ [1]क्लमिष्यति। क्लाम्यतु ]। अक्लमत्। [ [1]अक्लमिष्यत् ]।

मदी ३५ हर्षे। माद्यति। [ [1]ममाद। मदिता ]। अमदत्।

असु ३६ क्षेपणे। अस्यति। आस। असिता [ [1]असिष्यति ]।

अस्यतेस्थुक् ।७।४।१७। [ [2]अस्यतेस्थुक् स्यात् ] अङि। 'अस्यती'त्यङ्। आस्थत्।

यसु ३७ प्रयत्ने। यसोऽनुपसर्गात् ।३।१।७१। संयसश्च ।३।१।७२। [[2]यसोऽनुपसर्गात्, संयसश्च] श्यन्वा। यस्यति। यसति। संयस्यति। संयसति। अनुपसर्गात्किम्? प्रयस्यति।

जसु ३८ मोक्षणे। जस्यति। [ [1]जजास। अजसत् ]।

तसु ३९ उपक्षये। दसु ४० च। तस्यति [[1]ततास ]। अतसत्। दस्यति [ [1]ददास ]। अदसत्।

वसु ४१ स्तम्भे। वस्यति। 'न शसददे'ति निषेधः। ववास। ववसतुः। 'वशादि'रिति मते तु—वेसतुः। वेसुः।

---

सिकस्य क्ती'ति दीर्घः। क्षमतेः—भ्वादिपठितस्य षितः क्षमूषः। 'षिद्भिदादिभ्य' इत्यङि, टापि—क्षमेति रूपम्। प्रयत्नः—प्रयासः।

---

भाव में क्तिन् प्रत्यय होने से उससे 'क्षान्ति' रूप होता है। और भ्वादिगणपठित षित् 'क्षमूष्' धातु से षित्वात् 'षिद्भिदादिभ्योऽङ्' इस सूत्र से 'अङ्' प्रत्यय होता है। अतः उसका 'क्षमा' रूप होता है। यह इन दोनों धातुओं में भेद है।

अस्यतेस्थुक्। 'अस्' धातु को थुक् आगम हो, अङ् परे रहते।

यसोऽनुपसर्गात्। अनुपसृष्ट यस् धातु से श्यन् प्रत्यय हो, विकल्प करके।

संयसश्च। सम् पूर्वक यस् धातु से श्यन् प्रत्यय हो, विकल्प करके।

---

१ एकत्रादर्शेऽयं पाठ उपलभ्यते। २ शेषपूरणमिदम्।

व्युष ४२ विभागे। व्युष्यति। [[1]वुव्योष]। विस[2] ४३ प्रेरणे। विस्यति। [विवेस]। अविसत्। [[3]कुस संश्लेषणे। कुस्यति। चुकोस। कोसिता। अकुसत्]। [4] बुस ४४ उत्सर्गे। बुस्यति। [[1]बुबोस। अबुसत्]।

मुस ४५ खण्डने। मुस्यति। [[1]मुमोस]। मसी ४६ परिणामे। परिणामो—विकारः। [[1]मस्यति। ममास। अमसत्]। लुट ४७ विलोडने। लुट्यति। [[1]लुलोट]। उच ४८ समवाये। उच्यति। [गुणः। 'अभ्यासस्यासवर्णे'। उवङ्]। उवोच। ऊचतुः। ऊचुः। [[1]मा भवानुचत्]। भृशु ४९ भ्रंशु ५० अधःपतने। भृश्यति। बभर्श। अभृशत्। 'अनिदिता'मिति नलोपः। भ्रश्यति। बभ्रंश। अभ्रशत्।

[वृश[3] वरणे। वृश्यति। ववर्श। अवृशत्] [3]कृश ५१ तनूकरणे। कृश्यति। [चकर्श]। ञितृषा ५२ पिपासायाम्। तृष्यति[1]। [[1]ततर्ष]। हृष ५३ तुष्टौ। श्यन्नङौ भौवादिकाद्विशेषः। हृष्यति। [[1]जहर्ष]। अहृषत्।

रुष ५४ रिष ५५ हिंसायाम्। [रुष्यति। [1]रुरोष। रिष्यति। रिरेष]। 'तीषसहे'ति वेट्। रोषिता। रोष्टा। रेषिता। रेष्टा।

कुप ५६ क्रोधे। कुप्यति। [[1]चुकोप]। गुप ५७ व्याकुलत्वे [[1]गुप्यति। जुगोप]। लुभ ५८ गार्ध्ये। गार्ध्यमाकाङ्क्षा। [[1]लुभ्यति। लुलोभ]। लोभिता। लोब्धा। लोभिष्यति। [लुभ्यतु]। भ्वादेरवृत्करणाल्लोभतीत्यप्याहुः। क्षुभ ५९ सञ्चलने। क्षुभ्यति। [चुक्षोभ]। [[3] णभतुभहिंसायाम्]। क्लिदू ६० आर्द्रीभावे। क्लिद्यति। [चिक्लेद]। चिक्लेदिथ। चिक्लेत्थ। चिक्लिदिव। चिक्लिद्व। चिक्लिदिम। चिक्लिद्म।

---

लोभितेति। 'तीषसहे' ति वेट्। लोब्धेति। झषस्तथोरिति धत्वम्। अवृत्करणात्—तस्याऽसमासत्वात्। आकृतिगणत्वादित्यर्थः।

---

१ क्वचिन्न। २ 'बिस' पाठ०। ३ क्वाचित्कः पाठः। ४ 'बुस' पाठ०।

क्लेदिता। क्लेत्ता। [ क्लेदिष्यति । [1]क्लेत्स्यति ]।

ञिमिदा ६१ स्नेहने। मिदेर्गुणः ।७।३।८२। मिदेरिको गुणः [2]स्यादित्संज्ञकशकारादौ प्रत्यये [[1]परे]। मेद्यति। [मिमेद[1]]। अमिदत्।

ञिक्ष्विदा ६२ स्नेहन-मोचनयोः। क्ष्विद्यति। [[1]चिक्ष्वेद]। ऋधु ६३ वृद्धौ। ऋध्यति। आनर्द्ध।[[1]आर्द्धत्]। गृधु ६४ अभिकाङ्क्षायाम्। गृध्यति। [ [1]जगर्द्ध ] अगृधत्। [ वृत्। पुषादयः समाप्ताः ]।

इति दिवादौ परस्मैपदिनः।

षूङ् १ प्राणिप्रसवे। सूयते। सुषुवे। [ [3]'स्वरती'ति विकल्पं बाधित्वा 'श्र्युकः क्कितो'ति निषेधे प्राप्ते[1]] क्रादिनियमान्नित्यमिट्। सुषुविषे। सुषुविवहे। [ [3]सुषुविमहे ]। सोता। सविता। [[3]सविष्यते। सोष्यते ]। दूङ् २ परितापे। [ दूयते। [3]दुदुवे ]।

दीङ् ३ क्षये। [दीयते]। दीङो युडचि क्ङिति ।६।४।६३। दीङः परस्याऽजादेः क्ङित आर्द्धधातुकस्य युट् [2]स्यात्। * वुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ । दिदीये। मीनातिमिनोतिदीङां ल्यपि च

अभिकाङ्क्षा = लालसा। वृत् = पुषादयो वृत्ताः ॥ आभीयत्वेन युटोऽसिद्धत्वमाशङ्क्याह—सिद्धाविति। तेन 'एरनेकाच' इति यण न।

मिदेर्गुणः। मिद् धातु के इक् को गुण हो, इत्सञ्ज्ञकशकारादि प्रत्यय परे रहते।

दीङो युट्। दीङ्धातु से परे जो अजादि कित् ङित् आर्द्धधातुक उसको युट् आगम हो।

वुग्युटा। उङ् और यण् कर्त्तव्य हों तो वुक् और युट् आगम सिद्ध ही रहते हैं। असिद्ध नहीं होते हैं।

मीनातिमिनोति। मीनाति मिनोति और दीङ् धातु को आत्व हो, ल्यप् परे रहते, और एजुनिमित्तक अशित प्रत्यय के विषय में।

१ क्वाचित्कः पाठः। २ 'स्या'दिति क्वचिन्न। ३ क्वचिन्न।

।६।१।५०। एषामात्वं ल्यपि, चाद्-अशित्येज्निमित्ते । दाता । दास्यते । अदास्त ।

डीङ् ४ विहायसा गतौ । डीयते । [ [1]डिड्ये ] । पीङ् ५ पाने । पीयते । [ [1]पिप्ये ] । माङ् ६ माने । मायते । ममे । माता ।

[ [2]प्रीङ् प्रीतौ । अकर्मकः । प्रीयते । पिप्रिये ] ।

जनी ७ प्रादुर्भावे । ज्ञाजनोर्जा ।७।३।७९। [ [4]अनयोर्जादेशः स्यात् ] शिति [ [3]परे ] । जायते । [ '[2]गमहनजने'त्युपधाया लोपः । 'स्तोः श्चुना श्चुः' ] । जज्ञे । जनिता । जनिष्यते । दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम् ।३।१।६१। एभ्यश्च्लेश्चिण्वा [4]स्यादेकवचने तशब्दे परे । चिणो लुक् ।६।४।१०४। चिणः परस्य 'त'शब्दस्य लुक् स्यात् । [ '[2]अत उपधाया' इति वृद्धौ प्राप्तायाम्— ] ।

जनिवध्योश्च ।७।३।३५। [ [3]जनिवध्योश्च ] न वृद्धिश्चिणि, ञ्णिति कृति च । अजनि । अजनिष्ट । [ [2]अजनिष्यत ] ।

दीपी ८ दीप्तौ । दीप्यते । दिदीपे । [ [2]दीपिता ] । अदीपि । अदीपिष्ट । [ [2]अदीपिष्यत ] । पद ९ गतौ । पद्यते । पेदे । पत्ता ।

---

ज्ञाजनोर्जा । 'ज्ञा' और 'जन्' धातुको 'जा' आदेश हो, शित् प्रत्यय परे रहते ।

दीपजन । दीप, जन आदि धातुओंसे परे जो 'च्लि' उसको चिण् आदेश हो, विकल्प करके, एकवचन 'त' शब्द परे रहते ।

चिणो लुक् । चिण् से परे जो 'त' शब्द उसका लुक् हो ।

जनिवध्योश्च । जन् धातु और वधको वृद्धि नहीं हो, चिण् और ञित् णित् कृत् परे रहते ।

---

१ क्वचिन्न । २ अयं न सार्वत्रिकः । ३ शेषपूरणम् ।
४ 'स्या'दिति क्वाचित्कम् ।

पद्येत। पत्सीष्ट। चिण्ते पदः ।३।१।६०। [ [1]पदश्च्लेश्चिण् स्यात्तशब्दे परे। प्रण्यपादि ]। अपादि। अपत्साताम्। अपत्सत।

[ [1]खिद दैन्ये। खिद्यते। चिखेद। खत्ता। खेत्स्यते ]।

विद १० सत्तायाम्। विद्यते। विविदे। वेत्ता। वित्सीष्ट। अवित्त। बुध ११ अवगमने। बुध्यते। [ [2]बुबुधे ]। बोद्धा। [ [2]एकाचो बशो भष् झषन्तस्ये'ति भष्भावः ]। भोत्स्यते। भुत्सीष्ट। अबोधि। अबुद्ध। अभुत्साताम्। [ [2]अभोत्स्यत ]।

युध १२ संप्रहारे। युध्यते। युयुधे। योद्धा। अयुध्यत। युध्येत। युत्सीष्ट। अयुद्ध। अयुत्स्यत। [ [2]कथं युध्यतीति। युधमिच्छतीति क्यच्। 'अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्य'मिति वा ]।

सृज १३ विसर्गे। [ [1]अकर्मकः ]। सृज्यते। ससृजे। 'सृजिदृशोर्झल्यमकिती'त्यमागमः। स्रष्टा। स्रक्ष्यते। सृक्षीष्ट। 'लिङ्सिचा'विति कित्त्वम्। असृष्ट। असृक्षाताम्।

मीङ् १४ हिंसायाम्। [ हिंसाऽत्र प्राणवियोगः ]। मीयते। मिम्ये। [ [2]मीयताम्। अमीयत। मीयेत। मेषीष्ट। अमेष्ट। अमेषाताम् ]। रीङ् १५ स्रवणे। रीयते। लीङ् १६ श्लेषणे। लीयते।

विभाषा लीयतेः।६।१।५१। 'लीयते'रिति यका निर्देशो, नतु श्यना।

---

वित्सीष्टेति। 'लिङ्सिचा'विति कित्त्वान्न गुणः।

अवित्तेति। 'झलो झली'ति सिज्लोपः। 'लिङ्सिचा'विति कित्त्वम्।

---

चिण्ते पदः। पद् धातुसे परे जो 'च्लि', उसको चिण् आदेश हो, एकवचन 'त'शब्द परे रहते।

विभाषा लीयतेः। 'ली' और 'लीङ्' धातुको आत्व हो, विकल्प करके, एज् के विषयमें, और ल्यप् प्रत्यय परे रहते।

---

१ काचित्कः पाठः। २ असार्वत्रिकः पाठः।

लीलीङोरात्वं वा स्यादेज्विषये, ल्यपि च। लेता। लाता। लेष्यते। लास्यते। एज्विषये किं? लीयते। लिल्ये। व्रीङ् १७ वृणोत्यर्थे। व्रीयते। विव्रिये।

इति दिवादावात्मनेपदिनः।

[ अथ स्वरितेतः ]।

मृष १ तितिक्षायाम्। मृष्यति। मृष्यते। ममर्ष। ममर्षिथ। ममृषे। ममृषिषे। मर्षितासि। मर्षितासे। मर्षिष्यति। मर्षिष्यते। मृष्यतु। णह २ बन्धने। नह्यति। नह्यते। ननाह। नेहिथ। 'नहो धः' इति धः। ननद्ध। नेहे। नद्धा। नत्स्यति। नत्स्यते। अनात्सीत्। अनद्ध।

रञ्ज ३ रागे। 'अनिदिता'मिति नलोपः। रज्यति। रज्यते। [[1]ररञ्ज। ररञ्जे। ररङ्क्थ]। रङ्क्ता। शप४ आक्रोशे। शप्यति। शप्यते। [[1]शशाप। शेपतुः। शेपुः। शेपे। शेपाते]। शक ५ विभाषितो मर्षणे। विभाषित इति। उभयपदीत्यर्थः। शक्यति, शक्यते हरिं द्रष्टुं भक्तः। शशाक। शेकिथ। शशक्थ। शेके। शक्ता। शक्ष्यति। शक्ष्यते। पुषादित्वादङ्। अशकत्। अशक्त।

सेट्कोऽयमित्येके। तन्मते नाऽनिट्केषु लृदित्पठितः। शकिता। शकिष्यति। शकिष्यते।

इति दिवादिप्रकरणम् ॥ ४ ॥

---

वृणोत्यर्थे—वरणे। वरणञ्च स्वीकारः।
आक्रोशः—निन्दा, शपनञ्च। ('गाली देना' 'शाप देना')।
मर्षणे = सहने।

* इति दिवादयः। *

---

शक विभाषितो। मर्षण (सहन) अर्थमें 'शक' धातु उभयपदी है।

---

1 क्वचिन्न।

## अथ स्वादयः ॥

षुञ् १ अभिषवे। [[1]अभिषवः—स्नपनं, पीडनं, स्नानं, सुरासन्धानं च। तत्र स्नानेऽकर्मकः ]। स्वादिभ्यः श्नुः ।३।१।७३। [[2]स्वादिभ्यः श्नुः स्यात्] कर्त्तरि सार्वधातुके[3]। शपोऽपवादः। सुनोति। सुनुतः। 'हुश्नुवो'रिति यण्। सुन्वन्ति। [[4]सुनोषि। सुनुथः। सुनुथ। सुनोमि]। 'लोपश्चास्ये'ति प्रत्ययोतो [4]लोपः। सुन्वः। सुनुवः। सुन्मः। सुनुमः। सुनुते। सुन्वाते। सुन्वते। सुनुषे। [[4]सुन्वाथे। सुनुध्वे। सुन्वे। सुन्वहे—सुनुवहे। सुन्महे—सुनुमहे]। सुषाव। सुषुवे। सोता। सोता। [सोष्यति[4]। सोष्यते। सुनोतु। 'उतश्चे'ति हेर्लुक्]। सुनु। सुनवानि। [[4]सुनवाव। सुनवाम। सुनुताम्]। सुनवै। [[4]सुनवावहै। सुनवामहै। असुन्वि]। सुनुयात्। [[4]सूयात्। सोषीष्ट]।

स्तुसुधूञ्भ्यः परस्मैपदेषु।७।२।७२। [एभ्यः[2]] सिच इट् [[2]स्यात्प-

---

सुरासन्धानं—सुरोत्पादनम्। स्वादिभ्य इति। कर्त्रर्थे सार्वधातुके परे स्वादिभ्यः श्नुः स्यात्। सुनुत इति। 'सार्वधातुकमपि'दिति तसो ङित्त्वान्न गुणः। उतो लोप इति। वैकल्पिको लोपः। एवं 'सुन्मः' 'सुनुमः' इत्यत्रापि बोध्यम्। सुषावेति। सुषुवतुः, सुषुवुः। सुषविथ—सुषोथ, सुषुवथुः, सुषुव। सुषाव—सुषव, सुषुविव, सुषुविम। सुनु। 'उतश्च प्रत्ययाग'दिति हेर्लुक्। सुनवानि। 'हुश्नुवो'रिति यणं बाधित्वा परत्वाद्गुणः, आटः पित्त्वेनाऽङित्त्वात्तन्निषेधाऽप्रसक्तेः। सुनुयादिति। आशीर्लिङि तु 'अकृत्सार्वे'ति दीर्घे 'सूयात्' इति रूपम्।

---

स्वादिभ्यः श्नुः। स्वादिगणपठित धातुओं से श्नुप्रत्यय हो, कर्त्रर्थक सार्वधातुक परे रहते।

स्तुसुधूञ्भ्यः। स्तु, और धूञ्—इन धातुओंसे परे जो सिच् उसको इट् आगम हो, परस्मैपद परे रहते।

---

१ क्वचिन्न। २ शेषपूरणमिदम्। ३ क्वचिदियं वृत्तिर्नास्ति।
४ क्वाचित्कः पाठः। ५ क्वाचित्कः पाठः।

रस्मैपदे]। असावीत्। असोष्ट। अभिषुणोति। 'प्राक्सिता'दिति षत्वम्। अभ्यषुणोत्। **सुनोतेः स्यसनोः** ।८।३।११७। [ [1]स्ये, सनि च परे सुञः ] सस्य षो न स्यात्। विसोष्यति।

षिञ् २ बन्धने । विसिनोति। [ [1]सिनुते । सिषाय। सिष्ये]।

चिञ् ३ चयने। प्रणिचिनोति। चिनुते। **विभाषा चेः** ।८।३।५८। [2]अभ्यासाच्चेः कुत्वं वा [स्यात् ] सनि, लिटि च। चिकाय। चिचाय। चिक्ये। चिच्ये। अचैषीत्। अचेष्ट॥

स्तृञ् ४ आच्छादने। स्तृणोति। स्तृणुते। तस्तार। [ [1]तस्तरतुः। तस्तरुः। 'ऋतश्च संयोगादे'रिति गुणः ]। तस्तरे। 'गुणोर्ती'ति गुणः। स्तर्यात्। **ऋतश्च संयोगादेः** ।७।२।४३। ऋदन्तात्संयोगादेर्लिङ्सिचोरिड् वा [ स्या ]त्तङि। स्तरिषीष्ट। स्तृषीष्ट। अस्तरिष्ट। अस्तृत।

---

अभिषुणोतीति। 'उपसर्गात्सुनोती'ति षत्वम्। विसोष्यतीति। 'सात्पदाद्यो'रिति षत्वनिषेधः। 'उपसर्गात्सुनोती'ति षत्वन्तु न, तत्राऽस्य पाठाभावात्।

चिञिति। चयनं—रचनाविशेषः। ('चुनना')। अचैषीदिति। 'सिचि वृद्धि'रिति वृद्धिः। तस्तारेति। तस्तरतुः, तस्तरुः। 'ऋतश्च संयोगादे'रिति गुणः। तस्तर्थ, तस्तरथुः, तस्तर। तस्तार—तस्तर, तस्तरिव, तस्तरिम।

स्तृषीष्टेति। 'उश्चे'ति कित्त्वम्। अस्तृतेति। 'ह्रस्वादङ्गा'दिति सिचो लोपः। परस्मैपदे—अस्तार्षीत्, अस्तार्ष्टामित्यादि।

---

सुनोतेः स्य। सुनोति ( षुञ् ) धातुके सकारको षकार नहीं हो, स्य और सन् परे रहते।

विभाषा चेः। अभ्याससे परे जो चि - धातुका चकार, उसको कुत्व हो, विकल्प करके, सन और लिट् परे रहते।

ऋतश्च संयो। संयोगादि ऋदन्त धातुसे परे जो लिङ् और सिच्, उसको इट् आगम हो, विकल्प करके, तङ्परे रहते।

---

१ क्वचिदेव दृश्यते। २ 'अभ्यासात्परस्य चिनः कुत्वं वा स्याद्' पाठ०।

धुञ् ५ कम्पने। धुनोति। धुनुते। दुधाव। दुधुवे। अधौषीत्। अधोष्यत्।

धूञ् ६ कम्पने। धूनोति। धूनुते। 'स्वरतिसूती'ति वेट्। दुधविथ। दुधोथ। किति लिटि तु- श्र्युकः किति।७।२।११। श्रिञ्, एकाच उगन्ताच्च—गित्कितोरिण्न[1] स्यात्। इति प्राप्ते। क्रादिनियमान्नित्यमिट्। दुधुविव। दुधुविम। अधावीत्। अधविष्ट। अधोष्ट।

कृञ् ७ हिंसायाम्। कृणोति। कृणुते। चकार। चकर्थ। चक्रे। क्रियात्। कृषीष्ट। अकार्षीत्। अकृत॥

वृञ् ८ वरणे। वृणोति। वृणुते।

**बभूथाऽऽततन्थजगृम्भववर्थेति निगमे।७।२।६४।** एषां वेदे इडभावो निपात्यते। तेन भाषायां थलीट्। ववरिथ। ववृव। ववृम। ववृहे। 'वृतो वा'। वरीता। वरिता।

---

दुधावेति। दुधुवतुः, दुधुवुः। दुधविथ-दुधोथ, दुधुवथुः, दुधुव। दुधाव-दुधव। दुधुविव, दुधुविम। धोता। धोष्यति। धुनोतु। धुनुताम्। अधुनोत्। अधुनुत। धुनुयात्। धुन्वीत। धूयात्। धोषीष्ट। इत्यादि। अधौषीदिति। 'सिचि वृद्धि'रिति वृद्धिः। धूञिति। दीर्घान्तोऽयम्। अधावीदिति। 'स्तुसुधूञ्भ्य' इति नित्यमिट्। अधविष्टेति। 'स्वरती'ति वेट्। चकर्थेति। 'कृसृभृवृ' इतीण्निषेधः। एवं—चकृव। चकृम। कृषीष्टेति। 'उश्चे'ति कित्वान्न गुणः। अकार्षीदिति। 'सिचि वृद्धि'रिति वृद्धिः। अकृतेति। 'ह्रस्वादङ्गा'दिति सिचो लोपः। 'उश्चे'ति कित्त्वम्। थलीति। तेन क्रादित्वेऽपीण्निषेधो न। ववृतेति। क्रादित्वान्नेट्।

---

श्र्युकः किति। श्रिञ् धातु और एकाच् धातु उगन्त धातु से परे जो गित् और कित् प्रत्यय उसको इट् आगम नहीं हो।

बभूथा। 'बभूथ' 'आततन्थ' 'जगृम्भ' 'ववर्थ' इन प्रयोगों में वेद में इट् का अभाव निपातन हो।

---

1 क्वचिन्न।

लिङ्सिचोरात्मनेपदेषु ।७।२।४२। वृङ्वृञ्भ्यामृदन्ताच्च परयोर्लिङ्सिचोरिड् वा स्यात्तङि। न लिङि ।७।२।३९। वॄतो लिङ इटो न दीर्घः। वरिषीष्ट। वृषीष्ट। अवारीत्। अवरिष्ट। अवरीष्ट। अवृत। [ [1]अवरिष्यत। अवरीष्यत ]।

टुदु ८ उपतापे। दुनोति। [ [1]दुनुतः। दुन्वन्ति। दुदाव। दोता ]। हि ९ गतौ, वृद्धौ च। हिनुमीना ४।८।१५। उपसर्गस्थान्निमित्तात्परस्यैतयोर्नस्य णः [ [1]स्यात् ]। प्रहिणोति। हेरचङि ।७।३।५६। अभ्यासात् [ [2]परस्य ] हिनोतेर्हस्य कुत्वं [ स्या ]न्नतु चङि। जिघाय।

आप्लृ ११ व्याप्तौ। आप्नोति। आप्नुतः। आप्नुवन्ति। आप्नुवः। आप्ता। आप्नुहि। लृदित्त्वादङ्। आपत्॥

शक्लृ १२ शक्तौ [ शक्नोति। [1]शशाक ]। अशकत्। राध १३

---

वृषीष्टेति। इडभावपक्षे 'उश्चे'ति कित्त्वान्न गुणः। अवारीदिति। 'सिचि वृद्धिरि'ति वृद्धिः। 'सिचि च परस्मैपदेषु इति निषेधान्न अवारिष्टामित्यादौ 'वृतो वे'ति दीर्घः। अवरिष्टेति। 'लिङ्सिचो'रिति वेट्। 'इटपक्षे दीर्घविकल्पः।

अवृतेति। 'ह्रस्वादङ्गा'दिति सिचो लोपः। हिनुमिनेति-लुप्तषष्ठ्यन्तम्। आपदिति। 'पुषादी'त्यङ्।

---

लिङ्सिचोरा। वृङ्, वृञ् और दीर्घ ॠकारान्त धातु से परे जो लिङ् और सिच् उनको इट् आगम हो, विकल्प करके, तङ् परे रहते।

न लिङि। वृङ्, वृञ्, और दीर्घ ॠकारान्त धातु से परे जो लिङ् सम्बन्धी इट् उसको दीर्घ नहीं हो।

हिनुमीना। उपसर्गस्थ निमित्त से परे जो 'हिनु' और 'मीना' सम्बन्धी नकार उसको णकार हो।

हेरचङि। अभ्यास से परे जो हिनोतिका हकार, उसको कुत्व हो। परन्तु चङ् परे रहते यह कुत्व नहीं हो।

---

१ क्वाचित्कः पाठः। २ शेषपूरणमिदम्।

साध १४ संसिद्धौ । साध्नोति । राधो हिंसायाम् ।६।४।१२३। [ [1]राधो हिंसायाम् ] एत्वाभ्यासलोपौ स्तः, किति लिटि, सेटि थलि च । अपरेधतुः । अपरेधुः । रेधिथ । राद्धा । साध्नोति । ससाध । साद्धा । असात्सीत् । असाद्धाम् । [ [2]असात्स्यत् ] ।

ञिधृषा १५ प्रागल्भ्ये । धृष्णोति । दधर्ष । धर्षिता । दम्भु १६ दम्भने । [ 'अनिदिता'मिति [2]नलोपः ] । दभ्नोति । ददम्भ ।

*श्रन्थिग्रन्थिदम्भिस्वञ्जीनां लिटः कित्त्वं वा । कित्त्वपक्षे नलोपः । तस्याऽऽभीयत्वादसिद्धत्वेनैत्वाभ्यासलोपयोरप्राप्तौ—।

*दम्भेश्च एत्वाभ्यासलोपौ वक्तव्यौ । देभतुः । ददम्भतुः । [ [2]देभुः । ददम्भुः ] । दम्भिता । दम्भिष्यति । दभ्यात् ।

तृप १७ प्रीणने । क्षुभ्नादिषु च ।८।४।३९। [क्षुभ्नादिषु नस्य[1]] न णत्वम् । तृप्नोति । ततर्प । तर्पिता ।

अशू १८ व्याप्तौ, संघाते च । अश्नुते । अश्नोतेश्च ।६।४।७२।

---

प्रागल्भ्यं=धार्ष्ट्यम् । नलोपः = 'अनिदिता'मिति नलोपः । इति स्वादयः ।

---

राधो हिंसायां । हिंसार्थमें राध् धातु को एत्व हो, और उसके अभ्यास का लोप हो, कित् लिट् और सेट् थल् परे रहते ।

श्रन्थिग्रन्थि । श्रन्थ, ग्रन्थ, दम्भ और स्वञ्ज धातु से परे जो लिट्, वह कित् हो, विकल्प करके ।

दम्भेश्च एत्वा । दम्भ धातु को एत्व हो और उसके अभ्यास का लोप हो, कित् लिट् और सेट् थल् परे रहते ।

क्षुभ्नादिषु च । क्षुभ्नादिगणपठित शब्दों के नकार को णत्व नहीं हो ।

अश्नोतेश्च । अभ्यास सम्बन्धी दीर्घ अवर्ण से परे जो वर्ण उनको नुट् आगम हो ।

---

१ शेषपूरणमेतत् । २ क्वाचित्कः पाठः ।

दीर्घादभ्यासादवर्णात्परस्य नुट् [ [1]स्यात् ] । आनशे । अशिता । [ [1]अश्नोति पः ] । अष्टा । अशिष्यते । अक्ष्यते [ [1]अश्नुताम् । आश्नुत । अश्नुवीत । अक्षीष्ट । अशिषीष्ट । आशिष्ट । आष्ट । आक्षाताम् । आशिष्यत । आक्ष्यत ।

इति स्वादयः ॥५॥

---

॥ अथ तुदादयः ॥

[ अथ स्वरितेतः ] ।

तुद १ व्यथने । तुदादिभ्यः शः ।३।१।७७। [ [2]तुदादिभ्यः शः स्यात्कर्त्रर्थे सार्वधातुके परे ] । शपोऽपवादः । तुदति । [ [3]तुदतः ] । तुदते । [ तुतोद ] । तुतोदिथ । तुतुदे । तोत्ता । [[3]तोत्स्यति । तोत्स्यते । तुदतु । तुदताम् ] । अतौत्सीत् । अतुत्त । णुद २ प्रेरणे । नुदति । नुदते । नुनोद । नुनुदे । नोत्ता । [ [3]नोत्स्यति । नोत्स्यते ] ।

भ्रस्ज ३ पाके । '[4]ग्रहिज्यावयी'ति संप्रसारणम् । सस्य श्चुत्वेन शः । तस्य जश्त्वेन जः । भृज्जति । भृज्जते ।

भ्रस्जो रोपधयो रमन्यतरस्याम् ।६।४।४७। [5]भ्रस्जे रेफस्योप-

---

तुदतीति । लघूपधगुणं बाधित्वा नित्यत्वाच्छे कृते 'सार्वधातुकमपि'दिति ङिच्वान्न गुणः । अतौत्सीदिति । 'वदव्रजे'ति वृद्धिः । अतुत्तेति । 'लिङ्सिचा'विति किर्त्वं, 'झलो झली'ति सिचो लोपः । नोत्तेति । सिचि–अनौत्सीत्, अनुत्तेत्यादि । पाकः–भर्जनम् । ( 'भूनना' 'सेकना' ) ।

---

तुदादिभ्यः शः । तुदादिगणपठित धातुओं से 'श' प्रत्यय हो, कर्त्रर्थक सार्वधातुक परे रहते ।

---

१ क्वचिन्न । २ शेषपूरणमेतदस्माकम् । ३ क्वाचित्कः पाठोऽयम् ।
४ 'ग्रहिज्येति सम्प्रसारणं' पा० । ५ 'भ्रस्जो रेफस्य' पा० ।

धायाश्च स्थाने रमागमो वा स्यादार्द्धधातुके। मित्त्वादन्त्यादचः परः। स्थानषष्ठीनिर्देशाद्रोपधयोर्निवृत्तिः। बभर्ज। बभर्जतुः। बभर्जुः। बभर्जिथ। बभर्ष्ठ।

['रमभावपक्षे]—बभ्रज्ज। बभ्रज्जतुः। बभ्रज्जुः। बभ्रज्जिथ। 'स्कोः' रिति सलोपः। 'व्रश्चे'ति षः। बभ्रष्ठ। बभर्जे। ['बभर्जाते। बभर्जिरे]। बभ्रज्जे। ['बभ्रज्जाते। बभ्रज्जिरे]। भर्ष्टा। भ्रष्टा। भर्क्ष्यति। भ्रक्ष्यति। *क्ङिति रमागमं बाधित्वा संप्रसारणं पूर्वविप्रतिषेधेन। भृज्ज्यात्। भृज्ज्यास्ताम्। भृज्ज्यासुः। भर्क्षीष्ट। भ्रक्षीष्ट। अभार्क्षीत्। अभ्राक्षीत्।

---

भृज्जतीति। 'ग्रहिज्ये'ति सम्प्रसारणेन रेफस्य ऋकारः। 'सम्प्रसारणाच्चे'ति पूर्वरूपम्। सस्य श्चुत्वेन शः, शस्य 'झलां जश् झशी'ति जश्त्वेन जकारः। रोपधयोः = रेफसकारयोः। रमि अकार उच्चरणार्थः। रेफमात्रमागमः। बभर्जेति। अत्र रमि 'भर्ज्' इत्यस्य द्वित्वम्। बभर्जिथेति। अकारवत्त्वाद्भारद्वाजनियमात्थलि वेट्। इडभावे—व्रश्चेति जस्य षः, ष्टुत्वम्। क्रादिनियमान्नित्यमिट्। बभर्जिव। बभर्जिम। बभ्रज्जेति। 'भ्रस्ज् अ' इत्यत्र द्वित्वेऽभ्यासकार्ये, श्चुत्वं, जश्त्वम्। बभ्रज्जतुरिति। संयोगात्परत्वादकित्त्वेन न 'ग्रहिज्ये'ति सम्प्रसारणम्। भ्रष्टेति। रमागमविकल्पः।

पूर्वविप्रतिषेधेनेति। तेन परोऽपि रमागमो नेति भर्ज्यादिति रूपं न भवति। किन्तु भृज्ज्यादित्येव भवतीत्याशयः।

अभार्क्षीदिति। रमागमविकल्पाद्रूपद्वयम्। हलन्तलक्षणा वृद्धिः।

---

भ्रस्जो रोपध। 'भ्रस्ज' धातु के रेफ और उसकी उपधा के स्थान में 'रम्' आगम हो, विकल्प करके, आर्द्धधातुक परे रहते।

क्ङिति रमागमं। कित् और ङित् आर्द्धधातुक परे रहते 'रम्' आगम को बाध कर पूर्वविप्रतिषेध से 'ग्रहिज्या' इस सूत्र से सम्प्रसारण ही होता है।

---

१ क्वाचित्कः पाठः।

अभर्ष्ट । अभ्रष्ट । [ [1]अभर्क्ष्यत् । अभ्रक्ष्यत् । अभर्क्ष्यत । अभ्रक्ष्यत ] ।

कृष ४ विलेखने । कृषति । कृषते । चकर्ष । चकृषे । [1]"अनुदात्तस्य चर्दुपधस्याऽन्यतरस्याम्' । क्रष्टा । कर्ष्टा । कृक्षीष्ट । 'स्पृशमृशे'ति सिज् वा । [ [1]पक्षे क्सः । सिचि अम्वा ] । अक्राक्षीत् । अकार्क्षीत् । अकृक्षत् । अकृष्ट । अकृक्षाताम् । अकृक्षत ।

[ [1]क्सपक्षे– ] अकृक्षत । अकृक्षाताम् । अकृक्षन्त ॥

मिल ५ सङ्गमे । मिलति । मिलते । मिमेल । मिमिले । मेलिता । अमेलीत् ॥

मुच्लृ ६ मोक्षणे । शे मुचादीनाम् ।७।१।५९। मुच्लुप्विद्लिप्सिच्कृत्खिद्पिशां नुम् । मुञ्चति । मुञ्चते । [ [1]मुमोच । मुमुचे ] । मोक्ता । [ [1]मोक्ष्यति । मोक्ष्यते ] । मुच्यात् । 'लिङ्सिचा'विति कित्त्वं । मुक्षीष्ट । अमुचत् । अमुक्त । अमुक्षाताम् ॥

लुप्लृ ७ छेदने । लुम्पति । लुम्पते । [ [1]लुलोप । लुलुपे ] । लोप्तार ।

---

अभर्ष्टेति । 'झलो झली'ति सिज्लोपः । अभर्क्षाताम्, अभर्क्षत । अभ्रष्ट । अभ्रक्षाताम्, अभ्रक्षतेत्यादि रूपाणि । कृषेर्लिटि । चकर्ष, चकृषतुः । चकृषुः । क्रादिनियमादिट् । चकर्षिथ । चकृषिव । क्रष्टेति । 'अनुदात्तस्य चे'त्यमागमविकल्पः । कर्ष्टेत्यत्राऽमागमाभावे गुणः ।

अकृक्षदिति । 'लिङ्सिचा'विति कित्त्वादकित्त्वाभावादमागमो न । अक्राक्षीदिति । उभयत्र हलन्तलक्षणा वृद्धिः । अकृक्षदिति । सिजभावे क्सः । कित्त्वादम्-गुणौ न । अकृष्टेति । सिच्पक्षे 'लिङ्सिचा'विति कित्त्वादम्-गुणौ न । 'झलो झली'ति सिज्लोपः । सङ्गमः=मेलनम् । ( मिलना ) । अमुचदिति । लृदित्वात्पुषादीत्यङ् । अमुक्तेति । 'लिङ्सिचा'विति कित्त्वाद् गुणाऽभावः, 'झलो झली'ति सिज्लोपः ।

---

शे मुचादीनाम् । 'मुच्' आदि आठ धातुओं को नुम् आगम हो, 'श' प्रत्यय परे रहते ।

---

१ क्वाचित्कः पाठः ।

[लोप्स्यति । लोप्स्यते ]। अलुपत् । अलुप्त ।

विदॢ ८ लाभे । विन्दति । विन्दते । विवेद । व्याघ्रभूतिमते सेट् । वेदिता २ । [ वेदिष्यति[1] । वेदिष्यते ] । भाष्यमतेऽनिट् । परिवेत्ता । [ परिवर्जने । ज्येष्ठं [1]परित्यज्य दारानग्नींश्च लब्धवानित्यर्थः ]।

षिच ६ क्षरणे । सिञ्चति । सिञ्चते । सिषेच । सिषिचे । 'लिपिसिची'त्यङ् । असिचत् । तङि तु वा-असिचत । असिक्त ॥

लिप १० उपदेहे । [ [1]उपदेहो-वृद्धिः ]। लिम्पति । लिम्पते । लिलेप । लिलिपे । लेप्ता । [ लेप्स्यति । लेप्स्यते ] । 'लिपिसिचिह्वश्चे'त्यङ् । अलिपत् । अलिपत । अलिप्त ॥ [ इत्युभयपदिनः ] ॥

अथ परस्मैपदिनः ।

कृती १ छेदने । कृन्तति । चकर्त्त । कर्त्तिता । 'सेऽसिची'ति वेट् । कर्त्तिष्यति । कर्त्स्यति । अकर्त्तीत् ॥

खिद २ परिदेवने । खिन्दति । चिखेद । खेत्ता । खेत्स्यति ।

पिश ३ अवयवे । पिंशति । पिपेश । पेशिता ।

ओव्रश्चू ४ छेदने । 'ग्रहीज्या' । वृश्चति । [ [1]लिट्यभ्यासस्येति सम्प्रसारणं-रेफस्य ऋकारः । 'उरत्' । तस्याऽचः परस्मि'न्निति स्थानिवद्भावा'न्न सम्प्रसारणे सम्प्रसारण'मिति वस्योत्वं न-- ]। वव्रश्च ।

---

असिचदिति । 'लिपिसिचिह्वश्चे'त्यङ् । असिचतेति । 'आत्मनेपदेष्वन्यतरस्या'मित्यङ्विकल्पः । परिदेवनं-खेदः । अवयवे । अवयवक्रियायामित्यर्थः । वृश्चतीति । 'ग्रहिज्ये'ति सम्प्रसारणम् । वव्रश्चेति ।' लिट्यभ्यासस्ये'ति सम्प्रसारणम्, उदरत्त्वं, तस्याऽचः परस्मिन्निति स्थानिवत्त्वान्न सम्प्रसारणे इति निषेधाद्वस्योत्त्वं न ।

---

१ क्वाचित्कः पाठः ।

वव्रश्चिथ। वव्रष्ठ। व्रश्चिता। व्रष्टा। व्रश्चिष्यति। व्रक्ष्यति। वृश्चतु। वृश्च्यात्। अव्रश्चीत्। अव्राक्षीत्।

व्यच ५ व्याजीकरणे। विचति। विव्याच। विविचतुः। विविचुः। व्यचिता। व्यचिष्यति। विच्यात्। अव्याचीत्। अव्यचीत्। 'व्यचेः कुटादित्वमनसी'ति तु नेह प्रवर्त्तते, 'अनसी'ति पर्युदासेन कृन्मात्र-विषयत्वात्।

उछि ६ उञ्छे। 'उञ्छः कणश आदानं कणिशाद्यर्जनं शिल'मिति यादवः। उञ्छति। उञ्छाञ्चकार। उञ्छिता। ऋछ ७ गतीन्द्रिय-प्रलयमूर्तिभावेषु। [ 'छे च'। ऋच्छति ]। 'ऋच्छत्यृता'मिति गुणः। [ [1]परत्वाण्णल्यपि भवति ]। द्विहल्ग्रहणस्याऽनेकहलुपलक्षणत्वान्नुट्। आनर्च्छ। आनर्च्छतुः। ऋच्छिता।

उज्झ ८ उत्सर्गे। उज्झति। उज्झाञ्चकार।

लुभ ९ विमोहने। [ लुभति। लुलोभ। [1]'तीषसहे'ति वेट् ]। लोभिता। लोब्धा। लोभिष्यति।

तृप १० तृम्फ ११ तृप्तौ। तृपति। ततर्प। तर्पिता। अतर्पीत्। तृम्फति। [ [1]शस्य ङित्त्वादनिदितामिति नलोपः ]। *शे तृम्फादीनां

वव्रष्ठेति। 'स्वरतीति' वेट्। इडभावे श्चुत्वस्याऽसिद्धत्वात्स्कोरिति सलोपे व्रश्चेति षत्वे ष्टुत्वे च वव्रष्ठेति सिद्धम्। अव्रश्चीदिति। ऊदित्वादिट्पक्षे हलन्तलक्षणवृद्धे र्नेटीति निषेधः। इडभावे अव्राक्षीदित्यत्र—हलन्तलक्षणा वृद्धिः। स्कोरिति सलोपः, व्रश्चेति षः। षढोरिति कः। 'आदेशप्रत्यययो'रिति सिचः षत्वम्। व्याजीकरणे = वञ्चने। विचतीति। 'ग्रहिज्ये'ति सम्प्रसारणम्। विव्याचेति। 'लिट्यभ्यासस्ये'ति सम्प्रसारणम्। विविचतुरिति। 'ग्रहिज्ये'ति सम्प्रसारणे द्वित्वम्। उञ्छाञ्चकारेति। 'इजादेश्चे'त्याम्।

शे तृम्फादीनां। 'तृम्फ' प्रभृति तुदादिगणपठित नकारानुषक्त धातुओं को नुम् आगम हो, 'श' प्रत्यय परे रहते।

1 क्वाचित्कः पाठः।

नुम्वाच्यः। आदिशब्दः प्रकारे। [ [1]प्रकारो भेदसादृश्ये ]। तेन येऽत्र नकारानुषक्तास्ते तृम्फादयः। ततृम्फ। तृफ्यात्।

मृड १२ सुखने। पृड १३ च। मृडति। पृडति। [ [1]ममर्ड ]।

शुन १४ गतौ। शुनति। [ शुशोन[1] ]।

इष १५ इच्छायाम्। 'इषगमी'ति छः। इच्छति। इयेष। 'तीषे'ति वेट्। एषिता। एष्टा। एषिष्यति। इष्यात्। ऐषीत्। ऐषिष्यत्।

कुट १६ कौटिल्ये। 'गाङ्कुटादी'ति ङित्त्वम्। चुकुटिथ। चुकोट। चुकुट। कुटिता। पुट १७ संश्लेषणे। पुटति। पुपोट। पुटिता।

स्फुट १८ विकसने। स्फुटति। पुस्फोट। स्फुटिता।

स्फुर १९ स्फुल २० सञ्चलने। स्फुरति। स्फुलति। स्फुरतिस्फुलत्योर्निर्निविभ्यः।८।३।७६। [ [2]निर्निविभ्यः परयोः स्फुरतिस्फुलत्योः सस्य ] षत्वं वा स्यात्। निःस्फुरति। निःष्फुरतीत्यादि।

णू २१ स्तवने। 'परिणूतगुणोदयः'। नुवति। [ [3]नुवतः। नुवन्ति]। नुनाव। नुविता॥ इति कुटादयः॥

---

प्रकारः—सादृश्यम्। अत्र=तुदादिगणे। नकारानुषक्ताः = अनुषक्तनकारवन्तः। तृम्फादयः = तृम्फसदृशाः। सादृश्यञ्च—नकारानुषक्तत्वेनेत्याशयः। तृम्फतीत्यत्र शस्य ङित्त्वादनिदितामिति नलोपे 'शे तृम्फादीना' मिति नुम्। अनुस्वारपरसवर्णौ। परिणूतेति। 'श्र्युकः किती'ति नेट्।

---

स्फुरतिस्फुलत्योः। निर्, नि, वि—इन उपसर्गों से परे जो 'स्फुर' और 'स्फुल' धातु, उनके सकार को षत्व हो, विकल्प करके।

---

१ क्वाचित्कः पाठोऽयम्।

२ शेषपरणमिदम्। 'एभ्यः परयोरनयोः सस्य' पा०।

३ क्वाचित्कः पाठोऽयम्।

टुमस्जो २२ शुद्धौ । मज्जति । ममज्ज । 'मस्जिनशो'रिति नुम् । *मस्जेरन्त्यात्पूर्वो नुम्वाच्यः । संयोगादिलोपः[1] । ममङ्क्थ । ममज्जिथ । मङ्क्ता । मङ्क्ष्यति । [ 'चोः कु'रिति कुत्वेन जस्य गः । तस्य 'खरि चे'ति कः । 'अनुस्वारस्य ययी'त्यनुस्वारस्य ङः ] । अमाङ्क्षीत् । अमाङ्क्ताम् । अमाङ्क्षुः । रुजो २३ भङ्गे । रुजति । [ रुरोज ] । रोक्ता । रोक्ष्यति । अरौक्षीत् ॥

भुजो २४ कौटिल्ये । [ [2]भुजति । बुभोज-इत्यादि ] रुजिवत् ।

विश २५ प्रवेशने । विशति । विवेश । वेष्टा । अविक्षत् ।

मृश २६ आमर्शने । आमर्शनं—स्पर्शः । [ [2]मृशति । ममर्श । म्रष्टा । मर्ष्टा । म्रक्ष्यति । मर्क्ष्यति । मृशतु । अमृशत् । मृशेत् । मृश्यात् । 'अनुदात्तस्य चर्दुपधे'त्यम् । 'स्पृशमृशे'ति च्लेः सिज्वा ] । अम्राक्षीत् । अमार्क्षीत् । [ 'शल इगुपधे'ति क्सः ] । अमृक्षत् ।

षद्लृ २६ विशरणगत्यवसादनेषु । [ [2]विशरणं—दुःखम् ] । [ [2]'पाघ्राध्मे'ति सीदादेशः । सीदति ] ।

---

मज्जतीति । सस्य श्चुत्वेन शः, तस्य जश्त्वेन जः । ममङ्क्थेति । अत्र मस्जेर्द्वित्वेऽभ्यासकार्ये 'ममस्ज्थ' इति स्थिते स्कोरिति सलोपे, जस्य कुत्वेन गकारे, मस्जिनशोरिति नुमि अनुस्वारे परसवर्णे गस्य चर्त्वे च ममङ्क्थेति रूपम् ।

अन्त्यात्पूर्वः = जकारात्पूर्वः, सकारात्परश्च । एतदभावे तु अकारात्परतो नुमि संयोगादित्वाऽभावात्सकारलोपो न स्यात् । रुजतीति । रुरोज । रुरोजिथ । रोक्ता । रोक्ष्यति । अरौक्षीत् , अरौक्ताम् , अरौक्षुः । विशतीति । विवेश । विवेशिथ । वेष्टा । वेक्ष्यति । अम्राक्षीदिति । 'अनुदात्तस्य चे'त्यम्विकल्पः । 'स्पृशमृशे'ति सिज्वा । सिजभावे—अमृक्षदित्यत्र 'शल इगुपधा'दिति क्सः ।

---

मस्जेरन्त्यात् । 'मस्ज्' धातु के अन्त्य अक्षर जकार से पूर्व नुम् हो ।

---

१ 'स्को'रिति सलोपः' पा० । २ क्वचित्कः पाठोऽयम् ।

[सदिरप्रतेः ।८।३।६६। निषीदति । न्यषीदत् । सदेः परस्य लिटि ।८।३।११८। सदेरभ्यासात्परस्य सस्य षत्वं न स्याल्लिटि । निषसाद । ससाद । सेदतुः । सेदुः । सेदिथ-ससत्थ । सत्ता । सत्स्यति । लृदित्त्वादङ्-असदत् ] ।

शद्लृ २७ शातने । शदेः शितः ।१।३।६०। शिद्भाविनोऽस्मात्तङानौ स्तः । शीयते । शीयताम् । अशीयत । शीयेत । शशाद । शत्ता । शत्स्यति । अशदत् । अशत्स्यत् ॥

कॄ २८ विक्षेपे । ॠत इद्धातोः ।७।१।१००। [ [1]ॠदन्तस्य धातोरङ्गस्य इत्स्यात् ] । किरति । * इत्त्वोत्त्वाभ्यां गुणवृद्धी विप्रतिषेधेन । [ [1]वृद्धिः ] । चकार । चकरतुः [ चकरुः । 'वृतो वा' ] । करिता । करीता । [ [1]करिष्यति । करीष्यति । 'हलि चे'ति दीर्घः ] ।

किरतौ लवने ।६।१।१४०। उपात्किरतेः सुट् स्याच्छेदनेऽर्थे[2] । उपस्किरति । *अडभ्यासव्यवायेऽपि । सुट्कात्पूर्व इति वक्तव्यम् ।

---

सीदतीति । 'पाघ्राध्मे'ति सीदादेशः । शीयत इति । पाघ्रेति शीयादेशः । अशददिति । लृदित्वादङ् ।

चकरतुरिति । 'ऋच्छत्यृता'मिति गुणः । करीतेति । 'वृतो वे'ति दीर्घः ।

---

शदेः शितः । शिद्भावी जो शद् धातु उससे 'तङ्' और 'आन' ( अर्थात् आत्मनेपद ) हो ।

ॠत इद्धातोः । अङ्ग संज्ञक (जो) दीर्घ ॠकारान्त धातु (उसके ॠकार) को इत्त्व हो ।

इत्त्वोत्त्वाभ्याम् । इत्त्व और उत्त्व की अपेक्षा से पूर्वविप्रतिषेध करके गुण और वृद्धि ही होते हैं ।

किरतौ लवने । 'उप से परे जो 'कॄ' धातु, उसको 'सुट्' आगम हो, छेदन अर्थ गम्यमान हो तो ।

अडभ्यासव्यवायेऽपि । अट् और अभ्यास के व्यवधान में भी 'उप' से परे जो 'कॄ' धातु, उसका जो ककार, उससे पूर्व 'सुट्' आगम हो ।

---

1 क्वाचित्कः पाठः । 2 'छेदेऽर्थे' पा० ।

उपास्किरत्। उपचस्कार। **हिंसायां प्रतेश्च** ।६।१।१४१। उपात्प्रतेश्च किरतेः सुट् [ [1]स्यात् ] हिंसायाम्। उपस्किरति। प्रतिस्किरति॥

गॄ २९ निगरणे। **अचि विभाषा** ।८।२।२१। गिरते रेफस्य लत्वं वा स्यादजादौ प्रत्यये परे। गिरति। गिलति। जगार। जगाल। जगरिथ। जगलिथ। गरिता। गरीता। गलिता। गलीता। प्रच्छ ३० ज्ञीप्सायाम्। 'ग्रहिज्ये'ति संप्रसारणम्। पृच्छति। पप्रच्छ। पप्रच्छतुः। पप्रच्छुः। प्रष्टा। प्रक्ष्यति। अप्राक्षीत्॥

[ इति परस्मैपदिनः ]॥

अथाऽऽत्मनेपदिनः।

[ [1]दृङ् आदरे। आद्रियते। आदद्रे। आदद्रिषे। आदर्त्ता। आदरिष्यते। धृङ्—अवस्थाने। ध्रियते। दध्रे ]।

मृङ् १ प्राणत्यागे। **म्रियतेर्लुङ्लिङोश्च** ।१।३।६१। लुङ्लिङोः, शितश्च प्रकृतिभूतान्मृङस्तङानौ, नान्यत्र। ङित्त्वं स्वरार्थम्। 'रिङ् शयग्लिङ्क्षु'। इयङ्। म्रियते। ममार। ममर्थ। मम्रिव। [[1]मम्रिम]। मर्त्ता। मरिष्यति। मृषीष्ट। अमृत। [ [1]अमरिष्यत् ]।

---

अप्राक्षीदिति। 'वदव्रजे'ति हलन्तलक्षणा वृद्धिः। 'व्रश्चे'ति छस्य षः। म्रियत इति। 'रिङ्शयग्लिङ्क्षु' इति रिङादेशः। ममर्थेति। ऋदन्तत्वान्नेट्। मम्रिमेति। क्रादिनियमादिट्।

---

हिंसायां प्रतेश्च। 'उप' और 'प्रति' उपसर्ग से परे जो कृधातु, उसको सुट् आगम हो, हिंसा अर्थ गम्यमान हो तो।

अचि विभाषा। 'गॄ' धातु के रेफ को लत्व हो, अजादि प्रत्यय परे रहते।

म्रियतेर्लुङ्। लुङ् लिङ् और शित् प्रत्यय की प्रकृतिभूत जो 'मृङ्' धातु, उससे ही तङ् और आन, (अर्थात् आत्मनेपद) हो। अन्यस्थल में मृङ् धातु से आत्मनेपद नहीं हो।

---

[1] क्वाचित्कः पाठः।

पृङ् २ व्यायामे। प्रायेणाऽयं 'व्याङ्' पूर्वः। व्याप्रियते। व्यापप्रे। व्यापप्राते। व्यापरिष्यते। 'ह्रस्वादङ्गा'दिति सिज्लोपः। व्यापृत। व्यापृषाताम्। जुषी ३ प्रीतिसेवनयोः। जुषते। जुजुषे। [जोषिता]। ओविजी ४ भयसञ्चलनयोः। प्रायेणायमुत्पूर्वः। उद्विजते। विज इट्।१।१।२। विजेः पर इडादिप्रत्ययो ङिद्वत् [स्यात्]। उद्विजिता। उद्विजिष्यते। ओलजी ४ ओलस्जी ५ व्रीडने। लजते। लेजे। लज्जते। ललज्जे॥

इति तुदादिः॥ ६॥

---

## अथ रुधादयः।

## [ अथ स्वरितेतः ]।

रुधिर् १ आवरणे। रुधादिभ्यः श्नम्।३।१।७८। [[1]रुधादिभ्यः श्नम् स्यात् कर्त्रर्थे सार्वधातुके परे]। शपोऽपवादः। [[2]मित्त्वादन्त्यादचः परः। नित्यत्वाद् गुणं बाधते]। रुणद्धि।

'श्नसोरल्लोपः'। [''झरो झरी'ति धलोपः। णत्वस्याऽसिद्धत्वादनुस्वारः। परसवर्णः। तस्याऽसिद्धत्वाण्णत्वं न। 'न पदान्ते'ति सूत्रेणाऽनुस्वारपरसवर्णयोरल्लोपो न स्थानिवत्]। रुन्द्धः। रुन्धन्ति।

---

रुधादिभ्य इति। रुधादिभ्यः श्नम् स्यात् कर्त्रर्थे सार्वधातुके परे। अयं मित्त्वादन्त्यादचः परो भवति। नित्यत्वाच्च लघूपधगुणं बाधते। रुन्ध्द इति। अत्र 'रुन्ध् तस्' इत्यवस्थायाम् 'अट् कुप्वा'ङिति णत्वस्याऽसिद्धत्वान्नश्चापदान्तस्येत्यनुस्वारे'ऽनुस्वारस्य ययी'ति परसवर्णे तस्याऽसिद्धत्वाण्णत्वं न।

---

विज इट्। विज् धातु से परे जो इडादि प्रत्यय, वह ङिद्वत् हो।

रुधादिभ्यः श्नम्। रुधादिगणपठित धातुओं से ( शप् का अपवाद ) 'श्नम्' प्रत्यय हो, कर्त्रर्थक सार्वधातुक परे रहते।

---

१ शेषपूरणलब्धमिदम्। २ एकत्रादर्शेऽयं पाठ उपलभ्यते।

रुणत्सि । रुन्द्धः । रुन्द्ध । रुणध्मि । रुन्ध्वः । रुन्ध्मः । रुन्धे । रुन्धाते । रुन्धते । रुन्त्से । रुन्धाथे । रुन्द्ध्वे । रुन्धे । रुन्ध्वहे । रुन्ध्महे । रुरोध । रुरुधे । रोद्धा । रोत्स्यति । रोत्स्यते । रुणद्धु । रुन्धात् । रुन्द्धाम् । रुन्धन्तु । रुन्धि । रुणधानि । रुणधाव । रुणधाम । रुन्द्धाम् । रुन्धाताम् । रुन्धताम् । रुन्त्स्व । रुणधै । रुणधावहै । रुणधामहै । अरुणत्-द् । अरुन्धाम् । अरुन्धन् । 'दश्चे'ति रुः । अरुणः । अरुणत्-द् । अरुन्धम् । अरुन्द्ध । [[1]अरुणधम् । अरुन्ध्व । अरुन्ध्म] । अरुन्द्ध । अरुन्धाताम् । अरुन्धत । [[1]अरुन्धाः । अरुन्धाथाम । अरुन्ध्वम् । अरुन्धि । अरुन्ध्वहि । अरुन्ध्महि । समानाश्रये आभीयत्वेन अल्लोपस्याऽसिद्धत्वादनिदितामिति नलोपो न ] । रुन्ध्यात् । रुन्धीत । रुध्यात् । रुत्सीष्ट । अरुधत् । अरौत्सीत् । [[1]'लिङ्सिचा'विति कित्त्वम्] । अरुद्ध । अरोत्स्यत् । अरोत्स्यत ।

भिदिर् २ विदारणे । [[1]भिनत्ति । भिन्ते ] । छिदिर् ३ द्वैधीकरणे । [छिनत्ति । छिन्ते] । युजिर् ४ योगे । [ युनक्ति । युङ्क्ते ] ।

रिचिर् ५ विरेचने । रिणक्ति । रिङ्क्ते । रिरेच । [रिरिचे] । रेक्ता । अरिणक् । अरिचत् । अरैक्षीत् । अरिक्त । विचिर् ६ पृथग्भावे । विनक्ति । विङ्क्ते । क्षुदिर् ७ संपेषणे । क्षुणत्ति । क्षुन्ते । क्षोत्ता । अक्षुदत् । अक्षौत्सीत् । अक्षुत्त ।

उच्छृदिर् ८ दीप्तिदेवनयोः । छृणत्ति । छृन्ते । चच्छर्द । 'सेऽसिची'ति वेट् । चच्छृदिषे । चच्छृत्से । छर्दिता । छर्दिष्यति । छर्त्स्यति । अच्छृदत् । अच्छर्दीत् । अच्छर्दिष्ट ॥

---

अरुणदिति । लङि हल्ङ्यादिना तिपस्तकारस्य लोपः, धस्य चर्त्वविकल्पः ।

अरुण इति । सिपः सकारस्य 'हल्ङ्याभ्य' इति लोपे 'दश्चे'ति रुत्वविकल्पः ।

रुत्सीष्टेति । 'लिङ्सिचा'विति कित्त्वम् । अरुधदिति । इरित्वादङ् वा ।

---

१ क्वचिदेवाऽयं पाठो दृश्यते, न सर्वत्र ।

उतृदिर् ९ हिंसाऽनादरयोः । तृणत्ति । तृन्द्धे ।

अथ परस्मैपदिनः ।

कृती १० वेष्टने । कृणत्ति । [ [1]आर्द्धधातुके तौदादिकवत् ]।

तृह ११ हिसि १२ हिंसायाम् । तृणह इम् ।७।३।९२। तृहः श्नमि कृते इम् स्याद्धलादौ पिति । तृणेढि । तृण्ढः । ततर्ह । तर्हिता । अतृणेट् । श्नान्नलोपः ।६।४।२३। [ [2]श्नमः परस्य नस्य लोपः स्यात् ]। हिनस्ति । जिहिंस । हिंसिता ।

उन्दी ३ क्लेदने । उनत्ति । उन्त्तः । उन्दन्ति । उन्दाञ्चकार । औनत् । औन्ताम् । औन्दन् । औनः । [ [1]औनत् ] । औनदम् ।

अञ्जू ४ व्यक्तिम्रक्षणकान्तिगतिषु । अनक्ति । अङ्क्तः । अञ्जन्ति । आनञ्ज । आनञ्जिथ । आनङ्क्थ । अञ्जिता । अङ्क्ता । अङ्ग्धि । अनजानि । आनक् ।

अञ्जेः सिचि ।७।२।७१। अञ्जेः सिचो नित्य मिट् । आञ्जीत् ।

तञ्चू १५ संकोचने । तनक्ति । तङ्क्ता । तञ्चिता ।

ओविजी १६ भयसञ्चलनयोः । विनक्ति । विङ्क्तः । 'विज इ'- ङिति ङित्त्वम् । विविजिथ । विजिता । अविनक् । अविजीत् ।

---

कृती । वेष्टनं-कर्त्तनम् । (कातना) । तृण्ढ इति । तृहो लटि तसि श्नमि णत्वे 'तृण ह् तस्' इत्यत्र श्नसोरित्यल्लोपे ढत्वधत्वष्टुत्वढलोपाः । श्नान्नलोपः । श्नमः परस्य नस्य लोपः स्यात् ।

उन्दाञ्चकारेति । 'इजादे'रित्याम् । आनञ्जिथेति । ऊदित्त्वादिड् वा ।

---

तृणह इम् । तृह धातु को श्नम् करने पर 'इम्' आगम हो, हलादि पित् परे रहते ।

श्नान्नलोपः । 'श्नम्' से परे जो नकार उसका लोप हो ।

अञ्जेः सिचि । अञ्जू धातुसे परे जो सिच् , उसको नित्य इट् आगम हो ।

---

१ क्वाचित्कः पाठः । २ शेषपूरणमेतत् ।

शिष्लृ १७ विशेषणे। शिनष्टि। शिंष्टः। शिंषन्ति। शिनक्षि। शिशेष। शिशेषिथ। शेष्टा। शेक्ष्यति। हेर्धिः। [[1]जश्त्वं। ष्टुत्वम्। 'झरो झरी'ति वा डलोपः। 'अनुस्वारस्य ययि परसवर्णः']। शिण्ढि। शिण्ड्ढि। शिनषाणि। अशिनट्। शिंष्यात्। शिष्यात्। लृदित्त्वादङ्। अशिषत्। अशेक्ष्यत्।

एवं—पिष्लृ ८ संचूर्णने। [[1]पिनष्टि। पिपेष]। भञ्जो ९ आमर्दने। भनक्ति। बभञ्ज। बभञ्जिथ। बभङ्क्थ। भङ्क्ता।

भुज १० पालनाऽभ्यवहारयोः। भुनक्ति। [बुभोज[1]]। भोक्ता। भोक्ष्यति। भुनक्तु। अभुनक्। भुजोऽनवने।१।३।६६। [भुजोऽनवने[2]] तङानौ स्तः। ओदनं भुङ्क्ते। अनवने किम्? महीं भुनक्ति।

[ अथाऽऽत्मनेपदिनस्त्रयः ]।

ञिइन्धी ११ दीप्तौ। इन्द्धे। इन्धाते। इन्धते। इन्त्से। इन्धाञ्चक्रे। इन्धिता। इन्द्धाम्। इन्धाताम्। इन्धताम्। इनधै। ऐन्ध। ऐन्धाताम्। ऐन्धत। ऐन्द्धाः।

विद २२ विचारणे। विन्त्ते। वेत्ता।

[खिद[1] ३ दैन्ये। खिन्त्ते। चिखिदे। खेत्ता। खेत्स्यते। खिन्त्ताम्। अखिन्त्त ]॥

❋ इति रुधादिः॥ ७॥ ❋

---

आञ्जीदिति। अत्र ऊदिल्लक्षणे वैकल्पिके इटि प्राप्ते 'अञ्जेः सिची'ति नित्याऽर्थोऽयमारम्भः। शिनक्षीति। 'षढोः कः सि'। शिण्ड्ढीति। हेर्धिः, जश्त्वं, ष्टुत्वम्, 'झरो झरी'ति वा डकारलोपः। अनुस्वारपरसवर्णौ। शिण्ढि। शिण्ड्ढि। अशिषदिति। लृदित्त्वादङ्। अभ्यवहारः = भोजनम्। अनवने = पालनभिन्ने–भोजनेऽर्थे। भुनक्ति = पालयतीत्यर्थः। इति रुधादयः।

---

तनादिकृञ्भ्य उः। तनादिगणपठित धातु और कृञ् धातु से ( शप् का अपवाद ) 'उ' प्रत्यय हो, कर्त्रर्थक सार्वधातुक परे रहते।

---

१ असार्वत्रिकोऽयं पाठः। २ शेषपूरणमेतत्।

## अथ तनादयः ।

## [ अथ स्वरितेतो, ञितश्च—उभयपदिनः ] ॥

तनु १ विस्तारे । तनादिकृञ्भ्य उः ।३।१।७९। [ [1]तनादेः, कृञश्च उः प्रत्ययः स्यात्कर्त्रर्थे सार्वधातुके ]। तनोति । तनुते । ततान । तेने । तनिता । तनिष्यति । तनिष्यते । तनोतु । तनुताम् । अतनोत् । अतनुत । तनुयात् । तन्वीत । तन्यात् । तनिषीष्ट । अतनीत् । अतानीत् ।

तनादिभ्यस्तथासोः ।२।४।७९। तनादेः सिचो वा लुक् [स्या]-त्तथासोः । 'अनुदात्तोपदेशे'ति नलोपः । अतत । अतनिष्ट । अतथाः । अतनिष्ठाः । अतनिष्यत् । अतनिष्यत ।

षणु २ दाने । सनोति । सनुते । 'ये विभाषे'त्यात्वम् । सायात् । सन्यात् । जनसनखनां सञ्झलोः ।६।४।४२। एषामाकारो [ऽन्तादेशः स्या—]ज्झलादौ सनि, झलादौ क्ङिति च । असात । असनिष्ट । असाथाः । असनिष्ठाः ।

---

तनादीति । कर्त्रर्थे सार्वधातुके परे तनादिभ्यः, कृञश्च उप्रत्ययः स्या-त्स्वार्थे । तनु इति । अत्र 'उतश्च प्रत्यया'दिति हेर्लुक् । अतनीदिति । 'अतो हलादे'रिति वृद्धिविकल्पः ।

तथासोरिति । अत्र थासा साहचर्यादेकवचनं तशब्दो गृह्यते, नतु मध्यम-पुरुषबहुवचनस्य ग्रहणं, तेनेह न-यूयमतनिष्ट । अतनिष्टेति । लुगभावे वलादि-लक्षण इट् । अतत-अतनिष्ट, अतनिषाताम्, अतनिषत । अतथाः—अतनिष्ठाः, अतनिषाथाम्, अतनिढ्वम् । अतनिषि, अतनिष्वहि, अतनिष्महीति रूपाणि ।

---

तनादिभ्यस्तथासोः । तनादि से परे जो सिच्, उसका लुक् हो, विकल्प करके, त और थास् प्रत्यय परे रहते ।

जनसनखनां । जन् सन् और खन् धातु को आकार अन्तादेश हो, झलादि सन् और झलादि कित् ङित् प्रत्यय परे रहते ।

---

१ शेषपूरणमिदम् ।

क्षणु ३ हिंसायाम्। क्षणोति। क्षणुते। 'ह्म्यन्ते'ति न वृद्धिः। अक्षणीत्। अक्षत। अक्षणिष्ट। अक्षथाः। अक्षणिष्ठाः।

क्षिणु ४ च। [1]उप्रत्यये लघूपधगुणो वा। क्षिणोति। क्षेणोति। क्षेणिता। अक्षेणीत्। अक्षित। अक्षेणिष्ट।

तृणु ५ अदने। तृणोति। तर्णोति। तृणुते। तर्णुते।

[ [2]घृणु ६ दीप्तौ। घृणोति। घर्णोति ]।

डुकृञ् ७ करणे। करोति। 'अत उत्सार्वधातुके'। कुरुतः। 'हलि चे'ति दीर्घे प्राप्ते—। न भकुर्छुराम् ।८।२।७९। भस्य,कुर्छुरोश्चोपधाया न दीर्घः।कुर्वन्ति। नित्यं करोतेः ६।४।१०८। करोतेः प्रत्ययोकारस्य नित्यं लोपो, म्वोः। कुर्वः। कुर्मः। कुरुते। चकार। चकर्थ। चकृव। चकृम। चक्रे। कर्ता। करिष्यति। करिष्यते। करोतु। कुरुताम्। अकरोत्। अकुरुत। ये च ।६।४।१०९। कृञ उलोपो, यादौ प्रत्यये। कुर्यात्। कुर्वीत। क्रियात्। कृषीष्ट। अकार्षीत्। अकृत। अकरिष्यत्। अकरिष्यत।

---

अक्षणीदिति। 'अतो हलादे' रिति वृद्धिरत्र प्राप्ता, ह्म्यन्तेति निषिद्धा। चकर्थेति। क्रादिनियमान्नेट्। करिष्यतीति। 'ऋद्धनो' रितीट्। कृषीष्टेति। 'उश्चे'ति किस्वम्। अकार्षीदिति। 'सिचि वृद्धिः'रिति वृद्धिः। अकृतेति। 'ह्रस्वादङ्गा'दिति सिज्लोपः। 'उश्चे'ति किस्वम्।

---

न भकुर्छुराम्। रेफ वकारान्त जो भसञ्ज्ञक, और कुर् और छुर् इनकी उपधा को दीर्घ नहीं हो।

नित्यं करोतेः। 'कृ' धातु का जो प्रत्यय सम्बन्धी उकार, उसका नित्य लोप हो, मकार और वकार परे रहते।

ये च। कृञ् धातु के प्रत्यय सम्बन्धी उकार का लोप हो, यकारादि प्रत्यय परे रहते।

---

1 'उप्रत्ययनिमित्तो' पा०। 2 लिखितेषु नास्ति।

**संपरिभ्यां करोतौ भूषणे।६।१।१३७। समवाये च ।६।१।१३८।** [ [1]आभ्यां परस्य करोतेः ] सुट् [ [1]भूषणे, सङ्घाते चार्थे ]। संस्करोति। अलङ्करोतीत्यर्थः। संस्कुर्वन्ति। सङ्घीभवन्तीत्यर्थः। संपूर्वस्य क्वचिद्-भूषणेऽपि सुट्। 'संस्कृतं भक्षाः' इति ज्ञापकात्।

**उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु च ।६।१।१३९।** कृञः सुट् [स्या] त्प्रागुक्तयोरर्थयोः। प्रतियत्नो–गुणाधानम्। विकृतमेव वैकृतं–विकारः। वाक्याध्याहारः–आकांक्षितैकदेशपूरणम्। उपस्कृता कन्या। उपस्कृता ब्राह्मणाः। एधोदकस्योपस्कुरुते। उपस्कृतं भुङ्क्ते। उपस्कृतं ब्रूते।

[ अथ द्वावनुदात्तेतौ ]॥

वनु १ याचने। वनुते। ववने। मनु २ अवबोधने। मनुते। मेने। मनिता। मनिष्यते। मनुताम्। अमनुत। मन्वीत। मनिषीष्ट॥

※ इति तनादिः ।८।। ※

---

उपस्कृतेति। अलङ्कृतेत्यर्थः। उपस्कृता ब्राह्मणा इति। समुदिता इत्यर्थः। एधः = काष्ठं, दकस्य = जलस्य, उपस्कुरुते = गुणमाधत्ते। उपस्कृतं भुङ्क्तइति। विकृतं यथा स्यात्तथा भुङ्क्ते इत्यर्थः। उपस्कृतं ब्रूत इति। वाक्याध्याहारेण ब्रूते इत्यर्थः। इति तनादयः।

---

संपरिभ्यां करोतौ। समवाये च। सम् और परिपूर्वक जो कृञ् धातु उसको सुट् आगम हो, भूषण और सङ्घात अर्थ में।

उपात्प्रतियत्न। 'उप'से परे जो 'कृञ्' धातु उसको सुट् आगम हो, प्रतियत्न आदि अर्थों में, तथा भूषण और सङ्घात अर्थ में भी।

---

१ लिखिते नास्ति।

## अथ क्र्यादयः ॥

**डुक्रीञ् १ द्रव्यविनिमये । क्र्यादिभ्यः श्ना ।३।१।८१।** [क्र्यादिभ्यः श्ना स्यात्, कर्त्रर्थे सार्वधातुके परे ]। शपोऽपवादः। क्रीणाति। 'ई हल्यघोः' । क्रीणीतः। '**श्नाभ्यस्तयोरातः**' । क्रीणन्ति । क्रीणासि। क्रीणीथः । क्रीणीथ । क्रीणामि । क्रीणीवः । क्रीणीमः । क्रीणीते । क्रीणाते । क्रीणते । क्रीणीषे । क्रीणाथे । क्रीणीध्वे । क्रीणे । क्रीणीवहे । क्रीणीमहे । चिक्राय । चिक्रियतुः । चिक्रियुः । चिक्रयिथ । चिक्रेथ । चिक्रिये । क्रेता । क्रेष्यति । क्रेष्यते ॥ क्रीणातु । क्रीणीतात् । क्रीणीताम् ॥ क्रीणीताम् । क्रीणाताम् । क्रीणताम् ॥ क्रीणीयात् । क्रीणीत । क्रीयात् । क्रेषीष्ट । अक्रैषीत् । अक्रेष्ट । अक्रेष्यत् । अक्रेष्यत ॥

प्रीञ् २ तर्पणे, कान्तौ च । प्रीणाति । प्रीणीते ।

श्रीञ् ३ पाके । श्रीणाति । श्रीणीते ।

मीञ् ४ हिंसायाम् । प्रमीणाति । प्रमीणीते । '**हिनुमीना**' इति णत्वम् । 'मीनातीत्यात्वम् । ममौ । मिम्यतुः । ममिथ । ममाथ । मिम्ये । माता । मास्यति । मीयात् । मासीष्ट । अमासीत् । अमासिष्टाम् । अमास्त ।

षिञ् ५ बन्धने । सिनाति । सिनीते । सिषाय । सिष्ये । सेता ॥

---

क्र्यादिभ्य इति । क्र्यादिभ्यः श्ना स्यात् कर्त्रर्थे सार्वधातुके परे इत्यर्थः । क्रीणन्तीति । ईत्वात्पूर्वं झेरन्तादेशः परत्वान्नित्यत्वादन्तरङ्गत्वाच्च । ततः श्नसोरित्याल्लोपः । एवं क्रीणते इत्यादौ झस्याऽदादेशेऽपि बोध्यम् । क्रीणीथ इति । 'ई हल्यघो'रितीत्वम् । क्रीणत इति । 'श्नाभ्यस्तयो' रित्यालोपः । चिक्रियतुरिति । अचि श्नुधात्वितीयङ् । चिक्रेथेति । अजन्तत्वाद् भारद्वाजनियमाद्वेट् । अमासीदिति । यमरमेतीट्सकौ ।

---

क्र्यादिभ्यः श्ना । क्र्यादिगणपठित धातुओं से (शप् का अपवाद) 'श्ना' प्रत्यय हो, कर्त्रर्थक सार्वधातुक परे रहते ।

स्कुञ् ६ आप्रवणे। स्तन्भु-स्तुन्भु-स्कन्भु-स्कुन्भु-स्कुञ्भ्यः श्नुश्च।३।१।८२। [ [1]स्तन्भ्वादिभ्यः श्नुः स्यात् ]। चात्-श्ना। स्कुनोति। स्कुनुते। स्कुनाति। स्कुनीते। चुस्काव। चुस्कुवे। स्कोता। अस्कौषीत्। अस्कोष्ट। स्तन्भ्वादयश्चत्वारः सौत्राः। सर्वे रोधनार्थाः परस्मैपदिनः।

हलः श्नः शानज्झौ।३।१।८३। [ [2]हलः परस्य श्नः शानजादेशः स्याद्धौ परे]। स्तभान। जॄ-स्तम्भु-म्रुचु-म्लुचु-ग्रुचु-ग्लुचु-ग्लुञ्चु-श्विभ्यश्च।३।१।५८। [ [1]एभ्यः ] च्लेरङ्। व्यष्टभत्। अस्तम्भीत्।

युञ् ७ बन्धने। युनाति। युनीते। योता।

क्नूञ् ८ शब्दे। क्नूनाति। क्नूनीते। क्नविता।

द्रूञ् ९ हिंसायाम्। द्रूणाति। द्रूणीते।

पूञ् १० पवने। प्वादीनां ह्रस्वः।७।३।८०। पूञ् लूञ् स्तॄञ् कॄञ् वॄञ् धूञ् शॄ पॄ वॄ भॄ मॄ दॄ जॄ झॄ धॄ नॄ कॄ ॠ गॄ ज्या री ली व्ली प्ली एषां चतुर्विंशतेर्ह्रस्वः [ स्यात् ] शिति। पुनाति। पुनीते। पविता।

लूञ् ११ छेदने। लुनाति। लुनीते।

---

आप्रवणम्—उत्प्लवनमुद्धरणञ्च। अस्कौषीदिति 'सिचि वृद्धि'रिति वृद्धिः। स्तभानेति। 'अतो हे' रित्यारम्भसामर्थ्यात्सन्निपातपरिभाषाया अप्रवृत्तेरतो हेरिति हेर्लुक्। अतएव जहीत्यत्र हिलोपवारणायेयं परिभाषा नोपन्यस्ता।

---

स्तन्भुस्तुन्भु। 'स्तन्भु' आदि धातुओं से 'श्नु' प्रत्यय हो और चकार से 'श्ना' प्रत्यय भी हो।

जॄस्तम्भु। 'जॄ' आदि धातुओं से परे जो 'च्लि', उसको अङ् आदेश हो विकल्प करके।

प्वादीनां ह्रस्वः। पूञ् आदि २४ धातुओं को ह्रस्व हो, शित्प्रत्यय परे रहते।

---

१ शेषपूरणमिदम्। २ शेषपूरणमिदं सूत्राक्षरलभ्यम्।

स्तॄञ् १२ आच्छादने। स्तृणाति। स्तृणीते। तस्तार। तस्तरतुः। तस्तरे। स्तरिता। स्तरीता। स्तृणीयात्। स्तृणीत। 'ॠत इद्धातोः'। स्तीर्यात्। स्तरिषीष्ट। स्तीर्षीष्ट॥ 'सिचि च परस्मैपदेषु'। अस्तारीत्। अस्तारिष्टाम्। अ॰तारिषुः। अस्तरिष्ट। अस्तीर्ष्ट।

कॄञ् १३ हिंसायाम्। कृणाति। कृणीते। चकार। चकरे। वॄञ् १४ वरणे। वृणाति। वृणीते। ववार। ववरे। वरिता। वरीता। 'उदोष्ठ्ये'त्युत्वम्। वूर्यात्। वरिषीष्ट। वूर्षीष्ट। अवारीत्। अवारिष्टाम्। अवरिष्ट। अवरीष्ट। अवूर्ष्ट।

धूञ् १५ कम्पने। धुनाति। धुनीते। दुधविथ। दुधोथ। दुधुविव। धोता। धविता। 'स्तुसुधूञ्भ्यः परस्मैपदेषु'। अधावीत्। अधविष्ट। अधोष्ट।

ग्रह १६ उपादाने। गृह्णाति। गृह्णीते। जग्राह। जगृहे। ग्रहोऽलिटि दीर्घः॥७।२।३७॥ एकाचो [1]ग्रहो विहितस्येटो दीर्घो, न तु लिटि। ग्रहीता। गृह्णातु। गृहाण। गृह्यात्। ग्रहीषीष्ट। 'ह्म्यन्ते'ति न वृद्धिः। अग्रहीत्। अग्रहीष्टाम्। अग्रहीष्ट। अग्रहीषाताम्।

---

तस्तरतुरिति। 'ऋच्छत्यॄता'मिति गुणः। स्तरिषीष्टेति। 'न लिङी'ति दीर्घनिषेधः। स्तीर्षीष्टेति। 'उश्चे'ति कित्त्वम्। इत्त्वे रपरत्वे 'हलि चे'ति दीर्घः। सिचि चेति। अनेन दीर्घनिषेधः।

गृहाणेति। 'हलः श्नः शानज्झा'विति श्नः शानजादेशः। 'अतो हे'रिति

---

ग्रहोऽलिटि। एकाच् 'ग्रह्' धातु से विहित जो इट् उसको दीर्घ हो। परन्तु लिट् सम्बन्धी इट् को दीर्घ नहीं हो।

---

१ ग्रहेर्विहितस्य' पा०।

[ अथ परस्मैपादिनः ] ।

कुष १ निष्कर्षे । कुष्णाति । कोषिता ।

निरः कुषः ।७।२।४६। [ [1]निरः कुषो ] वलादेरार्द्धधातुकस्येड् वा [2]स्यात् । निष्कोषिता । निष्कोष्टा । निरकोषीत् । 'शल इगुपधा'दिति क्सः । निरकुक्षत् । अश २ भोजने । अश्नाति । आश । अशिता । अशिष्यति । अश्नातु । अशान । ज्ञा ३ अवबोधने । 'ज्ञाजनो'रिति जादेशः । जानाति । जज्ञौ । ['[3]वाऽन्यस्य'त्येत्त्वम् । ज्ञेयात । ज्ञायात् ] ।

पॄ ४ पालनपूरणयोः । पृणाति । शॄ ५ हिंसायाम् । शृणाति । 'शॄदॄप्रां ह्रस्वो वे'ति ह्रस्वपक्षे यण् । शश्रतुः । शशरतुः । दॄ ६ विदारणे । दृणाति । दद्रतुः । ददरतुः । जॄ ७ वयोहानौ । जृणाति । मुष ८ स्तेये । मुष्णाति । मोषिता ॥ पुष ९ पुष्टौ । पुष्णाति । पोषिता ।

बन्ध १० बन्धने । बध्नाति । बबन्ध । बबन्धिथ । बबन्द्ध । बन्द्धा । भन्त्स्यति । अभान्त्सीत् । अबान्धाम् । अभान्त्सुः ॥ क्लिशू ११ विबाधने । क्लिश्नाति । क्लेशिता । क्लेष्टा । अक्लेशीत् । अक्लिक्षत् ।

[ अथात्मनेपदिनः ] ।

वृङ् संभक्तौ । वृणीते । वव्रे । ववृषे । ववृढ्वे । वरिता । वरीता । अवरिष्ट । अवरीष्ट । अवृत ॥

* इति क्र्यादिः ॥ ९ ॥ *

---

देर्लुक । भन्त्स्यतीति । 'एकाचो बशो भ'षिति भष्भावः । अभान्त्सीदिति । हलन्तलक्षणा वृद्धिः । विबाधनं—पीडनम् ।

---

निरःकुषः । 'निर्' उपसर्ग से परे जो 'कुष्' धातु, उससे परे जो वलादि आर्द्धधातुक, उसको 'इट्' आगम हो, विकल्प करके ।

---

१ शेषपूरणमेतत् । २ क्वाचित्कमेतत् ।

## अथ चुरादिप्रकरणम् ।

चुर १ स्तेये । सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्म-वर्णचूर्णचुरादिभ्यो णिच् ।३।१।२५। एभ्यो णिच् स्यात् [1]स्वार्थे । 'पुगन्ते'ति गुणः । 'सनाद्यन्ता' इति धातुत्वम् । तिप्शबादि । गुणाऽया-देशौ । चोरयति ।

णिचश्च ।१।३।७४। णिजन्तादात्मनेपदं [स्यात्] कर्तृगामिनि क्रियाफले । चोरयते । चोरयामास । चोरयिता । चोर्यात् । चोरयिषीष्ट । 'णिश्री'ति चङ् । 'णौ चङी'ति ह्रस्वः । [[2]'चङी'ति] द्वित्वम् । 'हलादिः शेषः' । 'दीर्घो लघो'रित्यभ्यासस्य दीर्घः । अचूचुरत् । अचूचुरत ।

चिति २ स्मृत्याम् । चिन्तयति । अचिचिन्तत् । 'चिन्ते'ति पठितव्ये इदित्करणं णिचः पाक्षिकत्वे लिङ्गम् । तेन 'चिन्त्या'दित्यादौ नलोपो न । चिन्तति । चिन्तेदित्यादि ।

यत्रि ३ संकोचे । यन्त्रयति । 'यन्त्रे'ति पठितुं [3]शक्यम् । यत्तु

---

स्वार्थ इति । अनिर्दिष्टार्थत्वादेतल्लाभः । 'अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे' इत्युक्तेः । चूर्णान्तानां प्रातिपदिकतया 'प्रातिपदिकाद्धात्वर्थे' इत्येव णिचि सिद्धे तेषामिह ग्रहणं प्रपञ्चार्थम् । चुरादीनान्तु स्वार्थे विधानार्थमिह ग्रहणमित्यपि बोध्यम् । लिङ्गमिति । इदित्त्वं हि णिजभावे आशीर्लिङि 'चिन्त्या'दित्यादौ 'अनिदिता'मिति नलोपाभावायैव । नलोपाभावस्तु चिन्तेति पाठेऽपि सम्भवति, णिचः क्ङित्त्वाभावेन तस्य स्थानिवत्त्वान्नलोपाऽप्राप्तेः । एवञ्च चिन्तेति पठितव्ये इदित्करणं णिचः पाक्षिकत्वे लिङ्गम् ।

---

सत्यापपाश । 'सत्याप' आदि शब्दों से, तथा चुरादिगण पठित धातुओं से णिच् प्रत्यय हो, स्वार्थ में ।

णिचश्च । णिजन्त से आत्मनेपद हो, कर्तृगामी क्रियाफल में ।

---

१ 'स्वार्थे' इत्येव क्वचिद्वृत्तिः । २ लिखिते नास्ति । ३ 'युक्तम्' पा० ।

'इदित्करणाद्यन्त्रती'ति माधवेनोक्तं, तच्चिन्त्यम् ।

एवं-कुद्रि ४ अनृतभाषणे ।

तत्रि ५ कुटुम्बधारणे । मत्रि ६ गुप्तपरिभाषणे । तन्त्रयते । मन्त्रयते । एतौ आत्मनेपदिनौ ।

[1]स्फुडि ७ परिहासे । [2]स्फुण्डयति ।

पीड ८ अवगाहे । भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम् ।७।४।३। एषामुपधाया ह्रस्वो वा, चङ्परे णौ । अपीपिडत् । अपिपीडत् ।

प्रथ ९ प्रख्याने । प्रथयति । अत्स्मृदृत्वरप्रथम्रदस्तॄस्पशाम् ।७।४।९५। एषामभ्यासस्याऽकारश्चङ्परे णौ । इत्त्वापवादः । अपप्रथत् ।

पृथ १० प्रक्षेपे । पर्थयति । उर्ऋत् ।७।४।७। उपधाया ऋवर्णस्य ऋद्वा, चङ्परे णौ । इररारामपवादः । अपीपृथत् । अपपर्थत् ।

[3]लुण्ठ ११ स्तेये । [3]लुण्ठयति । अलुलुण्ठत् । तड १२ आघाते । ताडयति । अतीतडत् ।

मडि १३ भूषायां, हर्षे च । मण्डयति । अममण्डत् ।

---

चिन्त्यमिति । यन्त्रादीनां संयोगान्ततया यन्त्रेति पाठेऽपि णिजभावेऽपि यन्त्र्यादित्यादौ नकारस्यानुपधात्वेन नलोपाप्रसक्तेरिदित्त्वस्य तत्र निष्फलत्वात् । एवञ्च माधवोक्तं चिन्त्यमेव । ज्ञापकत्वस्यानुपपत्तेः ।

---

भ्राजभास । भ्राज् आदि धातुओं की उपधा को ह्रस्व हो विकल्प करके, चङ् परक 'णि' परे रहते ।

अत्स्मृदृत्वर । 'स्मृ' आदि धातुओं के अभ्यास को अकार अन्तादेश हो, चङ् परक 'णि' परे रहते ।

उर्ऋत् । उपधा के ऋवर्ण को ऋत् आदेश हो, विकल्प करके, चङ् परक 'णि' परे रहते ।

---

१ 'स्फुटि' पा० । २ 'स्फुण्टयति' पा० । ३ 'लुण्ट' पा० ।

भडि १४ कल्याणे। भण्डयति। अबभण्डत्। छर्द १५ वमने। छर्दयति। अचच्छर्दत्। चुद १६ संचोदने। चोदयति। अचूचुदत्।

पाल १७ रक्षणे। पालयति। अपीपलत्। पूज १८ पूजायाम्। पूजयति। अपूपुजत्।

कृत १९ संशब्दने। उपधायाश्च ।७।१।१०१। [1]धातोरुपधाया ऋत इत्। रपरत्वम्। 'उपधायां च' इति दीर्घः। कीर्त्तयति। अचीकृतत्। अचिकीर्त्तत्। म्लेछ २० अव्यक्तायां वाचि। म्लेच्छयति। अमिम्लेच्छत्।

ईड २१ स्तुतौ। ईडयति। [ ऐडिडत्[2] ]। पिडि २२ सङ्घाते। पिण्डयति॥ रुष २३ रोषे। रोषयति। अरूरुषत्। तुल २४ उन्माने। तोलयति। अतूतुलत्॥ शुल्ब २५ माने। शुल्बयति। अशुशुल्बत्। घुषिर् २६ विशब्दने। घोषयति। अजूघुषत्।

पट २७ पुट २८ लुट २९ तुजि ३० मिजि ३१ पिजि ३२ लुजि ३३ भजि ३४ लघि ३५ त्रसि ३६ पिसि ३७ कुसि ३८ दसि ३९ कुशि ४० घट ४१ घटि ४२ बृहि ४३ बर्ह ४४ बल्ह ४५ गुप ४६ धूप ४७ विछ ४८ चीव ४९ पुथ ५० लोकृ ५१ लोचृ ५२ णद ५३ कुप ५४ तर्क ५५ वृतु ५६ वृधु ५७ भाषार्थाः। पाटयति। पोटयति। तुञ्जयति। एवं परेषाम्। घाटयति। घण्टयति।

---

सञ्चोदनं-प्रेरणम्। उन्मानं-तोलनम्। (तोलना)। विशब्दनं=प्रतिज्ञानम्। भाषार्थाः—भाषणार्थाः।

---

उपधायाश्च। अङ्गसञ्ज्ञक धातु के उपधाभूत दीर्घ ऋकार को इस्व हो।

---

१ 'धातो ऋत इत्' पा०।　　२ लिखितेषु नास्ति।

**नाऽग्लोपिशास्वृदिताम्** ।७।४।२। णिच्यग्लोपिनः, शास्तेर्ऋदितां चोपधाया ह्रस्वो न, चङ्परे णौ । अलुलोकत् । अलुलोचत् । वर्त्तयति । वर्द्धयति ।

(ग०) **आ धृषाद्वा** । इत ऊर्ध्वं विभाषितणिचो, धृषधातुमभिव्याप्य । युज ५८ पृच ५९ संयमने । योजयति । योजति । अयौक्षीत् । पर्चयति । पर्चति । पर्चिता । अपर्चीत् ।

अर्च ६० पूजायाम् । [ [1]अर्चयति ] । षह ६१ मर्षणे । साहयति । 'स एवायं नागः सहति कलभेभ्यः परिभवम्' ॥

वृञ् ६२ वरणे । वारयति । [ [1]वारयते ] । वरति । वरते ।

जॄ ६३ वयोहानौ । जारयति । जरति । शिष ६४ असर्वोपयोगे । शेषयति । शेषति । शेष्टा । अशिक्षत् ।

तप ६५ दाहे । तापयति । तपति । तप्ता ।

तृप ६६ तृप्तौ । तर्पयति । तर्पति । हिसि ६७ हिंसायाम् । हिंसयति । हिंसति । अर्ह ६८ पूजायाम् । [ [1]अर्हयति ] ।

छद ६९ अपवारणे । छादयति । छदति । छदते ।

धूञ् ७० कम्पने । * **धूञ्प्रीञोर्नुक्** । [2]णौ । धूनयति । धवति । धवते ।

---

विभाषितणिचः = वैकल्पिकणिच्काः । अपवारणम् = आच्छादनम् ।

---

नाऽग्लोपि। णिच् परे रहते जो अग्लोपी धातु,और शास् धातु और ऋदित् धातु, उनकी उपधा को ह्रस्व नहीं हो, चङ् परक 'णि' परे रहते ।

धूञ्प्रीञोर्नुक्। धूञ् और प्रीञ् धातु को नुक् आगम हो, णिच् परे रहते।

---

१ क्वचिदेव दृश्यते ।

२ "णावित्यधिकृत्य धूञ्प्रीञोर्नुग्वक्तव्यः" इति क्वचित्पाठः ।

[ [1]केचित्तु 'धूञ्प्रीणोः'रिति पठित्वा प्रीणातिसाहचर्याद् धूनातेरेव नुकमाहुः। धावयति।

अयं स्वादौ, क्र्यादौ, तुदादौ च। स्वादौ—ह्रस्वश्च। तथा च कविरहस्ये—

'धूनोति चम्पकवनानि' धुनोत्यशोकं,
चूतं धुनाति, धुवति स्फुटिताऽतिमुक्तम्।
वायुर्विधूनयति चम्पकपुष्परेणून्,
यत्कानने धवति चन्दनमञ्जरीश्च' ]॥

प्रीञ् ७१ तर्पणे। प्रीणयति। प्रीणयते। प्रयति। प्रयते। वच ७२ परिभाषणे। वाचयति। वचति। वक्ता। अवाक्षीत्।

मान ७३ पूजायाम्। मानयति। मानति। मानिता।

भू ७४ प्राप्तौ। आत्मनेपदी। भावयते। भवते। णिच्संनियोगेनैवात्मनेपदमित्येके। भवति। मार्ग ७५ अन्वेषणे।

धृष ७६ प्रसहने। धर्षयति। धर्षति।

## अथाऽदन्ताः।

कथ ७७ वाक्यप्रबन्धे। अल्लोपः। **अचः परस्मिन्पूर्वविधौ** ।१।१।५७। परनिमित्तोऽजादेशः स्थानिवत् स्यात्, स्थानिभूतादचः पूर्वत्वेन दृष्टस्य विधौ कर्त्तव्ये। इति स्थानिवत्त्वान्नोपधावृद्धिः। कथयति। अग्लोपित्वाद्दीर्घसन्वद्भावौ न। अचकथत्।

गण ७८ संख्याने। गणयति। **ई च गणः** ।७।४।९७। गणेरभ्यासस्य ईत्स्यात्, चादत्, चङ्परे णौ। अजीगणत्। अजगणत्।

---

मार्गेति। मार्गयति। मार्गति। प्रसहनम्—अभिनवः।

---

अचः परस्मिन्। परनिमित्त जो अजादेश वह स्थानिवत् हो, यदि स्थानिभूत अच् से पूर्वत्वेन जो दृष्ट है, उसको कार्य कर्त्तव्य हो तो।

ई च गणः। गण धातु के अभ्यास को ईत्व हो और चात्-अत् भी हो, चङ् परक 'णि' परे रहते।

---

१ द्वित्रेष्वादर्शेष्वयं पाठो दृश्यते।

रच ७९ प्रतियत्ने । रचयति । अररचत । कल ८० गतौ, संख्याने च । कलयति । अचकलत् । मह ८१ पूजायाम् । महयति ।

सूच ८२ पैशून्ये । सूचयति । अषोपदेशत्वान्न षः । असुसूचत् ।

कुमार ८३ क्रीडायाम । कुमारयति । अचुकुमारत् ।

ऊन ८४ परिहाणे । ऊनयति । 'ओः पुयण्जी'ति सूत्रे 'पययो'रिति वक्तव्ये वर्ग-प्रत्याहार-ज-ग्रहो लिङ्ग-'णिच्यच आदेशो न [1]स्याद् द्वित्वे कर्त्तव्ये' इति । यत्र द्विरुक्तावभ्यासोत्तरखण्डस्याद्योऽच्

---

प्रतियत्नः—रचना । अररचदिति अग्लोपित्वान्न दीर्घसन्वद्भावौ ।

ऊनेति । अस्माण्णौ चङि द्वित्वात्परत्वादन्तरङ्गत्वाच्च अल्लोपे णिचा सह निशब्दस्य 'अजादे'रिति द्वित्वे, 'औनिन'दित्यनिष्टं रूपं प्रसज्येत, 'औनन'दिति चेष्यते । तच्च नशब्दस्य द्वित्वं विना न सम्भवति । 'द्विर्वचनेऽची'ति निषेधस्तु न सम्भवति, णिचो द्वित्वनिमित्तत्वाऽभावादत आह—ओः पुयण्जीतीति । पययोरिति । पूङ्यौतिभ्यां परस्य सनः 'सनीवन्ते'ति, 'स्मिपूङ्रञ्ज्वशां सनी'ति च इडागमे 'द्विर्वचनेऽचि'ति निषेधादजादेशाऽभावे—उवर्णान्तस्यैव द्वित्वेऽभ्यासोकारस्येत्त्वविधानार्थं 'पययो'रित्यावश्यकम्, अन्यथा 'पुपविषते' इत्यनिष्टं स्यात्, 'पिपविषते' इति च न स्यात् । एवञ्च प-य-ग्रहणस्य तत्र तदर्थत्वेऽपि वर्गप्रत्याहारजग्रहणं व्यर्थमेव । तद्धि—'अबीभवत्' 'अमीमवत्' इत्यादावित्त्वार्थमेव । तच्च फलं न सम्भवति, णिच्यन्तरङ्गत्वाद् वृद्धावावादेशेऽभ्यासे उकारस्याऽसम्भवात् । अकारस्य च 'सन्यत' इतीत्त्वेन अबीभवदित्यादेरन्यथाऽपि सिद्धेश्च । एवञ्च वर्गादिग्रहणं व्यर्थं सत्—'णिच्यच आदेशो ने'ति ज्ञापयति । एवञ्च द्वित्वात्पूर्वमकारलोपाऽभावान्नशब्दस्य द्वित्वे औननदिति रूपं सिद्धमित्याशयः । ननु कृतघातोर्णौ चङि इरादेशात्प्रागेव 'कृत्' इत्यस्य द्वित्वे उरदत्वे च अचकीर्त्तदिति रूपं स्या-

---

१ स्यादिति क्वचिन्नास्ति पाठः । [printed: १ स्यादिति क्वचित्कम् ।]

प्रक्रियायां, परिनिष्ठितरूपे वा अवर्णो लभ्यते तत्रैवायं निषेधः, ज्ञापकस्य सजातीयाऽपेक्षत्वात्। तेनाऽचिकीर्त्तदित्यादि सिद्धम्। प्रकृते तु 'न'शब्दस्य द्वित्वम्। तत उत्तरखण्डे 'अल्लोपः[1]। औननत्।

ध्वन ८८ शब्दे। ध्वनयति। अदध्वनत्। सूत्र ८६ वेष्टने। सूत्रयति। मूत्र ८७ प्रस्रवणे। मूत्रयति। अदन्तत्वसामर्थ्याणिणज्विकल्पः। मूत्रति।

आ गर्वादात्मनेपदिनः ॥

पद ८८ गतौ। पदयते। अपपदत ॥

गृह ८९ ग्रहणे। गृहयते। मृग ९० अन्वेषणे। मृगयते।

शूर ९१ वीर ९२ विक्रान्तौ। शूरयते। वीरयते ॥

गर्व ९३ माने। गर्वयते ॥

* इति चुरादिः ॥१०॥ *

---

ननु-'अचिकीर्त्त' दिति रूपमत आह—यत्रेति। 'औनन' दित्यादौ परिनिष्ठिते इवर्णस्याऽलाभादाह-प्रक्रियायामिति। 'चुश्रावयिषती'त्यादौ प्रक्रियायामवर्णाऽलाभादाह—परिनिष्ठिते इति। 'वा' शब्दोऽनास्थायां, यत्र कुत्र चिदवर्णपरत्वं विवक्षितमित्याशयः।

सजातीयेति। पुयण्जा अभ्यासोत्तरखण्डेऽवर्णपरा भवन्ति, अतस्तथैव ज्ञापकमित्याशयः। एवञ्च इरादेशानन्तरं द्वित्वेऽचिकीर्त्तदिति रूपं सिद्ध्यति।

प्रकृते तु = 'ऊन' धातौ तु।

अदन्तत्वेति। णिचः पाक्षिकत्वे हि अदन्तत्वफलमनेकान्त्वादामादिकम्। णिचो नित्यत्वे तु अदन्तत्वं व्यर्थमेव स्यात्, उपधाकार्याणां गुणवृद्ध्यादीनामिहाऽप्रसक्त्या तद्वारणायाऽदन्तेषु पाठस्य वैयर्थ्यात्। अदन्तत्वं हि—अतो लोपस्य स्थानिवत्त्वादुपधाकार्याणामभावायैवेत्याशयः। इति चुरादिः।

---

१ 'अलोपः' पा०।

## अथ णिजन्तप्रक्रिया । १ ॥

**स्वतन्त्रः कर्त्ता ।१।४।५४।** क्रियायां स्वातन्त्र्येण विवक्षितोऽर्थः कर्त्ता स्यात् । **तत्प्रयोजको हेतुश्च ।१।४।५५।** कर्तृप्रयोजको हेतुसंज्ञः, कर्तृसंज्ञश्च [1]स्यात् । **हेतुमति च ।३।१।२६।** प्रयोजकव्यापारे प्रेरणादौ वाच्ये धातोर्णिच् [ [1]स्यात् ] । भवन्तं प्रेरयति—भावयति ।

**ओः पुयण्ज्यपरे ।७।४।८०।** सनि परे यदङ्गं तदवयवाऽभ्यासोवर्णस्य[2] इत्स्यात्पवर्गयण्जकारेष्ववर्णपरेषु परतः । अबीभवत् । अपीपवत् । 'मूङ् बन्धने' । अमीमवत् । अयीयवत् । [ 'रु शब्दे ] । अरीरवत् । अलीलवत् । अजीजवत् । 'पुयण्जी'ति किम् ? नुनावयिषति । अपरे किम् ? बुभूषति ॥

---

स्वतन्त्रः । प्रधानीभूतधात्वर्थाश्रय इति यावत् । तत्प्रयोजक इति । तच्छब्देन 'स्वतन्त्रः कर्त्ते'त्यत्रोपात्तः कर्त्ता परामृश्यते । तस्य = कर्त्तुः, प्रयोजकः = प्रेरकः —तत्प्रयोजकः = कर्तृ-व्यापारानुकूलव्यापारवान् । स्वनिष्ठाधारतानिरूपिताऽऽधेयतासम्बन्धेन हेतुर्यत्र-व्यापारेऽस्ति स हेतुमान् = व्यापारः । तस्मिन्— हेतुमति=प्रयोजकव्यापारे वाच्ये णिच् । 'पुयण्जि' इति समाहारद्वन्द्वे सप्तम्यन्तमेतत् 'अपरे' इति च बहुव्रीहिः ।

---

**स्वतन्त्रःकर्त्ता ।** क्रिया में स्वातन्त्र्येण विवक्षित जो अर्थ वह 'कर्तृ' सञ्ज्ञक हो ।

**तत्प्रयोजको ।** कर्त्ता का जो प्रयोजक (प्रेरक), वह 'हेतु' संज्ञक हो और कर्तृ सञ्ज्ञक भी हो ।

**हेतुमति च ।** प्रयोजक का जो प्रेरणा आदि व्यापार, वह वाच्य हो तो धातु से णिच् प्रत्यय हो ।

**ओः पुयण्जि ।** सन् परक जो अङ्ग, तदवयव जो अभ्यास का अवयव उकार, उसको इत्त्व हो, अवर्णपरक पवर्ग, यण् और जकार परे रहते ।

---

१ क्वचिन्न । २ 'तदवयवस्याऽभ्यासोतः पा० ।

**स्रवति-शृणोति-द्रवति-प्रवति-प्लवति-च्यवतीनां वा ।७।४।८१।** एषामभ्यासोकारस्येत्त्वं वा [ स्यात् ], सनि अवर्णपरे धात्वक्षरे परे। असिस्रवत्। असुस्रवत्। इत्यादि। अवर्णपरे किम्? शुश्रूषते[1]।

णिजन्ताण्णिच्। परत्वाद् वृद्धौ प्राप्तायाम्—'ण्यल्लोपावियङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेने'ति णिलोपः। चोरयति। 'णौ चङ्गी'ति ह्रस्वः। 'दीर्घो लघो'रिति दीर्घः। न चाऽग्लोपित्वाद् द्वयोरप्यसम्भवः, ण्याकृतिनिर्देशात्। अचूचुरत्।

टुओश्वि गतिवृद्धयोः। **णौ च संश्चङोः ।२।४।५१।** सन्परे, चङ्परे च णौ श्वयतेः संप्रसारणं वा स्यात्। 'संप्रसारणं, तदाश्रयं च कार्यं बलवत्' इति वचनात्सम्प्रसारणम्। पूर्वरूपम्। अशूशवत्। अलघुत्वान्न दीर्घः। अशिश्वयत्।

**स्तम्भुसिवुसहां चङि ।८।३।११६।** उपसर्गनिमित्त एषां सस्य षो न स्याच्चङि। अवातस्तम्भत्। पर्यसीषिवत्। न्यसीषहत्।

---

ण्याकृतीति। 'चङ्परे णा' वित्यत्र चङ्परे णित्वे इत्यर्थः। एवञ्च ह्रस्वदीर्घयोः सम्भवोऽस्त्येवेत्याशयः।

---

स्रवतिशृणोति। स्रवत्यादि धातुओंके अभ्यास सम्बन्धी उकार को इत्व हो, विकल्प करके, सन्वद्भाव के विषय में, अवर्ण है परे जिसके ऐसा धात्वक्षर परे रहते।

णौ च संश्चङो। सन्परक और चङ् परक जो णि, वह परे रहते श्वि धातु को सम्प्रसारण हो, विकल्प करके।

स्तम्भुसिवु। उपसर्गस्थ निमित्त से परे जो स्तम्भु आदि धातुओं का सकार उसको षकार नहीं हो, चङ् परे रहते।

---

१ 'सुस्रूषती'ति तु शेखरतत्त्वबोधिन्याद्यभिमतः पाठः। लिखितेषु तु 'शुश्रूषते' इत्येव पाठो दृश्यते। तच्च 'श्रु' धातो रूपमितिध्येयम्।

**स्वापेश्चङि** ।६।१।१८। ण्यन्तस्य स्वापेश्चङि सम्प्रसारणं [स्यात्[१]]। असूषुपत्। **हनस्तोऽचिण्णलोः** ।७।३।३२। [[२]हन्तेस्तकारोऽन्तादेशः स्या—] चिण्णल्वर्जे ञिति, णिति च परे। घातयति।

**अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुग्णौ** ।७।३।३६। [[२]एषां पुक् स्याण्णौ ]। स्थापयति। **तिष्ठतेरित्** ।७।४।५। तिष्ठतेरुपधाया[३]इदादेशः स्याच्चङ्परे णौ। अतिष्ठिपत्। [[१]घ्रापयति]। **जिघ्रतेर्वा** ।७।४।६। जिघ्रतेरुपधाया इत्त्वं [[१]वा स्या]च्चङ्परे णौ। अजिघ्रिपत्। अजिघ्रपत्।

**शाच्छासाह्वाव्यावेपां युक्** ।७।३।३७। [[२]एषां युक् स्या-] ण्णौ। शाययति। अशीशयत्। ह्वाययति। **ह्वः सम्प्रसारणम्** ।६।१।३२। सन्परे चङ्परे च णौ [[२]ह्वः सम्प्रसारणं स्यात् ]। *काण्यादीनां वेति

---

स्वापेश्चङि। ण्यन्त जो स्वापि(स्वप् धातु)उसको सम्प्रसारण हो,चङ् परे रहते।

हनस्तोऽचिण्णलोः। 'हन्' धातु को तकार अन्तादेश हो,चिण् और णल् वर्ज ञित् णित् प्रत्यय परे रहते।

अर्तिह्री। अर्त्यादि धातुको, और आदन्त धातु को पुक् आगम हो, णि परे रहते।

तिष्ठतेरित्।स्था धातु की उपधा को इत्त्व हो, चङ् परक णि परे रहते।

जिघ्रतेर्वा। घ्रा धातु की उपधा को इत्त्व हो, चङ्परक णि परे रहते।

शाच्छासा। शो, छो, षो, ह्वेञ्, व्येञ्, वेञ् और पा—इन धातुओं को युक् आगम हो, णि परे रहते।

ह्वः सम्प्रसा। ह्वेञ् धातु को सम्प्रसारण हो, सन्पर णि और चङ् परक णि परे रहते।

काण्यादीनां वा। काणि आदि १२ धातुओं की उपधा को ह्रस्व हो, चङ् परक णि परे रहते।

---

१ क्वचिन्न। २ शेषपूरणम्। ३ 'उपधायाश्चङ्परे णौ' इत्येव क्वचित्पाठः।

वक्तव्यम्[1]। [[2]काण्यादीनां] चङ्परे णौ उपधाया ह्रस्वो वा [ [2]स्यात् ]। ण्यन्ताःक्वणरणभणश्रणलुपहेठः षट् भाष्ये [3] उक्ताः। ह्वायिवाणिलोठिलोपय-श्चत्वारोऽधिका न्यासे। चाणिलोटी अप्यन्यत्र। इत्थं काण्यादयो द्वादश। अजूहवत्। अजुहावत्।

पाययति। लोपः पिबतेरीच्चाऽभ्यासस्य ।७।४।४। पिबतेरुप-धाया लोपः स्यादभ्यासस्य ईदन्तादेशश्च[4] चङ्परे णौ। अपीप्यत्। * पातेर्णौ लुग्वक्तव्यः। पुकोऽपवादः। पालयति।

वो विधूनने जुक् ।७।३।३८। [[5]वातेर्जुक् स्या] -ण्णौ[[5]कम्पेऽर्थे]। वाजयति। विधूनने किम्? केशान्वापयति। शदेरगतौ तः ।७।३।४२। [[2]शदे-] णौ [ तोऽन्तादेशः [2]स्यान्न तु गतौ]। शातयति। गतौ तु—गाः शादयति गोविन्दः। गमयतीत्यर्थः।

---

अपीप्यदिति। उपधालोपस्य द्विर्वचनेऽचीति सूत्रेण द्वित्वे कर्तव्ये प्रतिषेधात्, कृते लोपे स्थानिवद्भावाद्वा पाय्शब्दस्य द्वित्वे हलादिः शेषे आकारस्य ईकारः। स च 'अनभ्यासविकारे' इति निषेधादन्त्यस्यादेशे बाधकाभावादन्त्यस्य भवति। इहाग्लोपित्वादलघूपधत्वाच्च सन्वद्भित्वदीर्घयोरप्राप्तावीत्त्वमनेन विधीयते।

---

लोपः पिबते। पिबति (पाधातु) की उपधा का लोप हो, और अभ्यास को ईत् अन्तादेश हो, चङ्परक णि परे रहते।

पातेर्णौ। पाधातु को लुक् आगम हो, णिच् परे रहते।

वो विधूनने। शोषणार्थक 'ओवै' धातु को विधूनन ( झटकारना ) अर्थ में जुक् आगम हो, णि परे रहते।

शदेरगतौ। शद् धातु को गतिभिन्न अर्थ में तकार अन्तादेश हो, णि परे रहते।

---

१ 'काण्यादीनां वा' इत्येव क्वचित्पाठः। २ शेषपूरणमेतत्। ३ 'पठिताः' पा०। ४ चकारो न सार्वत्रिकः। ५ क्वचिदेवादर्शे दृश्यतेऽयं पाठः।

**रुहः पोऽन्यतरस्याम्** ।७।३।४३। [[1]रुहः पकारोऽन्तादेशो वा स्या-] ण्णौ । रोपयति । रोहयति ।

**दोषो णौ** ।६।४।९०। दुष्यतेरुपधाया ऊत्स्याण्णौ । दूषयति ।

**वा चित्तविरागे** ।६।४।९१। [[1]दुष्यतेरुपधाया ऊत्स्याद्वा, णौ चित्तविरागे]। विरागोऽप्रीतता । दुष वैकृत्ये । चित्तं दूषयति, दोषयति वा कामः । **उभौ साभ्यासस्य** ।८।४।२१। साऽभ्यासस्याऽनितेरुभौ नकारौ णत्वं प्राप्नुतो, निमित्ते सति । प्राणिणत् ।

**णौ गमिरबोधने** ।२।४।४६। इणो [[1]गमिः स्याण्णावबोधने]। गमयति । बोधने तु—प्रत्याययति ।

**घट चेष्टायाम्** । (ग०)**घटादयो मितः** । **जनीजॄष्क्नसुरञ्जोऽमन्ताश्च** ।

---

'दुष वैकृत्ये' । अयं दिवादिः ।

चित्तं दुष्यति । स्नानसन्ध्यादौ विरक्तं भवति । तत्प्रयुङ्क्ते ( प्रेरयति )—चित्तं दूषयति काम इत्यर्थः ।

---

**रुहः पो** । रुह् धातु को पकार अन्तादेश हो, विकल्प करके, णि परे रहते ।

**दोषो णौ** । दुष् धातु की उपधा को ऊत् आदेश हो, णि परे रहते ।

**वा चित्त** । दुष् धातु की उपधाको उत्त्व हो, विकल्प करके चित्तका विकार गम्यमान हो तो ।

**उभौ साभ्यासस्य** । साऽभ्यास अन् धातु के दोनों नकार को णत्व हो, णत्व के निमित्त ( रेफ षकार ) पूर्व में हों तो ।

**णौ गमिर** । इण् धातु को बोधनातिरिक्त अर्थ में 'गम्' आदेश हो, णि के विषय में ।

**घटादयो मितः** । भ्वाद्यन्तर्गत घटादि गण पठित धातु मित् हों ।

**जनी जॄष** । जनी आदि धातु और अमन्त धातु भी मित् हों ।

---

१ शेषपूरणमेतत् ।

[[1]एते] मितः। (ग०) ज्वलह्वलह्मलनमामनुपसर्गाद्वा। [[1]अनुपसर्गा-] देषां मित्त्वं वा। ग्लास्नावनुवमां च। अनुपसर्गादेषां मित्त्वं वा।

न कम्यमिचमाम्। अमन्तत्वात्प्राप्तं मित्त्वमेषां न। यमोऽपरिवेषणे। [[2]यच्छतेर्भोजनातोऽन्यत्र] मित्त्वं न। स्खदिरवपरिभ्यां च। [स्खदिरवपरिभ्यां परीभूतो] मित्र।

मितां ह्रस्वः।६।४।९२। घटादीनां, ज्ञपादीनां च णावुपधाया ह्रस्वः। घटयति। अजीघटत्। ज्ञप ज्ञाने, ज्ञापने च। ज्ञपयति। अजिज्ञपत्॥

रभेरशब्लिटोः।७।१।६३। [रभे] र्नुमचि [[1]न तु शब्लिटोः]। लभेश्च।७।१।६४। [[1]लभेर्नुम् स्यादचि,नतु शब्लिटोः]। अररम्भत्।

---

ज्वलह्वल। अनुपसृष्ट (उपसर्गरहित) ज्वल आदि धातु विकल्प करके मित् हों।

ग्लास्नावनु। अनुपसर्ग जो ग्ला आदि धातु वे विकल्प करके मित् हों।

न कम्यमि। अमन्त होने पर भी कम् आदि धातु मित् नहीं हों।

यमोऽपरि। अपरिवेषण अर्थ में यम् धातु मित् नहीं हो। अर्थात् भोजन परोसने अर्थ में ही यम् धातु मित् हो, अन्य अर्थ में मित् नहीं हो।

स्खदिरव। अव और परि उपसर्ग से परे जो स्खद धातु वह मित् नहीं हो।

मितां ह्रस्वः। घटादि गण पठित धातु और ज्ञपादि धातु—इनकी उपधा को ह्रस्व हो, णि परे रहते।

ज्ञप ज्ञाने, ज्ञापने च। ज्ञप धातु ज्ञान और ज्ञापन अर्थ में चुरादिगणी है।

रभेरशब्। रभ् धातु को नुम् आगम हो, शप् और लिट् सम्बन्धी से भिन्न अजादि प्रत्यय परे रहते।

लभेश्च। लभ् धातु को नुम् आगम हो, शप् और लिट् सम्बन्धी से भिन्न अजादि प्रत्यय परे रहते।

---

१ शेषपूरणमिदम्। २ अयं पाठः क्वचिद् दृश्यते। तत्र भोजना = परिवेषणम्।

अललम्भत् ।

*ईर्ष्य[य]तेस्तृतीयस्येति वक्तव्यम् । तृतीयव्यञ्जनस्य, तृतीयैकाच इति वार्थः । आद्ये षकारस्य द्वित्वं वारयितुमिदम् । द्वितीये त्वजादेर्द्वितीयस्येत्यस्याऽपवादतया सन्नन्ते प्रवर्तते । ऐर्षियत् । द्वितीयव्याख्यायां णिजन्ताच्चङि षकार एवाऽभ्यासे श्रूयते, हलादिःशेषात् । द्वित्वं तु द्वितीयस्यैव, तृतीयाऽभावेन प्रकृतवार्तिकाऽप्रवृत्तेः । [ [1]ऐर्षिष्यत् ] ॥

इति ण्यन्तप्रक्रिया[2] ॥ १ ॥

---

## अथ सन्नन्तप्रक्रिया ।

**धातोः कर्मणः समानकर्तृकादिच्छायां वा ।३।१।७।** इषिकर्मणो धातोरिषिणैककर्तृकात्सन्वेच्छायाम् । [ [3]धातोर्विवेरिह सन आर्द्धधातुकत्वम् ]। पठ व्यक्तायां वाचि । इट् । **सन्यङोः ।६।१।९।** [4]सनन्तस्य,

---

षकारस्येति । रेफस्य द्वित्वं तु 'नन्द्रा' इति निषिद्धम् । द्वितीयेति । 'तृतीयस्यैकाच' इति व्याख्यायान्तु । प्रवर्तते इति । वचनारम्भसामर्थ्यादिति भावः ।

प्रकृतेति । 'ईर्ष्यतेस्तृतीयस्ये'ति वार्त्तिकाऽप्रवृत्तेरित्यर्थः । इच्छायामित्यस्योपस्थितत्वेन कर्मत्वस्य कर्तृत्वस्य, तदपेक्षस्यैव च ग्रहणस्यौचित्यादाह—इषिकर्मण इत्यादि ।

---

ईर्ष्यतेस्तृती । ईर्ष्यति के तृतीय व्यञ्जन या तृतीय एकाच् को द्वित्व हो।

धातोः कर्मणः । इच्छा का कर्म हो और इच्छा का कर्त्ता ही जिसका कर्त्ता हो ऐसी जो धातु, उससे इच्छा अर्थ में सन् प्रत्यय हो, विकल्प करके ।

सन्यङोः । सन्नन्त धातु और यङन्त धातु के प्रथम एकाच् को द्वित्व हो । और अजादि धातु के द्वितीय एकाच् को द्वित्व हो ।

---

१ लिखितेषु न दृश्यते । २ 'णिजन्तप्रक्रिया' पा० ।

३ क्वचित्कः पाठः । ४ 'सन्नन्तस्य' पा० ।

यङन्तस्य च प्रथमस्यैकाचो द्वे स्तोऽजादेस्तु द्वितीयस्य। 'सन्यतः'। पठितुमिच्छति–पिपठिषति। कर्मणः किम् ? गमनेनेच्छति [ [1]इति करणान्माभूत् ]। समानकर्तृकात् किम् ? 'शिष्याः पठन्त्वि'तीच्छति गुरुः। 'वा'ग्रहणात्पक्षे वाक्यमपि[2]।

शैषिकान्मतुबर्थीयाच्छैषिको मतुबर्थिकः।
सरूपः प्रत्ययो नेष्टः, सनन्तान्न सनिष्यते ॥ १ ॥

तेन-पिपठिषितुमिच्छतीति वाक्यमेव।

'लुङ्सनोर्घस्लृ'। सः स्यार्द्धधातुके ।७।४।४९। सस्य तः स्यात्-सादावार्द्धधातुके। अत्तुमिच्छति-जिघत्सति। [ [3]'ईर्ष्यतेस्तृतीयस्ये'ति यिसनोर्द्वित्वम्। ईर्ष्यियिषति।

'एकाच' इति नेट्। अज्झनगमां सनि ।६।४।१६। अजन्तानां, हन्तेरजादेशगमेश्च दीर्घो, झलादौ सनि। इको झल् ।१।२।९। इगन्ताज्झलादिः सन्कित् [ स्यात्[3] ]। कर्त्तुमिच्छति चिकीर्षति। जिघांसति।

---

तेनेति। सन्नन्तात्सनोऽनिष्टत्वेन। 'न सन्नन्तात्स'न्निति शेषः।

---

शैषिकान्मतुबर्थीयात्। शैषिक प्रत्ययान्त से पुनः सरूप शैषिक प्रत्यय नहीं होता है। और मत्वर्थीय ( मतुप् आदि ) प्रत्ययान्त से भी सरूप मत्वर्थीय प्रत्यय नहीं होता है। और सन्नन्त से पुनः सन् प्रत्यय भी नहीं होता है।

सः स्यार्द्धधातुके। सकार को तकार आदेश हो, सकारादि आर्द्धधातुक परे रहते।

अज्झनगमां। अजन्त धातु और हन् धातु और अजादेश ( अर्थात्— इण् इक् और इङ् धातुओं के स्थान में आदेश जो ) गम्—इनको दीर्घ हो, झलादि सन् परे रहते।

---

१ लिखितेषु न दृश्यते। २ 'वाग्रहणाद्वाक्यमपि' पा०।

३ क्वाचित्कः पाठोऽयम्।

सनि च ।२।४।४७। इणो गमिः स्यात्सनि, न तु बोधने। जिगमिषति। बोधने तु-प्रतीषिषति।

इङश्च ।२।४।४८। [ [1]इङो ] गमिः [स्या]त्सनि। अधिजिगांसते।

रुदविदमुषग्रहिस्वपिप्रच्छः संश्च ।१।२।८। एभ्यः सन्, क्त्वा च कितौ स्तः। रुरुदिषति। विविदिषति। मुमुषिषति। सनि ग्रहगुहोश्च ।७।२।१२ ग्रहेर्गुहेरुगन्ताच्च सन इण्न [ स्यात्। [2]'ग्रहिज्ये'ति सम्प्रसारणम्। सनः षत्वस्याऽसिद्धत्वाद्भष्भावः ]। जिघृक्षति।

हलन्ताच्च ।१।२।१०। इक्समीपाद्धलः परो झलादिः सन्कित्। गुहू संवरणे। जुघुक्षति। [3]सुषुप्सति।

किरश्च पञ्चभ्यः ।७।२।७५। कॄ गॄ दृ धृङ् प्रच्छ-एभ्यः सन इट्। पिपृच्छिषति। चिकरिषति। जिगरिषति। जिगलिषति। अत्रेटो दीर्घो

रुदविदेति। रुदसाहचर्याद्विदधातुरादादिक एवेह गृह्यते।
सनिग्रहेति। ग्रहेर्नित्यं, ग्रहेरूदित्वाद्विकल्पेन इटि प्राप्ते निषेधोऽयम्।
संवरण इति। संवरणं=गूहनम्।

सनि च। इण् धातु को गम् आदेश हो, सन् परे रहते। परन्तु बोधन अर्थ में यह गम् आदेश नहीं हो।

इङश्च। इङ् धातु को गम् आदेश हो, सन् परे रहते।

रुदविद। रुदादि धातुओं से परे जो 'सन्' और 'क्त्वा' वह कित् हो।

सनि ग्रह। ग्रह् धातु, गुह् धातु और उगन्त धातु, इनसे परे जो सन् उसको इट् नहीं हो।

हलन्ताच्च। इक् समीप हल् से परे जो झलादि सन् वह कित् हो।

किरश्च पञ्चभ्यः। 'कॄ' आदि ५ धातुओं से परे जो सन् उसको इट् आगम हो।

१ क्वचिन्न। २ क्वाचित्कः पाठः। ३ एतत्स्थाने-'बिभित्सती'ति पाठान्तरम्।

नेष्टः। पूर्ववत्सनः।१।३।६२। सनः पूर्वो यो धातुस्तेन तुल्यं सन्नन्तादप्यात्मनेपदं स्यात्। दिदरिषते। दिधरिषते। बुभूषति।

सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्।७।२।४९। इवन्तेभ्य, ऋधादिभ्यश्च सन इड् वा। [इडभावे 'हलन्ताच्चे' ति कित्त्वम्]।

च्छ्वोः शूडनुनासिके च।६।४।१९। सतुक्कस्य छस्य, वस्य च क्रमात् श् ऊठ् एतावादेशौ स्तोऽनुनासिके, क्वौ, झलादौ क्ङिति च। यण्। द्वित्वम्। दुद्यूषति। दिदेविषति।

स्तौतिण्योरेव षण्यभ्यासात्।८।३।६१। अभ्यासेणः परस्य स्तौतिण्यन्तयोरेव सस्य षः, षभूते सनि, नान्यस्य। तुष्टूषति। [ 'द्युतिस्वाप्योः सम्प्रसारणम्' इत्युत्त्वम्। सुष्वापयिषति[1] ]। सिषाधयिषति। स्तौतिण्योः किम्? सुस्यूषति। सिसेविषति।

---

पूर्ववत्सनः। सन् से पूर्व ( अर्थात्—सन्प्रकृतिभूत ) जो धातु, उसीके तुल्य सन्नन्त से भी आत्मनेपद हो। [ अर्थात्—सन्प्रकृतिभूत धातु यदि आत्मनेपद हो तो सन्नन्त से भी आत्मनेपद ही होता है ]।

सनीवन्तर्ध। इवन्त और ऋधादि धातुओं से परे जो सन्, उसको इट् आगम हो, विकल्प करके।

छ्वोः शूडनु। तुक् सहित छकार और वकार–इनको क्रम से 'श्' और ऊठ्–ये आदेश हो, अनुनासिक परे रहते और क्वि परे रहते और झलादि कित् ङित् प्रत्यय परे रहते। [ अर्थात्—'च्छ' को 'श्' और 'व' को 'ऊठ्' आदेश हो ]।

स्तौतिण्योरेव। अभ्यास सम्बन्धी इण् से परे जो स्तौति ( स्तु धातु ), और ण्यन्त धातु, इनके ही सकार को षकार हो, षभूत सन् परे रहते। इनसे अन्य धातुओं के सकार को षकार नहीं हो।

---

१ क्वचिदेव दृश्यतेऽयं पाठः।

आप्ज्ञप्यृधामीत् ।७।४।५५। एषामच ईत्स्यात्सादौ सनि । अत्र लोपोऽभ्यासस्य ।७।४।५८। 'सनि मीमे'त्यारभ्य यदुक्तं तत्राऽभ्यासस्य लोपः [स्यात्]। आप्तुमिच्छति ईप्सति । अर्द्धितुमिच्छति-ईर्त्सति। अर्दिधिषति । बिभ्रज्जिशति । बिभर्जिषति । बिभ्रक्षति । बिभर्क्षति।

दम्भ इच्च ।७।४।५६। दम्भेरच इत्स्यात्, ईच्च, सादौ सनि। 'हलन्ता'दित्यत्र हल्ग्रहणं जातिपरम्। तेन सनः कित्त्वान्नलोपः। धिप्सति। धीप्सति। दिदम्भिषति। शिश्रीषति। शिश्रयिषति। ['उदोष्ठ्ये' त्युत्त्वम् ]। सुस्वूर्षति । सिस्वरिषति । युयूषति । यियविषति ।

'विभाषोर्णोः' इति ङित् । ऊर्णुनूषति। ऊर्णुनुविषति । ऊर्णुनविषति । बुभूर्षति। बिभरिषति। ज्ञीप्सति। जिज्ञपयिषति। सिषासति। सिसनिषति। * आशङ्कायां सन्वक्तव्यः । श्वा मुमूर्षति । * तनिपतिदरिद्रातिभ्यः सनो वेड् वाच्यः । तनोतेर्विभाषा ।५.४।१७। [ तनोते-] रुपधाया

---

ऊर्णुनुविषतीति । 'विभाषोर्णोः' इति वा ङित्त्वम् । ऊर्णुनूषतीति । इड-भावपक्षे'ऽज्झने'ति दीर्घः ।

---

आप्ज्ञप्यृ । आप्, ज्ञप् और ऋध् धातु के अच् को ईत्त्व हो, सकारादि सन् परे रहते ।

अत्र लोपो । 'सनि मीमा' इस सूत्र से आरम्भ करके जो इस्, ईत्त्व, इत्त्व, और गुण रूप ४ कार्य कहे हैं, उनके होने पर अभ्यास का लोप हो ।

दम्भ इच्च । दम्भ धातु के अच् को इत्त्व हो, और ईत्त्व भी हो, सादि सन् परे रहते ।

आशङ्कायां सन् । आशङ्का अर्थ में ( भी ) धातु से सन् प्रत्यय हो ।

तनिपति । तनादि धातुओं से परे जो सन्, उसको इट् आगम हो, विकल्प करके ।

तनोतेर्विभाषा । तन् धातु की उपधा के अच् को दीर्घ हो, विकल्प करके, झलादि सन् परे रहते ।

दीर्घो वा [स्या]ज्झलादौ सनि। तितांसति। तितंसति। तितनिषति। कूलं पिपतिषति।

सनि मीमाघुरभलभशकपतपदामच इस् ।७।४।५४। [[1]एषामच इस् स्या-]त्सादौ सनि। अभ्यासलोपः। [[2]सलोपः]। पित्सति। दिदरिद्रिषति। दिदरिद्रासति।

मुचोऽकर्मकस्य गुणो वा ।७।४।५७। [मुचोऽकर्मकस्य गुणो वा[1] स्यात्] सादौ सनि। अभ्यासलोपः। मोक्षते, मुमुक्षते वा वत्सः स्वयमेव। अकर्मकस्य किम्? मुमुक्षति वत्सं कृष्णः।

इट् सनि वा ।७।२।४१। वृङ्वृञ्भ्यामृदन्ताच्च सन इड् वा। विवरिषते। विवरीषते। वुवूर्षते। विवरिषति। तितरिषति। तितरीषति। तितीर्षति। स्मिपूङ्रञ्ज्वशां सनि ।७।२।७४। स्मिङ् पूङ् ऋ अञ्जू अश्-एभ्यः सन इट्। सिस्मयिषते। पिपविषते। अरिरिषति। अञ्जिजिषति। अशिशिषति।

---

श्वेति। एकस्वविषयिणी मरणशङ्केति बोधः। स्वा मरणशङ्काविषयो भवतीत्यन्ये बोधाकारमाहुः। मुचोऽकर्मकस्येति। 'हलन्ताच्चे'ति कित्वेन गुणाऽभावे प्राप्ते विधिरयम्।

---

सनि मीमा। मी, मा आदि धातुओं के अच् को इस् आदेश हो, सकारादि सन् परे रहते।

मुचोऽकर्मकस्य। अकर्मक मुच् धातु को गुण हो, विकल्प करके, सकारादि सन् परे रहते।

इट् सनिवा। वृङ्, वृञ्, और दीर्घ ऋकारान्त धातुओं से परे जो सन् उसको इट् आगम हो विकल्प करके।

स्मिपूङ्। स्मिङ् आदि धातुओं से परे जो सन् उसको इट् आगम हो।

---

१ शेषपूरणमेतत्। २ प्राचिस्कः पाठः।

गुप गोपने । तिज निशाने । कित निवासे, रोगापनयने च । मान पूजायाम् । बध बन्धने । दान खण्डने । शान तेजने ।

गुप्तिज्किद्भ्यः सन् ।३।१।५। मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य।३।१।६। सूत्रद्वयोक्तेभ्यः सन् [स्यात्]मानादीनामभ्यासस्येकारस्य दीर्घश्च। गुपेर्निन्दायाम् । तिजेः क्षमायाम् । कितेर्व्याधिप्रतीकारे[1], निग्रहे, अपनयने, नाशने, संशये च । मानेर्जिज्ञासायाम् । बधेश्चित्तविकारे । दानेरार्जवे । शानेर्निशाने । गुपिप्रभृतयः किद्भिन्ना निन्दाद्यर्थका एवाऽनुदात्तेतो, दानशानौ तु स्वरितेतौ । [ २८८त्वर्थेषु ] एते नित्यसन्नन्ताः । अर्थान्तरे त्वननुबन्धकाश्चुरादयः । अनुबन्धस्य केवलेऽचरितार्थत्वात्सन्नन्तात्पदव्यवस्था । 'धातो'रित्यविहितत्वात्सनोऽत्र नार्द्धधातुकत्वम् । तेनेड्गुणौ न । जुगुप्सते । तितिक्षते । चिकित्सति । मीमांसते । बीभत्सते । दीदांसति । दीदांसते । शीशांसति । शीशांसते । णिचि तु—गोपयति । गोपयते इत्यादि ।

* इति सनन्तप्रक्रिया[3] ॥२॥ *

---

पदव्यवस्थेति । केवलेऽचरितार्थस्य लिङ्गस्य समुदायोपकारकतायाः 'केवले हि अचरितार्थं लिङ्ग' समुदायोपकारकं भवती'ति न्यायानुगृहीतत्वेन, सन्नन्तसमुदायात्, पदव्यवस्था = परस्मैपदात्मनेपदयोरुत्पत्तिः । एवञ्च प्रकृतेऽनुदात्तङित इत्यात्मनेपदं सन्नन्तादेव भवतीत्याशयः ।

---

गुप्तिज्किद्भ्यः । मान् बध । सूत्रद्वयोक्त जो गुप् आदि ७ धातु, उनसे सन् प्रत्यय हो. और मान् आदि ४ धातुओंके अभ्यास के इकार को दीर्घ भी हो।

---

१ 'प्रतीघाते' पा० । २ क्वचिन्न । ३ 'सन्प्रक्रिया' पा० ।

## अथ यङन्तप्रक्रिया ।

**धातोरेकाचो हलादेः क्रियासमभिहारे यङ् ।३।१।२२।** पौनःपुन्ये, भृशार्थे च द्योत्ये धातोरेकाचो हलादेर्यङ् । **गुणो यङ्लुकोः ।७।४।८२।** अभ्यासस्य [[1]'गुणः स्याद्यङि यङ्लुकि च] । [[2]'सनाद्यन्ता' इति धातुत्वाल्लडादयः ] । ङिदन्तत्वादात्मनेपदम् । पुनः पुनरतिशयेन वा भवति—बोभूयते । बोभूयाञ्चक्रे । अबोभूयिष्ट । धातोः किम ? आर्द्धधातुकत्वं यथा स्यात् । तेन 'भ्रुवो वचि'रित्यादि । एकाचः किम् ? पुनः पुनर्जागर्त्ति । हलादेः किम् ? भृशमीक्षते ।

**नित्यं कौटिल्ये गतौ ।३।१।२३।** गत्यर्थात्कौटिल्ये एव यङ्, न तु क्रियासमभिहारे । **दीर्घोऽकितः ।७।४।८३।** अकितोऽभ्यासस्य

---

गुणो यङिति । अभ्यासस्य गुणः स्याद्यङि, यङ्लुकि चेत्यर्थः । आत्मनेपदमिति । 'अनुदात्त ङित' इत्यनेनेति भावः ।

धातोः किमिति । 'क्रियासमभिहारे' इत्यनेनैव धातोर्लाभात्किमर्थं धातुग्रहणमिति प्रश्नः । धात्वधिकारविहितस्यैवार्द्धधातुकत्वेन तदर्थं धातोरित्यावश्यकमित्युत्तराशयः । तेनेति । तेन यङि परे वच्याद्यादेशा भवन्तीत्याशयः ।

कौटिल्य एवेति । नित्यशब्द एवार्थे । कौटिल्ये एवेति च सम्बन्धः । एवशब्दव्यवच्छेद्यमाह—न त्विति ।

---

धातोरेकाचो । हलादि एकाच् धातु से यङ् प्रत्यय हो, पौनःपुन्य ( वारवार करना ), और भृश ( खूब करना ) अर्थों में ।

गुणो यङ् । अभ्यास को गुण हो, यङ् परे रहते और यङ् लुक् के विषयमें ।

नित्यं कौटिल्ये । गत्यर्थक धातुओं से कुटिलता अर्थ में ही यङ् हो। किन्तु क्रियासमभिहार ( पौनःपन्यः और भृश ) अर्थ में यङ् नहीं हो ।

दीर्घोऽकितः । अकित् अभ्यास को दीर्घ हो, यङ् परे रहते और यङ् लुक् के विषय में ।

---

1 शेषपूरणमेतदस्मदीयम् । 2 क्वाचित्कः पाठः ।

दीर्घो,[1] यङ्यङ्लुकोः। कुटिलं व्रजति—वाव्रज्यते। यस्य हलः ।६।४।४९। [ [2]'यस्ये'ति संघातग्रहणम् ]। हलः परस्य य[[2]शब्द]स्य लोपः स्यादार्द्धधातुके। 'आदेः परस्य'। 'अतो लोपः'। वाव्रजाञ्चक्रे। वाव्रजिता।

रीङृतः ।७।४।२७। अकृद्यकारे, असार्वधातुकयकारे, च्वौ च परे ऋदन्ताङ्गस्य[3] रीङादेशः। [ डुकृञ् २ करणे[4] ]। चेक्रीयते।

रीगृदुपधस्य च ।७।४।९०। [ ऋदुपधस्य ] धातोरभ्यासस्य रीगागमो, यङ्यङ्लुकोः। वरीवृत्यते। वरीवृताञ्चक्रे। वरीवृतिता। 'क्षुभ्नादिषु च'। [ एषु णत्वं न[5] ]। नरीनृत्यते। जरीगृह्यते॥

* रीगृत्वत इति वाच्यम्। वरीवृश्च्यते।

लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम् ।३।१।२४।

---

यस्य हलः। 'यस्ये'ति सङ्घातग्रहणम्। तेनार्थवत्परिभाषोपस्थित्या पुत्रकाम्येत्यादावनेन न यलोपः। वर्णग्रहणे तु सा न प्रवर्त्तेत। रीगृदुपधेति। 'ऋदुपधस्ये'त्यपहाय 'रीगृत्वत' इति सूत्रं कार्यमित्यर्थः। तेनः वृश्चतेर्ऋदुपधत्वाऽभावेऽपि ऋकारवत्त्वाद्रीगागमो भवत्येवेत्याशयः।

---

यस्य हलः। हल् से परे 'य' शब्द का लोप हो, आर्द्धधातुक परे रहते।

रीङृतः। ऋदन्त अङ्ग को रीङ् आदेश हो, अकृत् यकार, असार्वधातुक यकार और च्वि प्रत्यय परे रहते।

रीगृदुपधस्य च। ऋदुपध धातु के अभ्यास को रीक् आगम हो, यङ् परे रहते और यङ् लुक् के विषयं में।

रीगृत्वतः। ( सूत्र में-ऋदुपध नहीं कहकर ) ऋकारवान् धातु के अभ्यास को रीक् आगम हो-ऐसा कहना चाहिए।

लुपसद। लुप् आदि धातुओं से धात्वर्थ की गर्हा में ही यङ् हो। क्रिया समभिहार अर्थ में यङ् नहीं हो।

---

1 'यङ्लुकोः' पा०। 2 क्वचिन्न। 3 'ऋतो रीङादेशः। 4 क्वचिन्न। 5 'णो न' पा०।

एभ्यो धात्वर्थगर्हायामेव यङ् [स्यात्]। गर्हितं लुम्पति-लोलुप्यते। सासद्यते। **चरफलोश्च** ।७।४।८७। अनयोरभ्यासस्याऽतो नुक् [1]यङ्यङ्लुकोः। 'नु'गित्यनेनाऽनुस्वारो लक्ष्यते। स च पदान्तवद्वाच्यः। 'वा पदान्तस्ये'ति यथा स्यात्। **उत्परस्याऽतः** ।७।४।८८। चरफलोरभ्यासात्परस्याऽत उत्स्याद्यङ्यङ्लुकोः[1]। 'हलि चे'ति दीर्घः। चञ्चूर्यते। चंचूर्यते। पम्फुल्यते। पंफुल्यते।

**जपजभदहदशभञ्जपशां च** ।७।४।८६। एषामभ्यासस्य नुक् [[2]स्यात्] [1]यङ्-यङ्लुकोः। गर्हितं जपति—जञ्जप्यते। इत्यादि।

**ग्रो यङि** ।८।२।२०। गिरते रेफस्य लत्वं [[2]स्यात्] यङि। गर्हितं गिलति—जेगिल्यते। *सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतिभ्यो यङ् वाच्यः। सोसूच्यते। [सोसूत्र्यते[2]। मोमूत्र्यते]। [2]अट पट गतौ। अटाट्यते।

---

अटाट्यते इति। 'अजादेर्द्वितीयस्ये'त्युक्तेरत्र 'ट्य'शब्दस्य द्वित्वम्।

---

चरफलोश्च। चर और फल धातु के अभ्यास के अकार को नुक् आगम हो, यङ् परे रहते और यङ् लुक् के विषय में।

उत्परस्याऽतः। चर् और फल् धातु के अभ्यासावयव अत् को उत्व हो, यङ् परे रहते और यङ् लुक् के विषय में।

जपजभ। जप आदि धातुओं के अभ्यास को नुक् आगम हो, यङ् परे रहते और यङ् लुक् के विषय में।

ग्रो यङि। गॄ धातु के रेफ को लत्व हो, यङ् परे रहते।

सूचिसूत्रि। सूचि आदि (अनेकाच् और अजादि) धातुओं से भी यङ् हो, क्रियासमभिहार (पौनःपुन्य और भृश) अर्थ में।

---

1 'यङ्-लुको'रित्येव लिखितेषु पाठो दृश्यते।

2 क्वाचित्कः पाठः।

यङि च ।७।४।३०। अर्त्तेः, संयोगादेश्च [1]ऋदन्ताङ्गस्य गुणो, यङि । यकारपरस्य रेफस्य न द्वित्वनिषेधः । 'अरार्यते' इति भाष्यो-[2]दाहरणात् । अरारिता । अशाश्यते । ऊर्णोनूयते ।

सिचो यङि ।८।३।११२।[[3]सिचः] सस्य षो न [[3]स्याद्यङि] । निसेसिच्यते । न कवतेर्यङि ।७।४।६३। [[3]कवते]रभ्यासस्य चुत्वं न[स्या-[3]द् ङि] । कोकूयते । कौतिकुवत्योस्तु—चोकूयते । *हन्तेर्हिंसायां यङि घ्नीभावो वाच्यः । जेघ्नीयते । हिंसायां किम् ? । नुगतोऽनुनासिकान्तस्य ।७।४।८५। [[3]अनुनासिकान्तस्य] अदन्ताभ्यासस्य नुक् स्याद्यङ्लुकोः । जङ्घन्यते । अयङ् यि क्ङिति ७।४।२२। शीङो–[[3]ऽयङादेशः स्याद्यादौ क्ङिति परे] । शाशय्यते ॥

सस्य षो नेति । अत्राऽभ्यासवकारस्य—'उपसर्गात्सुनोती'ति, तदुत्तरखण्डवर्त्तिसकारस्य तु 'स्थादिष्वभ्यासेने'ति षत्वे प्राप्तेऽयं निषेधः ।

शाशय्यत इति । शीय् इति स्थिते ईकारस्य अयङादेशः, परत्वादन्तरङ्गत्वाच्च । ततो द्वित्वमभ्यासकार्यं, दीर्घः ।

यङि च । ऋधातु, और संयोगादि ऋदन्त जो अङ्ग, उसको गुण हो, यङ् परे रहते ।

सिचो यङि । सिच् धातु के सकार को षत्व नहीं हो, यङ् परे रहते ।

न कवतेर्यङि । कुधातु के अभ्यास को चुत्व नहीं हो, यङ् परे परे रहते ।

हन्तेर्हिंसायां । हन् धातु को हिंसा अर्थ में घ्नीभाव ( 'घ्नी' आदेश ) हो, यङ् परे रहते ।

नुगतोऽनु । अनुनासिकान्त अङ्ग का जो अदन्त अभ्यास उसको नुक् आगम हो, यङ् परे रहते और यङ् लुक् के विषय में ।

अयङ् यि । शीङ् धातु को अयङ् आदेश हो, यकारादि कित् ङित् प्रत्यय परे रहते ।

१ 'ऋतो गुणो' पा० । २ 'भाष्यात् पा० । ३ क्वचित्कः पाठः ।

स्वपिस्यमिव्येञां यङि ।६।१।१९। [ [1]स्वपिस्यमिव्येञां यङि ] संप्रसारणं [ [1]स्यात् ]। सोषुप्यते। सेसिम्यते। वेवीयते।

न वशः ।६।१।२०। [1][वशः] संप्रसारणं [ [1]न स्याद्यङि]। वावश्यते। चायः की ।६।१।२१। [ [1]चायः की स्याद्यङि ]। चेकीयते। ई घ्राध्मोः ।७।४।३१। [ [1]अनयोरीत्स्याद्यङि ]। जेघ्रीयते। देध्मीयते।

नीग्वञ्चुस्रंसुध्वंसुभ्रंसुकसपतपदस्कन्दाम् ।७।४।८४। एषामभ्यासस्य नीगागमः स्याद्यङ्-लुकोः। 'अकित' इत्युक्तेर्न दीर्घः। नलोपः। वनीवच्यते। सनीस्रस्यते। दनीध्वस्यते। बनीभ्रस्यते। चनीकस्यते। पनीपत्यते। पनीपद्यते। चनीस्कद्यते॥

* इति यङन्तप्रक्रिया ॥ ३ ॥ *

---

वेवीयत इति। 'हल' इति, 'अकृत्सार्व'ेति वा दीर्घः। चायः कीति। 'चायृ पूजानिशामनयो'रित्यस्य धातोः 'की' आदेशो यङीत्यर्थः।

---

स्वपिस्यमि। स्वप् आदि धातुओं को सम्प्रसारण हो, यङ् परे रहते।

न वशः। वश् धातु को सम्प्रसारण नहीं हो, यङ् परे रहते।

चायः की। पूजा और निशामन ( देखना ) अर्थ में जो चायृ धातु उसको 'की' आदेश हो, यङ् परे रहते।

ई घ्राध्मोः। घ्रा और ध्मा धातु को ईकार अन्तादेश हो, यङ् परे रहते।

नीग्वञ्चु। 'वञ्चु' आदि आठ ८ धातुओं के अभ्यास को 'नीक्' आगम हो, यङ् परे रहते और यङ् लुक् के विषय में।

---

१ शेषपूरणमेतत्।

## अथ यङ्लुगन्तप्रक्रिया ॥

**यङोऽचि च ।२।४।७४।** यङोऽचि प्रत्यये लुक् स्यात्, चकारात्तं [1]विनापि क्वचित्। अनैमित्तिकोऽयमन्तरङ्गत्वादादौ भवति । ततः प्रत्ययलक्षणेन यङन्तत्वाद् द्वित्वम् । अभ्यासकार्यम्। धातुत्वाल्लडादयः। 'शेषात्कर्तरि परस्मैपदम्' । 'चर्करीतं चे'त्यदादौ पाठाच्छपो लुक्।

**यङो वा ।७।३।९४।** यङन्तात्परस्य हलादेः पितः सार्वधातुकस्य ईड् वा स्यात्। 'भूसुवो'रिति निषेधो यङ्लुकि भाषायां न, 'बोभूतु तेतिक्ते' इति छन्दसि निपातनात्। बोभवीति। बोभोति। बोभूतः। बोभुवति। बोभवीषि। बोभोषि। बोभूथः। बोभूथ। बोभवीमि। बोभोमि। बोभूवः। बोभूमः। बोभवाञ्चकार। बोभवाम्बभूव। बोभवामास। बोभविता। बोभविष्यति। बोभवीतु। बोभोतु। बोभूतात्। बोभूताम्। बोभुवतु। बोभूहि। बोभूतात्। बोभवानि। बोभवाव। बोभवाम। अबोभवीत्। अबोभोत्। अबोभूताम्। अबोभवुः। बोभूयात्। बोभूयाताम्। बोभूयुः। बोभूयात्। बोभूयास्ताम्। बोभूयासुः। 'गातिस्थे'ति सिचो लुक्। 'यङो वे'तीट्पक्षे गुणं बाधित्वा नित्यत्वाद्वुक्। अबोभूवीत्। अबोभोत्। अबोभूताम्। अबोभूवुः।

---

यङोऽचीति। अचीति प्रत्ययस्य ग्रहणं, नतु प्रत्याहारस्य, यङा साहचर्यात्। तं विनाऽपि= अच्प्रत्ययाऽभावेऽपि । क्वचिदिति। 'बहुलं छन्दसी'त्यतो बहुलग्रहणाऽनुवृत्त्या चैतल्लभ्यते इत्यवधेयम्। अच्प्रत्ययादन्यत्रायं यङ्लुक् अनैमित्तिक इत्याशयः। शपो लुगिति। 'अदिप्रभृतिभ्य' इति शपो लुगित्यर्थः।

---

यङोऽचि च। यङ् का लुक् हो, अच् प्रत्यय परे रहते। और ( सूत्र में चकार के उपादान से ) अच् प्रत्यय के विना भी कहीं यङ् का लुक् हो।

यङो वा। यङन्त से परे जो हलादि पित् सार्वधातुक उसको ईट् आगम हो, विकल्प करके।

---

[1] 'विनापि बहुलं लुक् स्यात्' पा०।

अबोभविष्यत् ॥

जङ्गमीति । जङ्गन्ति । 'अनुदात्ते'त्यनुनासिकलोपः। जङ्गतः । जङ्ग्मति । 'म्वोश्च' । जङ्गन्मि । जङ्गन्वः ।

'श्तिपा, शपा-ऽनुबन्धेन निर्दिष्टं, यद्गणेन च ।
यत्रैकाज्ग्रहणं चैव, पञ्चैतानि न यङ्लुकि' ॥ १ ॥

—इति वचनान्न इण्निषेधः । जङ्गमिता । अनुनासिकलोपस्याऽऽभीयत्वेनाऽसिद्धत्वान्न हेर्लुक् । जङ्गहि । 'मो नो धातोः' । अजङ्गन् । अनुबन्धनिर्देशान्न च्लेरङ्—अजङ्गमीत् ।

रुग्रिकौ च लुकि ।७।४।९१। ऋदुपधस्य धातोरभ्यासस्य रुक्, रिक्, रीक्—एते स्युर्यङ्लुकि । ऋतश्च ।७।४।९२ ऋदन्ताद्धातोरपि तथा । वर्वृतीति । वरिवृतीति । वरीवृतीति । वर्वर्ति । वरिवर्ति । वरीवर्ति । वर्वृतः ३ । वर्वृतति ३ । वर्वर्तामास ३ । वर्वर्तिता ३ । गण-

---

जङ्गमीतीति । 'नुगतोऽनुनासिकान्तस्ये'ति नुक् । जङ्ग्मतीति । 'गमहने'त्युपधालोपः । न इण्निषेध इति । 'एकाच उपदेशेऽनुदात्ता'दित्यत्रेण्निषेधशास्त्र एकाज्ग्रहणात्तस्य यङ्लुकि अप्रवृत्तेरित्याशयः । रुग्रिकाविति । चेन 'रीगृदुपधे'त्यतो रीगनुकृष्यते । रुकि उकार उच्चारणार्थः । ऋदन्तेति । ऋताऽनुवर्त्तमानमङ्गं विशेष्यते, तेन ऋदन्तस्याङ्गस्य योऽभ्यासस्तस्येत्यर्थः । फलितार्थमाह—ऋदन्तेति ।

---

श्तिपा शपा । श्तिप् घटित निर्देश से, अनुबन्ध घटित निर्देश से और गणनिर्देश से, ( तत्तद्घटित सूत्रों से ) जो कार्य निर्दिष्ट हुए हैं, और एकाच् ग्रहण ( एकाज् घटित सूत्र ) से जो कार्य निर्दिष्ट है—ये पाँचों कार्य यङ् लुक् में नहीं होते हैं ।

रुग्रिकौ च । ऋदुपध धातु को रुक्, रिक् और रीक् ये तीन आगम हों, यङ् लुक् में ।

ऋतश्च । ह्रस्व ऋकारान्त धातु को भी रुक्, रिक्, रीक—ये तीनों आगम हों ।

निर्दिष्टत्वान्न वृद्ध्यश्चतुर्भ्य इति न। वर्वर्तिष्यति ३। अवर्वृतीत् ३। अवर्वत् ३। सिपि 'दश्चे'ति रुत्वपक्षे-रो रि। अवर्वाः ३। गणनिर्दिष्टत्वादङ् न। अवर्वर्तीत् ३॥

चर्करीति। चरिकरीति। चरीकरीति। चर्कर्ति। चरिकर्ति। चरीकर्ति। चर्कृतः। ३। चर्क्रति ३। चर्करांचकार ३। चर्करिता ३। अचर्करीत् ३। अचर्कः ३। चर्क्रियात् ३। आशिषि रिङ्—चर्क्रियात् ३। अचर्कारीत् ३।

'ऋतश्चे'ति तपरत्वान्नेह-[ कॄ [1]विक्षेपे ]। चाकर्ति। चाकरीति। चाकीर्तः। चाकीर्हि। चाकराणि। अचाकरीत्। अचाकः। अचाकीर्ताम्। अचाकरुः। अचाकारीत्। अचाकारिष्टाम्। [[1]अचाकारिषुः]।

तातर्त्ति। तातरीति। इत्यादि।

* इति यङ्लुगन्तप्रक्रिया[1] ॥ ४ ॥ *

[ [1]इति णिच्-सन्-यङ्-लुगन्ताः ] ॥

## अथ नामधातुप्रक्रिया ॥

सुप आत्मनः क्यच् ।३।१।८। इषिकर्मण, [2]एषितुरात्मसंबन्धिनः,

---

चाकर्त्तीति। 'कॄ विक्षेपे' इत्यस्येदं रूपम्।

'धातोः कर्मण' इत्यतः 'कर्मण' 'इच्छायां' 'वे' त्यनुवर्त्तते। सन्निधानादिच्छा च कर्मण एव ग्राह्येत्याह—इषिकर्मण इति। परस्य पुत्रमिच्छतीत्यत्रातिप्रसङ्गवारणाय-आत्मशब्दोपादानम्। स्वस्येति तदर्थः। स्वश्च क इत्याकाङ्क्षायां सन्निहितत्वादिच्छाकर्त्तैव स्वपदेन गृह्यते, तदाह-एषितुरात्मसम्बन्धिन इति। सुबन्तस्योक्तविशेषणद्वयमर्थद्वारकम्बोध्यम्।

---

सुप आत्मनः। इष् धातु का कर्म, एवं एषिता ( इच्छा करनेवाले ) का सम्बन्धी जो सुबन्त, उससे इच्छा अर्थ में क्यच् प्रत्यय हो, विकल्प करके।

---

१. क्वचित्कः पाठः। २ 'एषितृसम्बन्धिनः'।

सुबन्तादिच्छायामर्थे क्यज्वा [ स्यात् ]। **सुपो धातुप्रातिपदिकयोः ।२।४।७१।** एतयोरवयवस्य सुपो लुक् स्यात्। **क्यचि च ।७।४।३३।** अवर्णस्य ईः[1] । आत्मनः पुत्रमिच्छति-पुत्रीयति । *** मान्तप्रकृतिक-सुबन्तादव्ययाच्च क्यच्न** । किमिच्छति । इदमिच्छति ।

**अशनायोदन्यधनाया बुभुक्षापिपासागर्द्धेषु ।७।४।३४।** [[2]एते] क्यजन्ता निपात्यन्ते [ [2]बुभुक्षादिष्वर्थेषु ]। अशनायति । उदन्यति । धनायति । बुभुक्षादौ किम् ? अशनीयति । उदनीयति । धनीयति ।

**अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि ।७।१।५१।** एषां क्यचि-असुक्[3] ।

***अश्ववृषयोर्मैथुनेच्छायाम्** । अश्वस्यति वडवा । वृषस्यति गौः ।

---

क्यजन्त इति । उदकशब्दस्य उदन्भावः अन्ययोर्दीर्घ इत्यपि ज्ञेयम् । अशनायतीति । सद्यो भोक्तुमशनमिच्छति । उदन्यति--पातुं जलमिच्छति । धनायतीति । सत्यपि धने लुब्धः पुनरपि धनमिच्छति । अशनीयति--कालान्तरोपभोगायाऽशनमिच्छति । उदकीयति--स्नातुं जलमिच्छति । धनीयतीति । दरिद्रः सन् कुटुम्बभरणाय धनमिच्छति । अश्वस्यति । अश्वा मैथुनार्थमश्व-

---

सुपो धातु । धातु और प्रातिपदिक का अवयव जो सुप् उसका लुक् हो ।

क्यचि च । अवर्ण को ईत्व हो, क्यच् परे रहते ।

मान्तप्रकृति । मान्त प्रकृतिक सुबन्त से और अव्यय से क्यच् नहीं हो ।

अशनायो । 'अशनाय' आदि क्यजन्त–क्रम से बुभुक्षा आदि अर्थों में निपातित हों ।

अश्वक्षीर । अश्व, क्षीर, वृष और लवण इन शब्दों को आत्मप्रीति अर्थ गम्यमान हो तो असुक् आगम हो, क्यच् परे रहते ।

अश्ववृषयोर्मैथुनेच्छायाम् । अश्व और वृष से मैथुनेच्छा अर्थ में ही असुक् हो ।

---

1 'ईत्स्यात्' । 2 शेषपूरणमेतत् । 3 'क्यचि सुक्' पा० ।

*क्षीरलवणयोर्लालसायाम् । क्षीरस्यति बालः । लवणस्यत्युष्ट्रः । *सर्वप्रातिपदिकानां क्यचि लालसायां सुगसुकौ । दधिस्यति । दध्यस्यति ।

नः क्ये ।१।४।१५। क्यचि, क्यङि [च] नान्तमेव पदं [स्यात्] नान्यत् । 'न्लोपः'[1] । राजीयति । नान्तमेवेति किम् ? वाच्यति । 'हलि च' ।गीर्यति । पूर्यति । 'धातो'रित्येव । तेनेह न–दिवमिच्छति । दिव्यति । समिध्यति ।

क्यस्य विभाषा ।६।४।५०। हलः परयोः क्यच्क्यङोर्लोपो वाऽऽर्द्धधातुके । 'आदेः परस्य' । अतो लोपः'[2] । तस्य स्थानिवद्भावान्नोपधाया गुणः । समिधिता ।

काम्यच्च ।३।१।९। उक्तविषये काम्यच् । पुत्रमात्मन इच्छति—

---

मिच्छति । वृषस्यति = मैथुनार्थं वृषभमिच्छति गौः । लालसा = उत्कटेच्छा । राजीयतीति । क्यचि चे'तीत्त्वे कर्त्तव्ये 'पूर्वत्रासिद्ध'मिति नलोपस्याऽसिद्धत्वन्तु न शङ्क्यं, 'नलोपः सुप्स्वरे'ति नियमात् ।

---

क्षीरलवणयो । क्षीर और लवण शब्द से लालसा ( उत्कट इच्छा ) अर्थ में असुक् हो ।

सर्वप्रातिपदिकानां क्यचि । प्रातिपदिकमात्र से लालसा अर्थ में सुक् और असुक् आगम हो, क्यच् परे रहते ।

नः क्ये । क्यच् और क्यङ् परे रहते नान्त शब्द ही पदसञ्ज्ञक हो, अन्य शब्द पदसञ्ज्ञक नहीं हों ।

क्यस्य विभाषा । हल् से परे जो क्यच् और क्यङ्, उनका लोप हो, विकल्प करके, आर्द्धधातुक परे रहते ।

काम्यच । इष् धातु का कर्म और एषिता ( इच्छा का कर्त्ता ) का सम्बन्धी जो सुबन्त, उससे इच्छा अर्थ में काम्यच् हो ।

---

१ 'नलोपः' पा० । २ 'अल्लोपः' पा० ।

पुत्रकाम्यति । पुत्रकाम्यिता ।

उपमानादाचारे ।३।१।१०। उपमानात्कर्मणः सुबन्तादाचारेऽर्थे क्यच् [ स्यात् ]। पुत्रमिवाचरति—पुत्रीयति च्छात्रम् । विष्णूयति द्विजम् ।

*सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः । 'अतो गुणे' । कृष्ण इवाचरति-कृष्णति । स्व इवाचरति-स्वति । सस्वौ । अनुनासिकस्य क्विझलोः क्ङिति ।६।४।१५। अनुनासिकान्तस्योपधाया दीर्घः [ स्यात् ], क्वौ, झलादौ क्ङिति च । इदमिवाचरति इदामति । राजेवाचरति राजानति । 'इन्ह'न्निति नियमान्नेहोपधाया दीर्घः-पन्था इवाचरति [1]पथेनति । [1]मथेनति ।

कर्तुः क्यङ् सलोपश्च ।३।१।११। उपमानात्कर्तुः सुबन्तादाचारेऽर्थे क्यङ् वा स्यात्, सान्त [स्य] कर्तृवाचकस्य लोपो वा [स्यात्]। 'क्यङ् वे'त्युक्तेः पक्षे वाक्यम् । 'संनियोगशिष्टानां सह वा प्रवृत्ति'रिति क्यङ्-

---

आचरति=व्यवहरति । सर्वेति । प्रातिपदिकमात्रात् । कृष्णतीति । प्रातिपदिकग्रहणादिह 'सुप' इति न सम्बध्यते, तेन पदस्य जायमानं कार्यं सवर्णदीर्घादिकं न । तेनाऽदन्ततया शपा सहाऽकारस्य 'अतो गुणे' इति पररूपम् । सह वा प्रवृत्तिरिति । सह वा =सहैव । क्यङ्सलोपयोश्च संनियोग-

---

उपमानादाचारे । कर्म सञ्ज्ञक जो उपमानवाचक सुबन्त, उससे आचार अर्थ में क्यच् प्रत्यय हो ।

सर्वप्रातिपदिकेभ्यः । प्रातिपदिकमात्र से आचार अर्थ में क्विप् हो, विकल्प करके ।

अनुनासिकस्य क्वि । अनुनासिकान्त की उपधा को दीर्घ हो, क्वि और झलादि कित् ङित् परे रहते ।

कर्त्तुः क्यङ् । उपमानवाची जो कर्त्तृसञ्ज्ञक सुबन्त, उससे आचार अर्थ

---

१ 'पथीनती'त्येव साधिति तु परे शेखरकारादयः ।

सलोपयोः सहैव प्रवृत्तिः । लोपश्च व्यवस्थितः । *ओजसोऽप्सरसो नित्यमितरेषां विभाषया । कृष्ण इवाचरति—कृष्णायते । ओजायते । अप्सरायते । यशायते । यशस्यते । विद्वायते । विद्वस्यते ॥

*आचारेऽवगल्भक्लीबहोडेभ्यः क्विब्वा ['वक्तव्यः'] । 'वा'ग्रहणाद्वाक्यमपि । अवगल्भादयः पचाद्यजन्ताः । क्विप्संनियोगेनाऽनुदात्तत्वमनुनासिकत्वं चाऽन्त्यप्रत्ययस्य प्रतिज्ञायते । तेन तङ् । अवगल्भते । क्लीबते । होडते । भूतपूर्वादप्यनेकाच आम्, एतद्वार्तिकारम्भसामर्थ्यात् । अवगल्भाञ्चक्रे । क्लीबाञ्चक्रे । होडाञ्चक्रे । उपसर्गसमानाकारं पूर्वपदं धातुसंज्ञाप्रयोजके प्रत्यये चिकीर्षिते पृथक् क्रियते । तेन 'गल्भ'शब्दात्प्रागट् । अवागल्भत । अवागल्भिष्ट ।

लोहितादिडाज्भ्यः क्यष् ।३।१।१३। ['लोहितादिभ्यो, डाजन्ताच्च

---

शिष्टतया क्यङभावे न लोप इत्याशयः । व्यवस्थामेवाह—ओजस इति । ओजायत इति । ओजः = ओजस्वीव—आचरतीति विग्रहः । अप्सरस इवाचरति—अप्सरायते ।

तेनेति । तेन = अनुदात्तेत्त्वेन । तङ् = 'अनुदात्तङित' इति तङ् । लोहितादीति । लोहितादिभ्यो, डाजन्ताच्च भवत्यर्थे क्यष् स्यादित्यर्थः ।

---

में क्यङ् हो, विकल्प करके । और सान्त कर्तृ वाचक के सकार का लोप भी हो, विकल्प करके ।

ओजसोऽप्सरसः । ओजस् और अप्सरस् शब्द के सकार का नित्य लोप हो, और अन्य सकारान्त शब्दों के सकार का विकल्प करके लोप हो ।

आचारेऽवगल्भ । अवगल्भ, क्लीब, होड—इनसे आचार अर्थ में विकल्प करके क्विप् हो । पक्ष में—वाक्य रहे ।

लोहितादिडाज् । लोहितादि से और डाजन्त से 'भवति' इस अर्थ में क्यष् प्रत्यय हो ।

---

१ क्वाचित्कः पाठः ।

भवत्यर्थे क्यष् स्यात्[1] ]। वा क्यषः ।१।३।९०। क्यषन्तात्परस्मैपदं वा [[1]स्यात् ]। अलोहितो लोहितो भवति-लोहितायति ।लोहितायते। ननूच्चारणसामर्थ्यात्काञ्च इव क्यषोऽपि ककारः कुतो न श्रूयते ? [[1]इति चेच्छृणु]।तस्य भाष्ये प्रत्याख्यानात्। पटपटायति। पटपटायते।

कष्टाय क्रमणे ।३।१।१४। चतुर्थ्यन्तात्कष्टशब्दादुत्साहेऽर्थे क्यङ् [[1]स्यात्]। कष्टाय क्रमते—कष्टायते। पापं कर्तुमुत्सहत इत्यर्थः। *सत्र-कक्षकष्टकृच्छ्रगहनेभ्यः कण्वचिकीर्षायाम् [इति वक्तव्यम्[1]]। कण्वं-[[1]पापं। ] पापं चिकीर्षति—सत्रायते। कक्षायते। कर्मणो रोमन्थ-तपोभ्यां वर्त्तिचरोः ।३।१।१५। रोमन्थतपोभ्यां कर्मभ्यां क्रमेण वर्त्तनायां, चरणे चार्थे क्यङ् स्यात्। रोमन्थं वर्त्तयति—रोमन्थायते। *हनुचलन इति वाच्यम्। चर्वितस्याऽऽकृष्य पुनश्चर्वणे इत्यर्थः[2]।

सत्रेति। सत्रादयो वृत्तिविषये पापार्थाः। कण्वमिति। कण्वं (=पापं) चिकीर्षति-सत्रायते इत्यस्वपदविग्रहोऽत्र बोध्यः।

वा क्यषः। क्यषन्त से विकल्प से परस्मैपद हो।

कष्टाय। चतुर्थ्यन्त कष्ट शब्द से 'उत्सहते' इस अर्थ में 'क्यङ्' प्रत्यय हो।

सत्रकक्ष। सत्र, कक्ष, कष्ट, कृच्छ्र, गहन—इन शब्दों से 'पाप करने की इच्छा' इस अर्थ में क्यङ् प्रत्यय हो।

कर्मणो रोमन्थ। कर्मभूत जो रोमन्थ और तपस् शब्द, उनसे क्रम से वर्त्तना और चरण अर्थ में क्यङ् हो। [ अर्थात्-'रोमन्थ' से वर्त्तयति अर्थ में, और 'तपस्' से चरति अर्थ में क्यङ् हो ]।

हनुचलन इति। हनु ('जबाड़ा') का चलाना (चर्वित का पुनः चबाना, अर्थात् जुगाली करना) अर्थ जहाँ हो वहीं 'रोमन्थ' शब्द से क्यङ् हो, अन्यत्र नहीं हो।

१ क्वाचित्कः पाठः। २ 'चवर्णमित्यर्थः' पा०।

नेह-कीटो रोमन्थं वर्त्तयति।

*तपसः परस्मैपदञ्च। तपश्चरति— तपस्यति॥

बाष्पोष्मभ्यामुद्वमने ।३।१।१६। [ [1]आभ्यां कर्मभ्यां क्यङ् स्यादुद्वमने ]। बाष्पमुद्वमति—बाष्पायते। [ [1]ऊष्माणमुद्वमति—] ऊष्मायते। *फेनाच्चेति वक्तव्यम्। [ फेनमुद्वमति[1]—] फेनायते।

शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे ।३।१।१७। एभ्यः कर्मभ्यः करोत्यर्थे क्यङ् [स्यात्[1]]। शब्दं करोति-शब्दायते। *सुदिनदुर्दिननीहारेभ्यश्च। सुदिनायते। [ दुर्दिनायते[1]। नीहारायते ]।

* प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च। प्रातिपदिकाद्धात्वर्थे णिच् स्यात्, इष्ठे यथा प्रातिपदिकस्य-पुंवद्भावरभावटिलोपविन्मतुब्लोपयणादिलोपप्रस्थस्फाद्यादेशभसंज्ञास्तद्वण्णावपि स्युः। पटुमाचष्टे—पटयति। परत्वाद् वृद्धौ सत्यां टिलोपः। अपीपटत्। 'णौ चङी'त्यत्र भाष्ये तु 'वृद्धेर्लोपो बलीया'निति स्थितम्। अपपटत्।

---

सुदिनेति। सुदिनादिभ्यः कर्मभ्यः करोत्यर्थे क्यङित्यर्थः। सुदिनं करोति—सुदिनायते।

---

तपसः परस्मै। क्यङन्त तपस् शब्द से परस्मैपद हो।

बाष्पोष्मभ्या। कर्मीभूत बाष्प और 'ऊष्म' शब्द से उद्वमन अर्थ में क्यङ् हो।

फेनाच्च। कर्मीभूत 'फेन' शब्द से 'उद्वमन' अर्थ में क्यङ प्रत्यय हो।

शब्दवैर। कर्मसञ्ज्ञक—शब्द, वैर आदि शब्दोंसे करोत्यर्थमें क्यङ् प्रत्यय हो।

सुदिनदुर्दिन। कर्मीभूत सुदिन आदि से करोत्यर्थ में क्यङ् हो।

प्रातिपदिकाद्धात्वर्थे। प्रातिपदिक मात्र से धात्वर्थ में णिच् प्रत्यय हो, बहुलता (विकल्प) करके। और इष्ठन् प्रत्यय परे रहते प्रातिपदिक को जो २ पुंवद्भाव आदि कार्य होते हैं, वे इस णिच् के परे रहते भी हों।

---

१ क्वाचित्कः पाठः।

पुच्छभाण्डचीवराण्णिङ्।३।१।२०।[¹पुच्छभाण्डचीवरेभ्यो णिङ् स्यात् ]। *पुच्छादुदसने, व्यसने, पर्यसने च। विविधं, विरुद्धं चोत्क्षेपणं—व्यसनम्। उत्पुच्छयते। परिपुच्छयते। विपुच्छयते। *भाण्डात्समाचयने। सम्भाण्डयते। समबभाण्डत।

*चीवरादर्जने, परिधाने च। संचीवरयते भिक्षुः।

मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच् ।३।१।२१। [¹एभ्यो णिच् स्यात् ] कृञर्थे। मुण्डं करोति—मुण्डयति।

*व्रताद्भोजन-तन्निवृत्त्योः। पयः, शूद्रान्नं वा-व्रतयति।

---

उत्पुच्छयते = पुच्छमितस्तत उपर्यूर्ध्वं च विक्षिपतीत्यर्थः। सम्भाण्डयत इति। भाण्डानि सङ्गृह्णातीत्यर्थः। कृञर्थ इति। क्रियासामान्ये, क्रियाविशेषे च। पयो व्रतयति = पयो भुङ्क्ते। शूद्रान्नं व्रतयति=शूद्रान्नं परिवर्जयतीति यथायथमर्थः।

---

पुच्छभाण्ड। कर्मीभूत पुच्छ और भाण्ड शब्द से णिङ् प्रत्यय हो।

पुच्छादुदसने। पुच्छ शब्द से 'उदसन' ( ऊपर को हिलाना ), 'व्यसन' ( अनेक प्रकार से, तथा विरुद्ध रूप से हिलाना ) और 'पर्यसन' ( चारों ओर हिलाना, डुलाना ) इन तीन ही अर्थों में णिङ् होता है।

भाण्डात्समाचयने। भाण्ड शब्द से समाचयन ( इकठा करना, एवं ठीक से जचाकर रखना ) अर्थ में ही णिङ् होता है।

चीवरादर्जने। चीवर शब्द से अर्जन (उपार्जन करना, इकट्ठा करना), और परिधान ( पहिरना ) इन अर्थों में ही णिङ् होता है।

मुण्डमिश्र। 'मुण्ड' आदि शब्दों से क्रियासामान्य या क्रियाविशेष अर्थ में णिच् प्रत्यय हो।

व्रताद्भोजन। व्रत शब्द से भोजन करना और भोजन निवृत्ति ( भोजन नहीं करना ) अर्थों में ही णिच् प्रत्यय होता है।

---

१ शेषपूरणमेतदस्माकम्।

*वस्त्रात्समाच्छादने । संवस्त्रयति । *हल्यादिभ्यो ग्रहणे । हलि-कल्योरदन्तत्वं च निपात्यते । हलिं, कलिं ( वा ) गृह्णाति—हलयति । कलयति । महद्धलं—हलिः । कृतं गृह्णाति—कृतयति । तूस्तानि विहन्ति—वितूस्तयति । तूस्तं केशा इत्येके । जटीभूताः केशा इत्यन्ये । [ [1]पापमित्यपरे ] । *सत्याऽर्थवेदानामापुक्क्यः । सत्यापयति । अर्थापयति । वेदापयति । पाशं विमुञ्चति-विपाशयति । रूपं पश्यति-रूपयति । वीणयोपगायति-उपवीणयति । तूलेनानुकुष्णाति—अनुतूलयति तृणाग्रम् । [ [1]तूलेनाऽनुघट्टयतीत्यर्थः] । श्लोकैरुपस्तौति-उपश्लोकयति । सेनयाऽभियाति-अभिषेणयति । लोमान्यनुमार्ष्टि-अनुलोमयति । त्वचं संवरणे । पचाद्यच् । त्वचं गृह्णाति त्वचयति । वर्मणा संनह्यति-संवर्मयति । वर्णं गृह्णाति-वर्णयति । चूर्णैरवध्वंसते—अवचूर्णयति ॥

* इति नामधातुप्रक्रिया ॥५॥ *

---

संवस्त्रयति । वस्त्रेणाच्छादयति । कृतयति=कृतमुपकारं मनुते इत्यर्थः । त्वचयति=वृक्षो, व्रणादिर्वा त्वचं गृह्णाति । चूर्णैरिति । चूर्णतां नयति । चूर्णीभवतीति वा ।

---

वस्त्रात्समा । वस्त्र शब्द से आच्छादन अर्थ में णिच् हो ।

हल्यादिभ्यो । हलि आदि से ग्रहण अर्थ में णिच् हो ।

सत्यार्थवेदा । सत्य, अर्थ, और वेद शब्दों को आपुक् आगम हो, णिच् परे रहते ।

---

१ लिखितेषु क्वचिदपि न दृश्यते ।

## अथ कण्ड्वादयः ।

**कण्ड्वादिभ्यो यक् ।३।१।२७।** एभ्यो धातुभ्यो नित्यं यक् स्यात्, स्वार्थे । कण्डूञ् १ गात्रविघर्षणे । कण्डूयति । कण्डूयते । इत्यादि ॥

॥ इति कण्ड्वादयः ॥

---

## अथात्मनेपदप्रक्रिया ।

**कर्त्तरि कर्मव्यतिहारे ।१।३।१४।** क्रियाविनिमये द्योत्ये कर्त्तर्यात्मनेपदं स्यात् । व्यतिलुनीते । अन्यस्य योग्यं लवनं [[1]अन्यः] करोतीत्यर्थः ।

**न गतिहिंसार्थेभ्यः ।१।३।१५।** [[2]गतिहिंसार्थेभ्यः कर्मव्यतिहारे आत्मनेपदं न स्यात् ] । व्यतिगच्छन्ति । व्यतिघ्नन्ति । * **हरतेरप्रतिषेधः ।**

---

धातुभ्य इति । 'धातोरेकाच' इत्यतो धातुग्रहणमनुवर्त्तते; तेन प्रातिपदिकव्यावृत्तिः ।

हरतेरिति । हिंसार्थकस्यापि हरतेः कर्मव्यतिहारे आत्मनेपदं भवत्येवेत्यर्थः ।

---

कण्ड्वादिभ्यो यक् । कण्ड्वादिगणपठित धातुओं से नित्य यक् प्रत्यय हो, स्वार्थ में ।

कर्त्तरि कर्म । क्रियाविनिमय ( उलटा पलटा करना ) अर्थ द्योत्य हो तो धातु से कर्त्ता अर्थ में आत्मनेपद हो ।

न गति । गत्यर्थक और हिंसार्थक धातुओं से क्रियाविनिमय अर्थ में आत्मनेपद नहीं हो ।

हरतेरप्रतिषेधः । हृञ् धातु से कर्मव्यतिहार अर्थ में आत्मनेपद का प्रतिषेध नहीं हो । अर्थात् हृञ् धातु से कर्मव्यतिहार में आत्मनेपद होता ही है ।

---

१ क्वचिन्न । २ शेषपूरणमेतत् ।

संप्रहरन्ते राजानः। इतरेतराऽन्योन्योपपदाच्च ।१।३।१६। *परस्परोपपदाच्चेति वक्तव्यम् । इतरेतरस्याऽन्योन्यस्य, परस्परस्य वा व्यतिलुनन्ति।

नेर्विशः ।१।३।१७। [ [1]नेर्विश आत्मनेपदं स्यात् ]। निविशते। परिव्यवेभ्यः क्रियः ।१।३।१८।[ [1]परिव्यवेभ्यः क्रिय आत्मनेपदं स्यात् ]। परिक्रीणीते। विक्रीणीते। अवक्रीणीते। विपराभ्यां जेः ।१।३।१९। [ [1]विपराभ्यां जेरात्मनेपदं स्यात् ]। विजयते। पराजयते। क्रीडोऽनुसंपरिभ्यश्च। १।३।२१। [ [1]अनुसंपरिभ्यः क्रीडतेरात्मनेपदं स्यात् ]। चादाङः। अनुक्रीडते। संक्रीडते। परिक्रीडते। आक्रीडते। *समोऽकूजने। संक्रीडते। कूजने तु—संक्रीडति [2]चक्रम्। *आगमेः क्षमायाम्।

---

इतरेतरेति । इतरेतराद्युपपदाद्धातोः कर्मव्यतिहारेऽप्यात्मनेपदं नेत्यर्थः।

---

इतरेतरा.। इतरेतर और अन्योन्य शब्द उपपद में है जिसके ऐसी जो धातु, उससे कर्मव्यतीहार में आत्मनेपद नहीं हो।

परस्परोप। परस्परोपपदक जो धातु उससे कर्मव्यतीहार में आत्मनेपद नहीं हो।

नेर्विशः। निपूर्वक विश् धातुसे परगामी क्रिया फलमें भी आत्मनेपद हो।

परिव्यवेभ्यः क्रियः। परि, वि, और अवपूर्वक क्री धातु से परगामी क्रियाफल में भी आत्मनेपद ही हो।

विपराभ्यां जेः। वि और परापूर्वक 'जि' धातुसे आत्मनेपद हो।

क्रीडोऽनु। अनु, सम्, परि और आङ् पूर्वक क्रीड धातु से आत्मनेपद हो।

समोऽकूजने। सम्पूर्वक क्रीड धातुसे आत्मनेपद हो, कूजने ( चों-चों करने ) से भिन्न अर्थ में।

आगमेः। आङ्पूर्व ण्यन्त गम् धातु से क्षमा (=उपेक्षा, एवं धीरे २) अर्थ में परगामी क्रिया फल में भी आत्मनेपद ही हो।

---

१ शेषपूरणमिदम्। २ 'रथचक्रं' पा०।

ण्यन्तस्येदं ग्रहणम्। आगमयस्व तावत्। मा त्वरिष्ठा इत्यर्थः। *शिक्षेर्जिज्ञासायाम्। धनुषि शिक्षते। धनुर्विषयज्ञाने शक्तो भवितुमिच्छतीत्यर्थः।

वृत्ति-सर्ग-तायनेषु क्रमः।१।३।३८। [ [1]एष्वर्थेषु क्रम आत्मनेपदं स्यात् ]। वृत्तिरप्रतिबन्धः। ऋचि क्रमते बुद्धिः। सर्गः—उत्साहः। अध्ययनाय क्रमते। क्रमन्तेऽस्मिञ्छास्त्राणि। स्फीतानि भवन्तीत्यर्थः।

आङ उद्गमने।१।३।४०। [ [1]आङः परस्मात्क्रम आत्मनेपदं स्यादुद्गमने ]। आक्रमते सूर्यः। * ज्योतिरुद्गमन इति वाच्यम्। नेह आक्रामति धूमो हर्म्यतलात्।

वेः पादविहरणे।१।३।४१। [ [1]वेः परस्मात् क्रमेरात्मनेपदं स्या-

---

आगमयस्वेति। क्षमस्व कञ्चित्कालं, मा त्वरिष्ठा इत्यर्थः। शिक्षेरिति। सन्नन्तात् शकेर्जिज्ञासायामात्मनेपदमित्यर्थः। शिक्षतेस्त्वत्र न ग्रहणं, तस्याऽनुदात्तेत्त्वात्तत आत्मनेपदस्य स्वत एव सिद्धेः।

धनुषीति। धनुर्वेदविषयं जिज्ञासते इत्यर्थः। ज्योतिरिति। सूर्याद्युद्गमने इत्यर्थः।

धूम इति। अत्र धूमो न ज्योतिरिति नात्मनेपदम्।

---

शिक्षेर्जिज्ञासायां। सन्नन्त 'शक्' धातु से जिज्ञासा ( पूछना ) अर्थ में आत्मनेपद हो।

वृत्तिसर्गतायनेषु। क्रम धातु से आत्मनेपद हो, वृत्ति ( नहीं रुकना ), और सर्ग ( उत्साह ), और तायन ( स्फीतता, वृद्धि ) अर्थों में।

आङ उद्गमने। आङ्पूर्वक क्रम् धातु से आत्मनेपद हो, उद्गमन ( ऊपर उठना, उगना ) अर्थ में।

ज्योतिरुद्गमने। ज्योति ( प्रकाश ) के उगने अर्थ में ही आङ्पूर्वक क्रम धातु से आत्मनेपद हो।

वेः पादवि। वि उपसर्ग से परे जो क्रम् धातु, उससे आत्मनेपद हो, पाद के विहरण ( पैर चलाना, पैर रखना ) अर्थ में।

---

1 शेषपूरणमेतत्सूत्राक्षरलभ्यम्।

त्पादविहरणे]। साधु विक्रमते वाजी। प्रोपाभ्यां समर्थाभ्याम्।१।३।४२। [१समर्थाभ्यां प्रोपाभ्यां परस्मात्क्रमेरात्मनेपदं स्यात्]। आरम्भेऽनयोस्तुल्यार्थता। प्रक्रमते। उपक्रमते। समर्थाभ्यां किम्? प्रक्रामति। गच्छतीत्यर्थः। उपक्रामति। आगच्छतीत्यर्थः।

अनुपसर्गाद्वा।१।३।४३। [१अनुपसृष्टात्क्रमेरात्मनेपदं वा स्यात्]। क्रामति। क्रमते। अपह्नवे ज्ञः।१।३।४४। [१अपह्नवे जानातेरात्मनेपदं स्यात्]। शतमपजानीते। अपलपतीत्यर्थः।

अकर्मकाच्च।१।३।४५। [१अकर्मकाज्जानातेरात्मनेपदं स्यात्]। सर्पिषो जानीते। सर्पिषोपायेन प्रवर्तत इत्यर्थः।

समवप्रविभ्यः स्थः।१।३।२२। [१एभ्यस्तिष्ठतेरात्मनेपदं स्यात्]। सन्तिष्ठते। अवतिष्ठते। प्रतिष्ठते। वितिष्ठते।

*आङः प्रतिज्ञायामुपसंख्यानम्। शब्दं नित्यमातिष्ठते।

---

समर्थाभ्यां=समानार्थाभ्याम्, तुल्यार्थाभ्यामिति यावत्। शकन्ध्वादित्वात् पररूपम्। क्रामतीति। 'क्रमःपरस्मैपदे' इति दीर्घः।

शब्दं नित्यमिति। 'शब्दो नित्य' इति प्रतिज्ञां करोतीत्यर्थः।

---

प्रोपाभ्यां। तुल्यार्थक जो प्र और उप उपसर्ग, उनसे परे जो क्रम् धातु, उससे आत्मनेपद हो।

अनुसर्गाद्वा। अनुपसर्ग क्रम धातु से आत्मनेपद हो, विकल्प करके।

अपह्नवे ज्ञः। अपह्नव (छिपाना) अर्थ में ज्ञा धातु से आत्मनेपद हो।

अकर्मकाच्च। अकर्मक 'ज्ञा' धातु से आत्मनेपद हो।

समवप्रविभ्यः स्थः। सम्, अव, प्र, वि—इन उपसर्गों से परे जो स्थाधातु, उससे आत्मनेपद हो।

आङः प्रतिज्ञा। आङ् पूर्वक स्था धातु से प्रतिज्ञा अर्थ में आत्मनेपद हो।

---

१ शेषपूरणमेतत्।

प्रकाशनस्थेयाख्ययोश्च ।१।३।२३। [[1]तिष्ठतेरात्मनेपदं स्यादनयोरर्थयोः]। गोपी कृष्णाय तिष्ठते। आशयं प्रकाशयतीत्यर्थः। 'संशय्य कर्णादिषु तिष्ठते यः'। कर्णादीन्निर्णेतृत्वेनाश्रयतीत्यर्थः।

उदोऽनूर्ध्वकर्मणि ।१।३।२४। [[1]उदः परस्मात्तिष्ठतेरात्मनेपदं स्यादनूर्ध्वकर्मणि]। मुक्तावुत्तिष्ठते। अनूर्ध्वेति किम्? पीठादुत्तिष्ठति।

उपान्मन्त्रकरणे ।१।३।२५। [[1]उपात्तिष्ठतेरात्मनेपदं स्यान्मन्त्रकरणे]। आग्नेय्याऽऽग्नीध्रमुपतिष्ठते। मन्त्रकरणे किम्। भर्तारमुपतिष्ठति यौवनेन।

* उपाद्देवपूजासङ्गतिकरणमित्रकरणपथिष्विति वाच्यम्। आदित्यमुपतिष्ठते। गङ्गा यमुनामुपतिष्ठते। रथिकानुपतिष्ठते। मित्रीकरोतीत्यर्थः। पन्थाः स्रुघ्नमुपतिष्ठते। प्राप्नोतीत्यर्थः।

*[2]वा लिप्सायाम्। भिक्षुकः प्रभुमुपतिष्ठते। उपतिष्ठति वा।

---

प्रकाशनेति। अनयोरर्थयोस्तिष्ठतेरात्मनेपदमित्यर्थः। तत्र–प्रकाशनं = ज्ञापनम्। स्थेयः = धर्माधिकरणाधिपतिः। 'स्थेयो विवादस्थानस्य निर्णेतरि पुरोहिते' इति मेदिनी। पीठादिति। पीठात् = सिंहासनादेः। [ पीढा ]। मन्त्रकरण इति। मन्त्रः करणं यत्र स्तोत्रे तत् मन्त्रकरणं = स्तुतिस्तत्र वर्त्तमानादुपपूर्वात्तिष्ठतेरात्मनेपदमित्यर्थः। लिप्सायां=लाभेच्छायाम्।

---

प्रकाशनस्थेया। प्रकाशन (स्वाभिप्रायप्रकाशन) अर्थ में, और स्थेय (मध्यस्थ, निर्णायक) की आख्या में—स्था धातु से आत्मनेपद हो।

उदोऽनूर्ध्व। उद् उपसर्ग से परीभूत स्थाधातु से आत्मनेपद हो, अनूर्ध्वकर्म (उठने से भिन्न अर्थ) में।

उपाद्देव पूजा। उप उपसर्ग से परीभूत स्थाधातु से आत्मनेपद हो, देवपूजा आदि अर्थों में।

वा लिप्सायाम्। उपसे परीभूत स्था धातु से लिप्सा अर्थ में आत्मनेपद हो, विकल्प करके।

---

१ सूत्राक्षरलभ्यं शेषपूरणमेतत्। २ 'वा लिप्सायामिति वक्तव्यम्' पा०।

उद्विभ्यां तपः ।१।३।२७। [ [1]उद्विभ्यां तप आत्मनेपदं स्यात् ]। 'अकर्मका'दित्येव । उत्तपते । वितपते । दीप्यत इत्यर्थः । * स्वाङ्गकर्मकाच्चेति वक्तव्यम् । उत्तपते, वितपते पाणिम् । नेह-सुवर्णमुत्तपति ।

आङो यमहनः ।१।३।२८। [ [1]आङः पराभ्यामाभ्यामात्मनेपदं स्यात् ] । आयच्छते । आहते । 'अकर्मकात्स्वाङ्गकर्मका'दित्येव । नेह—परस्य शिर आहन्ति ।

आत्मनेपदेष्वन्यतरस्याम् ।२।४।४४। [ [2]आत्मनेपदेषु परेषु ] हनो वधादेशो वा स्याल्लुङि । आऽवधिष्ट । आऽवधिषाताम् । आऽवधिषत ।

हनः सिच् ।१।२।१४। [ [2]हनः सिच् ] कित् [ स्यात्[2] ]। अनुनासिकलोपः । आहत । आहसाताम् । आहसत । यमो गन्धने ।१।२।१५। [ [2]यमः परः ] सिच् कित् [ [2]स्याद्गन्धने ]। गन्धनं—

---

उत्तपत इति । दीपः, सूर्यो वा उत्तपते । दीप्यते इत्यर्थः ।

---

उद्विभ्यां तपः । उद् और वि उपसर्ग से परे जो अकर्मक तप धातु, उससे आत्मनेपद हो ।

स्वाङ्गकर्मकाच्चेति । उद् और वि उपसर्ग से परे जो स्वाङ्गकर्मक तप धातु, उससे ( भी ) आत्मनेपद हो ।

आङो यमहनः । आङ् उपसर्ग से परे जो अकर्मक और स्वाङ्गकर्मक यम् और हन् धातु, उससे आत्मनेपद हो ।

आत्मनेपदेष्वन्य । हन् धातु को वध आदेश हो, विकल्प करके, लुङ् सम्बन्धी आत्मनेपद परे रहते ।

हनः सिच् । हन् धातु से परे जो सिच्, वह कित् हो ।

यमो गन्धने । सूचन ( अर्थात् परदोष प्रकटी करण ) अर्थ में यम् धातु से परे जो सिच्, वह कित् हो ।

---

१ शेषपूरणमिदम् । २ सूत्राक्षरलब्धस्यैव स्पष्टप्रतिपत्तये पूरणमिदम् ।

सूचनं। परदोषाविष्करणम् । उदायत । गन्धने किम्? उदायंस्त पादम्। आकृष्टवानित्यर्थः।

**समो गम्यृच्छिभ्याम्।१।३।२९।** [[1]समो गम्यृच्छिभ्यामात्मनेपदं स्यात्]। 'अकर्मकाभ्या'मित्येव। सङ्गच्छते। **वा गमः।१।२।१३।** गमः परौ झलादी लिङ्सिचौ वा कितौ स्तः। सङ्गसीष्ट। सङ्गंसीष्ट। समगत। समगंस्त। समृच्छते। अकर्मकाभ्यां किम्? ग्रामं सङ्गच्छति।

*** विदिप्रच्छिस्वरतीनामुपसंख्यानम् ।** वेत्तेरेव ग्रहणम्। संवित्ते। संविदाते।

**वेत्तेर्विभाषा।७।१।७।** वेत्तेः परस्य झादेशस्याऽतो रुडागमो वा [[2]स्यात्]। संविद्रते। संविदते। संपृच्छते। संस्वरते।

[*** [3]अर्तिश्रुदृशिभ्यश्चेति वक्तव्यम्।** 'अर्ती'ति द्वयोरेव ग्रहणम्। अङ्विधौ त्वियर्त्तेरेवे'त्युक्तम्। मा समृत। मा समृषाताम्। मा समृषतेति। समार्त्त। समार्षाताम्। समार्षतेति च-भ्वादेः। इयर्त्तेस्तु-

---

सङ्गच्छत इति। सङ्गतं भवतीत्यर्थः।

वेत्तेरिति। 'विद ज्ञाने' इत्यादादिकस्येत्यर्थः।

---

समो गम्यृच्छि। सम् उपसर्ग से परे जो अकर्मक गम् और ऋच्छ धातु, उससे आत्मनेपद हो।

वा गमः। गम् धातु से परे जो झलादि लिङ् और झलादि सिच् वह कित् हो, विकल्प करके।

विदिप्रच्छि। सम् उपसर्ग से परे जो विद्, प्रच्छ और स्वृ धातु उनसे आत्मनेपद हो।

वेत्तेर्विभाषा। विद् धातु से परे जो झादेश अत्, उसको रुट् आगम हो, विकल्प करके।

---

१ शेषपूरणमेतत्। २ क्वाचित्कः पाठः। ३ अयं पाठ एकत्रादर्शे दृश्यते।

मा समरत । मा समरेताम् । मा समरन्त ॥ समारत । समारेताम् । समारन्त इति । संश्रृणुते । संपश्यते ] ।

अथाऽस्मिन्नकर्मकाधिकारे हनिगम्यादीनां कथमकर्मकतेति चेत्, शृणु—

'धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात् ।
प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया' ॥ १ ॥

वहति भारम् । नदी वहति । स्यन्दत इत्यर्थः । जीवति । नृत्यति । प्रसिद्धेर्यथा—मेघो वर्षति । कर्मणोऽविवक्षातो यथा— 'हितान्न यः संश्रृणुते स किंप्रभुः' ।

संमाननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः

---

हनिगम्यादीनामिति । सकर्मकतया प्रसिद्धानां हनिगम्यादीनामित्यर्थः ।

वहति भारमिति । अत्र प्रापणार्थस्य सकर्मकस्य वहेर्नदी वहतीत्यत्र स्यन्दनरूपेऽर्थान्तरे वर्त्तमानतयाऽकर्मकत्वम् । जीवतीति । अत्र च प्राणरूप-कर्मणो धात्वर्थेन—प्राणधारणरूपेण-उपसङ्ग्रहात्, =अन्तर्भावात्—जीवते-रकर्मकता ।

वर्षतीति । अत्र वर्षणकर्मणो जलस्य प्रसिद्धत्वाद्वर्षतेरकर्मकत्वम् । हितादिति । हितात्पुरुषाद्यो, न संश्रृणुते=स्वहितं न संश्रृणुते, स किंप्रभुः=कुत्सितो राजे-त्यर्थः । अत्र स्वहितस्य वस्तुतः कर्मत्वेऽपि तदविवक्षयाऽकर्मकत्वम् । संमाननेति । अत्र उत्सञ्जनज्ञानविगणनव्यया नयतेर्वाच्यार्थाः, संमाननाचार्यकरणप्रभृतय इतरे

---

धातोरर्थान्तरे वृत्तेः । ( १ ) सकर्मक क्रियावाची धातु भी यदि अकर्मक क्रिया रूप अर्थान्तर को कहने लगे तो वह क्रिया ( तादृश क्रिया वाचक धातु ) अकर्मक हो जाती है । ( २ ) यदि कर्म का धात्वर्थ से उपसङ्ग्रह हो जाए तो क्रिया (तद्वाची धातु) अकर्मक हो जाती है । (३) कर्म प्रसिद्ध होने से उसकी अविवक्षा की जाए तो भी वह क्रिया (तद्वाची धातु) अकर्मक हो जाती है ।

संमाननो । संमानन, उत्सञ्जन, आचार्यकरण, ज्ञान, भृति, विगणन, और व्यय —ये अर्थ गम्यमान हों तो नीधातु से आत्मनेपद हो ।

।१।३।३६। [ [1]एष्वर्थेषु निय आत्मनेपदं स्यात्। [2]अत्रोत्सञ्जन-ज्ञान-विगणन-व्यया नयतेर्वाच्याः। इतरे प्रयोगोपाधयः। तथाहि-]। शास्त्रे नयते। [[2]शास्त्रस्थं सिद्धान्तं शिष्येभ्यः प्रापयतीत्यर्थः। तेन शिष्यसंमाननं फलितम्। उत्सञ्जने— ] दण्डमुन्नयते। उत्क्षिपतीत्यर्थः। माणवकमुपनयते। [[2]विधिना आत्मसमीपं प्रापयतीत्यर्थः। उपनयनपूर्वकेणाध्यापनेन हि उपनेतरि आचार्यत्वं क्रियते। ज्ञाने—तत्त्वं नयते। निश्चिनोतीत्यर्थः]। कर्मकरानुपनयते। [[2]भृतिदानेन स्वसमीपं प्रापयतीत्यर्थः। विगणनमृणादेर्नियातनम्]। करं विनयते। राज्ञे देयं भागं परिशोधयतीत्यर्थः। शतं विनयते। धर्मार्थं विनियुङ्क्ते इत्यर्थः।

❋ उपसर्गादस्यत्यूह्योर्वेति वाच्यम्। वन्धं निरस्यति। निरस्यते। समूहति। समूहते।

उपसर्गाद्ध्रस्व ऊहतेः ।७।४।२३। [[1]उपसर्गादूहतेर्ह्रस्वः स्यात्], यादौ क्ङिति। ब्रह्म समुह्यात्। अग्निं समुह्य।

निसमुपविभ्यो ह्वः ।१।३।३०। [एभ्यो ह्व आत्मनेपदं स्यात्[1]]।

---

प्रयोगोपाधयः=वाच्यत्वाऽभावेऽपि आर्थिकाः,शब्दप्रयोगे सत्तामात्रेण निमित्तभूताः। आत्मनेपदद्योत्या इति यावत्। तत्र—उत्सञ्जनम्=उत्क्षेपणम्। उत्थापनमिति यावत्। ('उछालना' 'लाठी आदि भांजना')। विनयते=परिशोधयति। ('नकी करना' 'चुकता करना')। विनियुङ्क्त इति। अत्रविनियोगः=व्ययः। ('लगाना' 'खर्च करना')।

---

उपसर्गादस्यत्यू। उपसर्ग से परे जो अस् और ऊह धातु उससे आत्मनेपद हो, विकल्प करके।

उपसर्गाध्द्रस्व। उपसर्ग से परे जो ऊह् धातु, उसके अच् को ह्रस्व हो, यकारादि कित् ङित् प्रत्यय परे रहते।

निसमुपविभ्यो। नि, सम्, उप, वि—इन उपसर्गों से परे जो ह्वेञ् धातु, उससे परगामी क्रियाफल में भी आत्मनेपद ही हो।

---

१ शेषपूरणमेतत्। २ एकत्र लिखितेऽयं पाठो दृश्यते।

निह्वयते। **स्पर्द्धायामाङः ।१।३।३१।** [ [1]आङो ह्व आत्मनेपदं स्यात्, स्पर्द्धायाम् ]। कृष्णश्चाणूरमाह्वयते। स्पर्द्धायां किम्? पुत्रमाह्वयति।

**उदश्चरः सकर्मकात् ।१।३।५३।** [ [1]उत्पूर्वात्सकर्मकाच्चरतेरात्मनेपदं स्यात् ]। धर्ममुच्चरते। उल्लङ्घ्य गच्छतीत्यर्थः।

**समस्तृतीयायुक्तात् ।१।३।५४।** [[1]तृतीयान्तेन युक्तात्सम्पूर्वाच्चरतेरात्मनेपदं स्यात् ]। रथेन सञ्चरते।

**दाणश्च सा चेच्चतुर्थ्यर्थे ।१।३।५५।** समो दाणस्तृतीयान्तेन युक्तादुक्तं स्यात्तृतीया चेच्चतुर्थ्यर्थे। दास्या संयच्छते [2]कामी।

**उपाद्यमः स्वकरणे ।१।३।५६।** [ [1]उत्पूर्वाद्यम आत्मनेपदं स्यात्स्वकरणे ]। स्वकरणं—स्वीकारः। भार्यामुपयच्छते। **विभाषोपयमने**

---

उदश्चर इति। उत्पूर्वाच्चरतेः सकर्मकादात्मनेपदं स्यादित्यर्थः। सम इति। संपूर्वाच्तृतीयान्तेन युक्ताच्चरतेरात्मनेपदं स्यादित्यर्थः। स्वीकारः=स्वत्वेन परिग्रहः।

---

**स्पर्द्धायामाङः।** स्पर्द्धा गम्यमान हो तो आङ् से परे जो ह्वेञ् धातु, उससे परगामी क्रियाफल में भी आत्मनेपद हो।

**उदश्चरः।** उद् उपसर्ग से परे जो सकर्मक चर् धातु, उससे आत्मनेपद हो।

**समस्तृतीया।** तृतीयान्त से युक्त जो सम्पूर्वक चर् धातु, उससे आत्मनेपद हो।

**दाणश्च सा चेत्।** तृतीयान्त से युक्त जो सम्पूर्वक दाण् धातु, उससे आत्मनेपद हो, वह तृतीया यदि चतुर्थी के अर्थ में हो तो।

**उपाद्यमः।** उपपूर्वक यम् धातु से आत्मनेपद हो, स्वीकार अर्थ गम्यमान हो तो।

**विभाषोपयमने।** यम् धातु से परे जो सिच्, वह कित् हो, विकल्प करके, विवाह अर्थ गम्यमान हो तो।

---

१ शेषपूरणमेतत्। २ 'कामुकः' पा०।

।१।२।१६। यमः सिच् किद्वा [1]स्याद्विवाहे[[2]ऽर्थे]। रामः सीतामुपायत, उपायंस्त वा। उदवोढेत्यर्थः।

**ज्ञाश्रुस्मृदृशां सनः** ।१।३।५७। सन्नन्तानामेषां प्राग्वत्। धर्मं जिज्ञासते। शुश्रूषते। सुस्मूर्षते। दिदृक्षते॥

**नाऽनोर्ज्ञः** ।१।३।५८। [ [3]अनुपूर्वाज्जानातेः सन्नन्तादात्मनेपदं न स्यात् ]। पुत्रमनुजिज्ञासति।

**प्रोपाभ्यां युजेरयज्ञपात्रेषु** ।१।३।६४। प्रयुङ्क्ते। उपयुङ्क्ते। ***स्वराद्यन्तोपसर्गादिति वाच्यम्**। उद्युङ्क्ते। नियुङ्क्ते। अयज्ञपात्रेषु किम्? द्वन्द्वं न्यञ्चि पात्राणि प्रयुनक्ति। **समः क्ष्णुवः** ।१।३।६५। [ [3]सम्पूर्वात्क्ष्णुव आत्मनेपदं स्यात् ]। संक्ष्णुते शस्त्रम्।

**गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः**

---

उदवोढेति। भार्यात्वेन स्वीकृतवानित्यर्थः। प्राग्वदिति। आत्मनेपदमित्यर्थः।
नानोरिति। अनुपूर्वाज्जानातेः सन्नन्तादात्मनेपदं न स्यात्।
अनुजिज्ञासतीति। अनुज्ञातुमिच्छतीत्यर्थः।

---

ज्ञाश्रुस्मृ। सन्नन्त जो ज्ञा, श्रु, स्मृ और दृश् धातु, इनसे आत्मनेपद हो।

नाऽनोर्ज्ञः। अनु उपसर्ग से परे जो ज्ञा धातु, उससे आत्मनेपद नहीं हो।

प्रोपाभ्यां युजे। प्र और उप उपसर्ग से परे जो युज् धातु, उससे आत्मनेपद हो, यदि यज्ञपात्रों का प्रयोग नहीं हो तो।

स्वराद्यन्तो। स्वरादि (अजादि) और स्वरान्त (अजन्त) जो उपसर्ग, उससे परे जो युज् धातु, उससे आत्मनेपद हो, अयज्ञपात्रमें [ऐसा कहना चाहिए]।

समः क्ष्णुवः। सम् उपसर्ग से परे जो क्ष्णु धातु, उससे आत्मनेपद हो।

गन्धनावक्षेपण। गन्धन ( हिंसा ) आदि अर्थों में कृञ् धातु से परगामी-क्रिया फल में भी आत्मनेपद हो।

---

१ स्यादिति क्वचिन्न। २ लिखितेषु नास्ति। ३ शेषपूरणम्।

।१।३।३२। [ [1]एषु कृञ आत्मनेपदं स्यात् ]। गन्धनं—हिंसा। उत्कुरुते। सूचयतीत्यर्थः। अवक्षेपणं—भर्त्सनम्। श्येनो वर्त्तिकामुदाकुरुते। भर्त्सयतीत्यर्थः। हरिमुपकुरुते। सेवते। परदारान्प्रकुरुते। तेषु सहसा प्रवर्त्तते। एधो दकस्योपस्कुरुते। गुणमाधत्ते। कथाः प्रकुरुते। प्रकथयतीत्यर्थः। शतं प्रकुरुते। धर्मार्थं विनियुङ्क्ते। एषु किम्? कटं करोति।

इत्यात्मनेपदप्रक्रिया ॥ ६ ॥

---

## अथ परस्मैपदप्रक्रिया ॥

'शेषात्कर्तरि परस्मैपदम्'। 'श्वि'। श्वयति। विभाषा श्वेः।६।१।३०। [ [1]श्वयतेः ] संप्रसारणं [ [1]वा स्या ] लिटि, यङि च। शुशाव। शुशुवतुः। *श्वयतेर्लिट्यभ्यासलक्षणप्रतिषेधः। शिश्वाय। शिश्वियतुः।

---

हिंसेति। सूचनं हि प्राणवियोगानुकूलत्वाद्धिंसैव प्रकुरुते=व्ययं करोति।

इत्यात्मनेपदप्रक्रिया।

श्वीति। 'टु ओश्वि गतिवृद्ध्योः'रिति भौवादिकोऽयं धातुः। णलि एतत्सम्प्रसारणाऽभावपक्षे 'श्वि' इत्यस्य द्वित्वेऽभ्यासस्य सम्प्रसारणे, शुश्वायेतिरूपं स्यादत आह—श्वयतेरिति। अभ्यासलक्षणस्य='लिटयभ्यासस्योभयेषा'-मित्यभ्याससम्प्रसारणस्य। 'तेन लिटयभ्यासस्ये'ति सम्प्रसारणं नाऽत्र पक्षे प्रवर्त्तते इति अभ्यासे इकार एव श्रूयते, न तूकार इत्याशयः। तदाह—शिश्वायेति।

---

शेषात्कर्त्तरि। आत्मनेपदनिमित्त से हीन जो धातु, उससे कर्त्ता अर्थ में परस्मैपद हो।

विभाषा श्वेः। श्वि धातु को सम्प्रसारण हो, विकल्प कर के, लिट् और यङ् परे रहते।

श्वयतेर्लिट्य। श्विधातु के अभ्यासको सम्प्रसारण नहीं हो, लिट् परे रहते।

---

१ शेषपूरणमेतत्।

शिश्वियुः । शूयात् । 'जृस्तम्भि' त्यङ् वा । श्वयतेरः ।७।४।१८। [ [1]श्वयतेरिकारस्य अकारः स्यात्-] अङि । अश्वत् । अश्वः । 'विभाषा घेट् श्व्योः'रिति चङ् वा । अशिश्वियत् । अश्वयीत् ।

अनुपराभ्यां कृञः ।१।३।७९। [ [1]अनुपराभ्यां कृञः] कर्तृगे फले, गन्धनादौ च परस्मैपदं स्यात् । अनुकरोति । पराकरोति ।

अभिप्रत्यतिभ्यः क्षिपः ।१।३।८०। [ [1]अभिप्रत्यतिभ्यः क्षिपः परस्मैपदं स्यात् ]। क्षिप प्रेरणे । स्वरितेत् । अभिक्षिपति ।

प्राद्वहः ।१।३।८१। [ [1]प्राद्वहतेः परस्मैपदं स्यात् ]। प्रवहति ।

परेर्मृषः ।१।३।८२। [ [1]परिपूर्वान्मृष्यतेः कर्तृगेऽपि फले परस्मैपदं स्यात् ]। परिमृष्यति ।

---

अश्वयीदिति । ह्म्यन्तेति न वृद्धिः ।

अनुपराभ्यामिति । कर्तृगे फले कृञः 'स्वरितञित' इत्यात्मनेपदं प्राप्नोति, गन्धनादौ च परगामिन्यपि 'गन्धनावक्षेपणे'त्यादिनाऽऽत्मनेपदं प्राप्नोति, तद्बाधनायेदमित्याशयः । कर्तृगेऽपि फले परस्मैपदार्थमिदमित्याशयः । प्राद्वहः । प्रपूर्वाद्वहेः परस्मैपदमित्यर्थः । परेर्मृषः । परिपूर्वान्मृष्यतेः कर्तृगेऽपि फले परस्मैपदमित्यर्थः ।

---

श्वयतेरः । श्विधातुको अकार अन्तादेश हो, अङ् परे रहते ।

अनुपराभ्यां कृञः । अनु और परा उपसर्गसे परीभूत जो कृञ् धातु उससे कर्तृगामी क्रिया फल में, तथा गन्धनादि अर्थों में भी परस्मैपद ही हो ।

अभिप्रत्यतिभ्यः । अभि, प्रति, और अति उपसर्ग से परे जो क्षिप् धातु, उससे कर्तृगामी क्रियाफल में भी परस्मैपद हो ।

प्राद्वहः । प्र उपसर्ग से परे जो वह धातु, उससे कर्तृगामी क्रियाफल में भी परस्मैपद हो ।

परेर्मृषः । परिपूर्वक मृष् धातु से परस्मैपद हो ।

---

१ शेषपूरणमेतत् ।

व्याङ्परिभ्यो रमः ।१।३।८३। [ [1]व्याङ्परिभ्यो रमः परस्मपदं स्यात् ]। विरमति । आरमति । [ [2]परिरमति ]।

उपाच्च ।१।३।८४। [ [1]उपपूर्वाद्रमेः परस्मैपदं स्यात् ]। देवदत्तो यज्ञदत्तमुपरमति । उपरमयतीत्यर्थः । अन्तर्भावितण्यर्थोऽयम् ।

विभाषाऽकर्मकात् ।१।३।८५। उपाद्रमे-[ रकर्मकात्[1] ] परस्मपदं वा स्यात् । उपरमति । उपरमते । निवर्त्तत इत्यर्थः ।

बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः ।१।३।८६। एभ्यो ण्यन्तेभ्यः परस्मैपदं स्यात् । 'णिचश्चे'त्यस्यापवादः । बोधयति पद्मम्[2]। [योधयति[3] काष्ठानि । नाशयति दुःखम् । जनयति सुखम् । प्रावयति । प्रापयतीत्यर्थः । द्रावयति । विलापयतीत्यर्थः । स्रावयति । स्यन्दयतीत्यर्थः ]।

क्रीङ्जीनां णौ ।६।१।४८। [[1]क्रीङ्जीनां णौ-] आत्वं स्यात् । अध्यापयति । णौ च संश्चङोः ।२।४।५१। सन्परे, चङ्परे च णौ

व्याङ्परीति । व्याङ्परिपूर्वाद्रमतेः परस्मैपदमित्यर्थः ।

उपाच्चेति । उपाद्रमेः परस्मैपदमित्यर्थः ।

बोधयति=विकाशयति ।

व्याङ्परिभ्यो रमः । वि, आङ् और परि उपसर्ग से परे जो रम् धातु, उससे परमैपद हो ।

उपाच्च । उपपूर्वक रम् धातु से परस्मैपद हो ।

विभाषाऽकर्मकात् । उपपूर्वक अकर्मक रम् धातु से परस्मैपद हो, विकल्प करके ।

बुधयुध । ण्यन्त बुधादि धातुओं से कर्त्तृगामी क्रियाफल में भी परस्मैपद हो ।

क्रीङ्जीनां णौ । क्री, इङ् और जि-इन धातुओं को आत्व हो, णि परे रहते ।

णौ च संश्चङोः । सन् परकणि और चङ् परक णि परे रहते इङ् धातु को गाङ् आदेश हो, विकल्प करके ।

१ शेषपूरणमेतत् । २ 'बोधयति पद्म 'मित्यादि' इत्येव क्वचित्पाठः ।
३ असार्वत्रिकोऽयं पाठः ।

इङो गाङ् वा स्यात्। अध्यजीगपत्। अध्यापिपत्। क्रापयति। जापयति।

**निगरणचलनार्थेभ्यश्च।१।३।८७।** ['निगरणार्थेभ्यश्चलनार्थेभ्यश्च ण्यन्तेभ्यः परस्मैपदं स्यात् ]। निगारयति। चलयति।

*अदेः प्रतिषेधः। आदयते देवदत्तेन।

**अणावकर्मकाच्चित्तवत्कर्तृकात्।१।३।८८।** ['अणौ यो धातुरकर्मकश्चित्तवत्कर्तृकश्च तस्मा—] ण्ण्यन्तात्परस्मैपदं स्यात्। शेते कृष्णः, तं गोपी शाययति॥

**न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः ।१।३।८९।** एभ्यो ण्यन्तेभ्यः परस्मैपदं न [स्यात्]। पाययते। 'मितां ह्रस्वः'। दमयते।

---

निगरणं = भक्षणम्। ('निगलना' 'गिटना')। आदेरिति। अदेर्ण्यन्तान्निगरणार्थात्परस्मैपदं नेत्यर्थः। अणाविति। अणौ योऽकर्मकश्चित्तवत्कर्तृकश्च तस्माण्ण्यन्तात्परस्मैपदमित्यर्थः। शाययतीति। अयमण्यन्तावस्थायामकर्मकश्चित्तवत्कर्तृकश्च। पाययत इति। अत्र—पिबतिर्निगरणार्थः, इतरे चित्तवत्कर्तृका अकर्मकाः। नृतिश्चलनार्थोऽपि। तेन 'अणावकर्मका'दिति, 'निगरणचलने'त्येतत्सूत्रद्वयेन प्राप्तावनेन निषेधः।

---

निगरणचलना। ण्यन्त जो निगरणार्थक और चलनार्थक धातु, उनसे कर्तृगामी क्रियाफल में भी परस्मैपद हो।

अदेः प्रतिषेधः। ण्यन्त अद् धातु से परस्मैपद नहीं हो।

अणावकर्मका। अण्यन्त अवस्था में जो अकर्मक और चित्तवत् (चेतन)-कर्तृक धातु, उससे ण्यन्त अवस्था में कर्तृगामी क्रियाफल में भी परस्मैपद हो।

न पादम्याङ्। ण्यन्त पा आदि धातुओं से परगामी क्रिया फल में भी परस्मैद नहीं हो।

---

१ शेषपूरणमेतत्सूत्राक्षरैर्लब्धम्।

आयामयते । आयासयते । परिमोहयते । रोचयते । नर्त्तयते । वादयते। वासयते। *धेट उपसंख्यानम् । धापयते। अकर्त्रभिप्राये 'शेषा' दिति परस्मैपदं स्यादेव। वत्सान् पाययति पयः ॥

इति परस्मैपदप्रक्रिया ॥ ७ ॥

* इति पदव्यवस्था * ॥

---

## अथ भावकर्मप्रक्रिया ॥

भावकर्मणोः ।३।१।१३। [1]भावकर्मणोर्लस्य तङानौ स्तः । सार्वधातुके यक् ।१।३।६७। [2]भावकर्मवाचिनि सार्वधातुके [परे] धातोर्यक् स्यात्। भावः–[[3]भावना, उत्पादना,] क्रिया। सा च [[3]धातुत्वेन सकलधातुवाच्या]भावार्थकलकारेणाऽनूद्यते।युष्मदस्मद्भ्यां

---

धेट इति। ण्यन्ताद्धेटः परस्मैपदं नेत्यर्थः। स्यादेवेति। 'अनन्तरस्ये'ति न्यायेन 'निगरणे'ति, 'अणावकर्मका'दिति सूत्रद्वयप्रापितस्यैव परस्मैपदस्य 'न पादम्या'ङित्यनेन निषेधाच्छेषादिति परस्मैपदं स्यादेवेत्याशयः। प्रथम इति। युष्मदस्मदोः कर्तृकर्माद्यर्थकतया, भावार्थकलकारस्य च क्रियावाचितया, सामा-

---

धेट उपसङ्ख्यानं। ण्यन्त धेट् धातु से परगामी क्रिया फल में भी परस्मैपद नहीं हो।

भावकर्मणोः। भाववाचक और कर्मवाचक लकार के स्थान में तङ् और आन ( आत्मनेपद ) हों।

सार्वधातुके यक्। भाव और कर्मवाचक सार्वधातुक परे रहते धातु से यक् प्रत्यय हो।

---

१ 'भावे कर्मणि च वाच्ये लस्य तङानौ स्तः' इति पा०।

२ 'धातोर्यक्प्रत्ययः स्याद्भावकर्मवाचिनि सार्वधातुके परे' इति, 'धातोर्भाव-कर्मवाचिनि सार्वधातुके यक् स्यात्' इति च पा०। ३ क्वाचित्कः पाठोऽयम्।

सामानाधिकरण्याऽभावात्प्रथमः पुरुषः। तिङ्वाच्यक्रियाया अद्रव्य-रूपत्वेन द्वित्वाद्यप्रतीतेर्न द्विवचनादि[कम्]। किन्तु-एकवचनमेवोत्सर्गतः। त्वया मया अन्यैश्च--भूयते। बभूवे।

**स्य-सिच्-सीयुट्-तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च ।६।४।६२।** उपदेशे योऽच्, तदन्तानां, हनादीनां च चिणीवाऽङ्गकार्यं वा स्यात्स्यादिषु [ परेषु ], भावकर्मणोर्गम्यमानयोः, स्यादीनामिडागमश्च। चिण्वद्भावपक्षेऽयमिट्। चिण्वद्भावाद्वृद्धिः। भाविता। भविता। भाविष्यते। भविष्यते। भूयताम्। अभूयत। भूयेत। भाविषीष्ट। भविषीष्ट।

**चिण् भावकर्मणोः ।३।१।६६।** च्लेश्चिण् स्याद्भावकर्मवाचिनि 'त'शब्दे परे। अभावि। अभाविष्यत। अभविष्यत।

---

नाधिकरण्याऽभावेन मध्यमपुरुषाद्यप्राप्तिरित्याशयः। उत्सर्गत इति। 'एक-वचन'मित्यस्य योगविभागेन एकवचनस्यौत्सर्गिकताया भाष्ये व्यवस्थापनात्। उत्सर्गतः = 'एकवचन'-मिति सामान्यशास्त्रेण। उपदेशे योऽजिति। 'उपदेशे' इत्येतत्—अचा सहाऽन्वेति, नेतरैर्हनादिभिः, अव्यभिचारात्।

'चिण्व'दिति सप्तम्यन्ताद्वतिरत आह—चिणीवेति।

'च्लेः सि'जित्यतः 'च्ले'रिति, 'चिण्ते पद' इत्यतः 'ते' इति चानुवर्त्तते। तदाह—च्लेश्चिणिति।

---

स्यसिच्। उपदेश अवस्था में जो अच्, तदन्त जो धातु, और हन्, ग्रह, दृश् धातु, इनको—चिण्परे रहते जो २ अङ्ग कार्य होते हैं, वे कार्य विकल्प करके हों, स्य, सिच्, सीयुट् और तास् परे रहते, भाव और कर्म अर्थ गम्यमान हो तो। और स्य, सिच्, सीयुट् और तास्—इनको चिण्वद्भावपक्षमें इट् आगम भी हो।

चिण्भावकर्मणोः। च्लि के स्थान में चिण् आदेश हो, भावकर्मवाची 'त' शब्द परे रहते।

अकर्मकोऽप्युपसर्गवशात्सकर्मकः । अनुभूयते आनन्दश्चैत्रेण, त्वया, मया च । अनुभूयेते । अनुभूयन्ते । त्वमनुभूयसे । अहमनुभूये । अन्वभावि । अन्वभाविषाताम् । अन्वभविषाताम् ।

णिलोपः । भाव्यते । भावयाञ्चक्रे । भावयाम्बभूवे । भावयामासे । चिण्वदिट[1] आभीयत्वेनाऽसिद्धत्वाण्णिलोपः । भाविता । भावयिता । भाविष्यते । भावयिष्यते । भाव्यताम् । अभाव्यत । भाव्येत । भाविषीष्ट । भावयिषीष्ट । अभावि । अभावयिषाताम् । अभाविषाताम् ।

बुभूष्यते । बुभूषाञ्चक्रे । बुभूषिता । बुभूषिष्यते ।

बोभूय्यते ॥

'अकृत्सार्वधातुकयोर्दीर्घः' । स्तूयते विष्णुः । स्ताविता । स्तोता । स्ताविष्यते । स्तोष्यते । अस्तावि । अस्ताविषाताम् । अस्तोषाताम् ।

'गुणोर्त्ती'ति गुणः । अर्यते । स्मर्यते । 'ऋच्छत्यृता'मिति गुणः । आरे । सस्मरे । [ [2]परत्वान्नित्यत्वाच्च गुणे, रपरे च कृतेऽजन्तत्वाऽभावेऽपि] उपदेशग्रहणाच्चिण्वदिट् । आरिता । अर्त्ता । स्मारिता । स्मर्त्ता ।

[3]नलोपः । स्रस्यते । [ [2]सस्रंसे ] । इदितस्तु—नन्द्यते । इज्यते ।

**तनोतेर्यकि ।६।४।४४।** [ [4]तनोतेर्यकि ] आदन्तादेशो वा स्यात् ।

---

उपसर्गवशादिति । 'उपसर्गेण धात्वर्थो बलादन्यः प्रतीयते' इत्युक्तेः । असिद्धत्वादिति । 'चिण्वदिट' इत्यादिः । क्वचित्तु तथैव पाठः । णिलोप इति । 'णेरनिटी'ति णिलोप इत्यर्थः । स्तूयत इति । कर्मणि चाऽत्र लकारः ।

सस्मरे इति । 'गुणोर्त्ती'ति गुणः ।

---

तनोतेर्यकि । तन् धातु को आकार अन्तादेश हो, विकल्प करके, यक् परे रहते ।

---

१ 'चिण्वदिट्' इति पा० । २ क्वाचित्कः पाठः ।
३ 'न्लोपः' पा० । ४ शेषपूरणमिदम् ।

तायते। तन्यते। **तपोऽनुतापे च ।३।१।६५।** [[1]तप] च्लेश्चिण्न [2]स्यात्, कर्मकर्त्तरि, अनुतापे च। अन्वतप्त पापेन।

'घुमास्थे'तीत्वम्। दीयते। धीयते। ददे। [[1]दधे]। **आतो युक् चिण्कृतोः ।७।३।३३।** आदन्तानां युगागमः[2] स्याच्चिणि, ञ्णिति कृति च। दायिता। दाता। दायिषीष्ट। दासीष्ट। अदायि। अदायिषाताम्। [ [1]'स्थाघ्वोरिच्चे'तीत्वम्। अदिषाताम् ]।

शम्यते मोहो मुकुन्देन। **चिण्णमुलोर्दीर्घोऽन्यतरस्याम् ।६।४।९३।** चिण्परे, णमुल्परे च णौ मितामुपधाया दीर्घो वा [2]स्यात्। शामिता। शमिता। शमयिता। शामिष्यते। शमिष्यते। शमयिष्यते।

ण्यन्तत्वाऽभावे—शम्यते मुनिना।

**नोदात्तोपदेशस्य मान्तस्याऽनाचमेः ।७।३।३४।** [[1]उदात्तोपदेशस्य

---

दीर्घो वेति। 'शामिते'त्यादौ 'जनीजॄष्क्नसु'इत्यमन्तत्वान्मित्त्वेन 'मितां ह्रस्व' इति ह्रस्वे प्राप्ते, दीर्घोऽनेन विकल्प्यते।

शम्यत इति। शमधातोरकर्मकतया भावेऽत्र लकारः।

---

तपोऽनु। तप् धातु से परीभूत जो 'च्लि' उसके स्थान में चिण् आदेश नहीं हो, कर्मकर्त्ता और अनुताप अर्थ में।

आतो युक्। आदन्त धातु को युक् आगम हो, चिण् परे रहते, और ञित् णित् कृत्प्रत्यय परे रहते।

चिण्णमुलोः। मित् धातुओं की उपधा को दीर्घ हो, विकल्प करके, चिण्परक और णमुल्परक णि परे रहते।

नोदात्तोपदेशस्य। आङ् पूर्वक चम् धातु से भिन्न जो मकारान्त उदात्तोपदेश धातु, उनकी उपधाको वृद्धि नहीं हो, चिण्परे रहते, और ञित् णित् कृत्प्रत्यय परे रहते।

---

१ क्वाचित्कः पाठः। २ 'स्या' दिति क्वाचित्कम्।

मान्तस्य] उपधाया वृद्धिर्न स्याच्चिणि, ञ्णिति कृति च [[1]न त्वाचमेः]। अशमि। अदमि। उदात्तोपदेशस्येति किम्? अगामि। मान्तस्येति किम्? अवादि। अनाचमेरिति किम्? आचामि। *अनाचमिकमिवमीनामिति वक्तव्यम्। अकामि। अवामि।

भज्यते। भञ्जेश्च चिणि ।६।४।३३। [[1]भञ्जेश्च चिणि] नलोपो वा [2]स्यात्। अभाजि। अभञ्जि।

लभ्यते। विभाषा चिण्णमुलोः ।७।१।६९। लभेर्नुम् [[1]वा स्याच्चिण्णमुलोः परतः]। अलम्भि। अलाभि।

[ [3]इति भावकर्मप्रक्रिया ॥८॥ ]

---

वक्तव्यमिति। 'आचमिकमिवमिवर्जानां धातूनामुपधाया वृद्धिर्न स्या'दित्यर्थः। तेन 'अकामी'त्यत्र उपधावृद्धिर्भवत्येवेत्याशयः।

अकामीति। चिणि 'आयादय' इति णिङभावे इदम्।

विभाषेति। 'लभेर्नुमागमो वा स्याच्चिण्णमुलोः परत' इत्यर्थः।

इति भावकर्मप्रक्रिया॥

---

अनाचमिकमि। आङ् पूर्वक चम् धातु, कम् धातु, और वम् धातु से भिन्न जो मकारान्त उदात्तोपदेश धातु, उसकी उपधा को वृद्धि नहीं हो—ऐसा सूत्रकार को कहना चाहिए।

भञ्जेश्च। भञ्ज् धातु के नकार का लोप हो, विकल्प करके, चिण्परे रहते।

विभाषा चिण्ण। लभ् धातु को नुम् आगम हो, विकल्प करके, चिण और णमुल् परे रहते।

---

१ शेषपूरणम्। २ स्यादिति क्वचित्कम्। ३ अयं पाठो लिखितेषु नास्ति।

## [ [1]अथ कर्मकर्तृप्रक्रिया ]।

यदा कर्मैव कर्तृत्वेन विवक्षितं, तदा सकर्मकाणामप्यकर्मकत्वात्कर्त्तरि, भावे च [2]लकारः।

**कर्मवत्कर्मणा तुल्यक्रियः।३।१।८७।** कर्मस्थया क्रियया तुल्यक्रियः कर्त्ता कर्मवत्स्यात्[3]। कार्यातिदेशोऽयम्। तेन यक्, आत्मनेपदं, चिण्, चिण्वदिट् च [4]स्युः। पच्यते फलम्। भिद्यते काष्ठम्। अपाचि। अभेदि।

[5]भावे—भिद्यते काष्ठेन।

***भूषावाचिनां, किरादीनां, सन्नन्तानां च यक्चिणौ, चिण्वदिट् च नेति वक्तव्यम्।** अलङ्कुरुते कन्या। अलमकृत। अवकिरते हस्ती। अवाकीर्ष्ट। [6]अवाकरिष्ट। गिरते। अगीर्ष्ट। [6]अगरिष्ट। आद्रियते। आदृत। किरादिस्तुदाद्यन्तर्गणः। चिकीर्षते कटः। अचिकीर्षिष्ट।

---

यदेति। यदा सौकर्यातिशयं द्योतयितुं कर्त्तुः-देवदत्तादे-र्व्यापारो वक्त्रा न विवक्ष्यते, तदा करणकर्मादिकारकान्तराण्यपि कर्तृसञ्ज्ञां लभन्ते, स्वव्यापारे स्वतन्त्रत्वात्, स्वतन्त्रस्यैव च कर्तृत्वात्। तेन पूर्वं करणत्वादिसत्त्वेऽपि सम्प्रति कर्तृत्वात्तत्रकर्तरि लकार इत्याशयः। कार्य्यातिदेशोऽयमिति। शास्त्रस्याऽपि कार्यार्थतया कार्यातिदेशस्य मुख्यत्वादित्याशयः। अवाकीर्ष्टेति। 'लिङ्सिचावात्मनेपदेष्विति' वेट्। एवमेव—अगीर्ष्टेत्यत्रापि। तेन रूपद्वयमुभयत्रेति बोध्यम्।

---

कर्मवत्कर्मणा। कर्मस्था जो क्रिया उस के तुल्य ही क्रिया है जिसकी ऐसा जो कर्त्ता, वह कर्मवत् हो।

भूषाकर्म। भूषा-क्रिया वाची धातु और किरादि धातु और सन्नन्त धातु-इन से यक्, चिण् और चिण्वदिट् नहीं हो, कर्मकर्त्ता में।

---

१ लिखितेष्वयं विभागो नास्ति। २ 'लः' पा०। ३ 'स्यादिति' क्वचिन्न।
४ 'यगात्मनेपद–चिण्-चिण्वदिटः स्युः' पा०।
५ 'भावे तु' पा०। ६ क्वचिदेव दृश्यते।

**तपस्तपःकर्मकस्यैव ।३।१।८८।** [ [1]तपःकर्मकस्यैव तपः ] कर्त्ता कर्मवत्स्यात् । तप्यते तपस्तापसः । अर्जयतीत्यर्थः । अतप्त । तपःकर्मकस्यैवेति किम् ? । उत्तपति सुवर्णं सुवर्णकारः ।

***सकर्मकाणां प्रतिषेधो वक्तव्यः ।** अजा ग्रामं नयति ।

***दुहिपच्योर्बहुलं सकर्मकयोरिति वाच्यम् ।**

**न दुहस्नुनमां यक्चिणौ ।३।१।८९।** एषां कर्मकर्त्तरि यक्चिणौ न [ स्तः ] । शप् । तस्य लुक् । गौः पयो दुग्धे ।

**अचः कर्मकर्त्तरि ।३।१।६२।** अजन्ताच्च्लेश्चिण्वा [2]स्यात्कर्मकर्त्तरि [3]त-शब्दे परे । अकारि । अकृत । **दुहश्च ।३।१।६३।** तथा । अदोहि ।

---

तप इति । तपःकर्मकस्यैव तप्यतेः कर्त्ता कर्मवदित्यर्थः । एवञ्च विधिरयम् । एवकारस्तु व्यर्थ एवेति वृत्तिकृतः ।

तथेति । 'दुहः च्लेश्चिण्वा स्यात्, कर्मकर्त्तरि तशब्दे परे' इत्यर्थः । कर्मणि-लकारे तु न विकल्पः—'अदोहि गौर्गोपेने'ति ।

---

तपस्तपः । तपःकर्मक जो तप् धातु, उसका ही कर्त्ता कर्मवत् हो । अन्य तप् धातुका कर्त्ता कर्मवत् नहीं हो ।

सकर्मकाणां । सकर्मक धातुओं का कर्त्ता कर्मवत् नहीं हो ।

दुहिपच्योः । सकर्मक दुह धातु का और पच् धातु का कर्त्ता कर्मवत् हो, बहुलता ( विकल्प ) करके ।

न दुहस्नु । दुह्, स्नु और नम्—इन धातुओं को कर्मकर्त्ता में यक् और चिण् नहीं हो ।

अचः कर्म । अजन्त धातु से परे, जो च्लि, उसको चिण् आदेश विकल्प करके हो, तशब्द परे रहते, कर्मकर्त्ता में ।

दुहश्च । दुह् धातु से परे जो च्लि, उसको चिण् आदेश हो, विकल्प करके, 'त' शब्द परे रहते, कर्मकर्त्ता में ।

---

१ शेषपूरणम् । २ 'स्या'दिति क्वचिन्न । ३ 'ते परे' पा० ।

पक्षे क्सः । अदुग्ध । 'लुग्वे'ति पक्षे लुक् । अधुक्षत ।

उदुम्बरः फलं पच्यते ।

[1]कुषिरजोः प्राचां श्यन्परस्मैपदं च ।३।१।६०। अनयोः कर्मकर्त्तरि न यक्, किन्तु श्यन्परस्मैपदं च । आत्मनेपदाऽपवादः । कुष्यति, कुष्यते पादः । रज्यति, रज्यते वस्त्रम् । यगविषये तु नास्य प्रवृत्तिः । कोषिषीष्ट । रंक्षीष्ट ॥

* इति[2] कर्मकर्तृप्रक्रिया ॥ ६ ॥ *

## [ अथ लकारार्थप्रक्रिया ] ।

अभिज्ञावचने लृट् ।३।२।११२। स्मृतिबोधिन्युपपदे भूतानद्यतने धातोर्लृट् [ [3]स्यात् ] । लङोपवादः । 'वस[3] निवासे' । स्मरसि कृष्ण ! गोकुले वत्स्यामः ? । एवं बुध्यसे, चेतयसे इत्यादिप्रयोगेऽपि ।

---

किन्त्विति । किन्तु यग्विषये एव श्यन् स्यात्, परस्मैपदञ्चेत्यर्थः ।

पाद इति । 'स्वयमेवे'ति शेषः । अत्र कर्मकर्त्तरि लकारः ।

इति कर्मकर्तृप्रक्रिया ।

अभिज्ञेति । अभिज्ञा=स्मृतिः—उच्यते = बोध्यतेऽनेनेति विग्रहः । तदाह—स्मृतीति । धातोः स्मृतिबोधके पदे समीपोच्चारिते सति भूतानद्यतने लृडित्यर्थः ।

एवमिति । तेषामपि प्रकरणादिवशेन स्मृतौ वृत्तिसम्भवादित्याशयः ।

---

कुषिरञ्जोः । कुष् और रञ्ज् धातु से कर्मकर्त्ता में यक् नहीं हो, किन्तु श्यन् हो, और परस्मैपद भी हो, विकल्प कर के ।

अभिज्ञावचने । स्मृतिबोधक उपपद रहते भूतानद्यतन कालिक क्रियावाची धातु से लृट् लकार हो ।

---

१ 'कुषिरञ्जोः' पा० ।

२ 'इति भाव-कर्मप्रक्रिया' इत्येव लिखितेषु पाठः । ३ क्वचिन्न ।

**न यदि ।३।२।११३।** यद्योगे उक्तं न [स्यात्] । अभिजानासि[कृष्ण] यद्वने अभुञ्ज्महि ?। **विभाषा साकाङ्क्षे ।३।२।११४।** उक्तविषये लृङ् वा स्याल्लक्ष्यलक्षणभावेन साकाङ्क्षश्चेद्धात्वर्थः । स्मरसि कृष्ण ! वने वत्स्यामस्तत्र गाश्चारयिष्यामः ?। वासो [1]लक्षणं, चारणं लक्ष्यम् । पक्षे लङ् ।

**'परोक्षे लिट्'** । चकार । उत्तमपुरुषे चित्तविक्षेपादिना पारोक्ष्यम् । 'सुप्तोऽहं किल विललाप' । * **अत्यन्तापह्नवे लिङ् वक्तव्यः** । कलिङ्गेष्ववात्सीः ?। नाहं कलिङ्गान् जगाम ।

**प्रश्ने चाऽऽसन्नकाले ।३।२।११७।** आसन्नकाले पृच्छ्यमानेऽर्थे

---

उक्तमिति । उक्तम् = 'अभिज्ञावचने लृ'डिति लृट् । तेन तत्र औत्सर्गिको लङेव ।

वास इति । वासः=वने वासः । लक्षणं=ज्ञापकं, प्रसिद्धत्वात् । चारणं= गोचारणं । लक्ष्यं = ज्ञाप्यम् । सहसा बुद्ध्यनारोहात् । 'कलिङ्गेष्ववात्सी'रिति- प्रश्नः । उत्तरे तु 'नाऽहं कलिङ्गान् जगामे'ति तत्र गमनस्याऽत्यन्तं गोपनम् । तत्र वासस्य का कथा---अहन्तत्र गत एव नेत्यर्थः । एवञ्च जगामेत्यत्र लिट् ।

आसन्नेति । पञ्चवर्षाभ्यन्तरः काल 'आसन्न' इति वृत्तिकृतः । प्रयोक्तृ- दृष्टिपथाऽतिक्रान्तत्वमासन्नत्वमिति तु परे ।

---

न यदि । यत् के योग में पूर्वोक्त ( 'अभिज्ञावचने लृट्' इस सूत्र से ) लृट् लकार नहीं हो ।

विभाषा साकाङ्क्षे । स्मृतिबोधक उपपद रहते भूतानद्यतन कालिक क्रिया- वाची धातु से लृट् लकार हो, विकल्प करके, धात्वर्थ यदि—लक्ष्यलक्षणभावसे साकाङ्क्ष हो तो ।

अत्यन्तापह्नवे । अत्यन्त अपह्नव ( छिपाना ) अर्थ में लिट् लकार हो ।

प्रश्ने चा । पृच्छ्यमान अर्थ में—लिट् लकार के विषय में लङ् और लिट् लकार हों, आसन्नकाल में ।

लिड्विषये लङ्लिटौ स्तः। अगच्छत्किम् ?। जगाम किम् ?। [ [1]आसन्नकाले किं ? कंसं जघान किम् ? ]

लट् स्मे ।३।२।११८। [ [2]स्मे उपपदे लिड्विषये लट् स्यात् ]। लिटोऽपवादः। यजति स्म युधिष्ठिरः। अपरोक्षे च ।३।२।११९। [ [2]अपरोक्षे ] भूतानद्यतने लट् स्यात्स्मयोगे। एवं स्म पिता ब्रवीति।

ननौ पृष्टप्रतिवचने ।३।२।१२०। [ [2]ननावुपपदे पृष्टप्रतिवचने ] भूते लट् [1]स्यात्। अकार्षीः किम् ?। ननु करोमि भोः।

नन्वोर्विभाषा ।३।२।१२१। [ [2]'न' शब्दे, 'नु' शब्दे चोपपदे भूते लड् वा स्यात् ]। अकार्षीः किम् ?। न करोमि। नाऽकार्षम्। अहं नु करोमि। अहं न्वकार्षम्।

पुरि लुङ् चाऽस्मे ।३।२।१२२। पुरायोगे भतानद्यतने वा लुङ् [[3]स्या]च्चाल्लट्, न तु स्मयोगे। पक्षे यथाप्राप्तम्। वसन्तीह पुरा छात्राः। अवात्सुः, अवसन्, ऊषुर्वा। अस्मे [ [3]इति ] किम् ? यजति स्म पुरा।

---

पृष्टप्रतिवचन इति। पृष्टस्य प्रतिवचने=उत्तरे। नन्विति। अत्र नन्विति सम्बोधने। अकार्षमित्यर्थः। न करोमीति। नाकार्षमित्यर्थः।

---

लट् स्मे। 'स्म' उपपद रहते धातु से लिट् का अपवाद लट् लकार हो।

अपरोक्षे च। भूतानद्यतन अपरोक्ष कालिक क्रियावाची धातु से लट् लकार हो, 'स्म' उपपद रहते।

ननौ पृष्ट। पृष्ट का प्रतिवचन ( पूछे हुए का उत्तर देना ) अर्थ में 'ननु' उपपद हो तो भूतकालिकक्रियावाची धातु से लट् लकार हो।

नन्वोर्विभाषा। पृष्टप्रतिवचन में 'न' और 'नु' उपपद हों तो भूत काल में धातु से लट् हो, विकल्प करके।

पुरि लुङ्। पुरा के योग में भूतानद्यतनकालिकक्रियावाची धातु से लुङ् हो, विकल्प करके। और लट् भी हो। परन्तु 'स्म' के योग में ये कार्य नहीं हों।

---

१ क्वाचित्कः पाठः। २ शेषपूरणमस्माकम्। ३ लिखितेषु नास्ति।

'भविष्यती'त्यनुवर्त्तमाने— **यावत्पुरानिपातयोर्लट्** ।३।३।४।
['अनयोरुपपदयोर्भविष्यति लट् स्यात् ]। यावद् भुङ्क्ते। पुरा भुङ्क्ते। निपातयोः किम् ? यावद्दास्यते तावद्भोक्ष्यते । करणभूतया— पुरा—यास्यति ।

**विभाषा कदाकर्ह्योः** ।३।३।५। [ 'कदाकर्ह्योरुपपदयोर्भविष्यति ] लट् वा स्यात् । कदा, कर्हि वा भुङ्क्ते, भोक्ष्यते, भोक्ता वा ।

**वर्त्तमानसामीप्ये वर्त्तमानवद्वा** ।३।३।१३१। वर्त्तमाने ये प्रत्यया उक्तास्ते वर्त्तमानसमीपे भूते, भविष्यति च वा स्युः । कदा आगतोऽसि ?। अयमागच्छामि, आगमं वा । कदा गमिष्यसि ?। एष गच्छामि । गमिष्यामि वा ।

**आशंसायां भूतवच्च** ।३।३।१३२। भविष्यत्काले भूतवद्वर्त्तमानवच्च प्रत्यया वा स्युराशंसायाम् । देवश्चेदवर्षीत्,वर्षति, वर्षिष्यति

---

यावदिति। अत्र यावत्पुरा निपातौ निश्चयं द्योतयतः । 'यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे' इत्यमरः । यावद्दास्यत इति । तावत् = यत्परिमाणकं दास्यते भवान्,तावत्=तत्परिमाणकम् अहं भोक्ष्ये इत्यर्थः । 'यत्तदेतेभ्य' इति वत्वन्तावेतौ, न निपातौ ।

---

यावत्पुरा । यावत् और पुरा निपात के योग में लट् लकार हो ।

विभाषा कदा । कदा और कर्हि के योग में लट् लकार हो ।

वर्त्तमानसामीप्ये । वर्त्तमानकाल में जो प्रत्यय कहे हैं, वे वर्त्तमान समीप भूत में और वर्त्तमान समीप भविष्यत् में भी हो ।

आशंसायां भूत। आशंसागम्यमान हो तो—भविष्यत्काल से भूतवत् और वर्त्तमानवत् प्रत्यय हो, विकल्प करके ।

---

१ शेषपूरणमेतत् ।

वा, धान्यमवाप्स्म, वपामो, वप्स्यामो वा। **क्षिप्रवचने लृट्** ।३।३।१३३। क्षिप्रपर्याये उपपदे पूर्वविषये लृट्[1] स्यात्। वृष्टिश्चे-त्क्षिप्रमाशु त्वरितं वा—आयास्यति, शीघ्रं [2]धान्यं वप्स्यामः।

**आशंसावचने लिङ्** । ३।३।१३४। आशंसावाचिन्युपपदे भविष्यति लिङ् स्यात् , न भूतवत्। गुरुश्चेदुपेयात् आशंसे अधीयीय।

**हेतुहेतुमतोर्लिङ्** ।३।३।१५६। [ [3]भविष्यत्यर्थे हेतुहेतुमतोर्लिङ् ] वा स्यात्। कृष्णं नमेच्चेत्सुखं यायात्। कृष्णं नंस्यति चेत्सुखं यास्यति। *भविष्यत्येवेष्यते। नेह—हन्तीति पलायते।

**इच्छार्थेषु लिङ्लोटौ** ।३।३।१५७। [[3]इच्छार्थेषूपपदेषु धातोर्लिङ्-लोटौ वास्तः]। इच्छामि भुञ्जीत, भुङ्क्तां वा भवान्। एवं कामये, प्रार्थये।

***कामप्रवेदने इति वक्तव्यम्**। नेह। इच्छन्करोति।

---

आशंसायामिति। अप्राप्तस्य प्राप्तेरिच्छा—आशंसा।

कामप्रवेदनं—परं प्रति स्वाभिप्रायाविष्करणम्।

इच्छन्करोतीति। अत्र परं प्रति स्वाभिप्रायाविष्करणं नास्ति।

---

क्षिप्रवचने। पूर्व विषय में अर्थात्—आशंसा गम्यमान हो तो क्षिप्रपर्याय उपपद रहते भविष्यत् काल में धातुसे लृट् लकार हो।

आशंसावचने। आशंसावाचक उपपद रहते भविष्यत् काल में धातुसे लिङ् लकार ही हो। किन्तु भूतवत् और वर्त्तमानवत्प्रत्यय नहीं हो।

हेतुहेतुमतोः। हेतु—हेतुमद्भाव गम्यमान हो तो भविष्यत्काल में धातुसे लिङ् लकार हो, विकल्प करके।

इच्छार्थेषु। इच्छार्थक उपपद रहते धातु से लिङ् और लोट् लकार हों।

कामप्रवेदन इति। कामप्रवेदन (अर्थात्—दूसरे के प्रति वक्ता का स्वकीय अभिप्राय का प्रकटीकरण) अर्थ में ही ये लिङ् और लोट् होते हैं, अन्यत्र नहीं।

---

१ क्वचिन्न। २ 'धान्य'मिति क्वचिन्न। ३ शेषपूरणमेतत्।

लिङ् च ।३।३।१५९। समानकर्त्तृकेषु इच्छार्थेषु [ [1]उपपदेषु धातोर्लिङ् स्यात् ] 'भुञ्जीये'तीच्छति ।

विधिनिमन्त्रणेति लिङ् । विधिः–प्रेरणं,भृत्यादेर्निकृष्टस्य प्रवर्त्तनम् । यजेत । निमन्त्रणं—नियोगकरणम् , आवश्यके श्राद्धभोजनादौ दौहित्रादेः प्रवर्त्तनम् । इह भुञ्जीत । आमन्त्रणं—कामचाराऽनुज्ञा । इहाऽऽसीत । अधीष्टः—सत्कारपूर्वको व्यापारः । पुत्रमध्यापयेत् । संप्रश्नः— संप्रधारणम् । किं भो वेदमधीयीय, उत तर्कम् ? । प्रार्थनं याच्ञा । भो भोजनं लभेय । एवं लोट् ।

प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च ३।३।१६३। [ [1]एष्वर्थेषु कृत्यप्रत्ययाः स्युः । चाल्लोट् ] । प्रैषो-विधिः । अतिसर्गः-कामचाराऽनुज्ञा । भवता यष्टव्यम् । चाल्लोटोऽनुकर्षणं प्राप्तकालार्थम् । भवान् यजताम् ।

अर्हे कृत्यतृचश्च ।३।३।१६९। [अर्हे कृत्यप्रत्ययः स्यात्तृच्प्रत्ययश्च]। चाल्लिङ् । त्वं कन्यां वहेः । शकि लिङ् च ।३।३।१७२। शक्तौ लिङ्

---

दौहित्रादेरिति । श्राद्धे दौहित्रस्य पवित्रतमत्वात्तन्नामकीर्त्तनम् ।
संप्रश्नः—प्रश्नपूर्वकं निर्णयः ।

---

लिङ् च । समानकर्त्तृक इच्छार्थक धातु उपपद रहते धातु से लिङ् लकार भी हो ।

प्रैषातिसर्ग । प्रैष आदि अर्थों में वक्ष्यमाण कृत्यप्रत्यय हों और लोट् लकार भी हो ।

अर्हे कृत्य । अर्ह ( योग्य ) कर्त्ता गम्यमान हो तो धातु से कृत्यप्रत्यय, तृच् प्रत्यय और लिङ् लकार हों ।

शकि लिङ् च । शक्ति अर्थ गम्यमान हो तो धातु से लिङ् लकार हो, चकार से कृत्य प्रत्यय भी हों ।

---

१ शेषपूरणमेतत् ।

स्यात् चात्कृत्याः। त्वं भारं वहेः।

**धातुसम्बन्धे प्रत्ययाः।३।४।१।** धात्वर्थानां सम्बन्धे यत्र काले प्रत्यया उक्तास्ततोऽन्यत्रापि स्युः। तिङन्तवाच्यक्रियायाः प्राधान्यात्तदनुरोधेन गुणभूतक्रियावाचिभ्यः प्रत्ययाः। वसन्ददर्श। भूते लट्। अतीतवासकर्त्तृकर्त्तृकं दर्शनमित्यर्थः। सोमयाज्यस्य पुत्रो भविता। सोमेन यक्ष्यमाणो यः पुत्रस्तत्कर्तृकं भवनम्।

**क्रियासमभिहारे लोट्, लोटो हिस्वौ, वा च तध्वमोः।३।४।२।** पौनःपुन्ये, भृशार्थे च द्योत्ये धातोर्लोट् स्यात्। तस्य च हिस्वौ स्तः। तिङामपवादः। तौ च हिस्वौ,–क्रमेण परस्मैपदाऽऽत्मनेपदसंज्ञौ स्तः; तिङ्संज्ञौ च। तध्वमोर्विषये तु–हिस्वौ वा स्तः॥ पुरुषैकवचसंज्ञे नाऽनयोरतिदिश्येते, हि–स्वविधानसामर्थ्यात्। तेन सकलपुरुषवचनविषये परस्मैपदिभ्यो हिः,–कर्त्तरि, आत्मनेपदिभ्यः स्वो,–भावकर्मकर्त्तृषु।

**समुच्चयेऽन्यतरस्याम् ।३।४।३।** अनेकक्रियासमुच्चये द्योत्ये

---

भृशार्थे चेति। क्रियासमभिहारस्य धात्वर्थस्य लोट् द्योतक इत्यवधेयम्।

---

धातुसम्बन्धे। 'वर्त्तमानसामीप्ये वर्त्तमानवद्वा' इत्यादि सूत्रों से जिस २ काल में, जो२ प्रत्यय कहे हैं, वे प्रत्यय उससे अन्यकाल में भी हों, यदि धात्वर्थद्वय का सम्बन्ध गम्यमान हो तो।

क्रियासमभिहारे लोट्। पौनःपुन्य ( बारं बार करना ) और भृश ( अत्यन्त करना ) अर्थ द्योत्य हो तो क्रियासमभिहारविशिष्टक्रियावृत्ति धातु से लोट् लकार हो। और उस लोट् के स्थान में—तिङ् के अपवाद 'हि' और 'स्व' आदेश हों। और वे 'हि' और 'स्व'–क्रम से परस्मैपदसञ्ज्ञक और आत्मनेपदसञ्ज्ञक हों। और तिङ्सञ्ज्ञक भी हों। और 'त' और 'ध्वम्' के विषय में ये 'हि' और 'स्व' आदेश—विकल्प करके हों।

समुच्चयेऽन्य। अनेक क्रियाओं का समुच्चय द्योत्य हो तो उक्त कार्य विकल्प करके हों। [ अर्थात्–लोट् लकार और 'हि' 'स्व' आदेश–ये कार्य विकल्प करके हों ]।

प्रागुक्तं वा स्यात् । **यथाविध्यनुप्रयोगः पूर्वस्मिन् ।३।४।४।** आद्ये लोड्विधाने लोट्प्रकृतिभूत एव धातुरनुप्रयोज्यः ।

**समुच्चये सामान्यवचनस्य ।३।४।५।** समुच्चये लोड्विधौ सामान्यार्थस्य धातोरनुप्रयोगः स्यात् । अनुप्रयोगाद्यथायथं लडादयस्तिबादयश्च । ततः संख्याकालयोः, पुरुषविशेषार्थस्य चाऽभिव्यक्तिः ।

*** क्रियासमभिहारे द्वे वाच्ये ।** याहि-याहीति—याति । पुनः पुनरतिशयेन वा यानं ह्यन्तस्यार्थः । एककर्तृकं वर्त्तमानं यानं 'याती'-त्यस्य । 'इति'शब्दस्तु अभेदान्वये तात्पर्यं ग्राहयति ।

एवं—यातः । यान्ति । यासि । याथः । याथ । यात यातेति यूयं याथ । याहि-यहीत्ययासीत् । यास्यति वा ।

अधीष्वाधीष्वेत्यधीते । 'ध्वं'विषये पक्षे—अधीध्वमधीध्वमिति यूयमधीध्वे । **समुच्चये तु**—सक्तून्पिब धानाः खादेत्यभ्यवहरति । अन्नं भुङ्क्ष्व दाधिकमास्वादस्वेति-अभ्यवहरते । तध्वमोस्तु—पिबत

---

प्रागुक्तमिति । धातोर्लोट् स्यात्, लोटश्च हिस्वौ स्तः, तध्वमोर्विषये च हिस्वौ वा स्त इत्यर्थः ।

एवमिति । याहि याहीति—यातः । याहि याहीति—यूयं यात इत्याद्यवधेयम् । यातयातेति । द्विभावपक्षे—'याहि याहीति—याते'ति भवति । द्विभावाऽभावपक्षे त्वाह—यात यातेति ।

---

यथाविध्यनु । आद्य ( अर्थात्—क्रिया समभिहार ) अर्थ में जहाँ लोट् का विधान किया जाए वहाँ, उस लोट् का प्रकृति भूत जो धातु उसी का ही अनु प्रयोग हो ।

समुच्चये । [ और ] समुच्चय अर्थ में जहाँ लोट् का विधान किया जाए वहाँ, समुच्चीयमानक्रिया सामान्यवाची धातु का अनुप्रयोग हो ।

क्रियासमभिहारे द्वे । क्रिया समभिहार ( पौनःपुन्य और भृश ) अर्थ द्योत्य हो तो ( लोडन्त धातु को ) द्वित्व हो ।

खादतेति-अभ्यवहरथ। भुङ्ध्वमास्वादध्वमिति-अभ्यवहरध्वे। पक्षे हिस्वौ। अत्र समुच्चीयमानविशेषाणामनुप्रयोगार्थेन सामान्येनाऽभेदान्वयः। पक्षे—सक्तून् पिबति। धानाः खादति। अन्नं भुङ्क्ते। दाधिकमास्वादते।

एतेन—

'पुरीमवस्कन्द, लुनीहि नन्दनं,
मुषाण रत्नानि, हराऽमराङ्गनाः।
विगृह्य चक्रे नमुचिद्विषा बली,
य इत्थमस्वास्थ्यमहर्दिवं दिवः' ॥

—इति व्याख्यातम्। अवस्कन्दन-लवनादिरूपा भूतानद्यतनपरोक्षा एककर्तृका अस्वास्थ्यक्रियेत्यर्थात्। 'इह पुनःपुनश्चस्कन्देत्यादिरर्थ' इति व्याख्यानं भ्रममूल[क]मेव, द्वितीयसूत्रे 'क्रियासमभिहारे' इत्यस्याऽननुवृत्तेः, लोडन्तस्य द्वित्वापत्तेश्च। 'पुरीमवस्कन्दे'त्यादि मध्यमपुरुषैकवचनमित्यपि केषाञ्चिद् भ्रम एव, 'पुरुषवचनसंज्ञे इह ने'-त्युक्तत्वात्॥

* इति लकारार्थप्रक्रिया ॥ १० ॥ *

॥ इति मध्यसिद्धान्तकौमुद्यां तिङन्तप्रकरणम् ॥

---

पुरीमिति। माघपद्यमेतत्।

॥ श्रीगणेशाय नमः ॥

अथ

# वैयाकरण-मध्य-सिद्धान्तकौमुद्याम्-

## कृदन्तप्रकरणम् ।

**धातोः ।३।१।९१।** आ तृतीयाध्यायान्तं ये प्रत्ययास्ते धातोः परे स्युः । 'कृदतिङि'ति कृत्संज्ञा । **वाऽसरूपोऽस्त्रियाम् ।३।१।९४।** अस्मिन्धात्वधिकारेऽसरूपोऽपवादः प्रत्यय उत्सर्गस्य बाधको वा स्यात्, स्त्र्यधिकारोक्तं विना ।

**कृत्याः ।३।१।९५।** 'ण्वुल्तृचा'वित्यतः प्राक् कृत्संज्ञाः स्युः ।

**कर्त्तरि कृत् ।३।४।६७।** [[1]कृत्प्रत्ययः कर्त्तरि स्यात् ] । इति प्राप्ते ।

---

इति प्राप्त इति । इत्यनेन कृत्यसञ्ज्ञकानां कर्त्तरि विधाने प्राप्ते विधिमाहेत्यर्थः ।

---

**धातोः ।** तृतीयाध्याय की समाप्ति तक 'धातोः' यह अधिकार है । अर्थात्-तृतीयाध्याय की समाप्ति पर्यन्त जो प्रत्यय हैं वे धातु से परे हों ।

**वाऽसरूपोऽस्त्रियाम् ।** इस धात्वधिकार में असरूप जो अपवाद प्रत्यय, वह उत्सर्ग का बाधक विकल्प से हो, 'स्त्रियाम्' इस अधिकारोक्त (क्तिन् आदि) प्रत्ययों को छोड़कर ।

**कृत्याः ।** 'ण्वुल्तृचौ' इस सूत्र से पूर्व तक जो प्रत्यय कहे गए हैं, वे 'कृत्य' सञ्ज्ञक हों ।

**कर्त्तरि कृत् ।** कृत् प्रत्यय कर्त्ता अर्थ में हों ।

---

१ शेषपूरणम् ।

**तयोरेव कृत्यक्तखलर्थाः** ।३।४।७०। एते भावकर्मणोरेव स्युः ।

**तव्यत्तव्याऽनीयरः** ।३।१।९६। धातोरेते स्युः । एधितव्यम्, एधनीयं त्वया । भावे औत्सर्गिकमेकवचनं, क्लीबत्वं च । चेतव्यश्चयनीयो वा धर्मस्त्वया । ***केलिमर उपसंख्यानम्** । पचेलिमा माषाः । पक्तव्या इत्यर्थः । भिदेलिमाः सरलाः । कर्मणि प्रत्ययः ।

***वसेस्तव्यत्कर्त्तरि णिच्च** । वसतीति वास्तव्यः ।

**कृत्यचः** ।८।४।२९। उपसर्गस्थान्निमित्तात्परस्याऽच उत्तरस्य कृत्स्थस्य नस्य णत्वं स्यात् । प्रयाणीयम् । अचः किम्? प्रमग्नः । ***निर्विण्णस्योपसंख्यानम्** । **णेर्विभाषा** ।८।४।३०। प्राग्वत् । [[1] उपसर्गस्थान्निमित्तात्परस्य ण्यन्तविहितकृत्स्थस्य नस्य णो वा स्यात्] ।

---

तव्यत्तव्येति । अत्र तकाररेफौ स्वरार्थौ ।

चेतव्य इति । अत्र कर्मणि तव्याऽनीयःप्रत्ययौ ।

---

**तयोरेव** । कृत्य, क्त, और खलर्थ प्रत्यय—ये भाव और कर्म अर्थ में ही हों।

**तव्यत्तव्या** । धातु से तव्यत्, तव्य और अनीयर् प्रत्यय हों, ( भाव और कर्म अर्थ में ) ।

**केलिमरः** । धातु से केलिमर् प्रत्यय हो, भाव और कर्म अर्थ में ।

**वसेस्तव्यत्** । वस् धातु से कर्त्ता अर्थ में तव्यत् प्रत्यय हो, और वह णित् भी हो ।

**कृत्यचः** । उपसर्गस्थ निमित्त से परे जो अच् से उत्तर कृत्प्रत्ययका नकार-उसको णकार हो ।

**निर्विण्णस्य** । 'निर्विण्ण' में णत्व का उपसङ्ख्यान हो ।

**णेर्विभाषा** । ण्यन्त से विहित जो कृत्, तत्स्थ जो—उपसर्गस्थ निमित्त से परे, एवं अच् से उत्तर—नकार, उसको णकार हो, विकल्प करके ।

---

1 सिद्धान्तकौमुद्यनुसारिणीयं वृत्तिरस्माभिर्वर्द्धिता ।

प्रयापणीयम् । प्रयापनीयम् ।

**हलश्चेजुपधात्** ।८।४।३१। हलादेरिजुपधाद्धातोः परस्य कृन्नस्याऽचः परस्य णो वा [स्यात्] । प्रकोपणीयम् । प्रकोपनीयम् । हलः किम् ? प्रोहणीयम् । इजुपधात्किम् ? । प्रवपणीयम् ।

**इजादेः सनुमः** ।८।४।३२। सनुमश्चेद्भवति तर्हि इजादेर्हलन्ताद्विहितो यः कृत्तत्स्थस्यैव ॥ इखि गतौ' । प्रेङ्खणीयम् । इजादेः किम् ? । 'मगि सर्पणे' । प्रमङ्गनीयम् ।

**वा निंसनिक्षनिन्दाम्** ।८।४।३३। एषां नस्य णो वा [स्यात्] कृति । प्रणिंसितव्यम् । **न भाभूपूकमिगमिप्यायीवेपाम्** ।८।४।३४। एभ्यः कृन्नस्य णो वा [ स्यात् ] । । प्रभानीयम् । प्रभवनीयम् ।

*ण्यन्तभादीनामुपसंख्यानम् । प्रभापनीयम् ।

---

इजादेश्चेति । 'कृत्यच' इत्येव सिद्धे नियमार्थमेतत् ।

इखीति । भौवादिकः परस्मैपदी धातुरयम् ।

---

हलश्चेजुप । हलादि और इजुपध धातु से परे जो अजुत्तर कृत्स्थ नकार, उसको णकार हो, विकल्प करके ।

इजादेः सनुमः । सनुम् धातु से परे कृत्स्थ नकार को यदि णत्व हो तो, इजादि और हलन्त धातु से विहित जो कृत् , तत्स्थ नकार को ही हो ।

वा निंसनिक्ष । निंस, निक्ष, और निन्द धातु के नकार को णकार हो, विकल्प करके, कृत्प्रत्यय परे रहते ।

न भाभूपू । भा आदि धातुओं से परे जो कृत्स्थ नकार उसको णकार नहीं हो ।

ण्यन्तभादीना । ण्यन्त जो भादि धातु उनसे परे जो कृत्स्थ नकार, उसको णत्व नहीं हो ।

कृत्यल्युटो बहुलम् ।३।३।११३। [[1]धातोः कृत्यल्युटो बहुलं स्युः]।

क्वचित्प्रवृत्तिः, क्वचिदप्रवृत्तिः,
क्वचिद्विभाषा, क्वचिदन्यदेव ।
विधेर्विधानं बहुधा समीक्ष्य,
चतुर्विधं बाहुलकं वदन्ति ॥ १ ॥

स्नात्यनेन–स्नानीयं चूर्णम् । दीयतेऽस्मै–दानीयो विप्रः । ऋदुपधाच्चाऽक्लृपिचृतेः ।३।१।११०। [ [1]ऋदुपधाद्धातोः ] क्यप्स्यात्, [[1]क्लृपिचृती वर्जयित्वा]। वृत्–वृत्यम्। वृध्–वृध्यम्। क्लृपिचृत्योस्तु–कल्प्यम्। चर्त्यम्।

अचो यत् ।३।१।९७। [[2]अजन्ताद्धातोर्यत्स्यात्]। चेयम्। जेयम्। ईद्यति ।६।४।६५। [ [2]यति परे ] आतः [ [2]ईत्स्यात् ]। गुणः। देयम्। ग्लेयम्।

---

चेयमिति। चेतुं योग्यं–चेयम्। जेयमिति। जेतुं योग्यं जेयम्। ईद्यति। यति परे आत ईत्स्यादित्यर्थः। गुण इति। 'सार्वधातुकार्द्धधातुके'ति इकारस्य गुण इत्यर्थः।

---

कत्यल्युटो। कृत्य प्रत्यय और ल्युट् प्रत्यय बहुलता (विकल्प) करके हों।

क्वचित्प्रवृत्तिः। कहीं प्रवृत्त होना, कहीं नहीं प्रवृत्त होना, कहीं विकल्प से होना, कहीं जिस प्रकृति से और जिस अर्थ में कहा है, उससे अन्य से भी होना—यह ४ प्रकार की बहुलता विधिसूत्रों के विधान के मर्मज्ञ शास्त्रकारों नें कही है।

ऋदुपधाच्चा। ऋदुपध धातु से क्यप् हो, क्लृप् और चृत् धातु को छोडकर।

अचो यत्। अजन्त धातु से यत् प्रत्यय हो।

ईद्यति। आकार को ईत् आदेश हो, यत्प्रत्यय परे रहते।

---

१ शेषपूरणमस्मदीयमिदम्। २ शेषपूरणम्।

पोरदुपधात् ।३।१।९८। पवर्गान्तादऽदुपधाद्य[त्स्या]त् । ण्यतोऽपवादः । शप्यम् । लभ्यम् ।

आङो यि ।७।२।६५। आङः परस्य लभेर्नुम् स्याद्यादौ प्रत्यये [[1]विवक्षिते ]। आलम्भ्यो गौः ।

उपात्प्रशंसायाम् ।७।१।६६। [ [2]उपपूर्वाल्लभेर्नुम् स्यात्प्रशंसायाम् ]। उपलम्भ्यः साधुः । स्तुतौ किम् ? उपलब्धुं शक्यः–उपलभ्यः ।

शकिसहोश्च ।३।१।९९। [[1]शकिसहोर्यत् स्यात ]। शक्यम् । सह्यम्

गदमदचरयमश्चाऽनुपसर्गे । ३ । १ । १०० । [ [2]एभ्योऽनुपसर्गेभ्यो यत्स्यात् ]। गद्यम् । मद्यम् । चर्यम् । * चरेराङि चाऽगुरौ । आचर्यो देशः । अगुरौ किम् ? आचार्यो गुरुः । यम्यम् ।

---

उपादिति । उपपूर्वल्लभेर्नुम् स्याद्यादौ प्रत्यये विवक्षिते, प्रशंसायामित्यर्थः ।
उपालम्भ्य इति । नुमि कृतेऽदुपधत्वाभावाण्ण्यदेव ।
चरेराङीति । आङ्युपपदे चरेर्यत्स्यादगुरावित्यर्थः ।

---

पोरदुपधात् । पवर्गान्त जो अदुपध धातु उससे यत् प्रत्यय हो ।

आङो यि । आङ् से परे जो लभ् धातु उसको नुम् आगम हो, यकारादि प्रत्यय की विवक्षा में ।

उपात्प्रशंसायाम् । 'उप' उपसर्ग से परे जो लभ् धातु उसको नुम् आगम हो, यकारादि प्रत्यय की विवक्षा में । प्रशंसा ( स्तुति ) अर्थ गम्यमान होतो ।

शकिसहोश्च । शक् और सह धातु से यत् प्रत्यय हो ।

गदमद । अनुपसर्ग [ अर्थात् उपसर्ग रहित ] गद आदि धातुओं से यत् प्रत्यय हो ।

चरेराङि । आङ् उपसर्ग से परे जो चर् धातु, उससे यत् प्रत्यय हो । तदन्त से यदि गुरु रूप अर्थ गम्यमान नहीं हो तो ।

---

१ सिद्धान्तकौमुद्यनुसारेण वर्द्धितोऽयं पाठः । २ शेषपूरणमेतत् ।

**अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु ३।१।१०१।** [ [1]अवद्यादयस्त्रयो निपात्यन्ते, क्रमाद् गर्ह्यादिष्वर्थेषु ]। अवद्यं—पापम्। पण्यं—विक्रेयम्। शतेन वर्या कन्या। **वह्यं करणम् ।३।१।१०२।** [ [1]वह्यमिति यत्प्रत्ययान्तं निपात्यते, करणेऽर्थे]। वहन्त्यनेनेति—वह्यं शकटम्। वाह्यमन्यत्। **अर्यः स्वामिवैश्ययोः ।३।१।१०३।** [ [1]"अर्य" इति यत्प्रत्ययान्तं निपात्यते, स्वामिवैश्ययोरर्थयोः ]। अनयोः किम्? आर्यो ब्राह्मणः।

**उपसर्या काल्या प्रजने ।३।१।१०४।** [ [1]उपसर्येति यत्प्रत्ययान्तं निपात्यते ], गर्भग्रहणे प्राप्तकाला चेदित्यर्थः। उपसर्या गौः। गर्भाधानार्थं वृषभेणोपगन्तुं योग्येत्यर्थः। प्रजने काल्येति किम्? उपसर्या काशी। प्राप्तव्येत्यर्थः।

---

**वह्यमिति।** यत्प्रत्ययान्तं वह्यमिति निपात्यते, करणेऽर्थे। **वाह्यमिति।** 'ऋहलो'रिति ण्यत्। **अर्य इति।** 'ऋ गतौ' इत्यस्माद्यन्निपात्यते एतयोरर्थयोः।

**आर्य इति।** प्राप्तव्य इत्यर्थः। **उपसर्येति।** 'उपसर्या' इति यत्प्रत्ययान्तं निपात्यते, प्रजने = [2]प्रथम गर्भग्रहणे, काल्या = प्राप्तकाला चेदित्यर्थः। अत्र उपपूर्वात्सृधातोर्यत्।

---

**अवद्यपण्य।** अवद्य आदि शब्द क्रम से गर्ह्य आदि अर्थों में निपातित हों।

**वह्यं करणम्।** 'वह्य'—यह करण में निपातित हो। अर्थात् वह धातु से करण अर्थ में यत् प्रत्यय निपातित हो।

**अर्यः स्वामि।** स्वामी और वैश्य अर्थ में 'अर्य' यह यत्प्रत्ययान्त निपातित हो।

**उपसर्या।** 'प्रथम[2]—गर्भ ग्रहण में यह प्राप्त काल ( योग्य ) है, इस अर्थ में 'उपसर्या' यह निपातित हो।

---

१ शेषपूरणमेतत्सूत्राक्षरलभ्यम्। २ काशिकानुसारेणाऽत्र—प्रथमेति।

**अजर्यं सङ्गतम्** ।३।१।१०५। [ [1]अजर्यमिति नञ्पूर्वाज्जीर्यतेर्यत्प्रत्ययान्तं निपात्यते, सङ्गतं ] विशेष्यं चेत् । न जीर्यतीत्यजर्यम्—सतां सङ्गतम् । **वदः सुपि क्यप् च** ।३।१।१०६। [ [1]अनुपसर्गे सुप्युपपदे वदेर्भावे क्यप् स्यात् ] । चाद्यत् । ब्रह्मोद्यम् । ब्रह्मवद्यम् । **भुवो भावे** ।३।१।१०७। [ [1]भुवः ] क्यप् [ [1]स्याद्भावे ] । ब्रह्मणो भावो-ब्रह्मभूयम् ।

**हनस्त च** ।३।१।१०८। [ [1]अनुपसर्गे सुप्युपपदे हन्तेर्भावे तकारोऽन्तादेशः स्यात् ] । चात्क्यप् । ब्रह्मणो हननं-ब्रह्महत्या ।

**एतिस्तुशास्वृदृजुषः क्यप्** ।३।१।१०९। [एभ्यः[1] क्यप् स्यात् ] । **ह्रस्वस्य पिति कृति तुक्** ।६।१।७१। [ [1]ह्रस्वस्य तुगागमः स्यात्पिति

---

अजर्यमिति । नञ्पूर्वाज्जीर्यतेः कर्त्तरि यत्स्यात्सङ्गतं चेद्विशेष्यम् । सङ्गतं=सङ्गमः । मैत्रीति यावत् । वदः सुपीति । वदेर्भावे क्यप् स्यात्, चाद्यत्, अनुपसर्गे सुप्युपपदे । ब्रह्मोद्यमिति । 'वचिस्वपी'ति सम्प्रसारणम् । वेदोच्चारणमित्यर्थः । ब्रह्मभूयमिति । कित्त्वान्न गुणः । क्लीबत्वं लोकात् । ब्रह्मत्वं भवनमर्थः । हनस्त चेति । अनुपसर्गे सुप्युपपदे हन्तेर्भावे क्यप् स्यात्, तकारश्चाऽन्तादेशः ।

---

अजर्यं । यदि सङ्गत ( अर्थात्—मैत्री ) विशेष्य हो तो 'अजर्यं' यह निपातित हो ।

वदः सुपि । अनुपसर्ग सुबन्त उपपद रहते वद धातु से क्यप् हो, और ( चकार से–) यत् प्रत्यय भी हो ।

भुवो भावे । अनुपसर्ग सुबन्त उपपद रहते भू धातु से भाव अर्थ में क्यप् प्रत्यय हो ।

हनस्त च । अनुपसर्ग सुबन्त उपपद रहते हन् धातु से भाव में क्यप् प्रत्यय हो, और हन् को तकार अन्तादेश भी हो ।

एतिस्तु । एति ( इण् ) आदि धातुओं से क्यप् प्रत्यय हो ।

ह्रस्वस्य पिति । ह्रस्व को तुक् आगम हो, पित् कृत्प्रत्यय परे रहते ।

---

१ शेषपूरणमेतत् ।

कृति ]। इत्यः। स्तुत्यः। शिष्यः। 'वृ' इति वृञो ग्रहणं, न वृङः। वृत्यः। वृङस्तु—वार्या ऋत्विजः। आदृत्यः। जुष्यः। पुनः क्यबुक्तिः परस्याऽपि ण्यतो बाधनार्था। अवश्यस्तुत्यः।

मृजेर्विभाषा।३।१।११३। मृजः क्यब्वा [[1]स्यात्]। मृज्यः।

ऋहलोर्ण्यत्।३।१।१२४। ऋवर्णान्ताद्धलन्ताच्च ण्यत् स्यात्। चजोः कु घिण्ण्यतोः।७।३।५२। चजोः कुत्वं स्याद् घिति, ण्यति च। *निष्ठायामनिट इति वक्तव्यम्। तेनेह न। गर्ज्यम्। मार्ग्यः।

ओरावश्यके।३।१।१२५। उवर्णान्ताद्धातोर्ण्यत् [[2]स्यादावश्यके]। लाव्यम्। पाव्यम्।

'लुम्पेदवश्यमः कृत्ये, तुं काममनसोरपि।
समो वा हिततयोर्मांसस्य पचि युड्घञोः'॥

---

मार्ग्य इति। 'मृजेर्वृद्धि'रिति वृद्धिः। लुम्पेदिति। कृत्यप्रत्यये परेऽवश्यं-शब्दस्य मकारो लुप्यते। काममनसो परयोः तुमो मकारो लुप्यते। हिततयोः परयोः समो मकारो वा लुप्यते। मांसशब्दस्याऽकारो लुप्यते, युड्घञ्परके पच्-

---

मृजेर्विभाषा। मृज् धातु से क्यप् हो, विकल्प करके।

ऋहलोर्ण्यत्। ऋवर्णान्त धातु और हलन्त धातु से ण्यत् प्रत्यय हो।

चजोः कु। चकार और जकार को कुत्व हो, घित् और ण्यत् प्रत्यय परे रहते।

निष्ठायामनिटः। निष्ठा में जो अनिट् हो, उसी धातु के चकार, जकार को कुत्व हो, अन्य को नहीं हो।

ओरावश्यके। उवर्णान्त धातु से आवश्यक अर्थ में ण्यत् प्रत्यय हो।

लुम्पेदवश्यमः। कृत्य प्रत्ययान्त परे रहते 'अवश्यम्' के मकार का लोप हो। और काम और मनस् शब्द परे रहते 'तुम्' के मकार का लोप हो। और सम् के मकार का लोप हो, 'हित' और 'तत' शब्द परे रहते। और 'मांस'

---

१ क्वाचित्कः। २ शेषपूरणम्।

अवश्यलाव्यम् । **भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा ।३।४।६८।** एते कृत्यान्ताः कर्त्तरि वा निपात्यन्ते । भवतीति-भव्यः । भव्यमनेन वा । **भोज्यं भक्ष्ये ।७।३।६९।** [[1]भोज्यमिति निपात्यते, भक्ष्ये ] । भोग्यमन्यत् ।

**वचोऽशब्दसंज्ञायाम् ।७।३।६७।** [[1]अशब्दसञ्ज्ञायां वचूधातोर्ण्ये] न कुत्वम् । वाच्यम् । वाक्यमन्यत् ।

**राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याऽव्यथ्याः ।३।१।११४।** एते सप्त क्यबन्ता निपात्यन्ते ।

---

धातौ परे इत्यर्थः । तत्र—'अवश्यलाव्यम् । वक्तुकामः । गन्तुमनाः । सततम्-सन्ततम् । सहितं-संहितम् । मांसपचनी । मांस्पाक' इत्याद्युदाहरणानि ।

भोज्यमिति । भक्ष्ये गम्ये ण्ये परतो भुजेः कुत्वाऽभावो निपात्यते । अन्यत्=स्त्रीधनसुखादिकं,-भोग्यम्=उपभोगार्हमित्यर्थः । राजसूय इति । राज्ञा सोतव्योऽभिषववद्वारा निष्पादयितव्यो यज्ञः—राजसूयः । सरत्याकाशे इति-सूर्यः । मृषा उद्यते इति—मृषोद्यम् । रोचते इति—रुच्यः । गोप्यते इति—कुप्यम्=सुवर्णरजतभिन्नं, ताम्रलोहधान्यादिकम् । कृष्टे स्वयमेव पच्यन्ते इति-कृष्टपच्याः ।

---

शब्द के अकार का लोप हो, युडन्त और घञन्त पच् धातु परे रहते ।

भव्यगेय । 'भव्य' 'गेय' आदि शब्द कर्त्ता अर्थ में कृत्य प्रत्ययान्त निपातित हों, विकल्प करके ।

भोज्यं भक्ष्ये । भक्ष्य अर्थ में 'भोज्य' निपातित हो ।

वचोऽशब्द । वच् धातु के चकार को कुत्व नहीं हो, अशब्द संज्ञा में । अर्थात् शब्द सञ्ज्ञा को छोड़कर ।

राजसूय । 'राजसूय' आदि सात शब्द क्यबन्त निपातित हों ।

---

१ शेषपूरणमस्माकमेतत् ।

**भिद्योद्ध्यौ नदे** ।३।१।११५। [एतौ नदे निपात्येते]। नदे किम् ? भेत्ता। उज्झिता। **पुष्यसिध्यौ नक्षत्रे** ।३।१।११६। [[1]पुष्यसिद्ध्ययो-र्नक्षत्रे ] अधिकरणे क्यन्निपात्यते। पुष्यन्त्यस्मिन्नर्थाः-पुष्यः। सिध्य-न्त्यस्मिन्सिद्ध्यः।

**विपूयविनीयजित्या मुञ्जकल्कहलिषु** ।३।१।११७। [ एते क्य-बन्ता निपात्यन्ते, एष्वर्थेषु ]। विपूयो—मुञ्जः। विनीयः—कल्कः। जित्यो—हलिः। **प्रत्यपिभ्यां ग्रहेः** ।३।१।११८। [ [1]प्रत्यपिभ्यां ग्रहेः क्यप्स्यात् ]। * **छन्दसीति वक्तव्यम्**। प्रतिगृह्यम्। अपिगृह्यम्। लोके तु-प्रतिग्राह्यम्। अपिग्राह्यम्।

**पदाऽस्वैरिबाह्यापक्ष्येषु च** ।३।१।११९। [ [1]एष्वर्थेषु ग्रहेः क्यप्

---

भिनत्ति कूलमिति-भिध्यः। उज्झेर्धत्वं निपात्यते। विपूयेति। एते क्यबन्ता निपात्यन्ते। अत्र पूङ्-नीञ्-जिभ्यः क्यप्। विपूयः=रज्ज्वादि-करणाय इषीकादिनिरसनादिना, मुद्गरकुट्टनादिना च शोधयितव्यो मुञ्जइत्यर्थः। कल्कः = पिष्ट ओषधिविशेषः, पापं वा। जित्यः = बलेन क्रष्टव्यः। हलिः = कृष्ट-समीकरणसाधनस्थूलकाष्ठविशेषः।

---

भिद्ध्योद्ध्यौ। 'भिद्ध्य' और 'उद्ध्य' ये दो शब्द क्यबन्त निपातित हों, नद अर्थ में।

पुष्यसिद्ध्यौ। 'पुष्य' और 'सिद्ध्य' ये दो शब्द में अधिकरण क्यबन्त निपातित हों।

विपूयविनीय। 'विपूय', 'विनीय' और 'जित्य' ये तीन शब्द-क्रमसे-मुञ्ज, कल्क और हलि ( 'हेंगा' ) इन अर्थों में क्यबन्त निपातित हों।

प्रत्यपिभ्यां। प्रति और अपि उपसर्ग से परे जो ग्रह् धातु उसे क्यप् प्रत्यय हो, छन्द ( वेद ) में।

पदाऽस्वरि। ग्रह् धातु के क्यप् हो, पदादि अर्थों में।

---

१ एतदन्तर्गतः पाठोऽस्माभिर्वर्द्धितः।

स्यात् ]। अवगृह्यं; प्रगृह्यं—पदम् । अस्वैरी—परतन्त्रः । गृह्यकाः-शुकाः । ग्रामगृह्या-सेना । आर्यैर्गृह्यते-आर्यगृह्यः । तत्पक्षाश्रित इत्यर्थः ।

**विभाषा कृवृषोः ।३।१।१२०।** [ [1]कृवृषोः क्यब्वा स्यात् ]। कृत्यम् । वृष्यम् । कार्यम् । वर्ष्यम् । **युग्यं च पत्रे ।३।१।१२१।** [ [1]युग्यमिति क्यबन्तं निपात्यते, पत्रे]। पत्रं—वाहनम् । योग्यमन्यत् ।

**अमावस्यदन्यतरस्याम् ।३।१।१२२।** [ [1]अमोपपदाद्वसेरधिकरणे ण्यत्, वृद्धौ सत्यां पाक्षिको ह्रस्वाऽभावश्च निपात्यते ] । अमा=सह वसतोऽस्यां चन्द्रार्काविति-अमावस्या । अमावास्या वा ।

**अग्नौ परिचाय्योपचाय्यसमूह्याः।३।१।१३१।** अग्नावेते साधवः ।

**क्रतौ कुण्डपाय्यसंचाय्यौ ।३।१।१३०।** [ [1]क्रतुविशेषे एतौ निपात्येते] । कुण्डेन पीयतेऽस्मिन् सोमः—कुण्डपाय्यः । संचीयतेऽसौ-सञ्चाय्यः ।

---

अमावस्यदिति । अमोपपदाद्वसेरधिकरणे ण्यत्, वृद्धौ सत्यां पाक्षिको ह्रस्वश्च निपात्यते इत्यर्थः ।

अग्नौ परीति । अग्निधारणार्थे स्थलविशेषे एते साधवः । 'अग्नि'शब्द इष्टकारचितस्थण्डिलविशेषेऽत्र बोध्यः । परिपूर्वाच्चिनोतिर्ण्यदायादेशश्च । संपूर्वाद्वहेः संप्रसारणदीर्घौ निपात्येते ।

---

विभाषा कृ । 'कृ' और 'वृष्' धातु से क्यप् हो, विकल्प करके ।

युग्यं पत्रे । वाहन अर्थ में 'युग्य' यह निपातित हो ।

अमावस्यदन्य । 'अमा' उपपदक वस् धातु से अधिकरण अर्थ में नित्य ण्यत् प्रत्यय हो । और वृद्धि होने पर वस् धातु को विकल्प करके ह्रस्व भी हो ।

अग्नौ परिचाय्य । ईंटों के चिने हुए अग्न्याधारस्थल विशेष अर्थ में 'परिचाय्य' आदि तीन शब्द साधु हों ।

क्रतौ कुण्ड । क्रतु विशेष अर्थ गम्यमान हो तो 'कुंडपाय्य' और 'सञ्चाय्य' ये दो शब्द निपातित हों ।

---

१ शेषपूरणमेतत् ।

चित्याऽग्निचित्ये च।३।१।१३२। [¹एतौ निपात्येते]। चित्योऽग्निः। अग्नेश्चयनम्—अग्निचित्या ॥

## * इति कृत्यप्रत्ययाः * ।

---

## अथ कृत्प्रक्रिया ।

ण्वुल्तृचौ ।३।१।१३३। धातोरेतौ स्तः। 'कर्त्तरि कृ'दिति कर्त्रर्थे। युवोरनाकौ ।७।१।१। 'यु' 'वु' एतयोरनुनासिकयोरेतौ स्तः। कारकः। कर्त्ता।

नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ।३।१।१३४। नन्द्यादेर्ल्युर्ग्रह्यादेर्णिनिः, पचादेरच्स्यात्। नन्दयतीति नन्दनः। जनार्दनः।

---

चित्येति। अग्नावेतौ निपात्येते। चीयते इति-चित्यः। कर्मणि क्यप्।

इति कृत्यप्रक्रिया।

धातोरेताविति। एतौ = ण्वुल्तृचौ। कारक इति। करोतीति—कारकः। करोतीति कर्त्ता। द्वन्द्वान्ते श्रूयमाणतया आदिशब्दस्य प्रत्येकमन्वय इत्याशयेनाह—नन्द्यादेरिति। नन्दन इति। 'णेरनिटी'ति णिलोपः।

---

चित्याग्नि। 'चित्य' और 'अग्निचित्य' ये दो शब्द निपातित हों, अग्न्याधार स्थल विशेष में।

ण्वुल्तृचौ। धातु से ण्वुल् और तृच् प्रत्यय हों, कर्त्ता अर्थ में।

युवोरनाकौ। अनुनासिक जो 'यु' और 'वु', उनको क्रमसे 'अन' और 'अक' आदेश हों।

नन्दिग्रहि। नन्द्यादि गणपठित धातुओं से 'ल्यु' प्रत्यय हो, ग्रह्यादि से से 'णिनि' हो, और पचादि से 'अच्' प्रत्यय हो।

---

१ शेषपूरणमेतत्।

लवणः। गणे निपातनाण्णत्वम्। ग्राही। स्थायी। मन्त्री। पचः। आकृतिगणोऽयम्॥

**इगुपधज्ञाप्रीकिरः कः ।३।१।१३५।** एभ्यः कः स्यात्। क्षिपः। बुधः। कृशः। ज्ञः। प्रियः। किरः।

**आतश्चोपसर्गे ।३।१।१३६।** [ [1]उपसर्गे उपपदे आदन्ताद्धातोः कप्रत्ययः स्यात् ]। प्रज्ञः। सुग्लः। **पाघ्राध्माधेट्दृशः शः ।३।१।१३७।** एभ्यः शः स्यात्। पिबः। जिघ्रः। धमः। धयः। पश्यः।

**अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च ।३।१।१३८।** [ [1]अनुपसृष्टेभ्यो लिम्पादिभ्यः शः स्यात् ]। लिम्पः। विन्दः। धारयः। पारयः। वेदयः। उदेजयः। चेतयः। सातयः। साहयः। अनुपसर्गात्किम्? प्रलिपः। *** गवादिषु विन्देः संज्ञायाम्।**

---

लुनातीति-लवणः। गणे=नन्द्यादिगणे। पचतीति—पचः। अयं=पचादिः, आकृतिगणः। ज्ञ इति। 'आतो लोप इटि चे'त्यालोपः। किर इति। कृधातोः के 'ऋत इद्धातो'रितीत्त्वे रपरत्वम्।

आतश्चोपसर्ग इति। उपसर्गे उपपदे आदन्ताद्धातोः कः स्यादित्यर्थः। अनुपसर्गादिति। अनुपसर्गेभ्यः=उपसर्गरहितेभ्यो लिम्पादिभ्यः शः स्यादित्यर्थः। गवादिष्विति। गवादिषूपपदेषु विन्देः शः स्यादित्यर्थः।

---

इगुपधज्ञा। इगुपध धातु और ज्ञा, प्री, कृ इन धातुओं से 'क' प्रत्यय हो।

आतश्चोप। उपसर्ग उपपद रहते आदन्त धातु से क प्रत्यय हो।

पाघ्राध्मा। 'पा' आदि धातुओं से 'श' प्रत्यय हो।

अनुपसर्गाल्लिम्प। अनुपसर्ग लिम्प आदि धातुओं से 'श' प्रत्यय हो।

गवादिषु। गवादि शब्द उपपद रहते विन्द् धातु से 'श' प्रत्यय हो, सञ्ज्ञा गम्यमान हो तो।

---

१ अस्मत्कृतं शेषपूरणमेतत्।

गोविन्दः। अरविन्दम्।

दहातिदधात्योर्विभाषा ।३।१।१३९। ['आभ्यां शो वा स्यात्]।
ददः। दधः। पक्षे–वक्ष्यमाणो णः।

ज्वलितिकसन्तेभ्यो ण ।३।१।१४०। ['ज्वलादिभ्यः कसन्तेभ्यो णो] वा स्यात्। ज्वालः। ज्वलः। चालः। चलः।

श्याऽऽद्व्यधाऽऽस्रुसंस्रवतीणवसाऽवहृलिहश्लिषश्वसश्च ।३।१।१४१। ['श्यैङादिभ्यो नित्यं णः स्यात्]। अवश्यायः। आत्–दायः। धायः। व्याधः। आस्रावः। अत्यायः। अवसायः। अवहारः। लेहः। श्लेषः। श्वासः।

विभाषा ग्रहः ।३।१।१४३। ['ग्रहेर्णो वा स्यात्]। व्यवस्थितविभाषेयम्। तेन-जलचरे ग्राहः। ज्योतिषि–ग्रहः। गेहे कः ।३।१।१४४। ['गेहे कर्त्तरि ग्रहेः कः स्यात्]। गृह्णाति धान्यादिकमिति—गृहम्।

---

गाः=उपनिषद्वाचः, प्रमाणतया—विन्दति=लभते–इति गोविन्दः। अराः—अरसदृशानि पत्राणि विन्दतीति–अरविन्दम्। ददातीति। आभ्यां वा शः स्यादित्यर्थः। ज्वलितीति। इतिशब्द आद्यर्थः। तेन ज्वलादिभ्यः, कसन्तेभ्यो णो वा स्यादित्यर्थः। श्यादिति। श्यैङ्प्रभृतिभ्यो नित्यं णः स्यादित्यर्थः। विभाषा ग्रह इति। ग्रहेर्णो वा स्यादित्यर्थः।

---

ददातिदधा। 'दा' और 'धा' धातु से 'श' प्रत्यय हो, विकल्प करके।
ज्वलिति। ज्वलादि कसन्त धातुओं से 'ण' प्रत्यय हो, विकल्प करके।
श्याद्व्यधा। श्यैङ् धातु, आदन्त धातु और व्यधादि धातु इनसे नित्य 'ण' प्रत्यय हो।
विभाषा ग्रहः। ग्रह् धातु से ण प्रत्यय हो, विकल्प करके।
गेहे कः। गेह कर्त्ता हो तो ग्रह् धातु से 'क' प्रत्यय हो।

---

१ अस्मत्कृतं शेषपूरणमेतत्।

शिल्पिनि ष्वुन् ।३।१।१४५। क्रियाकौशलं शिल्पम्, तद्वत्कर्तरि ष्वुन् स्यात् । षः प्रत्ययस्य ।१।३।६। [[1]प्रत्ययस्य] आदिः[ष] इत्स्यात् । * नृतिखनिरञ्जिभ्य एव । नर्त्तकः । खनकः । * असि, अकेऽने च रञ्जेर्नलोपो वाच्यः । रजकः ।

गःस्थकन् ।३।१।१४६। गायतेस्थकन् [ [2]स्यात् ] । गाथकः ।

ण्युट् च ।३।१।१४७। [ [1]एभ्यः समभिहारे वुन् स्यात् ] । गायनः ।

प्रुसृल्वः समभिहारे वुन् ।३।१।१४९। [[1]एभ्यः समभिहारे वुन्स्यात् ] । समभिहारग्रहणेन साधुकारित्वं लक्ष्यते । प्रवकः । सरकः । लवकः ।

आशिषि च ।३।१।१५०। [ [1]आशिषि ] वुन् स्यात । जीवतात्-जीवकः ।

तत्रोपपदं सप्तमीस्थम् ।३।१।९२। सप्तम्यन्ते पदे-'कर्मणी'त्यादौ,-वाच्यत्वेन स्थितं यत् कुम्भादि, तद्वाचकं पदमुपपदसंज्ञं स्यात् ।

---

शिल्पिनि । शिल्पी ( कारीगर ) कर्त्ता हो तो धातु से ष्वुन् प्रत्यय हो ।

षः प्रत्ययस्य । प्रत्यय के आदि के षकार की इत्सञ्ज्ञा हो ।

नृतिखनि । 'नृत्' 'खन्' और 'रञ्ज्' धातु से ही ष्वुन् प्रत्यय हो ।

असि अके । 'अस्' 'अक', और 'अन' प्रत्यय परे रहते 'रञ्ज्' धातु के नकार का लोप हो ।

गस्थकन् । 'गै शब्दे' के इस धातु से थकन् प्रत्यय हो ।

ण्युट् च 'गै' धातु से ण्युट् प्रत्यय भी हो ।

प्रुसृल्वः । 'प्रु' 'सृ' 'लू' इन धातुओं से साधुकारी अर्थ में वुन् प्रत्यय हो ।

आशिषि च । धातु से वुन् प्रत्यय हो, आशीरर्थ में ।

तत्रोपपदं । सप्तम्यन्त 'कर्मणि' आदि पदों के वाच्य जो कुम्भादि, तद्वाचक पदों की उपपद सञ्ज्ञा हो ।

---

१ शेषपूरणमेतत् । २ क्वचिन्न ।

कर्मण्यण् ।३।२।१। कर्मण्युपपदे धातोरण् [ [1]स्यात् ] । कुम्भं करोतीति—कुम्भकारः ।

आतोऽनुपसर्गे कः ।३।२।३। कर्मण्युपपदे आदन्ताद्धातोरनुपसर्गात्कः स्यात् । नाऽण् । अणोऽपवादः । गोदः । कम्बलदः । अनुपसर्गे किम् ? । गोसंदायः ।

* मूलविभुजादिभ्यः कः । मूलानि विभुजतीति मूलविभुजो रथः । आकृतिगणोऽयम् । महीध्रः । कुध्रः ॥

सुपि स्थः ।३।२।४। [ [2]सुबन्ते उपपदे स्थाधातोः ] कः स्यात् । समस्थः । विषमस्थः । 'सुपी'ति योगविभागादन्यस्मादपि । द्वाभ्यां पिबतीति—द्विपः ।

अम्बा-ऽम्ब-गो-भूमि-सव्या-ऽप-द्वि-त्रि-कुशे-कु-शंकु-ङ्गु-मञ्जि-पुञ्जि-परमे-बर्हि-र्दिव्य-ग्निभ्य :स्थः ।८।३।९७। एभ्यः स्थस्य सस्य षः ।

---

मूलानीति । विभुजति=उत्पाटयति । सुपीति । अत्र सुबिति प्रत्याहारो, न सप्तमीबहुवचनम् । अन्यस्मादिति । एवञ्च सुप्युपपदे आदन्तात्कः स्यादित्यर्थः । अन्यस्मात्=स्थाधातुभिन्नादादन्तादपि धातोः क इत्यर्थः ।

द्वाभ्यां=शुण्डादण्डमुखाभ्याम् ।

---

कर्मण्यण् । कर्म उपपद रहते धातु से अण् प्रत्यय हो ।

आतोऽनुप । कर्म उपपद रहते अनुसर्ग ( उपसर्ग रहित ) आदन्त धातु से 'क' प्रत्यय हो ।

मूलविभुजादिभ्यः । मूलविभुजादि से 'क' प्रत्यय हो ।

सुपि स्थः । सुबन्त उपपद रहते स्था धातु से 'क' प्रत्यय हो ।

अम्बाम्ब । अम्बादि शब्दों से परे जो 'स्थ' का सकार उसको षकार हो ।

---

१ क्वचिन्न । २ शेषपूरणमेतत् ।

द्विष्ठः। त्रिष्ठः[1]। **तुन्दशोकयोः परिमृजापनुदोः ।३।२।५।** तुन्दशोकयोः कर्मणोरुपपदयोराभ्यां कः [ [1]स्यात् ]। ***आलस्यसुखाऽऽहरणयोरिति वक्तव्यम्** । तुन्दपरिमृजोऽलसः । शोकापनुदः—सुखस्याऽऽहर्ता ।

**प्रे दाज्ञः ।३।२।६।** [ प्रे [2]उपपदे आभ्यां ] कः स्यात् । सर्वप्रदः । पथिप्रज्ञः । **समि ख्यः ।३।२।७।** [ [2]समि उपपदे ख्यः कः स्यात् ] । गोसंख्यः । **गापोष्टक् ।३।२।८।** कर्मण्युपपदे [ [2]गापोष्टक् स्यात् ] सामगः । ***पिबतेः सुराशीध्वोरिति वाच्यम्** । सुरापी । शीधुपी । अन्यत्र-क्षीरपा ब्राह्मणी ।

**हरतेरनुद्यमनेऽच् ।३।२।९।** [ [2]कर्मण्युपपदे हरतेरच् स्यादनुद्यमनेऽर्थे ]। अंशहरः। अनुद्यमने किम् ? भारहारः। ***शक्तिलाङ्गलांकुशतोमरयष्टिघटघटीधनुष्षु ग्रहेरुपसङ्ख्यानम्** । शक्तिग्रहः ॥

---

तुन्देति । सूत्रे परिमृजापनुदोरिति पञ्चम्यर्थे षष्ठीत्याशयेनाह—आभ्यामिति । गापोरिति । कर्मण्युपपदे गापोष्टक् स्यात् । शक्तीति । अत्र घटग्रहणेनैव सिद्धे पुनर्घटीग्रहणं लिङ्गविशिष्टपरिभाषाया अनित्यत्वज्ञापनार्थम् । तेन

---

तुन्दशोक । कर्मसञ्ज्ञक 'तुन्द' और 'शोक' उपपद रहते परिपूर्वक 'मृज्' धातु से, और अपपूर्वक 'नुद' धातु से 'क' प्रत्यय हो ।

आलस्यसुखा । 'तुन्द' 'शोक' कर्म उपपद रहते जो 'क' प्रत्यय कहा है, वह क्रम से आलस्य और सुख शान्ति पहुँचाना अर्थ गम्यमान होने पर ही हो ।

प्रे दाज्ञः । प्र उपपद रहते दा और ज्ञा धातु से 'क' प्रत्यय हो ।

समि ख्यः । 'सम्' उपपद रहते 'ख्या' धातु से 'क' प्रत्यय हो ।

गापोष्टक् । कर्म उपपद रहते 'गा' और पा' धातु से टक् प्रत्यय हो ।

पिबतेःसुरा । 'सुरा' और 'शीधु' कर्म उपपद रहते ही 'पा' धातु से टक् हो ।

हरतेरनु । कर्मोपपद हृञ् धातु से अच् प्रत्यय हो, उद्यम ( उठाना ) से भिन्न अर्थ में ।

शक्तिलाङ्गला । 'शक्ति' आदि कर्मसञ्ज्ञक उपपद रहते 'ग्रह्' धातु से 'अच्' प्रत्यय हो ।

---

१ क्वाचित्कः पाठः । २ शेषपूरणमेतत् ।

वयसि च ।३।२।१०। [ [1]वयसि गम्ये कर्मण्युपपदे हरतेरच् स्यात् ]। उद्यमनार्थं सूत्रम्। कवचहरः कुमारः। आङि ताच्छील्ये ।३।२।११। [[1]आङ् पूर्वाद्धरतेः कर्मण्युपपदेऽच् स्यात्ताच्छील्ये]। पुष्पाण्याहरति तच्छीलः पुष्पाहरः। अर्हः ।३।२।१२। [[1]अर्हते ]रच्स्यात्, कर्मण्युपपदे। पूजार्हा ब्राह्मणी। स्तम्बकर्णयो रमिजपोः ।३।२।१३। [ [1]स्तम्बकर्णयोरुपपदयो रमिजपोरच् स्यात् ] । *हस्तिसूचकयोरिति वक्तव्यम्। स्तम्बेरमो हस्ती। कर्णेजपः सूचकः॥

अधिकरणे शेतेः ।३।२।१५। [[1]अधिकरणे उपपदे शेतेरच् स्यात्]। खे शेते खशयः। *पार्श्वादिषूपसंख्यानम्। पार्श्वाभ्यां शेते-पार्श्वशयः। पृष्ठशयः। उदरशयः। चरेष्टः ।३।२।१६। अधिकरणे उपपदे [[1]चरेष्टः

---

'मद्रराज्ञी'त्यत्र 'राजाहः सखिभ्यः' इति टच्न। स्तम्बेरम इति। 'तत्पुरुषे कृती'ति, 'हलदन्तात्सप्तम्याः सञ्ज्ञाया'मिति वा सप्तम्या अलुक्।

---

वयसि च। अवस्था गम्यमान हो तो कर्मोपपद हृधातु से उद्यमन अर्थ में अच प्रत्यय हो।

आङि ताच्छी। आङ् पूर्वक हृञ् धातु से उपपद रहते अच् प्रत्यय हो, ताच्छील्य अर्थ में।

अर्हः। कर्म उपपद रहते अर्ह धातु से अच् प्रत्यय हो।

स्तम्बकर्णयोः। स्तम्ब और कर्ण उपपद रहते रम् और जप् धातु से अच् प्रत्यय हो, हस्ती और सूचक अर्थ गम्यमान हो तो।

अधिकरणे शेतेः। अधिकरणसञ्ज्ञक सुबन्त उपपद रहते शीङ् धातु से अच् प्रत्यय हो।

पार्श्वादिषू। पार्श्वादि उपपद रहते शीङ् धातु से अच् प्रत्यय हो।

चरेष्टः। अधिकरण उपपद रहते चर धातु से 'ट' प्रत्यय हो।

---

१ शेषपूरणमेतत्।

स्यात् ]। कुरुचरः। **भिक्षासेनाऽऽदायेषु च ।३।२।१७।** [[1]एषूपपदेषु चरेष्टः स्यात् ]। भिक्षाचरः। सेनाचरः। 'आदाये'ति ल्यबन्तम्। आदायचरः।

**कृञो हेतुताच्छील्यानुलोम्येषु ।३।२।२०।** एषु द्योत्येषु कृञष्टः [[2]स्यात् ]।

**अतः कृ-कमि-कंस-कुम्भ-पात्र-कुशा-कर्णीष्वनव्ययस्य ।८।३।४६।** अत उत्तरस्याऽनव्ययविसर्गस्य समासे नित्यं सादेशः [[2]स्या]त्करोत्यादिषु। अयस्कारः। अयस्कामः। अयस्कंसः। अयस्कुम्भः। अयस्पात्रम्। अयः सहिता कुशा—अयस्कुशा। अयस्करणी। अतः किम्?। गीःकारः। अनव्ययस्य किं?। स्वःकारः। अनुत्तरपदस्थस्य किं?। परमयशःकारः। यशस्करी विद्या। श्राद्धकरः। वचनकरः।

**दिवा-विभा-निशा-प्रभा-भा-स्कारा-ऽन्ता-ऽनन्ता-ऽऽदि-बहु-नान्दी-किं-लिपि-लिबि-बलि-भक्ति-कर्तृ-चित्र-क्षेत्र-संख्या-जङ्घा-बाह्व-हर्-यत्-तद्-धनु-रुरुष्षु ३।२।२१।** एषु कृञष्टोऽहेत्वादावपि। दिवाकरः। विभाकरः। निशाकरः। कस्कादित्वात्सः। भास्करः। बहुकरः। एककरः। द्विकरः। अहस्करः। धनुष्करः। अरुष्करः।

---

कुरुषु देशविशेषेषु चरतीति—कुरुचरः। आदाय = गृहीत्वा चरतीत्यादायचरः। यशः करोति तद्धेतुः—यशस्करी। श्राद्धं करोति तच्छीलः—श्राद्धकरः। वचनं करोति तदनुवर्त्ती—वचनकरः। अरुष्करः = भल्लातकः। (भिलावा)।

---

भिक्षासेना। कर्मसञ्ज्ञक भिक्षा, सेना और 'आदाय' उपपद रहते चर धातु से ट प्रत्यय हो।

कृञो हेतु। कर्मोपपद कृञ् धातु से 'ट' प्रत्यय हो, हेत्वादि अर्थ गम्यमान हो तो।

अतःकृ। अत् से उत्तर जो अनव्यय का विसर्ग, उसको समास में नित्य सकार आदेश हो, कृआदि उत्तरपद परे रहते।

दिवाविभा। दिवा आदि कर्म उपपद रहते अहेत्वादि अर्थों में भी कृञ् धातु से 'ट' प्रत्यय हो।

---

1 शेषपूरणमेतत्। 2 क्वाचित्कः पाठः।

**न शब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु ।३।२।२३।** एषु कृञष्टो न [¹स्यात् ]। शब्दकारः। **स्तम्बशकृतोरिन् ।३।२।२४।** [²स्तम्ब]शकृतोः कर्मणोरुपपदयोः कृञ इन् स्यात् ]। ❋व्रीहिवत्सयोरिति वक्तव्यम् । स्तम्बकरिर्व्रीहिः। शकृत्करिर्वत्सः।

**हरतेर्दृतिनाथयोः पशौ ।३।२।२५।** [²दृतिनाथयोः कर्मणोरुपपदयोर्हरतेरिनिः स्यात्पशौ कर्त्तरि। दृतिहरिः। नाथं—नासारज्जुं—हरतीति नाथहरिः पशुः। पशौ किं ? दृतिहारः। नाथहारः।

**फलेग्रहिरात्मम्भरिश्च ।३।२।२६।** एतौ निपात्येते। चात्कुक्षिम्भरिः। चान्द्रास्तु—'आत्मोदरकुक्षिष्वि'ति पेठुः। 'ज्योत्स्नाकरम्भमुदरम्भरयश्चकोराः' इति मुरारिः।

**एजेः खश् ।३।२।२८।** ण्यन्तात् [²एजेः खश् स्यात् ]। **अरुर्द्विषदजन्तस्य मुम् ।६।३।६७।** अरुषो, द्विषतोऽजन्तस्य च मुम् [स्या ]त्खिदन्ते,

---

एजेरिति। एजेरिति ण्यन्तस्य निर्देशो, नत्विका निर्देशः, खशः शित्करणात्। तद्धि शित्त्वात्सार्वधातुकतया शबर्थः, न च शुद्धादेजेः शप्यसति, सति वा कश्चन विशेष इत्यवधेयम्।

---

न शब्द। शब्द आदि कर्म उपपद रहते कृञ् धातुसे 'ट' प्रत्यय नहीं हो।

स्तम्बशकृतो। कर्म सञ्ज्ञक स्तम्ब और शकृत् उपपद रहते कृञ् धातु से इन् प्रत्यय हो। क्रम से व्रीहि और वत्स अर्थ गम्यमान हो तो।

हरतेर्दृति। कर्म सञ्ज्ञक दृति और नाथ उपपद रहते हृञ् धातु से इन् प्रत्यय हो, पशु कर्त्ता हो तो।

फलेग्रहि। ये दोनों शब्द निपातित हो।

एजेःखश्। कर्म उपपद रहते ण्यन्त एज् धातु से खश् प्रत्यय हो।

अरुर्द्विषद। अरुष्, द्विषत् और अजन्त को मुम् आगम हों, खिदन्त उत्तरपद परे रहते। परन्तु अव्यय को यह मुम् आगम नहीं हो।

---

१ क्वचिन्न। २ शेषपूरणमेतद्।

उत्तरपदे, नत्वव्ययस्य । शित्त्वाच्छबादि । जनमेजयतीति जनमेजयः ।
※वातशुनीतिशर्द्धेष्वजधेट्तुदजहातिभ्यः खश् । वातमजा मृगाः ।

**खित्यनव्ययस्य ।६।३।६६।** खिदन्ते उत्तरपदे [ऽनव्ययस्य[1]] पूर्वपदस्य ह्रस्वः [[2]स्यात्]। ततो मुम् । शुनिन्धयः । तिलन्तुदः । शर्द्धञ्जहा माषाः ।

**नासिकास्तनयोर्ध्माधेटोः ।३।२।२९।** [[1]नासिकास्तनयोरुपपदयो-र्ध्माधेटोः खश् स्यात् ]। ※ स्तने धेटो, नासिकायां ध्मश्चेति वक्तव्यम् । स्तनन्धयः । टित्त्वात्–स्तनन्धयी ।

**नाडीमुष्ट्योश्च ।३।२।३०।** [[1]नाडीमुष्ट्योरुपपदयो—]र्ध्माधेटोः खश् [[2]स्यात्] । ※ यथासंख्यं नेष्यते । नाडीन्धमः । नाडीन्धयः । मुष्टिन्धमः । मुष्टिन्धयः ।

**उदि कूले रुजिवहोः ।३।२।३१।** [ [1]उत्पूर्वाभ्यां रुजिवहिभ्यां

---

शर्द्धमपानशब्दं जहति-त्याजयन्ति-इति शर्द्धंजहाः-माषाः ( उडद ) ।

स्तनन्धयीति । धेटष्टित्त्वस्याऽवयवेऽचरितार्थतया समुदायाट्टित्त्वान्ङीबत्र भवतीत्याशयः । नाडिन्धमः=कलादः—स्वर्णकारः (सुनार) ।

---

वातशुनी । वात आदि कर्म उपपद रहते क्रम से अज आदि धातुओं से 'खश्' प्रत्यय हो ।

खित्यनव्ययस्य । खिदन्त उत्तरपद परे रहते पूर्व पद को ह्रस्व हो ।

नासिकास्तनयो । कर्मसञ्ज्ञक स्तन शब्द उपपद रहते धेट् धातु से, और कर्म सञ्ज्ञक नासिका शब्द उपपद रहते ध्मा धातु से खश् प्रत्यय हो ।

नाडीमुष्ट्योश्च । कर्म सञ्ज्ञक नाडी और मुष्टि उपपद रहते ध्मा और धेट् धातु से खश् प्रत्यय हो । यहाँ यथासङ्ख्य इष्ट नहीं है ।

उदि कूले । कर्म सञ्ज्ञक कूल शब्द उपपद रहते उत्पूर्वक रुज् और वह धातु से खश् प्रत्यय हो ।

---

1 शेषपूरणमस्माकमेतत् । 2 क्वाचित्कः पाठः ।

कूले कर्मण्युपपदे खश् स्यात्[1] ]। कूलमुद्रुजः । कूलमुद्वहः ।

वहाभ्रे लिहः ।३।२।३२। [ [1]एतयोः कर्मणोरुपपदयोर्लिहः खश् स्यात् ]। वहः=स्कन्धः, तं लेढीति—वहंलिहो गौः । अभ्रंलिहो वायुः ।

परिमाणे पचः ।३।२।३३। [ [1]परिमाणवाचिनि कर्मण्युपपदे पचेः खश् स्यात् ]। प्रस्थम्पचा स्थाली । खारिम्पचः कटाहः ।

मितनखे च ।३।२।३४। [ [1]एतयोः कर्मणोरुपपदयोः पचेः खश् स्यात् ]। मितम्पचा ब्राह्मणी । नखम्पचा यवागूः ।

विध्वरुषोस्तुदः ३।२।३५। [ [1]एतयोः कर्मणोरुपपदयोस्तुदेः खश् स्यात् ]। विधुन्तुदः । अरुन्तुदः ।

असूर्यललाटयोर्दृशितपोः ।३।२।३६। [ [1]असूर्यललाटयोः कर्मणोरुपपदयोर्दृशितपोः खश् प्रत्ययः स्यात् ]। 'असूर्य'मित्यसमर्थसमासः, दृशिना नञः सम्बन्धात् । असूर्यम्पश्या राजदाराः । ललाटन्तपः सूर्यः ।

---

प्रस्थः=सेटकमितमन्नम् । स्थाली=वर्त्तुलं भाण्डम् । ( बटलोही ) । विधुन्तुदः=राहुः । सूर्यं न पश्यन्तीत्यसूर्यम्पश्याः—राजदाराः ।

---

वहाभ्रे । वह और अभ्र कर्म उपपद रहते लिह् धातु से 'खश्' प्रत्यय हो।

परिमाणे पचः । परिमाणवाचक कर्म उपपद रहते पच् धातु से खश् प्रत्यय हो ।

मितनखे च । कर्म सञ्ज्ञक मित और नख उपपद रहते पच् धातु से खश् प्रत्यय हो ।

विध्वरुषोस्तुदः । कर्म सञ्ज्ञक विधु और अरुष् उपपद रहते तुद धातु से खश् प्रत्यय हो ।

असूर्यललाटयोः । असूर्य और ललाट कर्म उपपद रहते क्रम से दृश् और तप् धातु से खश् प्रत्यय हो ।

---

१ अस्माभिः पूरतोऽयं पाठः ।

प्रियवशे वदः खच् ।३।२।३८। [ [1]प्रियवशयोः कर्मणोरुपपदयोर्वदेः खच् स्यात् ]। प्रियंवदः। वशंवदः। *गमेः सुपि वाच्यः। मितङ्गमो हस्ती। *विहायसो विह च, खच्च डिद्वा वाच्यः। विहङ्गमः। विहङ्गः। भुजङ्गमः। भुजङ्गः॥

द्विषत्परयोस्तापेः ।३।२।३९। [ [1]द्विषत्परयोः कर्मणोरुपपदयोस्तापेः] खच् [[2]स्यात्]। खचि ह्रस्वः ।६।४।९४। खचि परे णौ उपधायाः ह्रस्वः [[2]स्यात् ]। द्विषन्तं, परं वा तापयति-द्विषन्तपः। परन्तपः।

वाचि यमो व्रते ३।२।४०। [ [1]वाक्शब्दे कर्मण्युपपदे यमेः ] खच् [ [1]स्याद्व्रते गम्यमाने ]।

---

खजिति। अत्र खकारो मुमर्थः। चकारः 'खचि ह्रस्व' इत्यत्र विशेषणार्थः।

प्रियवशे इति। प्रिये, वशे च कर्मण्युपपदे वदेः खच् स्यादिति सूत्रार्थः। विहायसा गच्छतीति विहङ्गमः। भुजैर्गच्छति—भुजङ्गमः। द्विषन्तं—शत्रुं तापयतीति—द्विषन्तपः। परं तापयति—परन्तप इत्यन्वयः। वाचि यम इति। वाक्शब्दे उपपदे यमेः खच्—स्याद् व्रते गम्ये।

---

प्रियवशे। कर्म सञ्ज्ञक प्रिय और वश उपपद रहते वद् धातु से खच् प्रत्यय हो।

गमेः सुपि। कर्मसञ्ज्ञक सुबन्त उपपद रहते गम् धातुसे खच् प्रत्यय हो।

विहायसो विह च। 'विहायस्' को 'विह' आदेश हो, और खच् डित् हो, विकल्प करके।

द्विषत्परयोः। कर्म सञ्ज्ञक द्विषत् और पर उपपद रहते तापि ( ण्यन्त तप् ) धातु से खच् प्रत्यय हो।

खचि ह्रस्वः। खच् परक णि परे रहते धातु की उपधा को ह्रस्व हो।

वाचि यमो। कर्म सञ्ज्ञक वाच् उपपद रहते यम् धातु से खच् प्रत्यय हो, व्रत गम्यमान हो तो।

---

१ अस्माभिः पूरितोऽयं पाठः। २ क्वचिन्न।

वाचंयम-पुरन्दरौ च ।६।३।६९। वाक्पुरोरमन्तत्वं निपात्यते। वाचंयमो मौनव्रती। व्रते किम्?। अशक्त्यादिना वाचं यच्छतीति वाग्यामः। पूः-सर्वयोर्दारिसहोः ।३।२।४१।[[1]पूः-सर्वयोः कर्मणोरुपपदयोर्दारिसहोः] खच् स्यात्। पुरं दारयतीति पुरन्दरः। सर्वंसहः। भगं दारयतीति भगन्दर इति कथम्?। बाहुलकात्।

सर्व-कूला-ऽभ्र-करीषेषु कषः ।३।२।४२। [[1]एषु कर्मसूपपदेषु कषेः खच् स्यात्]। सर्वङ्कषः खलः। कूलङ्कषा नदी। अभ्रङ्कषो वायुः। करीषङ्कषा वात्या। मेघर्त्ति-भयेषु कृञः ।३।२।४३। [[1]एषु कर्मसूपपदेषु कृञः खच् स्यात्]। मेघङ्करः। ऋतिङ्करः। भयङ्करः। 'भय'-शब्देन तदन्तविधिः। अभयङ्करः।

क्षेम-प्रिय-मद्रेऽण् च ।३।२।४४। एषु [[1]कर्मसूपपदेषु] कृञोऽण्

---

वाचं यच्छतीति—वाचंयमः। व्रते किमिति। 'वाचि यमो व्रते' इत्यत्र व्रते इति किमर्थमिति प्रश्नः।

---

वाचंयम। वाचंयम और पुरन्दर में वाक् और पुर् को अमन्तत्व निपातन हो।

पूःसर्वयोः। कर्मसञ्ज्ञक पुर् और सर्व उपपद रहते क्रम से दारि (ण्यन्त दृ) धातु और सह धातु से खच् प्रत्यय हो।

सर्वकूलाभ्र। कर्मसञ्ज्ञक सर्वादि सुबन्त उपपद रहते कष् धातु से खच् प्रत्यय हो।

मेघर्त्ति। कर्मसञ्ज्ञक मेघादि सुबन्त उपपद रहते कृञ् धातु से खच् प्रत्यय हो।

क्षेमप्रिय। कर्मसञ्ज्ञक क्षेम आदि सुबन्त उपपद रहते कृञ् धातु से अण् प्रत्यय हो। और (चात्-) खच् भी हो।

---

१ अस्माभिः पूरितोऽयं पाठः।

[ स्यात् ]। चात्खच्। क्षेमङ्करः। क्षेमकारः। प्रियङ्करः। प्रियकारः। मद्रङ्करः। मद्रकारः। कथं तर्हि 'अल्पारम्भाः क्षेमकराः' इति ?। कर्मणः शेषत्वविवक्षायां पचाद्यच्। एवं गङ्गाधर-भूधरादयः।

**आशिते भुवः करणभावयोः ।३।२।४५।** [ [1]सुबन्ते आशितशब्दे उपपदे भुवः करणे, भावे च ] खच् [ [2]स्यात् ]। आशितो भवत्यनेन—आशितम्भव ओदनः। आशितस्य भवनम्—आशितम्भवः।

**संज्ञायां भृतृवृजिधारिसहितपिदमः ।३।२।४६।** [ [1]एभ्यो धातुभ्यः सञ्ज्ञायां ] खच् [ [2]स्यात् ]। विश्वं बिभर्त्तीति विश्वम्भरः। रथन्तरं साम। शत्रुञ्जयो हस्ती। युगन्धरः पर्वतः। शत्रुंसहः। शत्रुन्तपः। अरिन्दमः।

**गमश्च ।३।२।४७।** [ [1]गमेः सुप्युपपदे संज्ञायां खच्स्यात् ]। सुतङ्गमः। **अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः ।३।२।४८।** [ [1]एषु

---

कथमिति। क्षेमकरा इति कथं, क्षेमकारा इति हि भाव्यमणा 'कृञो हेत्वि'ति टस्य बाधादिति प्रश्नाशयः। आशितम्भव इति। यावता ओदनेन अतिथ्यादिर्भोजितो भवति स ओदन आशितम्भव इत्युच्यते। गमश्चेति। सुबन्ते कर्मण्युपपदे गमः सञ्ज्ञायां खच् स्यात्। सुतङ्गमः—ऋषिः।

---

आशिते भुवः। सुबन्त आशित उपपद रहते भू धातु से खच् प्रत्यय हो, करण और भाव अर्थ में।

सञ्ज्ञायां भृ। सुबन्त या कर्म उपपद रहते भृ आदि धातुओं से खच् प्रत्यय हो, सञ्ज्ञा में।

गमश्च। कर्मसञ्ज्ञक सुबन्त उपपद रहते गम् धातु से खच् प्रत्यय हो, सञ्ज्ञा में।

अन्तात्यन्ता। कर्मसञ्ज्ञक अन्तादि सुबन्त उपपद रहते गम् धातु से 'ड' प्रत्यय हो।

---

१ अस्माभिः पूरितोऽयं पाठः। २ क्वाचित्कः पाठः।

कर्मसूपपदेषु ] गमे [ डः स्यात् ]। अन्तगः।

*सर्वत्रपन्नयोरिति वाच्यम् । सर्वत्रगः। पन्नं = पतितं गच्छतीति-पन्नगः । * उरसो लोपश्च । उरसा गच्छतीति-उरगः ।

*सुदुरोरधिकरणे । सुखेन गच्छत्यत्र,-सुगः । दुर्गः ।

* अन्यत्रापि दृश्यत इति वाच्यम् । ग्रामगः ।

* डे च विहायसो विहादेशो वाच्यः । विहगः ।

आशिषि हनः। ३।२।४९। [[1]हन्तेः कर्मण्युपपदे डः स्यादाशिषि] । शत्रुं वध्यात्-शत्रुहः। आशिषि किम्?। शत्रुघातः। *दारावाहनोऽणन्तस्य च टः संज्ञायाम् । दारुशब्दे उपपदे आङ्पूर्वाद्धन्तेरण्, [स्या]ट्टकारश्चा-

---

अन्तात्यन्तेति । एषु गमेर्डः स्यात् । सञ्ज्ञायामिति निवृत्तम् ।
विहायसा गच्छतीति-विहगः ।

---

सर्वत्रपन्नयोः। सुबन्त 'सर्वत्र' और कर्मसञ्ज्ञक 'पन्न' ये उपपद रहते गम् धातु से 'ड' प्रत्यय हो ।

उरसो लोपश्च । कर्मसञ्ज्ञक 'उरस्' उपपद रहते गम् धातु से 'ड' प्रत्यय हो, और 'उरस्' के अन्त का लोप भी हो ।

सुदुरो। सु और दुर् उपपद रहते गम् धातु से 'ड' प्रत्यय हो, अधिकरण अर्थ में ।

अन्यत्रापि । अन्यान्य कर्मसञ्ज्ञक सुबन्त उपपद रहते, अन्यान्य धातुओं से भी यह 'ड' प्रत्यय होता देखा जाता है ।

डे च । 'ड' प्रत्यय परे रहते विहायस् को विह आदेश हो ।

आशिषि हनः । कर्मसञ्ज्ञक सुबन्त उपपद रहते हन् धातु से 'ड' प्रत्यय हो, आशीरर्थ में ।

दारावाहनो । कर्मसञ्ज्ञक दारु शब्द उपपद रहते आङ् पूर्वक हन् धातु से अण् प्रत्यय हो, और हन् धातु को टकार अन्तादेश हो ।

ऽन्तादेशो वक्तव्य इत्यर्थः। दार्वाघाटः।

*चारौ वा। चार्वाघाटः। चार्वाघातः॥

अपे क्लेशतमसोः ।३।२।५०। [[1]क्लेशतमसोः कर्मणोरुपपदयो]-रपपूर्वाद्धन्तेर्डः। अनाशीरर्थमिदम्। क्लेशापहः पुत्रः। तमोपहः सूर्यः।

कुमारशीर्षयोर्णिनिः ।३।२।५१। [[1]कुमारशीर्षयोः कर्मणोरुपपद-योर्हन्तेर्णिनिः स्यात्]। कुमारघाती। शिरसः शीर्षभावो निपात्यते। शीर्षघाती।

लक्षणे जायापत्योष्टक् ।३।२।५२। [[1]जायापत्योः कर्मणोरुप-पदयो-] र्हन्तेष्टक् स्याल्लक्षणवति कर्त्तरि। जायाघ्नो ना। पतिघ्नी स्त्री।

अमनुष्यकर्त्तृके च ।३।२।५३। [[1]अमनुष्यकर्त्तृकेऽर्थे वर्त्तमानाद्धन्तेः

---

दार्वाघाटः—पक्षिविशेषः। ('कठफोरा' 'खुडियाखाती'ति प्रसिद्धः)।

चारौ वेति। चारावुपपदे आङ्पूर्वाद्धन्तेरण्, टश्चान्तादेशो वेत्यर्थः।

कुमारेति। एतयोः कर्मणोरुपपदयोर्हन्तेर्णिनिः स्यात्।

लक्षणवतीति।-सूत्रे लक्षणशब्द अर्श आद्यजन्त इत्याशयः।

---

चारौ वा। सुबन्त चारुशब्द उपपद रहते हन् धातु से अण् प्रत्यय हो, और हन् धातु को टकार अन्तादेश हो, विकल्प करके।

अपे क्लेश। कर्मसञ्ज्ञक क्लेश और तमस् उपपद रहते अपपूर्वक हन् धातु से 'ड' प्रत्यय हो।

कुमारशीर्षयो। कर्मसञ्ज्ञक कुमार और शीर्ष (शिरस्) उपपद रहते हन् धातु से णिनि प्रत्यय हो। और शिरस् को 'शीर्ष' आदेश हो।

लक्षणे जाया। कर्मसञ्ज्ञक जाया और पति शब्द उपपद रहते हन् धातु से टक् प्रत्यय हो, लक्षणवत्कर्त्ता गम्यमान हो तो।

अमनुष्यकर्त्तृके च। कर्मसञ्ज्ञक सुबन्त उपपद रहते अमनुष्यकर्तृक हन् धातु से टक् प्रत्यय हो।

---

१ एतदन्तर्गतं शेषपूरणम्।

कर्मण्युपपदे टक् स्यात् ]। जायाघ्नस्तिलकालकः। पतिघ्नी पाणिरेखा। पित्तघ्नं घृतम्। अमनुष्येति किम्। आखुघातः शूद्रः। अथ कथं 'बलभद्रः प्रलम्बघ्नः', शत्रुघ्नः, कृतघ्न इत्यादि ?। मूलविभुजादित्वात्सिद्धम्। 'चोरघातो नगरघातो हस्ती'ति तु बाहुलकादण्।

**शक्तौ हस्तिकपाटयोः ।३।२।५४** [ [1]शक्तौ गम्यायां हस्तिकपाटयोः कर्मणोरुपपदयो- ] र्हन्तेष्टक्। मनुष्यकर्तृकार्थमिदम्। हस्तिघ्नो ना। कपाटघ्नश्चोरः। 'कवाटे'ति पाठान्तरम्।

**पाणिघ-ताडघौ शिल्पिनि ।३।२।५५।** [ [1]एतौ निपात्येते शिल्पिनि कर्तरि। पाणिघः। ताडघः ]। शिल्पिनि किं ?। पाणिघातः।

***राजघ उपसङ्ख्यानम्** । राजानं हन्ति-राजघः।

**आढ्यसुभगस्थूलपलितनग्नाऽन्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन् ।३।२।५६।** एषु च्व्यर्थेष्वच्व्यन्तेषु कर्मसूपपदेषु कृञः ख्युन्।

---

तिल-कालकः=तिलाकृतिः कृष्णबिन्दुः। ('तिल')।

प्रलम्बघ्न इति। अत्र हन्तेर्मनुष्यकर्तृकतया टकोऽसम्भवादिति प्रश्नाशयः। ननु कथं चोरघातो हस्तीति ?। अत्राऽमनुष्यकर्तृकत्वेन हन्तेष्टको दुर्वारत्वादिति चेदत आह—बाहुलकादिति। 'कृत्यल्युट' इत्यत्र बहुलग्रहणात्क्वचिदन्यथाऽपीत्याशयः। च्व्यर्थेषु = अभूततद्भावविषयेषु।

---

शक्तौ हस्ति। कर्मसञ्ज्ञक हस्ती और कवाट उपपद रहते हन् धातु से टक् प्रत्यय हो, मनुष्य की शक्ति गम्यमान हो तो।

पाणिघताडघौ। पाणिघ और ताडघ—ये निपातित हों, शिल्पी कर्त्ता हो तो।

राजघ उप। 'राजघ' यह निपातित हो।

आढ्यसुभग। च्व्यर्थक ( अभूततद्भावविषयक ) अच्व्यन्त कर्मसञ्ज्ञक आढ्य आदि उपपद रहते कृञ् धातु से ख्युन् प्रत्यय हो।

---

1 शेषपूरणमेतत्।

अनाढ्यमाढ्यं कुर्वन्त्यनया-आढ्यङ्करणी । अच्वौ किम् ? आढ्यी कुर्वन्त्यनेन ।

**कर्त्तरि भुवः खिष्णुच्खुकञौ ।३।२।५७।** आढ्यादिषु च्व्यर्थेष्वच्व्यन्तेषु भवतेरेतौ स्तः । अनाढ्य आढ्यो भवति-आढ्यम्भविष्णुः । आढ्यम्भावुकः ।

**सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप् ।३।२।६१।** एभ्यः क्विप्स्यादुपसर्गे सत्यसति च, सुप्युपपदे । द्युसत् । 'सदिरप्रते'रिति षः । उपनिषत् । अण्डसूः । प्रसूः । मित्रद्विट् । प्रद्विट् । मित्रध्रुक् । प्रध्रुक् । गोधुक् । प्रधुक् । अश्वयुक् । प्रयुक् । वेदवित् । निवित् । [ [2]इत्यादि ] ।

***अग्रग्रामाभ्यां नयतेर्णो वाच्यः ।** अग्रणीः । ग्रामणीः ।

**भजो ण्विः ।३।२।६२।** [ भजेरुपसर्गेऽनुपसर्गेऽपि सुबन्ते उपपदे

उपनिषीदतीति-उपनिषत् । अण्डानि सूते इति-अण्डसूः ।
मित्रं द्वेष्टीति-मित्रद्विट् । मित्रं द्रुह्यतीति—मित्रध्रुक् ।
वेदं वेत्तीति-वेदवित् । भजोण्विरिति । सुपि उपपदे भजेर्ण्विः स्यात् ।

कर्त्तरि भुवः । च्व्यर्थक ( अर्थात् अभूत तद्भाव विषय ) अच्व्यन्त कर्मसञ्ज्ञक आढ्य आदि उपपद रहते भू धातु से खिष्णुच् और खुकञ् प्रत्यय हो, कर्त्ता अर्थ में ।

सत्सू-द्विष । उपसर्ग या अनुपसर्ग सुबन्त उपपद रहते सदादि धातु से क्विप् प्रत्यय हो ।

अग्रग्रामाभ्याम् । अग्र और ग्राम शब्द से परे जो नी धातु, उसके नकार को णकार हो ।

भजो ण्विः । उपसर्ग या अनुपसर्ग सुबन्त उपपद रहते भज् धातु से ण्वि प्रत्यय हो ।

१ शेषपूरणमेतत् । २ क्वचित्र ।

च णिवः स्यात् ]। अंशभाक्। प्रभाक्। अदोऽनन्ने।३।२।६८। [ अदेरनन्ने सुबन्त उपपदे] विट् स्यात्। आममत्तीति-आमात्। सस्यात्। अनन्ने किम्?। अन्नादः।

क्रव्ये च।३।२।६९। [कर्मसञ्ज्ञके [1]क्रव्यशब्दे उपपदे] अदेर्विट्। पूर्वेण सिद्धे वचनं वाऽसरूपेति प्राप्ताऽण्बाधनार्थम्। क्रव्यात्—आममांसभक्षकः।

दुहः कप् घश्च।३।२।७०। [[1]दुहेः सुप्युपपदे कप् स्यात्। घश्चाऽन्तादेशः]। कामदुघा। अन्येभ्योऽपि दृश्यन्ते।३।२।७५। मनिन् क्वनिप् वनिप् विच् एते प्रत्यया धातोः स्युः।

नेड् वशि कृति।७।२।८। वशादेः कृत इण्न [ [2]स्यात् ]। सुशर्मा। प्रातरित्वा। विड्वनोरनुनासिकस्याऽऽत्।६।४।४१। [ अनुनासिक-

दुहः कबिति। सुप्युपपदे दुहेः कप्स्यात्प्रकृतेर्घश्चान्तादेशः। अन्येभ्योऽपीति। अनाकारान्तेभ्योऽपि धातुभ्यो मनिनादयो दृश्यन्ते इत्यर्थः। फलितमाह—धातोरिति। सुष्ठु शृणोति-सुशर्मा। शॄ हिंसायाम्। मनिन्।

प्रातरेतीति-प्रातरित्वा।

अदोऽनन्ने। अन्न शब्द भिन्न कर्मसञ्ज्ञक सुबन्त उपपद रहते अद् धातु से विट् प्रत्यय हो।

क्रव्ये च। कर्मसञ्ज्ञक सुबन्त क्रव्य शब्द उपपद रहते अद् धातु से विट् प्रत्यय हो।

दुहः कब्घश्च। कर्मसञ्ज्ञक सुबन्त उपपद रहते दुह् धातु से कप् प्रत्यय हो, और दुह् धातु के हकार को घकार भी हो।

अन्येभ्योपि। आकारान्त धातु से भिन्न धातुओं से भी मनिन् आदि प्रत्यय होते हैं।

नेड् वशि। वशादि कृत्प्रत्यय को इट् नहीं हो।

विड्वनो। अनुनासिक को आकार आदेश हो, विट् और वन् परे रहते।

१ शेषपूरणमेतत्। २ क्वचिन्न।

स्याऽऽत् स्याद्विड्वनोः परयोः ]। विजायते इति विजावा। ओणृ अपनयने। अवावा। रोट्। रेट्। सुगण्।

क्विप् च ।३।२।७६। अयमपि दृश्यते। उखास्रत्। पर्णध्वत्। वाहभ्रट्। अन्तः ।८।४।२०। पदान्तस्याऽनितेर्नस्य णत्वं स्यादुपसर्गस्थान्निमित्तात्परश्चेत्। हे प्राण्। *आशासः क्वावुपधाया इत्त्वं वाच्यम्। आशीः। इत्त्वोत्त्वे। गीः। पूः। 'मो नो धातोः'। प्रतान्। प्रशान्।

गमः क्वौ ।६।४।४०। [[1]गमः क्वौ] अनुनासिकलोपः [ [2]स्यात् ]। अङ्गत्। *गमादीनामिति वक्तव्यम्। परीतत्। संयत्।

*ऊङ् च गमादीनामिति वक्तव्यम्। लोपश्च। अग्रेगूः। अग्रेभ्रूः।

---

रोट् रेडिति। रुष रिष हिंसायाम्। विच्। 'वेरपृक्तस्ये'ति वलोपः। गुणः।

गमादीनामिति। न केवलं गमः क्वौ नलोपः, किन्तर्हि—गमादीनां क्वौ नलोप इति वाच्यम्। तेन 'गमादेः क्वौ' इति सूत्रं कार्यमित्याशयः।

---

क्विप् च। सोपपद और निरुपपद सभी धातुओं से क्विप् प्रत्यय होता हुआ देखा जाता है।

अन्तः। उपसर्गस्थ निमित्त से परे और पदान्त में वर्त्तमान जो अन् धातु का नकार, उसको णत्व हो।

आशासः। आशास् धातु की उपधा को इत्त्व हो, क्वि परे रहते।

गमः क्वौ। गम् धातु के अनुनासिक ( मकार ) का लोप हो, क्वि परे रहते।

गमादीनामिति। गमादि धातुओं के अनुनासिक का लोप हो, क्वि परे रहते—ऐसा सूत्रकार को कहना चाहिए।

ऊङ् च। गमादि धातुओं से ऊङ् हो, और गमादि के अन्त का लोप भी हो।

---

1 शेषपूरणम्। 2 क्वचित्।

स्थः क च ।३।२।७७। [ [1]स्थाधातोः सुप्युपपदे कः स्यात् ]। चात्क्विप्। शंस्थः। शंस्थाः।

सुप्यजातौ णिनिस्ताच्छील्ये ।३।२।७८। अजात्यर्थे [ सुबन्ते उपपदे ] धातोर्णिनिः स्यात्ताच्छील्ये द्योत्ये। उष्णभोजी। शीतभोजी।

मनः ।३।२।८२। सुपि मन्यतेर्णिनिः [ [2]स्यात् ]। दर्शनीयमानी।

आत्ममाने खश्च ।३।२।८३। स्वकर्मके मनने वर्त्तमानान्मन्यतेः सुपि खश् [ [2]स्यात् ]। चाण्णिनिः। पण्डितमात्मानं मन्यते–पण्डितंमन्यः। पण्डितमानी।

इच एकाचोऽम् प्रत्ययवच्च ।६।३।६८। इजन्तादेकाचोऽम्स्यात्स च स्वाद्यम्वत्, खिदन्ते परे। 'औतोऽम्शसोः'। गांमन्यः। 'वाऽम्-

---

उष्णं भुङ्क्ते तच्छीलः–उष्णभोजी।

पण्डितंमन्य इति। एकस्याप्यात्मन उपाधिभेदात्कर्त्तृत्वं, कर्मत्वञ्च बोध्यम्। स्वाद्यम्वद्भावात् 'औतोऽम्शसोः' इत्यादिप्रवृत्तिरित्याह–गामिति।

---

स्थः क च। सुबन्त और उपसर्ग उपपद रहते स्था धातु से 'क' प्रत्यय हो, चात् क्विप् भी हो।

सुप्यजातौ। अजात्यर्थक सुबन्त उपपद रहते धातु से णिनि प्रत्यय हो, ताच्छील्य अर्थ में।

मनः। सुबन्त उपपद रहते मन्यति ( दिवादि मन् ) धातु से णिनि प्रत्यय हो।

आत्ममाने। सुबन्त उपपद रहते स्वकर्मक मनन अर्थ में वर्त्तमान मन्यति ( दैवादिक मन् ) धातु से खश् प्रत्यय हो। और णिनि भी हो।

इच एकाचो। इजन्त एकाच् सुबन्त से अम् आगम हो, और वह अम् स्वादि ( द्वितीयैकवचन ) अम् की प्रत्यय की तरह हो, खिदन्त उत्तरपद परे रहते।

---

1 शेषपूरणमेतद्। 2 क्वचिन्न।

श्वसोः' । स्त्रियंमन्यः । स्त्रींमन्यः । नृ—नरंमन्यः । भ्रुवंमन्यः । श्रियमात्मानं मन्यते—श्रिमन्यं कुलम् । भाष्यकारप्रयोगाच्छ्रीशब्दस्य ह्रस्वो, मुममोरभावश्च ।

भूते ।३।२।८४। अधिकारोऽयं 'वर्त्तमाने ल'डिति यावत् । करणे यजः ।३।२।८५। करणे उपपदे भूतार्थाद्यजेर्णिनिः [ [1]स्या–]त्कर्त्तरि । सोमेनेष्टवान्—सोमयाजी । कर्मणि हनः ।३।२।८६। [ [2]कर्मण्युपपदे भूतार्थाद्धन्तेर्णिनिः स्यात् ] । पितृव्यघाती ।

ब्रह्मभ्रूणवृत्रेषु क्विप् ।३।२।८७। [ [2]ब्रह्मादिषूपपदेषु भूतार्थाद्धन्तेः क्विप्स्यात् ] । ब्रह्महा । भ्रूणहा । वृत्रहा । 'क्विप्चे'त्येव सिद्धे 'ब्रह्मादिष्वेव', 'क्विबेवे'ति द्विविधनियमार्थमिदम् । एवमग्रेऽपि ।

सुकर्मपापमन्त्रपुण्येषु कृञः ।३।२।८९। [ स्वादिषु कर्मसूपपदेषु कृञः क्विप्स्याद्भूते ] । सुकृत् । कर्मकृत् । पापकृत् । मन्त्रकृत् । पुण्य-

---

पितृव्यं हतवान्—पितृव्यघाती ।

सुकर्मेति । सौ, कर्मादिषु च कर्मसूपपदेषु कृञः क्विप् स्यात् ।

---

भूते । यह 'वर्त्तमाने लट्' तक अधिकार है ।

करणे यजः । करण सञ्ज्ञक सुबन्त उपपद रहते यज् धातु से कर्त्ता अर्थ में णिनि प्रत्यय हो, भूत काल में ।

कर्मणि हनः । कर्मसञ्ज्ञक सुबन्त उपपद रहते हन् धातु से कर्त्ता अर्थ में 'णिनि' प्रत्यय हो, भूत काल में ।

ब्रह्मभ्रूण । कर्मसञ्ज्ञक ब्रह्मादि सुबन्त उपपद रहते ही, हन् धातु से कर्त्ता अर्थ में क्विप् ही हो, भूत काल में ।

सुकर्म । सु और कर्म सञ्ज्ञक कर्मादि उपपद रहते ही, कृ धातु से कर्ता अर्थ में क्विप् प्रत्यय ही हो, भूतकाल में ।

---

१ क्वचिन्न । २ शेषपूरणमिदम् ।

कृत्। सोमे सुञः ।३।२।९०। [[1]सोमे कर्मण्युपपदे सुनोतेः क्विप्स्याद्भूते]। सोमसुत्। अग्नौ चेः ।३।२।९१। [[1]अग्नौ कर्मण्युपपदे चिनोतेः क्विप्स्याद् भूते ]। अग्निचित्।

कर्मण्यग्न्याख्यायाम् ।३।२।९२। कर्मण्युपपदे कर्मण्येव कारके चिनोतेः क्विप् स्यात्, अग्न्याधारस्थलविशेषस्याऽऽख्यायाम् । श्येन इव चितः—श्येनचित् ।

कर्मणीनि विक्रियः ।३।२।९३। कर्मण्युपपदे विपूर्वात्क्रीणातेरिनिः [ स्यात् ]। *कुत्सितग्रहणं कर्त्तव्यम् । सोमविक्रयी । घृतविक्रयी ।

दृशेः क्वनिप् ।३।२।९४। [[1]दृशेः क्वनिप् स्यात् ] कर्मणि भूते ।

---

अग्निचिदिति । अत्र भूतकालस्य क्विपि नियततया अग्निं चितवान् अग्निचाय इति अण् न भवति । श्येनचिदिति । अत्र श्येनशब्दः श्येनसदृशे लाक्षणिकः । श्येनाकृतिकोऽग्न्याधरस्थलविशेष इत्यर्थः ।

---

सोमे सुञः । कर्मसञ्ज्ञक सोम उपपद रहते ही, सुञ् धातु से कर्त्ता अर्थ क्विप् प्रत्यय ही हो, भूतकाल में ।

अग्नौ चेः । कर्मसञ्ज्ञक सुबन्त अग्नि शब्द उपपद रहते ही, चि धातु से, कर्त्ता अर्थ में क्विप् प्रत्यय ही हो, भूत काल में ।

कर्मण्यग्न्या । कर्मसञ्ज्ञक सुबन्त उपपद रहते ही चि धातु से कर्म-कारक में क्विप् प्रत्यय ही हो, भूतकाल में, इष्टकारचित अग्न्याधार विशेष की आख्या गम्यमान हो तो ।

कर्मणीनि । कुत्सितग्रहणं । कर्म उपपद रहते विपूर्वक क्री धातु से भूतकाल में इनि प्रत्यय हो, निन्दा गम्यमान हो तो ।

दृशेः क्वनिप् । कर्म उपपद रहते दृश् धातु से भूत काल में क्वनि प्रत्यय हो ।

---

१ शेषपूरणमिदम् ।

पारं दृष्टवान्-पारदृश्वा । राजनि युधिकृञः ।३।२।९५। [ [1]राजञ्छब्दे कर्मण्युपपदे युध्यतेः, करोतेश्च ] क्वनिप् [ [2]स्यात् ] । 'युधि'रन्तर्भावितण्यर्थः । राजानं योधितवान्—राजयुध्वा । राजयुध्वा ।

सहे च ।३।२।९६। [ [1]सहे उपपदे युधिकृञोः क्वनिप्स्यात् ] । सहयुध्वा । सहकृत्वा ॥

सप्तम्यां जनेर्डः ३।२।९७। [ [1]सप्तम्यन्ते उपपदे जनेर्डः स्यात् ] । तत्पुरुषे कृति बहुलम् ।६।३।१४। [ [1]तत्पुरुषे समासे कृदन्ते उत्तरपदे बहुलं ] ङेरलुक् । सरसिजम् । सरोजम् । उपसर्गे च संज्ञायाम् ।३।२।९९। [ [1]उपसर्गे उपपदे जनेर्डः स्यात्सञ्ज्ञायाम् ] । प्रजा ।

अनौ कर्मणि ।३।२।१००। अनुपूर्वाज्जनेः कर्मण्युपपदे डः [ [2]स्यात् ] । पुमांसमनुरुध्य जाता—पुमनुजा ।

---

सहे चेति । सहशब्दे उपपदे युधिकृञ्भ्यां क्वनिप्स्यात् ।
सप्तम्यामिति । सप्तम्यन्ते उपपदे जनेर्डः स्यात् ।
उपसर्गे चेति । उपसर्गे उपपदे जनेर्डः स्यात्सञ्ज्ञायाम् ।

---

राजनि युधि । कर्मसञ्ज्ञक राजन् शब्द उपपद रहते युध् और कृञ् धातु से भूतकाल में क्वनिप् प्रत्यय हो ।

सहे च । सह शब्द उपपद रहते युध् और कृञ् धातु से भूतकाल में क्वनिप् प्रत्यय हो ।

सप्तम्यां जनेर्डः । सप्तम्यन्त उपपद रहते जन् धातु से ड प्रत्यय हो ।

तत्पुरुषे कृति । कृदन्त उत्तरपद परे रहते सप्तमी (ङि) विभक्ति का बहुलता से अलुक् हो, तत्पुरुष समास में ।

उपसर्गे च । उपसर्ग उपपद रहते जन धातु से ड प्रत्यय हो, सञ्ज्ञा में ।
अनौ कर्मणि । कर्म उपपद रहते अनुपूर्वक जन् धातु से 'ड' प्रत्यय हो ।

---

१ शेषपूरणमेतत् । २ क्वचिन्न ।

**अन्येष्वपि दृश्यते ।३।२।१०१।** [ [1]अन्येष्वपि कारकेषूपपदेषु जनेर्डः स्यात् ]। अजः। द्विजः। ब्राह्मणजः। 'अपि'शब्दः सर्वोपाधिव्यभिचारार्थः। तेन धात्वन्तरादपि, कारकान्तरेष्वपि क्वचित्। परितः खाता-परिखा।

**पञ्चम्यामजातौ ।३।२।९८।** जातिशब्दवर्जिते पञ्चम्यन्ते जनेर्डः [स्यात्]। संस्कारजः। अदृष्टजः।

**क्तक्तवतू निष्ठा । १ । १ । २६।** एतौ निष्ठासंज्ञौ स्तः।

**निष्ठा३।२।१०२।** भूतार्थवृत्तेर्धातोर्निष्ठा स्यात्। तत्र-'तयोरेवे'ति भावकर्मणोः क्तः। 'कर्तरि कृ'दिति कर्त्तरि-क्तवतुः। स्नातं मया। स्तुतस्त्वया विष्णुः। विष्णुर्विश्वं कृतवान्।

**अदो जग्धिर्ल्यप्ति किति ।२।४।३६।** ल्यपि, तादौ किति च

---

अन्येष्वपीति। अन्येष्वप्युपपदेषु जनेर्डः स्यात्।

न जायते इति-अजः। द्विर्जातो—द्विजः। 'पञ्चम्यामजातौ' इत्युक्तं, तत्र जातावपि दृश्यते इत्याह-ब्राह्मणज इति। तत्रेति। तत्र = क्तक्तवत्वोर्मध्ये।

अस्नायीति-स्नातम्। अस्तावीति—स्तुतः। विश्वमकार्षीदिति—विश्वं कृतवान्

---

अन्येष्वपि। अन्यान्य कारक उपपद रहते भी तथा जाति और अजाति में भी जन् धातु से 'ड' प्रत्यय होता है, सञ्ज्ञा में, असञ्ज्ञा में भी। अर्थात् कोई भी सुबन्त उपपद रहते धातुमात्र से ड प्रत्यय होता है।

पञ्चम्यामजातौ। जातिवाचक भिन्न पञ्चम्यन्त उपपद रहते जन् धातु से 'ड' प्रत्यय हो।

क्तक्तवतू। 'क्त' और 'क्तवतु' की निष्ठा सञ्ज्ञा हो।

निष्ठा। भूतार्थ वृत्ति धातु से निष्ठा ( क्त और क्तवतु ) प्रत्यय हों।

अदो जग्धि। अद् धातु को जग्धि आदेश हो, ल्यप् परे रहते और तादि कित् परे रहते।

---

1 शेषपूरणमेतत्।

[ [1]अदो जग्धिः स्यात् ]। इकार उच्चारणार्थः। जग्धम्।

**निष्ठायामण्यदर्थे ६।४।६०।** ण्यदर्थो—भावकर्मणी, ततोऽन्यत्र निष्ठायां क्षियो दीर्घः स्यात्।

**क्षियो दीर्घात् ।८।२।४६।** [ [1]दीर्घात्क्षियो ] निष्ठातस्य नः [ [2]स्यात् ]। क्षीणवान्। **भावकर्मणोस्तु**—क्षितः कामो मया।

***ऊर्णोतेर्णुवद्भावो वाच्यः।** तेन एकाच्त्वान्नेट्। ऊर्णुतः।

**रदाभ्यां निष्ठातो नः, पूर्वस्य च दः ।८।२।४२।** रदाभ्यां परस्य निष्ठातस्य नः [ [2]स्यात् ], निष्ठापेक्षया पूर्वस्य धातोर्दस्य च। 'शॄ'। शीर्णः। भिन्नः। छिन्नः।

**संयोगादेरातो धातोर्यण्वतः ।८।२।४३।** यण्वत्संयोगादेरादन्ता-

---

ण्यदर्थे इति। 'ऋहलोर्ण्यं'दिति ण्यतो भावकर्मण्येव विधानात्। 'तयोरेव कृत्यक्तखलर्थाः' इत्युक्तेः। क्षियो दीर्घादिति। दीर्घात्क्षियो निष्ठातस्य नः स्यादित्यर्थः। शीर्ण इति। 'ॠत इद्धातोः' इति इत्वं, रपरत्वं, 'हलि चे'ति दीर्घः। 'रषाभ्या'मिति णत्वम्।

---

निष्ठायामण्य। भाव कर्म अर्थ से अन्य जो (कर्त्ता और अधिकरण) अर्थ, उन अर्थों में जो निष्ठा, वह परे रहते क्षि धातु को दीर्घ हो।

क्षियो दीर्घात्। दीर्घ क्षि धातु से परे निष्ठा के तकार को नकार आदेश हो।

ऊर्णोतेर्णु। ऊर्णुञ् धातु को णुवद्भाव हो।

रदाभ्यां। रेफ और दकार से परे जो निष्ठा का तकार, उसको नकार आदेश हो। और निष्ठा से पूर्व जो धातु का दकार उसको भी नकारादेश हो।

संयोगादेरातो। यण्वान् संयोगादि आकारान्त धातु से परे जो निष्ठा का तकार, उसको नकार हो।

---

१ शेषपूरणमेतत्सूत्राक्षरलभ्यम्। २ क्वाचित्क पाठः।

न्निष्ठातस्य नः [ [2]स्यात् ]। घ्राणः। ग्लानः।

ल्वादिभ्यः ।८।२।४४। एकविंशतेर्लूञादिभ्यः प्राग्वत् [ [1]निष्ठातस्य नः स्यात् ]। लूनः। 'ज्या'। 'ग्रहिज्या'।

हलः ।६।४।२। अङ्गावयवाद्धलः परं यत्संप्रसारणं तदन्तस्याऽङ्गस्य दीर्घः [ [2]स्यात् ]। जीनः। *दुग्वोर्दीर्घश्च। 'दु गतौ'। दूनः। 'गु पुरीषोत्सर्गे'। गूनः। *पूञो विनाशे। पूना यवाः। विनष्टा इत्यर्थः। पूतमन्यत्। *सिनोतेर्ग्रासकर्मकर्तृकस्य। सिनो ग्रासः। 'ग्रासे'ति किम्?। सिता पाशेन सूकरी। कर्मकर्तृके'ति किम्?। सितो ग्रासो देवदत्तेन।

---

जीन इति। 'ज्या वयोहानौ' इति क्र्यादिः। 'ग्रहिज्ये'ति सम्प्रसारणम्।

दुग्वोरिति। दुग्वोर्निष्ठातस्य नः, दीर्घश्चेत्यर्थः। सिनोतेरिति। ग्रास-रूपं कर्म—ग्रासकर्म, तत्कर्तृ यस्य सिनोतेस्ततः परस्य निष्ठातस्य नः स्यादित्यर्थः। अत्र सिनोतिः—'षिञ् बन्धने' स्वादिः।

सिन इति। पिण्डीक्रियमाणो ग्रासो दध्यादिव्यञ्जनोपसेकवशाद्बन्धनेऽनुकूलो भवतीति कर्मकर्तृत्वमिति बोध्यम्। कर्मकर्तृकेति किमिति। 'ग्रासकर्मस्ये'-त्येवास्तु, कर्तृपदं किमर्थमिति प्रश्नः।

---

ल्वादिभ्यः। ल्वादि २१ धातुओं से परे जो निष्ठा तकार उसको नकार आदेश हो।

दुग्वोर्दीर्घश्च। 'दु' और 'गु' धातु से परे निष्ठा तकार को नकार हो, और 'दु' 'गु' को दीर्घ भी हो।

पूञो विनाशे। पूञ् धातु से परे जो निष्ठा का तकार उसको नत्व हो।

सिनोतेर्ग्रास। ग्रास रूप कर्म ही कर्त्ता है जिसका, ऐसी जो सिनोति ( षिञ् धातु ), उससे परे निष्ठा तकार को नकार हो।

---

१ शेषपूरणमेतत्। २ क्वाचित्कः पाठः।

ओदितश्च ।८।२।४५। प्राग्वत्। [[1]ओदितो निष्ठातस्य नः स्यात् ]। 'भुजो'—भुग्नः। 'टु ओश्वि' —शूनः ॥

द्रवमूर्तिस्पर्शयोः श्यः ।६।१।२४। द्रवस्य मूर्तौ=काठिन्ये, स्पर्शे चार्थे श्यैङः संप्रसारणं स्यान्निष्ठायाम्। श्योऽस्पर्शे ।८।२।४७। श्यैङो निष्ठातस्य नः स्यादस्पर्शेऽर्थे। शीनं घृतम्। अस्पर्शे किम्? शीतं जलम्। 'द्रवमूर्तिस्पर्शयो'रिति किम्?। संश्यानो वृश्चिकः। शीतात्सङ्कुचित इत्यर्थः। प्रतेश्च ।६।१।२५। [[1]प्रतेश्च परस्य श्यैङः] संप्रसारणं [स्या] न्निष्ठायाम्। प्रतिशीनः।

विभाषाऽभ्यवपूर्वस्य ।६।१।२६। तथा–[=[1]अभ्यवपूर्वस्य श्यैङो निष्ठातस्य नो वा स्यात् ]। अभिश्यानं घृतम्। अभिशीनम्। अवश्यानः, अवशीनो वृश्चिकः। व्यवस्थितविभाषेयम्। तेनेह न–समव-

ओदितश्चेति। ओदितः परस्य निष्ठातस्य नत्वं स्यादित्यर्थः।
विभाषेति। अभ्यवपूर्वस्य श्यः सम्प्रसारणं वा स्यादित्यर्थः।

ओदितश्च। ओदित धातु से परे जो निष्ठा का तकार उसको नकार आदेश हो।

द्रवमूर्त्ति। द्रव पदार्थ की कठिनता और स्पर्श अर्थ में श्यैङ् धातु को सम्प्रसारण हो, निष्ठा परे रहते।

श्योऽस्पर्शे। श्यैङ् धातु से परे जो निष्ठा का तकार उसको नकार आदेश हो, अस्पर्श ( अर्थात्—स्पर्श भिन्न ) अर्थ में।

प्रतेश्च। प्रति उपसर्ग से परे जो श्यैङ् धातु, उसको सम्प्रसारण हो, निष्ठा परे रहते।

विभाषाऽभ्यव। अभि और अव उपसर्ग पूर्वक जो श्यैङ् धातु, उसको सम्प्रसारण हो, विकल्प करके।

१ शेषपूरणमेतत्।

श्यानः । अञ्चोऽनपादाने ।८।२।४८। [ [1]अञ्चो ] निष्ठातस्य नः [ [1]स्यादनपादाने ] ।

यस्य विभाषा ।७।२।१५। यस्य क्वचिद्विभाषयेड् विहितस्ततो निष्ठाया इण् न [ [1]स्यात् ]। 'उदितो वे'ति क्त्वायां वेट्त्वादिह नेट । समक्तः । अनपादाने किम् ? । उदक्तमुदकं कूपात् ।

दिवोऽविजिगीषायाम्[2] ।८।२।४९। 'छ्वो' रित्यूठ् । द्यूनः । विजिगीषायान्तु—द्यूतम् । निर्वाणोऽवाते ।८।२।५०। 'अवाते' इति च्छेदः । निपूर्वाद्वातेर्निष्ठातस्य नत्वं स्याद्वातश्चेत्कर्त्ता न । निर्वाणोऽग्निर्मुनिर्वा । वाते तु–निर्वातो वातः । शुषः कः ।८।२।५१। [ [1]शुषः परस्य]

समक्त इति । सङ्गत । इत्यर्थः । सम्पूर्वादञ्चतेः क्ते 'यस्य विभाषे' त्यनेन इटो निषेधेऽनिदितामिति नलोपः, नत्वं, तस्याऽसिद्धत्वात् कुत्वम् ।

उदक्तमिति । उद्धृतमित्यर्थः । अत्र 'कूपा'दिति अपादानसमभिव्याहारोऽस्तीति नाऽनेन नत्वम् । द्यून इति । 'च्छ्वो'रित्यूठ् । द्यूनः, आद्यूनः= औदरिकः । अलस इति यावत् । विजेतुमिच्छयैव द्यूतस्य प्रवृत्तेरस्त्यत्र विजिगीषा । निर्वाणोऽग्निः = विनष्टः । निर्वाणो मुनिः = मृत इत्यर्थः ।

अञ्चोऽनपादाने । अञ्च् धातु से परे जो निष्ठा का तकार उसको नकार हो, यदि अपादान का समभिहार नहीं हो तो ।

यस्य विभाषा । जिस धातु को कहीं अन्यत्र विकल्प से इट् का विधान किया गया हो उससे परे जो निष्ठा उस को इट् नहीं हो ।

दिवोऽविजिगीषायां । दिव् धातु से परे जो निष्ठा का तकार, उसको नकार आदेश हो, यदि विजिगीषा ( विजय की इच्छा ) गम्यमान नहीं हो तो ।

निर्वाणोऽवाते । निपूर्वक 'वा' धातु से परे जो निष्ठा का तकार उसको नकार आदेश हो, यदि वायु कर्त्ता नहीं हो तो ।

शुषः कः । शुष् धातु से परे जो निष्ठा का तकार, उसको 'क' आदेश हो ।

१ शेषपूरणमेतत् । २ 'दिवः परस्य निष्ठातस्य नः स्यादविजिगीषायाम्' इति वृत्तिः ।

निष्ठातस्य कः [ [1]स्यात् ]। शुष्कः । **पचो वः** ।८।२।५२। [ [2]पचेःपरस्य निष्ठातस्य वः स्यात् ] पक्वः । **क्षायो मः** ।८।२।५३। [ क्षैधातोः परस्य निष्ठातस्य मः स्यात् [2] ]। क्षामः ।

**स्त्यः प्रपूर्वस्य** ।६।१।२३। प्रात्स्त्यः संप्रसारणं [ [1]स्या ]न्निष्ठायाम् । **प्रस्त्योऽन्यतरस्याम्** ।८।२।५४। [ प्रात्स्त्यः परस्य [2] ] निष्ठातस्य मो वा [ स्यात् ]। प्रस्तीमः । प्रस्तीतः । प्रात्किम् ? । स्त्यानः ।

**अनुपसर्गात्फुल्लक्षीबकृशोल्लाघाः** ।८।२।५५। एते निपात्यन्ते । 'ञिफला' । फुल्लः । निष्ठातस्य लत्वं निपात्यते । क्तवत्वेकदेशस्याऽपीदं निपातनमिष्यते । फुल्लवान् । अनुपसर्गात्किम् ? । **आदितश्च** ।७।२।१६। आकारेतो [ [2]धातो- ]र्निष्ठाया इण्न [ [1]स्यात् ]। **ति च** ।७।४।८९। चरफलोरत उत् [ [1]स्यात् ], तादौ किति । प्रफुल्तः । प्रक्षीबितः । प्रकृशितः । प्रोल्लाघितः ॥ * **उत्फुल्लसंफुल्लयोरुपसंख्यानम्** ।

---

क्षाय इति । क्षै क्षये' इत्यतः परस्य निष्ठातस्य मः स्यात् । क्षाम इति । 'आदेच' इत्यात्त्वम्, 'गत्यर्थाकर्मके'ति कर्त्तरि क्तः । क्षीण इत्यर्थः ।

---

**पचो वः** । पच् धातु से परे जो निष्ठा का तकार उसको 'व' आदेश हो ।

**क्षायो मः** । क्षै धातु से परे जो निष्ठा का तकार उसको 'म' आदेश हो ।

**स्त्यः प्रपूर्वस्य** । प्रपूर्वक 'स्त्यै' धातु को सम्प्रसारण हो, निष्ठा परे रहते ।

**प्रस्त्योऽन्यतर** । प्रपूर्वक 'स्त्यै' धातु से परे जो निष्ठा का तकार, उसको 'म' आदेश हो, विकल्प करके ।

**अनुपसर्गात्** । उपसर्ग के अभाव में 'फुल्ल' आदि ४ शब्द निपातित हों ।

**आदितश्च** । आकारेत्सञ्ज्ञक धातु से परे जो निष्ठा, उसको इट् नहीं हो ।

**ति च** । चर और फल धातु के अकार को उत् आदेश हो, तकारादि कित् प्रत्यय परे रहते ।

**उत्फुल्ल** । 'उत्फुल्ल' और 'सम्फुल्ल' इनका निपातन हो ।

---

१ क्वाचित्कः पाठः । २ शेषपूरणमेतत् ।

नुदविदोन्दत्राघ्राहीभ्योऽन्यतरस्याम् ।८।२।५६। [ [1]नुदादिभ्यः परस्य ] निष्ठातस्य नः [ [2]स्यात् ] । नुन्नः । नुत्तः । विन्नः । वित्तः ।

'उन्दी' । श्वीदितो निष्ठायाम् ।७।२।१४। श्वयतेरीदितश्च निष्ठाया इण् न [ [2]स्यात् ] । उन्नः । उत्तः । इत्यादि । न ध्याख्यापॄमूर्च्छिमदाम् ।८।२।५७। एभ्यो निष्ठातस्य नो न [ [1]स्यात् ] । ध्यातः । ख्यातः । पूर्त्तः । राल्लोपः ।६।४।२१। राच्छ्वोर्लोपः स्यात्क्वौ, झलादावनुनासिकादौ च प्रत्यये । मूर्त्तः । मत्तः ।

वित्तो भोगप्रत्यययोः ।८।२।५८। विन्दतेर्निष्ठान्तस्य निपातोऽयं, भोग्ये, प्रतीते चार्थे । वित्तं धनम् । वित्तः पुरुषः । अनयोः किम् ? । विन्नः ।

---

नुदविदेति । नुदादेः—'रदाभ्यां' 'संयोगादेरातः' इति नित्ये नत्वे प्राप्ते, 'ह्री'-धातोरप्राप्ते उभयत्र विभाषेयम् । उन्न इति । 'उन्दी क्लेदने' इत्यस्य रूपम् ।

'वित्तं धन'मिति भोग्यस्य, 'वित्तः पुरुष'इति च प्रत्ययस्योदाहरणम् । वित्तः = प्रसिद्धः ।

---

नुदविदोन्द । नुद आदि धातुओं से परे जो निष्ठा का तकार, उसको नकार आदेश हो, विकल्प करके ।

श्वीदितो । 'श्वि' धातु और ईदित् धातु से परे जो निष्ठा का तकार, उसको इट् आगम नहीं हो ।

न ध्याख्या । 'ध्या' आदि धातुओं से परे जो निष्ठा तकार, उसको नकार आदेश नहीं हो ।

राल्लोपः । रेफ से परे छकार और वकार का लोप हो, क्वि परे रहते, और झलादि और अनुनासिकादि प्रत्यय परे रहते ।

वित्तो भोग । निष्ठान्त विन्दति को 'वित्त' यह निपातन हो, भोग्य और प्रसिद्ध अर्थ में ।

---

१ शेषपूरणमेतत् । २ क्वाचित्कः पाठः ।

भित्तं शकलम् ।८।२।५९। [ [1]'भित्त'मिति निपात्यते, शकलं चेत्तद्भवति ]। भिन्नमन्यत्। ऋणमाधमर्ण्ये ।८।२।६०। [ '[1]ऋण'मिति निपात्यते, आधमर्ण्ये ] । ऋतमन्यत् । स्फायः स्फी निष्ठायाम् ।६।१।२२। [ [1]'स्फायः स्फी'त्यादेशः स्यान्निष्ठायाम् ]। स्फीतः ॥

इण्निष्ठायाम् ।७।२।४७। निरः कुषो निष्ठाया इट् [ [2]स्यात् ]। 'यस्य विभाषे'ति निषेधे प्राप्ते पुनर्विधिः। निष्कुषितः।

वसतिक्षुधोरिट् ।७।२।५२। आभ्यां क्त्वानिष्ठयोर्नित्यमिट् [[2]स्यात्]। उषितः। क्षुधितः॥

अञ्चेः पूजायाम् ।७।२।५३। [[1]अञ्चेः परयोः] क्त्वानिष्ठयोरिट्

---

भित्तमिति। 'रदाभ्या'मिति प्राप्तस्य नत्वस्याऽभावो निपात्यते।

अधमं = कष्टदं—ऋणमस्यास्तीति—अधमर्णः = ऋणी। ऋतमिति। सत्यमित्यर्थः। स्फायः स्फीति। 'स्फायी वृद्धौ' इत्यस्य 'स्फी'त्ययमादेशः स्यान्निष्ठायामित्यर्थः। उषित इति। अस्य 'वस' धातोर्यजादित्वेन कित्त्वाद्क्त्विस्वपीति सम्प्रसारणम्। 'शासिवसी'ति षः। अञ्चेरिति। निष्ठायां 'यस्य विभाषे'ति निषेधे प्राप्ते, क्त्वायाम्-'उदितो वे'ति विकल्पे प्राप्ते विधिः।

---

भित्तं शकलम्। टुकडा अर्थ में 'भित्त' यह निपातन हो।

ऋणमाधमर्ण्ये। लेन-देन के व्यवहार में 'ऋण' यह निपातन हो।

स्फायः स्फी। स्फायी धातुको 'स्फी' आदेश हो, निष्ठा परे रहते।

इण्निष्ठायाम्। निर् पूर्वक कुष् धातु से परे जो निष्ठा, उसको इट् आगम हो।

वसतिक्षुधो। वस् और क्षुध् धातु से जो क्त्वा और निष्ठा, उसको नित्य इट् आगम हो।

अञ्चेः पूजायाम्। अञ्च् धातु से परे जो क्त्वा और निष्ठा, उसको इट् आगम हो। पूजा अर्थ गम्यमान हो तो।

---

१ शेषपूरणमेतत्। २ क्वाचित्क पाठः।

[ [1]स्यात्पूजायाम् ]। अञ्चितः। गतौ तु—अक्तः।

लुभोऽविमोहने ।७।१।५४। [ [1]लुभः परयोः ] क्त्वानिष्ठयोरिट् [ स्या[2]—]न्न तु गार्ध्ये। लुभितः। गार्ध्ये तु—लुब्धः।

क्लिशः क्त्वानिष्ठयोः ।७।२।५०। [ [1]क्लिशः परयोः क्त्वानिष्ठयो]-रिड् वा [ [2]स्यात् ]। क्लिशितः। क्लिष्टः। पूङश्च ।७।२।५१। [ [1]पूङः परयोः] क्त्वानिष्ठयोरिड् वा [ [2]स्यात् ]। पूङः क्त्वा च ।१।२।२२। [ [1]पूङः क्त्वा], निष्ठा च सेट् किन्न स्यात्। पवितः। पूतः। 'क्त्वा'ग्रहण-मुत्तरार्थम्। 'नोपधात्'इत्यत्र हि क्त्वैव सम्बध्यते।

निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः ।१।२।१९। [ एभ्यः[1] ] सेट् [ निष्ठा[1] ] किन्न [ स्यात्[2] ]। शयितः।

*आदिकर्मणि निष्ठा वक्तव्या।

---

लुभ इति। निष्ठायां 'यस्य विभाषे'ति निषेधे प्राप्ते, क्त्वायां 'तीषसहे'ति विकल्पे प्राप्ते वचनम्। निष्ठा वक्तव्येति। आद्येषु क्षणेषु भूतेष्वपि सर्वस्याः क्रियाया भूतत्वाऽभावान्निष्ठा तत्र न प्राप्नोति वचनम्। आदिकर्मणि विहितस्य क्तस्य कर्त्तरि विधानार्थञ्चेत्यपि बोध्यम्।

---

लुभोऽविमोहने। लुभ धातु से परे जो क्त्वा और निष्ठा, उसको इट् आगम हो, यदि गार्ध्य ( अर्थात् लोभ इच्छा ) अर्थ गम्यमान नहीं हो तो।

क्लिशः क्त्वा। क्लिश् धातु से परे जो क्त्वा और निष्ठा, उसको इट् विकल्प करके हो।

पूङश्च। पूङ् धातु से परे जो क्त्वा और निष्ठा, उसको इट् आगम विकल्प करके हो।

पूङः क्त्वा च। पूङ् से परे जो सेट् क्त्वा और निष्ठा, वह कित् नहीं हो।

निष्ठा शीङ्। शीङ् आदि धातुओंसे परे जो सेट् निष्ठा वह कित् नहीं हो।

आदिकर्मणि। आदिकर्म (क्रिया के प्रारम्भ अर्थ) में भी निष्ठा होती है।

---

१ शेषपूरणमेतत्। २ क्वाचित्कः पाठः।

**आदिकर्मणि क्तः कर्तरि च ।३।४।७१।** [ [1]आदिकर्मणि यः क्तः स कर्तरि स्यात् ]। चाद्भावकर्मणोः। **विभाषा भावादिकर्मणोः।७।२।१७।** [ [1]भावे, आदिकर्मणि च ] आदितो निष्ठाया इड् वा [ स्यात्[2] ]। प्रस्वेदितश्चैत्रः। प्रस्वेदितं तेन। 'ञिष्विदे'ति भ्वादिरत्र गृह्यते, ञिद्भिः साहचर्यात्। स्विद्यतेस्तु—'स्विदित' इत्येव। 'ञिमिदा' 'ञिक्ष्विदा' दिवादी, भ्वादी च। प्रमेदितः। प्रमेदितवान्। प्रक्ष्वेदितः। प्रक्ष्वेदितवान्। प्रधर्षितः। प्रधर्षितवान्। धर्षितं तेन। सेट् किम् ?। प्रस्विन्नं तेनेत्यादि।

**मृषस्तितिक्षायाम् ।१।२।२०।** [ [1]मृषः ] सेण् निष्ठा किन्न [[1]स्यात्तितिक्षायाम्]। मर्षितः। क्षमायां किम् ?। अपमृषितं वाक्यम्। अविस्पष्टमित्यर्थः।

**उदुपधाद्भावादिकर्मणोरन्यतरस्याम् ।१।२।२१।** उदुपधात्परा भावादिकर्मणोः सेण्निष्ठा वा किन्न स्यात्। द्युतितम्। द्योतितम्। मुदितम्। मोदितं साधुना। प्रद्योतितः। प्रद्युतितः। प्रमुदितः। प्रमोदितः

---

भावे उदाहरति—द्युतितमिति। कर्मण्युदाहरति—प्रद्योतित इति।

---

**आदिकर्मणि क्तः।** आदि कर्म में जो 'क्त' प्रत्यय है, वह कर्त्ता और भाव, कर्म अर्थ में हो।

**विभाषा भावादि।** आदित् धातु से परे जो भाव और आदिकर्मार्थक क्त, उसको इट् आगम हो, विकल्प करके।

**मृषस्तितिक्षायां।** मृष् धातु से परे जो सेट् निष्ठा, वह कित् नहीं हो, तितिक्षा ( सहन करना ) अर्थ में।

**उदुपधाद्भावा।** उदुपध धातु से परे जो भावार्थक तथा आदिकर्मार्थक सेट् निष्ठा, वह कित् नहीं हो, विकल्प करके।

---

१ शेषपूरणमेतत्। २ क्वाचित्कः पाठः।

साधुः। उदुपधात्किम्?। विदितम्। भावेत्यादि किम्?। रुचितं कार्षापणम्। सेट् किम्?। क्रुष्टम्।

* शब्विकरणेभ्य एवेष्यते। नेह–गुध्यतेर्गुधितम्।

**निष्ठायां सेटि** ।६।४।५२। [ [1]सेटि निष्ठायां परतो ] णेर्लोपः [ [2]स्यात् ]। भावितः। भावितवान्। **दृढः स्थूलबलयोः** ।७।२।२०। स्थूले, बलवति च [ [1]दृढ इति ] निपात्यते। **दधातेर्हिः** ।७।४।४२। [ [1]दधातेर्हिः स्या–] त्तादौ किति। हितम्। **दो दद्घोः** ।७।४।४६। घुसंज्ञकस्य 'दा' इत्यस्य 'दथ्' [ [2]स्या ] त्तादौ किति। चर्त्वम्। दत्तः।

**गत्यर्थाऽकर्मकश्लिषशीङ्स्थाऽऽसवसजनरुहजीर्यतिभ्यश्च** ।३।४।७२। एभ्यः कर्त्तरि क्तः स्याद्भावकर्मणोश्च। गङ्गां प्राप्तः। ग्लानः सः। लक्ष्मीमाश्लिष्टो हरिः। शेषमधिशयितः।

---

गुध्यतेरिति। अयं गुध्यतिर्हि श्यन्विकरणो दिवादिर्न तु शब्विकरणो भ्वादिः। स्थूलबलयोरिति। बलमस्यास्तीति बलः। अर्श आद्यच्। तदाह–बलवतीति।

---

शब्विकरणेभ्यः। यह वैकल्पिक कित्त्वनिषेध शब्विकरण ( भ्वादि गणपठित ) धातुओं से ही इष्ट है।

निष्ठायां सेटि। सेट् निष्ठा परे रहते णि का लोप हो।

दृढः स्थूल। स्थूल और बलवान् अर्थ में 'दृढ' यह निपातन हो।

दधातेर्हिः। 'धा' धातु को 'हि' आदेश हो, तादि कित् प्रत्यय परे रहते।

दो दद्घोः। घुसञ्ज्ञक 'दा' धातुको 'दथ्' आदेश हो, तकारादि कित् प्रत्यय परे रहते।

गत्यर्थाकर्मक। गत्यर्थादि धातुओंसे कर्त्ता और भाव (तथा) कर्म अर्थमें 'क्त' प्रत्यय हो।

---

१ शेषपूरणमेतत्। २ क्वाचित्कः पाठः।

द्यतिस्यतिमास्थामित्ति किति ।७।४।४०। एषामित्स्यात्तादौ किति। वैकुण्ठमधिष्ठितः। शिवमुपासितः। हरिदिनमुपोषितः। राममनुजातः। गरुडमारूढः। विश्वमनुजीर्णः। पक्षे–प्राप्ता गङ्गा तेनेत्यादि।

क्तोऽधिकरणे च ध्रौव्य-गति-प्रत्यवसानार्थेभ्यः ।३।४।७६। एभ्योऽधिकरणे क्तः [ [1]स्या ] च्चाद्यथाप्राप्तम्।

'मुकुन्दस्याऽऽसितमिदमिदं यातं रमापतेः।
भुक्तमेतदनन्तस्येत्यूचुर्गोप्यो दिदृक्षवः' ॥ १ ॥

पक्षे—आसेरकर्मकत्वात्कर्त्तरि, भावे च। आसितो मुकुन्दः। आसितं तेन।

---

पक्ष इति। पक्षे = भावे, कर्मणि च क्तप्रत्यये सति। आदिपदात्—'ग्लानं तेन', 'हरिणा लक्ष्मीराश्लिष्टा', 'शेषोऽधिशयितो हरिणा', 'वैकुण्ठोऽधिष्ठितः', 'शिव उपासितः', 'हरिदिनमुपोषितं तेने' त्यादि ग्राह्यम्।

मुकुन्दस्येति। आस्यतेऽस्मिन्निति आसितम् = आसनं, पीठादिकम्। यायतेऽस्मिन्निति–यातं = मार्गः। भुज्यतेऽस्मिन्निति–भोजनं = भोजनस्थानं रसवत्यादिकम् ( रसोईघर )। भावे चेति। 'क्त' इति शेषः।

---

द्यतिस्यति। 'दो' आदि धातुओं को इत्त्व हो, तकारादि कित् प्रत्यय परे रहते।

क्तोऽधिकरणे च। ध्रौव्य ( ठहरना ) आदि अर्थ वाचक धातुओं से अधिकरण अर्थ में क्त प्रत्यय हो। चकार से यथाप्राप्त भावादि अर्थों में भी क्त प्रत्यय हो।

मुकुन्दस्यासित। यह स्थान भगवान् श्रीकृष्ण के बैठने का है, और यह स्थान उनके जाने-आने का है। यह स्थान उनके भोजन करने का है—इस प्रकार श्रीकृष्ण को खोजती हुई गोपियां परस्पर कहती थीं।

---

1 वाचित्कः पाठः।

*गत्यर्थेभ्यः कर्त्तरि, कर्मणि च। रमापतिरिदं यातः। तेनेदं यातम्। *भुजेः कर्मणि। अनन्तेनेदं भुक्तम्।

'वर्त्तमाने' इत्यधिकृत्य—। ञीतः क्तः।३।२।१८७। [ [1]ञीतो धातोः क्तः स्याद्वर्त्तमाने ]। क्ष्विण्णः। इद्धः। मतिबुद्धिपूजार्थेभ्यश्च।३।२।१८८। [ [1]मतिबुद्धिपूजार्थेभ्यो धातुभ्यो वर्त्तमाने क्तः स्यात् ]। राज्ञां मतः। इष्टः। बुद्धः। विदितः। पूजितः। अर्चितः। चकारोऽनुक्तसमुच्चयार्थः। शीलितः। रक्षितः। क्षान्तः। आक्रुष्टः। जुष्ट इत्यादि॥

नपुंसके भावे क्तः।३।३।११४। [1]क्लीबत्वविशिष्टे भावे कालसामान्ये क्तः [ [2]स्यात् ]। जल्पितम्। हसितम्। सुयजोर्ङ्वनिप्।३।२।१०३। [ सुयजोर्ङ्वनिप्स्याद् ] भूते। सुत्वा। यज्वा। जीर्यतेरतृन्।३।२।१०४। [ [1]जीर्यतेरतृन् स्याद्भूते ]। जरन्। जरन्तौ। वासरूप-

---

ञीत इति। ञीतो धातोर्वर्त्तमाने क्तः स्यादित्यर्थः। क्ष्विण्ण इति। 'आदितश्चे'ति नेट्। इद्ध इति। अत्र 'श्वीदितः' इति नेट्। राज्ञामिति। 'क्तस्य च वर्त्तमाने' इति षष्ठी। इष्ट इति। 'तीषसहे'ति वेट्कत्वात् 'यस्य विभाषा' इति नेट्। जरन्निति। ऋकारस्य गुणे रपरोऽकारः। 'उगिदचा'मिति नुम्। संयोगान्तलोपस्याऽसिद्धत्वान्न दीर्घः।

---

गत्यर्थेभ्यः कर्त्तरि। गत्यर्थक धातुओं से कर्त्ता में और कर्म में क्त प्रत्यय हो।

भुजेः कर्मणि। भुज् धातु से कर्म में क्त प्रत्यय हो।

ञीतः क्तः। ञीदित् धातु से वर्त्तमानकाल में 'क्त' प्रत्यय हो।

मतिबुद्धि। मत्याद्यर्थक धातुओं से वर्त्तमानकाल में 'क्त' प्रत्यय हो।

नपुंसके भावे। नपुंसकत्वविशिष्ट भाव अर्थ में कालसामान्य में 'क्त' प्रत्यय हो।

सुयजोर्ङ्वनिप्। 'सु' और यज् धातुसे भूतकाल में ङ्वनिप् प्रत्यय हो।

जीर्यतेरतृन्। 'जॄ' धातु से भूत सामान्य में अतृन् प्रत्यय हो।

---

१ शेषपूरणमेतत्। २ क्वाचित्कः पाठः।

न्यायेन निष्ठाऽपि । जीर्णः । जीर्णवान् ।

**छन्दसि लिट् ।३।२।१०५। लिटः कानज्वा ।३।२।१०६। क्वसुश्च ।३।२।१०७।** भूतसामान्ये छन्दसि लिट् [स्यात्[1]] तस्य [च[2]] कानच् क्वसू वा स्तः । 'तङानावात्मनेपदम्' । चक्राणः । चक्रे । 'क्वोश्च' । जगन्वान् । कवयस्तु बाहुलकाल्लोकेऽपि प्रयुञ्जते । 'तं तस्थिवासं नगरोपकण्ठे', 'श्रेयांसि सर्वाण्यधिजग्मुषस्ते' इत्यादि ।

**वस्वेकाजाद्घसाम् ।७।२।६७।** कृतद्विर्वचनानामेकाचामादन्तानां, घसेश्च वसोरिट् स्यान्नान्येषाम् । आदिवान् । आरिवान् । ददिवान् । जक्षिवान् । एषां किम् ? । बभूवान् ।

**भाषायां सदवसश्रुवः ।३।२।१०८।** सदादिभ्यो भूतसामान्ये भाषायां लिड् वा स्यात्, तस्य च नित्यं क्वसुः । 'निषेदुषीमासनबन्धधीरः' । 'अध्यूषुषस्तामभवज्जनस्य' । शुश्रुवान् ।

**उपेयिवाननाश्वाननूचानश्च ।३।२।१०९।** एते निपात्यन्ते । उपादिणो लिड् वा । तस्य क्वसुः । इट् । उपेयिवान् । नाऽत्रोपसर्गस्तन्त्रम् ।

---

नात्रेति । अत्र = अस्मिन्सूत्रे । तन्त्रं = न विवक्षितः ।

---

छन्दसि लिट् । भूत सामान्य में लिट् लकार हो, वेद में

लिट् कानज्वा । क्वसुश्च । लिट् के स्थान में कानच् और क्वसु आदेश हों, विकल्प करके ।

वस्वेकाजा । कृत द्विर्वचन जो एकाच् आदन्त धातु, और घस् (आदेश) उनसे परे जो 'वसु' उसको ही इट् आगम हो, अन्य वसु को इट् आगम नहीं हो ।

भाषायां सद । सद् आदि धातुओं से भूतसामान्य में, भाषा (लोक ) में लिट् लकार हो, विकल्प करके । और उसके स्थान में नित्य 'क्वसु' आदेश हो ।

उपेयिवानना । 'उपेयिवान्', 'अनाश्वान्', और 'अनूचान' ये शब्द निपातित हों ।

---

१ क्वाचित्कः पाठः ।

ईयिवान्। नञोऽश्नातेः क्वसोरिडभावश्च। अनाश्वान्। अनोर्वचेः कर्त्तरि कानच्। वेदस्याऽनुवचनं कृतवान्—अनूचानः।

लटः शतृशानचावप्रथमासमानाधिकरणे।३।२।१२४। अप्रथमान्तेन सामानाधिकरण्ये लट एतौ वा स्तः। शबादिः। पचन्तं चैत्रं पश्य।

आने मुक्।७।२।८२। अङ्गस्याऽतो [[1]मुगागमः स्यादाने परे]। पचमानं चैत्रं पश्य। 'ल'डित्यनुवर्त्तमाने पुनर्लड्ग्रहणात्प्रथमा-सामानाधिकरण्येऽपि क्वचित्। सन्द्विजः।

ईदासः।७।२।८३। [[1]आसः परस्य] आनस्य [[1]ईत्स्यात्]। 'आदेः परस्य'। आसीनः।

विदेः शतुर्वसुः।७।१।३६। वेत्तेः परस्य शतुर्वसुरादेशो वा [स्यात्[2]]। विद्वान्। विदन्।

तौ सत्।३।२।१२७। तौ—शतृशानचौ सत्संज्ञौ स्तः।

---

सामानाधिकरण्ये इति। अत्र च आदेशद्वारकं प्रथमासामानाधिकरण्यं, तदसामानाधिकरण्यञ्च ग्राह्यम्। अङ्गस्येति। अङ्गावयवस्याऽतो मुगागमः स्यादाने परत इत्यर्थः। ईदास इति। आसः परस्यानस्य ईत्स्यादित्यर्थः।

'तौ' इत्यस्यार्थमाह—शतृशानचाविति।

---

लटः शतृ। लट् के स्थान में शतृ और शानच् आदेश हों, यदि अप्रथमान्त के साथ सामानाधिकरण्य हो तो।

आने मुक्। अङ्गावयव ह्रस्व अकार को मुक् आगम हो, 'आन' परे रहते।

ईदासः। आस् धातु से परे जो 'आन' उसको ईत् आदेश हो।

विदेः शतुर्वसुः। ज्ञानार्थक विद धातु से परे जो शतृ, उसके स्थान में वसु आदेश हो, विकल्प करके।

तौ सत्। शतृ और शानच् 'सत्' सञ्ज्ञक हों।

---

1 शेषपूरणमेतत्। 2 क्वाचित्कः पाठः।

**लृटः सद्वा** ।३।३।१४। [ [1]लृटः स्थाने शतृशानचौ वा स्तः ]। करिष्यन्तं, करिष्यमाणं पश्य ।

**ताच्छील्य-वयोवचन-शक्तिषु चानश्** ।३।२।१२९। एषु द्योत्येषु कर्त्तरि चानश् [ [2]स्यात् ]। अग्नौ जुह्वानः । कवचं बिभ्राणः । शत्रुं निघ्नानः ॥

**आ क्वेस्तच्छीलतद्धर्मतत्साधुकारिषु** ।३।२।१३४। क्विपमभिव्याप्य वक्ष्यमाणास्तच्छीलादिषु कर्तृषु बोध्याः। **तृन्**।३।२।१३५। कर्त्ता कटान्।

**स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच्** ।३।२।१५८। आद्यास्त्रयश्चुरादावदन्ताः। स्पृहयालुः। ***शीङो वाच्यः** । शयालुः।

---

ताच्छील्येति। एषु द्योत्येषु धातोः कर्तरि चानश् प्रत्ययः स्यात्। चानशो लादेशत्वाऽभावेनात्मनेपदत्वाभावः। ताच्छील्ये-'जुह्वानः' इति। वयोवचने—'कवचं बिभ्राणः' इति। अत्र हि कवचधारणयोग्यं वयो गम्यते। निघ्नान इति। शक्तौ-'निघ्नानः' इत्युदाहरणम्। अत्र 'गमहने'त्युपधालोपः। क्विपमभिव्याप्येति। 'भ्राजभासेत्यादिना' क्विप् वक्ष्यते। तमभिव्याप्येत्यर्थः।

---

लृटः सद्वा। लृट के स्थान में सत् ( अर्थात्-शतृ और शानच् ) हो, विकल्प करके।

ताच्छील्यवयो। ताच्छील्य आदि अर्थ द्योत्य हों तो धातु से कर्त्ता अर्थ में 'चानश्' प्रत्यय हो।

आक्वेः। 'भ्राजभास' सूत्र से जो क्विप् प्रत्यय कहा जाएगा, वहाँ तक ( उसको व्याप्त करके ) जो प्रत्यय कहे गये हैं, वे तच्छीलादि (कर्त्ता) अर्थमें हों।

तृन्। धातु से तृन् प्रत्यय हो, तच्छीलादि ( कर्त्ता ) अर्थों में।

स्पृहिगृहि। स्पृहि आदि धातुओं से आलुच् प्रत्यय हो, तच्छीलादि अर्थों में।

शीङो वाच्यः। शीङ् धातु से आलुच् प्रत्यय हो, तच्छीलादि अर्थों में।

---

१ शेषपूरणमेतत्। २ 'स्या'दिति क्वाचित्कः।

अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच् ।३।२।१३६। [ [1]एभ्य इष्णुच् स्यात्तच्छीलादिषु कर्तृषु ] ।
अलङ्करिष्णुः ॥

ग्लाजिस्थश्च ग्स्नुः ।३।२।१३९। गिदयं,नतु कित् । तेन स्थ ईत्त्वं न । ग्लास्नुः । गित्त्वान्न गुणः । जिष्णुः । स्थास्नुः । चाद् भुवः । 'श्र्युकः कितीऽ'त्यत्र गकारप्रश्लेषान्नेट् । भूष्णुः ॥

त्रसिगृधिधृषिक्षिपेः क्नुः ।३।२।१४०। [ [2]एभ्यः क्नुः स्यात्तच्छीलादिष्वर्थेषु ] । त्रस्नुः । गृध्नुः । धृष्णुः । क्षिप्नुः ।

शमित्यष्टाभ्यो घिनुण् ।३।२।१४१। [ [1]एभ्यो घिनुण् तच्छीलादिषु] ।
'उकार उच्चारणार्थ' इति काशिका । 'अनुबन्ध'इति भाष्यम् । तेन शमिनितरा—शमिनीतरेऽत्यत्र 'उगितश्चे'ति ह्रस्वविकल्पः । नचैवं 'शमी' 'शमिना' वित्यादौ नुम्प्रसङ्गः, झल्ग्रहणमपकृष्य झलन्तानामेव तद्विधानात् । 'नोदात्तोपदेशस्ये'ति वृद्धिनिषेधः । शमी । तमी । इत्यादि ।

संपृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरजभजातिचरापचरामुषाभ्याहनश्च ।३।२।१४२। [ [1]एभ्यो ] घिनुण् स्यात्,

---

शमितीति । इतिशब्द आद्यर्थः ।

---

अलङ्कृञ् । ( अलम्पूर्वक कृञ् आदि धातुओं ) से इष्णुच् प्रत्यय हो, तच्छीलादि अर्थों में ।

ग्लाजिस्थश्च । ग्ला आदि धातुओं से 'ग्स्नु' प्रत्यय हो, तच्छीलादि अर्थों में ।

त्रसिगृधि । 'त्रस्' आदि धातुओं से 'क्नु' प्रत्यय हो, तच्छीलादि अर्थों में ।

शमित्यष्टाभ्यो । शमादि आठ धातुओं से 'घिनुण' प्रत्यय हो, तच्छीलादि अर्थों में ।

सम्पृचानु । 'सम्-पृच्' आदि धातुओं से 'घिनुण्' प्रत्यय हो, तच्छीलादि अर्थों में ।

---

१ शेषपूरणमेतत् । २ क्वाचित्कः पाठः ।

[ तच्छीलादिषु कर्त्तृषु ]। सम्पर्कीत्यादि। वौ कषलसकत्थस्रम्भः ।३।२।१४३। [[1]वावुपपदे कषादिभ्यो घिनुण्स्यात्तच्छीलादिषु कर्त्तृषु]। विकाषी। अपे च लषः ।३।२।१४४। [[1]अपे उपपदे लष्यतेर्घिनुण्स्यात्, तच्छीदिषु कर्त्तृषु]। चाद्वौ। अपलाषी। विलाषी।

चलनशब्दार्थादकर्मकाद्युच् ।३।२।१४८। [[1]अकर्मका-]च्चलनार्थाच्छब्दार्थाच्च युच् स्यात्, [ [1]तच्छीलादिषु कर्त्तृषु ]। चलनः। चोपनः। कम्पनः। शब्दनः। रवणः। अकर्मकात्किम्?। पठिता विद्याम्।

अनुदात्तेतश्च हलादेः ।३।२।१४९। [ अनुदात्तेतो हलादे—]रकर्मकाद्युच् [ [2]स्यात्तच्छीलादिषु कर्त्तृषु ]। वर्त्तनः। वर्द्धनः। अनुदात्तेतः किम्?। भविता। हलादेः किम्?। एधिता। अकर्मकात्किम्?। वसिता वस्त्रम्।

निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिवादिव्याभाषासूञो वुञ् ।३।२।१४६। एभ्यो वुञ् [[1]स्यात्तच्छीलादिषु कर्त्तृषु]। निन्दकः।

---

संपर्कीति। 'चजो'रिति कुत्वम् आदिपदात्—अनुरोधी। आयामी। आयासी। परिसारी। संसर्गी। परिदेवी। संज्वारी। परिक्षेपी। परिराटी। परिवादी। परिदाही। परिमोही। दोषी। द्वेषी। द्रोही। दोही। योगी। आक्रीडी। विवेकी। त्यागी। रागी। भागी। अतिचारी। अपचारी। आमोषी। अभ्याघातीति बोध्यम्।

---

वौ कष। 'वि' पूर्वक कषादि धातुओं से 'घिनुण्' प्रत्यय हो, तच्छीलादि अर्थों में।

चलनशब्दा। चलनार्थक और शब्दार्थक धातुओं से 'युच्' प्रत्यय हो, तच्छीलादि अर्थों में।

अनुदात्तेतश्च। अकर्मक हलादि अनुदात्तेत् धातु से 'युच्' प्रत्यय हो।

निन्दहिंस। निन्द आदि धातुओं से 'वुञ्' प्रत्यय हो, तच्छीलादि अर्थों में।

---

[1] शेषपूरणमेतत्। [2] क्वचित्कः पाठः।

हिंसक इत्यादि । **देविक्रुशोश्चोपसर्गे** ।३।२।१४७। [ [1]उपसर्गे उपपदे आभ्यां वुञ्स्यात्तच्छीलादिषु कर्त्तृषु]। आदेवकः । आक्रोशकः । उपसर्गे किम् ? । देवयिता । क्रोष्टा ।

**लषपतपदस्थाभूवृषहनकमगमशृभ्य उकञ्** ।३।२।१५४। [[1]एभ्य उकञ्स्यात्तच्छीलादिषु कर्त्तृषु]। लाषुकः । पातुकः। **जल्पभिक्षकुट्टलुण्टवृञः षाकन्** ।३।२।१५५। [[1]एभ्यः षाकन् स्यात्तच्छीलादिषु कर्त्तृषु]। जल्पाकः। **सनाशंसभिक्ष उः** ।३।२।१६८। [ [1]सन्नन्तेभ्यो धातुभ्य, आशंसेर्भिक्षतेश्च उप्रत्ययः स्यात्तच्छीलादिषु कर्त्तृषु ]। चिकीर्षुः। आशंसुः। भिक्षुः ॥ **स्थेशभासपिसकसो वरच्** ।३।२।१७५। [ [1]स्थादिभ्यो वरच् स्यात्तच्छीलादिषु कर्त्तृषु ]। स्थावरः। ईश्वरः। भास्वरः। पेस्वरः। इत्यादि ।

**यश्च यङः** ।३।२।१७६। यातेर्यङन्ताद्वरच् [ [1]स्यात्तच्छीलादिषु

---

देविक्रुशो। उपसर्गोपपदक दिव् और क्रुश् धातु से 'वुञ्' प्रत्यय हो, तच्छीलादि तीन अर्थों में।

लषपतपद। लषादि धातुओं से 'उकञ्' प्रत्यय हो, तच्छीलादि अर्थों में।

जल्पभिक्ष। जल्प आदि धातुओं से 'षाकन्' प्रत्यय हो, तच्छीलादि अर्थों में।

सनाशंस। सन्नन्त धातु, आशंस् और भिक्ष धातु से 'उ' प्रत्यय हो, तच्छीलादि अर्थों में।

स्थेशभास। 'स्था' आदि धातुओं से 'वरच्' प्रत्यय हो, तच्छील, तद्धर्मा, तत्साधुकारी यदि कर्त्ता हो तो।

यश्च यङः। यङन्त 'या' धातु से 'वरच्' प्रत्यय हो, तच्छीलादि अर्थों में।

---

१ शेषपूरणमेतत् ।

[1]कर्त्तृषु]। तस्याऽचः परस्मिन्निति स्थानिवद्भावे प्राप्ते-। **न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु** ।१।१।५८। पदस्य चरमावयवे, द्विर्वचनादौ च कर्त्तव्ये परनिमित्तोऽजादेशो न स्थानिवत्। इति यलोपं प्रति स्थानिवत्त्वनिषेधाल्लोपो व्योर्वलीति यलोपः।

अल्लोपस्य स्थानिवत्त्वमाश्रित्याऽल्लोपे प्राप्ते— * **वरे लुप्तं न स्थानिवत्** । यायावरः।

**भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप्** ।३।२।१७७। [ [2]एभ्यः क्विप्स्यात्तच्छीलादिषु कर्त्तृषु ]। विभ्राट्। भाः। धूः। विद्युत्। ऊर्क्। पूः। दृशिग्रहणस्याऽपकर्षणाज्जवतेर्दीर्घः। जूः। ग्रावस्तुत्।

* **क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसम्प्रसारणं च**। वक्तीति-वाक्। पृच्छतीति-प्राट्। आयतं स्तौतीति—आयतस्तूः। कटं प्रवते-कटप्रूः। जूः-उक्तः। श्रयति हरिं-श्रीः * **द्युतिगमिजुहोतीनां द्वे च**। दिद्युत्। जगत्। * **जुहोतेर्दीर्घश्च**। जुहूः।

---

न पदान्त। पद का चरमावयव कोई कार्य करना हो, तथा द्विर्वचनादि कार्य कर्त्तव्य हों तो,परनिमित्तक जो अजादेश वह स्थानिवत् नहीं हो।

वरे लुप्तं। 'वरच्' प्रत्यय परे रहते जो ( अकार ) लुप्त हुआ है, वह स्थानिवत् नहीं हो।

भ्राज-भास। 'भ्राज' आदि धातुओं से क्विप् प्रत्यय हो, तच्छीलादि अर्थों में।

क्विब्वचि। वच्यादि धातुओं से क्विप् प्रत्यय हो, और इनके अच को दीर्घ हो, और धातु को सम्प्रसारण का अभाव हो।

द्युतिगमि। 'द्युत्' आदि धातुओं से क्विप् प्रत्ययहो,और धातु को द्वित्व हो।

जुहोतेर्दीर्घश्च। 'हु' धातु से क्विप् हो, और धातु को द्वित्वहो, और दीर्घ हो।

---

१ क्वाचित्कः पाठः। २ शेषपूरणमेतत्।

* ध्यायतेः सम्प्रसारणं च । धीः ॥

भुवः संज्ञाऽन्तरयोः ।३।२।१७९। [[1]भुवः क्विप्स्यादेतयोरर्थयोः]। मित्रभूर्नाम कश्चित् । प्रतिभूः । विप्रसम्भ्यो ड्वसंज्ञायाम् ।३।२।१८०। एभ्यो भुवो डुः [[2]स्यादसञ्ज्ञायाम्]। विभुर्व्यापकः। प्रभुः स्वामी। सम्भुः जनिता । सञ्ज्ञायान्तु–विभूर्नाम कश्चित् । धः कर्मणि ष्ट्रन् ।३।२।१८१। [[1]धाञः ष्ट्रन्स्या-] त्कर्मण्यर्थे। 'धात्री जनन्यामलकीवसुमत्युपमातृषु'।

दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे ।३।२।१८२। दाबादेः ष्ट्रन् [[2]स्या-] त्करणेऽर्थे । दान्त्यनेन-दात्रम । नेत्रम् ।

ति-तु-त्र-त-थ-सि-सु-सर-क-से-षु च ।७।२।९। एषां दशानां कृत्प्रत्ययानामिण्न [[2]स्यात्]। शस्त्रम् । योत्रम् । योक्त्रम् । स्तोत्रम् । तोत्रम् । सेत्रम् । सेक्त्रम् । मेढ्रम् । पत्त्रम् । दंष्ट्रा । नद्ध्री ।

---

दात्रं—लवनसाधनम् । ( 'दांतली' ) । तोत्त्रं-ताडनदण्डः । (चाबुक) । मेढ्रमिति । 'मेढ्रं मेहनशेफसी' इत्यमरः । नध्रीति । 'नहो धः' इति धत्वं, जश्त्वम् । नद्ध्री–चर्मरज्जुः । ( 'बरही' 'बाधी' 'रस्सी' ) ।

---

ध्यायतेः । 'ध्यै' धातु से क्विप् हो, और धातुको सम्प्रसारण हो ।

भुवः सञ्ज्ञान्तरयोः । भू धातु से क्विप् प्रत्यय हो, सञ्ज्ञा और मध्यस्थ ( जामिनदार ) अर्थों में ।

विप्रसंभ्यो । वि, प्र, और सम् उपसर्गों से परे जो भू धातु, उससे 'डु' प्रत्यय हो । परन्तु सञ्ज्ञा में नहीं हो ।

धः कर्मणि । धेट् धातु से कर्म अर्थ में 'ष्ट्रन्' प्रत्यय हो ।

दाम्नीशस । 'दाप्' आदि धातुओं से करण अर्थ में 'ष्ट्रन्' प्रत्यय हो ।

तितुत्रतथ । ति, तु, त्र, त, थ, सि, सु, सर, क, और स–इन दश कृत् प्रत्ययों को इट् नहीं हो ।

---

१ शेषपूरणम् ।    २ क्वाचित्कः पाठः ।

हलसूकरयोः पुवः ।३।२।१८३। पूङ्पूञोः करणे ष्ट्रन् [ स्या ]-त्तच्चेत्करणं हलसूकरयोरवयवः। हलस्य सूकरस्य वा पोत्रं। मुखमित्यर्थः।

अर्त्तिलूधूसूखनसहचर इत्रः ।३।२।१८४। [ [1]एभ्य इत्रप्रत्ययः स्यात्करणे ]। अरित्रम्। लवित्रम्। धवित्रम्। सवित्रम्। खनित्रम्। सहित्रम्। चरित्रम्। पुवः संज्ञायाम् ।३।२।१८५। [ [1]पुव इत्रः स्यात्करणे, सञ्ज्ञायाम् ]। पवित्रम्।

इति पूर्वकृदन्तम्।

---

## अथोणादयः।

कृवापाजिमिस्वदिसाध्यशूभ्य उण्। करोतीति कारुः। वायुः। पायुर्गुदम्। जायुरौषधम्। मायुः पित्तम्। स्वादुः। साध्नोति परकार्यमिति साधुः। आशु शीघ्रम्। हरिमितयोर्द्रुवः। द्रु गतौ। अस्मात् हरिमितयोरुपपदयोः कुः, स च डित्। हरिभिर्द्रूयते–हरिद्रुर्वृक्षः।

---

धवित्रं = व्यजनम्। इति पूर्वकृदन्तम्।

---

हलसूकरयोः। पूङ् और पूञ् धातु से 'ष्ट्रन्' प्रत्यय हो, करण अर्थ में, वह करण यदि हल और सूकर का अवयव हो तो।

अर्त्तिलू। अर्त्ति ( ऋ ) आदि धातुओं से करण अर्थ में 'इत्र' प्रत्यय हो।

पुवः सञ्ज्ञायां। पूङ् और पूञ् धातु से करण अर्थ में 'इत्र' प्रत्यय हो, यदि सञ्ज्ञा गम्यमान हो तो।

कृवाया। 'कृ' आदि धातुओं से उण् प्रत्यय हो।

हरिमितयो। हरि और मित उपपद रहते द्रु धातु से 'कु' प्रत्यय हो, और वह ('कु')डित् हो।

---

1 शेषपूरणमेतत्।

सितं द्रवतीति सितद्रुः—समुद्रः ।

शते च । शतधा द्रवतीति—शतद्रुर्नदीभेदः ।

अन्दूदृन्भूजम्बूकफेलूकर्कन्धूदिधिषूः । एते 'कू'प्रत्ययान्ता निपात्यन्ते । शमेर्ढः । बाहुलकात् इत्संज्ञा, ढस्य एयादेश, इट् च न भवति। 'शण्ढः स्यात्पुंसि गोपतौ' ।

कमेरठः । 'कमठः कच्छपे पुंसि भाण्डभेदे नपुंसकम्' इति मेदिनी ।

रमेर्वृद्धिश्च । रामठं हिङ्गु । शमेः खः । शङ्खः । कणेष्ठः । कण्ठः ।

अमन्ताड्डः । 'ञ'मिति प्रत्याहारः । 'दण्डोऽस्त्री लगुडेऽपि स्यात्' इत्यमरः । 'रण्डा मूषिकपर्ण्यां च, विधवायां च योषिति' इति मेदिनी । 'खण्डोऽस्त्री शकले नेक्षुविकारमणिभेदयोः' इति मेदिनी । 'मन ज्ञाने'। 'मण्डः पञ्चाङ्गुले शङ्कुभेदे क्लीवं तु मस्तुनि' इति मेदिनी ।

पतिचण्डिभ्यामालच् । 'पातालं नागलोके स्याद्विवरे वडवानले' इति मेदिनी । चण्डालो मातङ्गः । प्रज्ञादित्वादणि चाण्डालोऽपी-

---

शते च । शत उपपद रहते द्रु धातु से 'कु' प्रत्यय हो, और वह डित् हो।

अन्दू दृन्भू । 'अन्दू' आदि 'कू' प्रत्ययान्त शब्द निपातित हों ।

शमेर्ढः । शम् धातु से ढ प्रत्यय हो । और बाहुलकात् ढ की इत्सञ्ज्ञा, एय् आदेश और उसको इट् नहीं होता है ।

कमेरठः । कम् से 'अठ' प्रत्यय हो ।

रमेर्वृद्धिः । रम् से 'अठ' प्रत्यय हो, धातु को वृद्धि हो ।

शमेः खः । शम् से ख प्रत्यय हो ।

कणेष्ठः । कण् से 'ठ' हो ।

अमन्ताड्डः । अम् प्रत्याहारान्त से 'ड' प्रत्यय हो ।

पतिचण्डिभ्यां । पत् और चण्ड धातु से आलच् हो ।

त्युज्ज्वलदत्तः। तन्न। 'कुलालवरुडकर्मारनिषादचण्डालमित्राऽमित्रेभ्यश्छन्दसि' इति चण्डालशब्दात्स्वार्थेऽणं विदधता वार्त्तिकेन, तद्भाष्येण च सह विरोधात्।

गन्गम्यद्योः। गङ्गा। अद्गः पुरोडाशः। भृञः किन् नुट् च। भृञो गन्कित्स्यात्तस्य नुट् च। 'भृङ्गाः षिङ्गाऽलिधूम्याटाः'।

शृणातेर्ह्रस्वश्च। शृङ्गम्।

अर्त्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन्। एभ्यस्तुदशभ्यो मन्। अर्मश्चक्षूरोगः। स्तोमः। सोमः। होमः। सर्मो गमनम्। धर्मः। क्षेमं कुशलम्। क्षोमम्। भाम आदित्यः। यामः। 'वामः शोभनदुष्टयोः'। पद्मम्। यक्ष्मो रोगराजः। नेमः।

अवतेष्टिलोपश्च। मन्प्रत्ययस्यायं टिलोपो, नतु प्रकृतेः। अन्यथा डिदित्येव ब्रूयात्।

ज्वरत्वरस्रिव्यविमवामुपधायाश्च ।६।४।२०। एषामुपधावकारयोरूठ् क्वौ, झलादावनुनासिकादौ च प्रत्यये। अत्र 'क्ङिती'ति नानुवर्त्तते। अवतेस्तुनि कृते ओतुरिति दर्शनात्। स्वरादिपाठादव्ययत्वम्। अवतीति—ओम्। ग्रसेरा च। ग्रासः।

---

गन्गम्य। गम् और अद् धातु से 'गन्' प्रत्यय हो।

भृञः किन्नुट्। भृञ् से गन् प्रत्यय हो, और वह कित् हो, और उस ( गन् ) को नुट् आगम भी हो।

शृणाते। शृ धातु से गन् हो और उसको नुट् हो। धातुको ह्रस्व हो।

अर्त्तिस्तु। अर्त्ति आदि धातुओं से 'मन्' प्रत्यय हो।

अवतेष्टि। अवधातु से मन् प्रत्यय हो। मन् प्रत्ययान्त की टि का लोप भी हो।

ज्वरत्वर। ज्वरादि की उपधा और वकार को ऊठ् हो, क्वि परे रहते, और झलादि और अनुनासिकादि प्रत्यय परे रहते।

अविसिविसिशुषिभ्यः कित् । एभ्यो मन् । ऊमं नगरम् । स्यूमो रश्मिः । सिमः सर्वः । 'शुष्मसग्निसमीपयोः' ।

घर्मः । घृधातोर्निपातोऽयम् । ग्रीष्मः । ग्रसतेर्निपातोऽयम् ।

अशूप्रुषिलटिकणिखटिविशिभ्यः क्वन् । अश्वः । 'पुष्पः स्याद्हेतु-सूर्ययोः' । लट्वः पक्षिभेदः, फलं च । कण्वं पापम् । खट्वा । विश्वम् ।

कनिन् युवृषितक्षिराजिधन्विद्युप्रतिदिवः । यौति इति–युवा । वृषा–इन्द्रः । तक्षा–राजा । धन्वा–मरुः । धन्व–शरासनम् । द्युवा–सूर्यः । प्रतिदीव्यत्यस्मिन्–प्रतिदिवा दिवसः ।

उषिकुषिगाऽर्तिभ्यस्थन् । ओष्ठः । कोष्ठम् । गाथा । 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु' इत्यमरः ।

पातृतुदिवचिरिचिसिचिभ्यस्थक् । 'पीथो रविर्घृतं पीथम्' ।

'तीर्थं शास्त्राऽध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु ।

अवतारर्षिजुष्टाम्भःस्त्रीरजःसु च विश्रुतम्' । इति विश्वः ।

तुत्थोऽग्निः । उक्थं सामभेदः । रिक्थम् । बाहुलकाद्वेचेरपि । 'रिक्थमृक्थं धनं वसु' । सिक्थम् ।

ग्लानुदिभ्यां डौः । ग्लौः । नौः ।

---

अविसिवि । अव् आदि धातुओं से 'मन्' प्रत्यय हो। वह मन् कित् हो।

घर्मः । घृ धातु से मन् प्रत्ययान्त 'घर्म' निपातित हो ।

ग्रीष्मः । ग्रस् धातु से 'ग्रीष्म' निपातित हो ।

अशू प्रुषि । अश् आदि धातुओं से 'क्वन्' प्रत्यय हो ।

कनिन् यु । यु आदि धातुओं से 'कनिन्' हो ।

उषिकुषि । उष् आदि धातुओं से 'थन्' प्रत्यय हो ।

पातृतुदि । पा आदि धातुओं से 'थक्' प्रत्यय हो ।

ग्लास्नु । 'ग्लै' आदि धातुओं से 'डौ' प्रत्यय हो ।

च्विरव्ययम् । डौरित्येव । ग्लौकरोति । 'कृन्मेजन्तः' इति सिद्धे नियमार्थमिदम् । उणादिप्रत्ययान्तश्च्व्यन्त एवेति ।

गमेर्डोः ।

'गौर्नाऽऽदित्ये बलीवर्दे किरणक्रतुभेदयोः ।
स्त्री तु स्याद्दिशि भारत्यां भूमौ तु सुरभावपि ।
नृस्त्रियोः स्वर्गवज्राम्बुरश्मिदृग्बाणलोमसु । इति ।

बाहुलकात्—द्युतेरपि डोः । 'द्यौः स्त्रीस्वर्गान्तरिक्षयोः' ॥

रातेर्डैः । राः । भ्रमेश्च डूः । भ्रूः । चाद् गमेः । अग्रगूः ।

उन्देर्नलोपश्च । चाद्युच् । ओदनः ।

गमेर्गश्च । चाद्युच् । गगनम् । कॄपॄवृजिमन्दिनिधाञः क्युः । किरणः । पुरणः समुद्रः । वृजिनमन्तरिक्षम् । मन्दनं स्तोत्रम् । 'निधनं कुलनाशयोः' । धृषेर्धिष च संज्ञायाम् । धिषणो गुरुः । धिषणा धीः ।

---

च्विरव्ययम् । 'डौ' प्रत्ययान्त शब्दस्वरूप यदि च्व्यन्त हो तो वह अव्यय-सञ्ज्ञक हो ।

गमेर्डोः । गम् धातु से 'डो' प्रत्यय हो ।

रातेर्डैः । रा धातु से 'डै' प्रत्यय हो ।

भ्रमेर्डूः । भ्रम् धातु से 'डू' प्रत्यय हो ।

उन्देर्नलोपश्च । उन्द धातु से 'युच्' प्रत्यय हो, धातु के नकार का लोप भी हो ।

गमेर्गश्च । गम् धातु से 'युच्' प्रत्यय हो, धातु को गकार अन्तादेश भी हो ।

कॄपॄवृजि । कॄ आदि धातु से 'क्यु' प्रत्यय हो ।

धृषेर्धिष च । धृष धातु से 'क्यु' प्रत्यय हो, धृष को धिष आदेश हो, संज्ञा में ।

**तृन्तृचौ शंसिक्षदादिभ्यः संज्ञायाम्** । शंसादिभ्यः, क्षदादिभ्यश्च क्रमात्तृन्तृचौ स्तस्तौ चाऽनिटौ । शंस्ता । शंस्तरौ । शंस्तरः । क्षदिः सौत्रो धातुः । 'क्षत्ता स्यात्सारथौ द्वाःस्थे वैश्यायामपि शूद्रजे' ।

**बहुलमन्यत्रापि** । मन्—मन्ता । हन्—हन्ता । इत्यादि ।

**नप्तृ नेष्टृ त्वष्टृ होतृ पोतृ भ्रातृ जामातृ मातृ पितृ दुहितृ** । एते तृजन्ता निपात्यन्ते । नप्ता । इत्यादि । **सावसेर्ऋन्** । स्वसा ।

**यतेर्वृद्धिश्च** । 'भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परम्' ।

**नञि च नन्देः** । न नन्दतीति ननान्दा । इह वृद्धिर्नानुवर्त्तत इत्येके । 'ननान्दा तु स्वसा पत्युर्ननन्दा नन्दिनी च सा' इति शब्दार्णवः ।

**दिवेर्ऋः** । देवा—देवरः । 'स्वामिनो देवृदेवरौ' । **नयतेर्डिच्च** । ना । नरौ । **अर्चिशुचिहुसृपिच्छादिभ्य इसिः** । 'अर्चिः शोचिरुभे क्लीबे प्रकाशो द्योत आतपः' । हविः । सर्पिः ।

**इस्मन्त्रन्क्विषु च** ।३।४।९७। [ एषु परेषु छादेरुपधाया ह्रस्वः

---

**तृन्तृचौ** । शंसादि और सौत्र क्षदादि धातुओं से क्रम से तृन् और तृच् प्रत्यय हों, और वे अनिट् भी हो ।

**बहुलमन्यत्रापि** । बहुलता करके अन्य धातुओं से भी तृन् तृजादि हों ।

**नप्तृनेष्टृ** । 'नप्तृ' आदि तृजन्त निपातित हो ।

**सावसेर्ऋन्** । सु उपपद रहते अस् धातु से ऋन् प्रत्यय हो ।

**यतेर्वृद्धिश्च** । यत धातु से ऋन् प्रत्यय हो, धातु को वृद्धि भी हो ।

**नञिचनन्देः** । नञ् उपपद रहते नन्द धातु से ऋन् प्रत्यय हो । धातु को वृद्धि भी हो मतभेद से ।

**दिवेर्ऋः** । दिव् धातु से 'ऋ' प्रत्यय हो ।

**नयतेर्डिच्च** । नी धातु से 'ऋ' प्रत्यय हो और वह डित् हो ।

**अर्चिशुचि** । अर्च् आदि धातुओं से इसि प्रत्यय हो ।

**इस्मन्त्रन्** । इसादि प्रत्यय परे रहते छादि धातुकी उपधा को ह्रस्व हो ।

स्यात् ]। छदिः पटलं। छर्दिः। बृंहेर्नलोपश्च। 'बर्हिर्ना कुशशुष्मणोः'। द्युतेरिसिन्नादेश्च जः। ज्योतिः।

जनेरुसिः। 'जनुर्जननजन्मानि' इत्यमरः।

अर्तिपृवपियजितनिधनितपिभ्यो नित्। अरुः। परुर्ग्रन्थिः। यजुः। तनुषी। धनुः। धनुरस्त्रियाम्। 'तपुः सूर्याग्निशत्रुषु'।

एतेर्णिच्च। आयुः। आयुषी।

चक्षेः शिच्च। चक्षुः। मुहेः किच्च। मुहुरव्ययम्।

पानीविषिभ्यः पः। रक्षत्यस्मादात्मानमिति पापम्। तद्योगात्पापः। नेपः पुरोहितः। वेष्पः पानीयम्। स्तुवो दीर्घश्च। स्तूपः समुच्छ्रायः। सुशृभ्यां निच्च। चात्कित्। सूपः। बाहुलकादूत्वम्। शूर्पः।

कुयुभ्यां च। कुवन्ति मण्डूका अस्मिन्निति-कूपः। युवन्ति बध्नन्ति अस्मिन्निति-यूपः।

---

द्युतेरिसिन्। द्युत् धातु से इसिन् प्रत्यय हो, धातु के आदि को जकार आदेश भी हो।

जनेरुसिः। जन् धातु से उसि प्रत्यय हो।

अर्तिपृ। अर्त्ति आदि धातुओं से उसि प्रत्यय हो और वह नित् हो।

एतेर्णिच्च। इण् धातु से उसि प्रत्यय हो, और वह णित् हो।

चक्षेः शिच्च। चक्षिङ् धातु से उसि प्रत्यय हो। और वह शित् हो। ( शित् होने से ख्याञ् आदेश नहीं होता है )।

मुहेः किच्च। मुह् धातु से उसि प्रत्यय हो, और वह कित् हो।

पानीविषिभ्यः। पा आदि धातुओं से 'प' प्रत्यय हो।

स्तुवो दीर्घश्च। स्तुञ् धातु से 'प' हो। और धातु को दीर्घ हो।

सुशृभ्यां निच्च। सु और शृ धातु से 'प' हो। धातु को दीर्घ हो। और वह नित् और कित् हो।

कुयुभ्यां च। कु और यु धातु से 'प' प्रत्यय हो। धातु को दीर्घ भी हो।

खष्पशिल्पशष्पबाष्परूपपर्पतल्पाः। सप्तैते पप्रत्ययान्ता निपात्यन्ते। स्तनिहृषिपुषिगदिमदिभ्यो णेरित्नुच्। 'अयामन्ते'ति णेरय्। स्तनयित्नुः। हृषयित्नुः। पोषयित्नुः। गदयित्नुः। मदिरा।

अशेः सरः। अक्षरम्। वसेश्च। वत्सरः।

सपूर्वाच्चित्। संवत्सरः। परिवत्सरः। कृशृशलिकलिगर्दिभ्योऽभच्। करभः। शरभः। शलभः। 'कलभः करिशावकः'। गर्दभः।

ऋषिवृषिभ्यां कित्। ऋषभः।

रासिवल्लिभ्यां च। रासभः। वल्लभः। नियो मिः। नेमिः।

अर्त्तेरूच्च। ऊर्मिः। भुवः कित्। भूमिः। अङ्गेर्निर्नलोपश्च। अग्निः।

---

खष्प शिल्प। खष्प आदि सात 'प' प्रत्ययान्त निपातित हों।

स्तनिहृषि। ण्यन्त स्तन आदि धातु से परे इत्नुच् हो।

अशेः सरः। अश् धातु से सर प्रत्यय हो।

वसेश्च। वस् धातु से सर प्रत्यय हो।

सपूर्वाच्चित्। विद्यमान पूर्वक वस् धातु से 'सर' प्रत्यय हो। वह चित् हो।

कृशृ। 'कृ' आदि धातुओं से अभच् प्रत्यय हो।

ऋषिवृषिभ्यां। ऋष और वृष धातु से अभच् प्रत्यय हो। और वह कित् हो।

रासिवल्लिभ्याञ्च। रास् और वल्ल धातु से अभच् प्रत्यय हो।

नियो मिः। नी धातु से 'मि' प्रत्यय हो।

अर्त्तेरूच्च। ऋ धातु, से 'मि' प्रत्यय हो, धातु को ऊत् आदेश हो।

भुवः कित्। भू धातु से मि प्रत्यय हो। वह कित् हो।

अङ्गेर्निर्नलोपश्च। अङ्ग (अगि) धातु से 'नि' प्रत्यय हो, धातु के नकार का लोप भी हो।

वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित् । वह्निः । श्रेणिः । श्रोणिः । योनिः । द्रोणिः । ग्लानिः । हानिः । तूर्णिः । पातेर्डतिः । पतिः ।

सूङः क्रिः । सूरिः । अदिशदिभूशुभिभ्यः क्रिन् । अद्रिः । शद्रिः—शर्करा । भूरि—प्रचुरम् । शुभ्रिः—ब्रह्मा ।

वलिमलितनिभ्यः कयन् । वलयः । मलयः । तनयः । माछाससिभ्यो यः । माया । छाया । सस्यम् । बाहुलकात्सव्यं दक्षिणवामयोः । जनेर्यक् । 'ये विभाषा' । जन्यं युद्धम् । जाया ।

सर्वधातुभ्य इन् । पचिरग्निः । तुडिः । तुण्डिः । वलिः । वटिः । यजिः । काशते इति काशिः । पतिः । मल्लिः । केलिः । मसी परिणामे । मसिः । बोधिः । नन्दिः । कलिः ।

'हरिर्विष्णावहाविन्द्रे भेके सिंहे हये रवौ ।
चन्द्रे कीले प्लवंगे च यमे वाते च कीर्तितः' ॥

इगुपधात्कित् । कृषिः । ऋषिः । शुचिः । मनेरुच्च । मुनिः ।

---

वहिश्रिश्रु । वह् आदि धातुओं से 'नि' प्रत्यय हो, वह नित् हो ।
पातेर्डतिः । पाधातु से 'डति' प्रत्यय हो ।
सूङः क्रिः । सूङ् धातु से क्रि प्रत्यय हो ।
अदिशदि । अद् आदि धातुओं से 'क्रिन्' प्रत्यय हो ।
वलिमलि । वल् आदि धातुओं से 'कयन्' प्रत्यय हो ।
माछाससिभ्यो यः । 'मा' आदि धातुओं से 'य' प्रत्यय हो ।
जनेर्यक् । जन् धातु से यक् प्रत्यय हो ।
सर्वधातुभ्य इन् । धातु मात्र से इन् प्रत्यय हो ।
इगुपधात्कित् । इगुपध धातु से इन् प्रत्यय कित् हो ।
मनेरुच्च । मन् धातु से इन् प्रत्यय हो । वह कित् हो । और मन् धातु के मकार को उकार आदेश हो ।

जनिघसिभ्यामिण् । जनिर्जननम् । घासिर्भक्ष्यमग्निश्च ।

अच इः । रविः । तरिः । पविः । कविः । अविः । अरिः ।

कुण्डिकम्प्योर्नलोपश्च । कुडिः । कपिः ।

इषेः क्सुः । इक्षुः । कृषेर्वर्णे नक् । कृष्णः ।

दाभाभ्यां नुः । दानुः-दाता । भानुः । विषेः किच्च । विष्णुः ।

सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन् । सेतुः । तन्तुः । जन्तुः । गन्तुः । मस्तुः—दधिमण्डम् । सक्तुः । ओतुः । धातुः । क्रोष्टा ।

अवितृस्तृतन्त्रिभ्य ईः । 'अवीर्नारी रजस्वला' । तरीः । स्तरीः-धूमः । तन्त्रीः ।

यापोः कित्, द्वे च । ययीः । 'पपीः स्यात्सोमसूर्ययोः' ।

वातप्रमीः । निपातोऽयम् । लक्षेर्मुट् च । लक्ष्मीः ।

---

जनिघसिभ्या । जन् और घस् धातु से इण् प्रत्यय हो ।

अच इः । अजन्त धातु से 'इ' प्रत्यय हो ।

कुण्डिकम्प्योः । कुण्ड् ( कुडि ) और कम्प (कपि) धातुओं से 'इ' प्रत्यय हो । और धातु के नकार का लोप हो ।

इषेः क्सुः । इष धातु से 'क्सु' प्रत्यय हो ।

कृषेर्वर्णे नक् । कृष् धातु से नक् प्रत्यय हो, वर्ण अर्थ में ।

दाभाभ्यां नुः । दा और भा धातु से 'नु' प्रत्यय हो ।

विषेः किच्च । विष् धातु से 'नु' प्रत्यय हो । वह कित् भी हो ।

सितनि । 'सि' आदि धातुओं से 'तुन्' प्रत्यय हो ।

अवितृ । अव् आदि धातुओं से 'ई' प्रत्यय हो ।

यापोः कित् । या और पा धातु से 'ई' प्रत्यय हो । वह कित् भी हो । धातु को द्वित्व भी हो ।

वातप्रमीः । यह निपातन हो ।

सर्वधातुभ्यो मनिन् । कर्म । चर्म । भस्म । जन्म । शर्म । स्थाम । बृंहेर्नोऽच्च । नकारस्य अकारः ।

'ब्रह्म तत्त्वं तपो वेदो ब्रह्मा विप्रः प्रजापतिः' ।

नामन् सीमन् व्योमन् रोमन् लोमन् पाप्मन् ध्यामन् । सप्तैते निपात्यन्ते । साऽतिभ्यां मनिन्मनिणौ । साम । आत्मा ।

हनिमशिभ्यां सिकन् । 'हंसिका हंसयोषिति' । मक्षिका । गिर उडच् । गरुडः । शृदृभसोऽदिः । शरत् । 'दरद्धृदयकूलयोः' । भसत्–जघनम् । त्यजितनियजिभ्यो डित् । त्यत् । तद् । यद् ।

एतेस्तुट् च । एतद् ।

युष्यसिभ्यां मदिक् । त्वम् । अहम् । इन्देः कमिन्नलोपश्च ।

---

लक्षेर्मुट् च । लक्ष धातु से 'ई' प्रत्यय हो । और उस ई को मुट् आगम हो ।

सर्वधातुभ्यो । सर्व धातुओं से 'मनिन्' प्रत्यय हो ।

बृंहेर्नोऽच्च । बृहि (बृंह) धातु से मनिन् हो, और नकार को अकार हो ।

नामन् सीमन् । नामन् आदि सात शब्द निपातित हों ।

साऽतिभ्यां । 'षो' और 'अत्' धातु से क्रम से मनिन् और मनिण् प्रत्यय हों ।

हनिमशिभ्यां । हन् और मश् धातु से 'सिकन्' प्रत्यय हो ।

गिर उडच् । 'गॄ' धातु से 'उडच्' प्रत्यय हो ।

शृदृ । 'शॄ' आदि से 'अदि' प्रत्यय हो ।

त्यजितनि । त्यज् आदि से 'अदि' प्रत्यय हो । वह डित् भी हो ।

एतेस्तुट् च । इण् धातु 'अदि' प्रत्यय हो । और प्रत्यय को 'तुट्' आगम भी हो ।

युष्यदिभ्यां । युष् और अस् धातु से 'मदिक्' प्रत्यय हो ।

इन्देः कमिन् । इदि ( इन्द् ) धातु से 'कमिन्' प्रत्यय हो । नकार का लोप भी हो ।

इदम्। क्कायतेर्डिमिः। किम्।

सर्वधातुभ्यः ष्ट्रन्। वस्त्रम्। अस्त्रम्। शस्त्रम्।

अमिचिमिदिशसिभ्यः क्त्रः। अन्त्रम्। चित्रम्। मित्रम्। शस्त्रम्।

पुवो ह्रस्वः। पुत्रः।

स्त्यायतेड्ड्रट्। स्त्री। सूचेः स्मन्। सूक्ष्मम्।

पातेर्डुम्सुन्। पुमान्। वसेस्तिः। 'वस्तिर्नाभेरधो द्वयोः'।

सावसेः। स्वस्ति। वौ तसेः। 'वितस्तिर्द्वादशाङ्गुलः' इत्यमरः।

सर्वधातुभ्योऽसुन्। चेतः। सरः। पयः। पयसी इत्यादि।

अशेर्देवने युट् च। देवने = स्तुतौ। यशः।

उब्जेर्बले बलोपश्च। ओजः।

---

कायतेर्डिमिः। 'कै' धातु 'डिमि' प्रत्यय हो।

सर्वधातुभ्यः। धातु मात्र से ष्ट्रन् प्रत्यय हो।

अमिचिमि। अम् आदि धातुओं से 'क्त्र' प्रत्यय हो।

पुवो ह्रस्वः। पूञ् धातु से 'क्त्र' प्रत्यय हो। धातु को ह्रस्व हो।

स्त्यायतेड्ड्रट्। 'स्त्यै' धातु से 'ड्रट्' प्रत्यय हो।

सूचेःस्मन्। सूचि धातु से 'स्मन्' प्रत्यय हो।

पातेर्डुम्सुन्। पा धातु से 'डुम्सुन्' प्रत्यय हो।

वसेस्तिः। वस् धातु से 'ति' प्रत्यय हो।

सावसेः। 'सु' उपपदक अस् धातु से 'ति' प्रत्यय हो।

वौ तसेः। वि–उपपदक तस् धातु से 'ति' प्रत्यय हो।

सर्वधातुभ्योऽसुन्। धातुमात्र से असुन् प्रत्यय हो।

अशेर्देवने। अश् धातु से असुन् प्रत्यय हो। और धातु को युट् आगम हो, देवन=स्तुति अर्थ में।

उब्जेर्बले। उब्ज् धातु से असुन् प्रत्यय हो। और धातु के बकार का लोप हो। बल अर्थ गम्यमान हो तो।

श्रयतेः स्वाङ्गे शिरः किच्च । श्रयतेः शिर आदेशोऽसुन्किच्च । शिरः । अर्त्तेरुच्च । उरः । भूरञ्जिभ्यां कित् । भुवः । रजः ।

वसेर्णिच्च । वासो वस्त्रम् । चन्देरादेश्च छः । छन्दः ।

पचिवचिभ्यां सुट् च । 'पक्षसी तु स्मृतौ पक्षौ' । वक्षः ।

नञि हन एह च । अनेहा । अनेहसौ । विधाञो वेध च । वेधाः ।

चन्द्रे मो डित् । चन्द्रोपपदान्माङोऽसिः । स च डित् । चन्द्रमाः ।

उषः कित् । उषः—अप्सराः ।

सर्तेरप्पूर्वादसिः । प्रायेणाऽयं भूम्नि । अप्सरसः ।

---

श्रयतेः स्वाङ्गे । श्रि धातु से असुन् प्रत्यय कित् हो, और 'श्रि' को 'शिर्' आदेश भी हो । स्वाङ्ग वाच्य हो तो ।

अर्त्तेरुच्च । ऋ धातु से असुन् प्रत्यय हो । और धातु को उत् भी हो ।

भूरञ्जिभ्यां । भू और रञ्ज् धातु से असुन् प्रत्यय हो । और वह कित् हो ।

वसेर्णिच्च । वस् धातु से असुन् प्रत्यय हो । और वह णित् हो,

चन्देरादेश्च छः । चन्द ( चदि ) धातु से असुन् प्रत्यय हो । धातु के आदि को छत्व भी हो ।

पचि वचि । पच् और वच् धातु से असुन् हो । और असुन् को सुट् आगम भी हो ।

नञि हन । नञ् उपपद रहते हन धातु से 'असुन्' हो । और धातु को एह् आदेश भी हो ।

विधाञो । विपूर्वक धाञ् धातु से असुन् हो । और प्रकृति को वेध आदेश भी हो ।

चन्द्रे मो । चन्द्रोपपद माङ धातु से 'असि' प्रत्यय हो । और वह डित् हो ।

उषः कित् । उष धातु से 'असि' प्रत्यय हो । वह कित् भी हो ।

सर्त्तेरप्पूर्वादसिः । अप् पूर्वक सृ धातु से 'असि' प्रत्यय हो ।

वसेः कनसिः । उशना । अदिभुवो डुतच् । अद्भुतम् ।

गुधेरूमः । गोधूमः ।

तृहेः क्नो, हलोपश्च । तृणम् ।

उदि चेर्डैसिः । उच्चैः । नौ दीर्घश्च । नीचैः ।

पूञो यत् णुग्घ्रस्वश्च । यत् प्रत्ययः । पुण्यम् ।

उदि दृणातेरजलौ, पूर्वपदान्त्यलोपश्च । उदरम् ।

डित्खनेर्मुट् चोदात्तः । अच्,अल् । स चडि द्धातोर्मुट् च । मुखम् ।

अमेः सन् । अंसः ।

मुहेः खो मूर्च । मूर्खः । नहेर्हलोपश्च । नखः ।

---

वसेः कनसिः । वस् धातु से 'कनसि' प्रत्यय हो ।

अदि भुवो । अद् पूर्वक भूधातु से 'डुतच्' प्रत्यय हो ।

गुधेरूमः । गुध धातु से 'ऊम' प्रत्यय हो ।

तृहेः क्नो । तृह् धातु से 'क्न' प्रत्यय हो । धातु के हकार का लोप हो ।

उदि चेर्डैसिः । उत्पूर्वक चिञ् धातु से 'डैसि' प्रत्यय हो ।

नौ दीर्घश्च । 'नि' उपपदक 'चि' धातु से 'डैसि' प्रत्यय हो । और 'नि' को दीर्घ भी हो ।

पूञो यत् । पूञ् धातु से 'यत्' प्रत्यय हो । धातु को 'णुक्' आगम हो, और ह्रस्व भी हो ।

उदि दृणाते । उद् उपपदक 'दृ' धातु से 'अच्' और 'अल्' प्रत्यय हों । और 'उद्' के अन्त्य का लोप हो ।

डित्खनेर्मुट् । 'खन्' धातु से 'अच्' और 'अल' प्रत्यय हों । और धातु को 'मुट्' का आगम हो, और वह उदात्त हो ।

अमेः सन् । अम् धातु से सन् प्रत्यय हो ।

मुहेः खो । मुह धातु से 'ख' प्रत्यय हो । धातु को 'मूर्' आदेश हो ।

नहेर्हलोपश्च । नह धातु से 'ख' प्रत्यय हो । नह के हकार का लोप भी हो ।

शीङो ह्रस्वश्च। शिखा।

माङ ऊखो, मय च। मयूखः। जनेष्टन्लोपश्च। जटा।

क्लिशेरन् ललोपश्च। केशः। फलेरितजादेश्च पः। पलितम्।

कृञादिभ्यः संज्ञायां वुन्। करकः। कटकः। नरकः। 'नरको नारकोऽपि च' इति द्विरूपकोशः। चीकयतेराद्यन्तविपर्ययश्च। कीचकः। जनेररन्, नष्ठ श्च। जठरम्।

हर्यतेः कन्यन्, हिर च। हिरण्यम्।

कृञः पासः। कर्पासः। बिल्वादित्वात्—कार्पासम्।

ऊर्णोतेर्डः। ऊर्णा।

---

शीङो ह्रस्वश्च। शीङ् धातु से 'ख' प्रत्यय हो। धातु को ह्रस्व भी हो।

माङ ऊखो। माङ् धातु से 'ऊख' प्रत्यय हो। और धातु को 'मय' आदेश हो।

जनेष्टन्। जन् धातु स 'टन्' प्रत्यय हो। नकार का लोप हो।

क्लिशेरन्। क्लिश् धातु से 'अन्' प्रत्यय हो। लकार का लोप भी हो।

फलेरितच्। फल धातु से इतच् प्रत्यय हो। धातु के आदि को पकार भी हो।

कृञादिभ्यः। कृञ् आदि धातुओं से सञ्ज्ञा में 'वुन्' प्रत्यय हो।

चीकयते। चीक धातु से 'वुन' प्रत्यय हो। धातु के आदि और अन्त अक्षर का विपर्यय भी हो।

जनेररन्। जन् धातु से 'अरन्' प्रत्यय हो। और जन् के नकार को ठकार आदेश हो।

हर्यतेः कन्यन्। 'हर्य' धातु से कन्यन् प्रत्यय हो। धातु को 'हिर्' आदेश भी हो।

कृञः पासः। 'कृ' धातु से 'पास' प्रत्यय हो।

ऊर्णोतेर्डः। उर्णुञ् धातु से 'ड' प्रत्यय हो।

दधातेर्यत्, नुट् च । धान्यम् ।

चतेरुरन् । चत्वारः । प्रातेररन् । प्रातः । असेस्तुट् च । अन्तः ।

दहेर्गो, लोपो, दश्च नः । दहेर्गप्रत्ययो, धातोरन्तस्य लोपो, दस्य नः । नगः ।

हन्तेरच् घुरश्च । घोरम् । तरतेर्ड्रिः । त्रयः ।

ग्रहेरणिः । ग्रहणिः । प्रथेरमच् । प्रथमः ।

चरेश्च । चरमः । मङ्गेरलच् । मङ्गलम् ।

इत्युणादयः । ॥ * ॥

---

दधातेर्यत् । 'धा' धातु से यत् प्रत्यय हो । और प्रत्यय को नुट् का आगम भी हो ।

चतेरुरन् । चत् धातु से 'उरन्' प्रत्यय हो ।

प्रातेररन् । प्रपूर्वक अत् धातु से 'अरन्' प्रत्यय हो ।

असेस्तुट् च । अम् धातु से 'अरन्' प्रत्यय हो, और उस प्रत्यय को 'तुट्' आगम भी हो ।

दहेर्गो । दह् धातु से 'ग' प्रत्यय हो । धातु के अन्त्यका लोप हो । और धातु के आदि दकार को नकार भी हो ।

हन्तेरच् । हन् धातु से 'अच्' प्रत्यय हो । और धातु को 'घुर' आदेश भी हो ।

तरतेर्ड्रिः । 'तॄ' धातु से 'ड्रि' प्रत्यय हो ।

ग्रहेरणिः । ग्रह् धातु से 'अणि' प्रत्यय हो ।

प्रथेरमच् । प्रथ धातु से 'अमच्' प्रत्यय हो ।

चरेश्च । चर धातु से 'अमच्' प्रत्यय हो ।

मङ्गेरलच् । मङ्ग ( मगि ) धातु से अलच् प्रत्यय हो ।

( उणादि सूत्रों की भाषाटीका समाप्त ) ।

## अथ उत्तरकृदन्तम् ।

**उणादयो बहुलम् ।३।३।१।** एते वर्त्तमाने, संज्ञायाञ्च बहुलं स्युः । केचिदविहिता अप्यूह्याः ।

'संज्ञासु धातुरूपाणि, प्रत्ययाश्च ततः परे ।
कार्याद्विद्यादनूबन्धमेतच्छास्त्रमुणादिषु' ॥

**दाश-गोघ्नौ सम्प्रदाने ।३।३।७३।** एतौ [ सम्प्रदाने ] निपात्येते । दाशन्ति अस्मै-दाशः । गां हन्ति अस्मै-गोघ्नः—अतिथिः ।

**तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् ।३।३।१०।** क्रियार्थायां

---

सञ्ज्ञास्विति । संक्षेपत उणादिव्युत्पादनरीतिमाह—सञ्ज्ञास्विति । सञ्ज्ञासु=लोकप्रसिद्धासु डित्थडवित्थादिसञ्ज्ञासु । धातुरूपाणि=धातुस्वरूपाणि डीङादीनि, विद्यात् । ततः परे=धातुभ्यश्च परे । प्रत्ययाश्च-'स्वयमूह्याः' इति शेषः । कार्यात्=प्रयोगे गुणाऽभाववृद्ध्यादिकं कार्यं विलोक्य । ल्यब्लोपे पञ्चमीयम् । अनूबन्धं=ककार-णकाराद्यनुबन्धं, विद्यात्=जानीयात् । कल्पयेत् । एतत् = एतावदेव । उणादिषु—शास्त्रम् = अनुशासनीयमित्यर्थः । एवञ्च 'ऋफिड्ड' इत्यादौ ऋधातोः फिड्डप्रत्ययः, गुणाऽभावदर्शनात्तस्य ककारश्चानुबन्ध ऊह्य इत्याशयः ।

क्रियार्थेति । क्रिया अर्थः=प्रयोजनं यस्याः सा—क्रियार्था, तस्यां—क्रियार्थायामिति विग्रहः ।

---

उणादयो । धातु से उणादि प्रत्यय हों, वर्त्तमानकाल में और सञ्ज्ञा में ।

सञ्ज्ञासु धातु । सञ्ज्ञाशब्दों में धातु की कल्पना करके, उससे परे प्रत्यय की कल्पना करना । और गुणनिषेध, वृद्धि आदि कार्यों को देखकर प्रत्यय में अनुबन्धों ( क् ङ् ण् ञ् आदि ) की कल्पना भी करनी चाहिए ।

दाशगोघ्नौ । सम्प्रदान कारक में 'दाश' और 'गोघ्न' ये निपातन हों ।

तुमुन्ण्वुलौ । क्रियार्थक जो क्रिया, तद्वाची धातु उपपद रहते भविष्यत् कालिक क्रियावाची धातु से 'तुमुन्' और 'ण्वुल' प्रत्यय हों ।

क्रियायामुपपदे भविष्यदर्थे धातोरेतौ स्तः। मान्तत्वादव्ययत्वम्। कृष्णं द्रष्टुं याति। कृष्णं दर्शको याति।

कालसमयवेलासु तुमुन् ।३।३।१६७। [ [1]कालार्थेषूपपदेषु धातोस्तुमुन् स्यात् ]। कालः, समयो, वेला वा भोक्तुम्।

भावे ।३।३।१८। सिद्धावस्थापन्ने धात्वर्थे वाच्ये धातोर्घञ् [ [2]स्यात् ]। पाकः। अकर्त्तरि च कारके संज्ञायाम् ।३।३।१९। कर्त्तृभिन्ने कारके घञ् [ [3]स्यात्सञ्ज्ञायाम् ]। घञि च भावकरणयोः ।६।४।२७। रञ्जेर्नलोपः [ [3]स्याद्घञि, भावकरणयोरर्थयोः]। रागः। अनयोः किम्? रज्यत्यस्मिन्निति रङ्गः।

---

मान्तत्वादिति। 'कृन्मेजन्तः' इत्यव्ययत्वम्। द्रष्टुमिति। 'अव्ययकृतो भावे' इति भावे तुमुन्। कर्त्तरि ण्वुल्। 'क्रियाया'मिति सप्तमीनिर्देशात्तद्वाचकस्य 'याती'त्यस्योपपदत्वम्। दर्शनरूपक्रियार्था च क्रियाऽत्र—यानक्रिया, तद्वाचके याधातावुपपदे दृशेस्तुमुन्ण्वुलाविति बोध्यम्। अत्र च—कृष्णकर्मकं यद्भविष्यत्कालिकं दर्शनं, तत्प्रयोजनकं यानमित्यर्थः। वेलावेति। पर्यायोपादानमर्थोपलक्षणार्थम्। तेन कालार्थेषूपपदेषु तुमुन्नित्यर्थो लभ्यते। तेन अनेहश्शब्दे उपपदेऽपि तुमुन् भवति। 'अनेहा भोक्तु'मिति।

पचनं—पाकः। रञ्जनं-रागः। ( रंगना )। रज्यतेऽनेनेति वा रागः। ( रंग )। रङ्गः = रङ्गस्थलम्। ( 'अखाडा', नाटक का 'स्टेज' )।

---

कालसमय। काल, समय, और वेला उपपद रहते धातु से तुमुन् प्रत्यय हो।

भावे। सिद्धावस्थापन्न धात्वर्थ वाच्य हो तो धातु से घञ् प्रत्यय हो।

अकर्त्तरि च। कर्त्तृ भिन्न कारक अर्थ में धातु से घञ् प्रत्यय हो, सञ्ज्ञा में।

घञि च। रञ्ज् धातु के नकार का लोप हो, भाव और करणार्थक घञ् प्रत्यय परे रहते।

---

१ शेषपूरणम्। २ क्वचित्कः पाठः। ३ सूत्राक्षरलभ्यांशपूरणमेतत्।

निवासचितिशरीरोपसमाधानेष्वादेश्च कः ।३।३।४१। एषु चिनोतेर्घञ् [ [1]स्या ]दादेश्च कः । उपसमाधानं—राशीकरणम् । निकायः । आकायम् । कायः । गोमयनिकायः ।

एरच् ।३।३।५६। इवर्णान्तादच् [ [1]स्यात् ] । चयः । ऋदोरप् ।३।३।५७। ऋवर्णान्तादुवर्णान्तादप् [ [1]स्यात् ] । करः । गरः । शरः । यवः । लवः । स्तवः । पवः । *घञर्थे कविधानम् । प्रस्थः । विघ्नः ।

ड्वितः क्त्रिः ।३।३।८८। [ [2]ड्वितः क्त्रिः स्याद्–]-भावे,

---

राशीकरणमिति । तच्च धात्वर्थः । निवासादयस्तु प्रयोगोपाधयः । निकाय इति । निचीयतेऽस्मिन् धान्यादिकमिति निकायः—निवासः—गृहम् । आकाय इति । आचीयन्तेऽस्मिन्निष्टका इति—आकायः—अग्निस्थलविशेषः । काय इति । चीयतेऽस्मिन्नस्थ्यादिकमिति कायः शरीरम् । निचयनं निकायः–राशीकरणम् । ( इकट्ठा करना ) । गोमयानां निकायः–गोमयनिकायः । चय इति । चयनं चयः । चीयते इति वा चयः । किरत्यनेन,कीर्यते इति वा-करः । शृणाति अनेन इति शरः । प्रतिष्ठन्तेऽस्मिन् धान्यादिकमिति–प्रस्थः परिमाणविशेषः । ( १ सेर ) ।

विहननं, विहन्यतेऽनेनेति वा—विघ्नः । 'विघ्नोऽन्तरायः प्रत्यूहः' इत्यमरः ।

---

निवासचिति । निवास आदि अर्थों में चिञ् धातु से घञ् प्रत्यय हो, और धातु के आदि के चकार को ककार आदेश भी हो ।

एरच् । इवर्णान्त धातु से अच् प्रत्यय हो, कर्त्तृभिन्न कारक और भाव में ।

ऋदोरप् । ऋवर्णान्त और उवर्णान्त धातु से 'अप्' प्रत्यय हो, कर्त्तृभिन्न कारक, में और भाव में ।

घञर्थे क । घञ् के अर्थ (भाव और कर्त्तृभिन्न कारक) में 'क' प्रत्यय हो ।

ड्वितः क्त्रिः । ड्वित् धातु से 'क्त्रि' प्रत्यय हो, भाव में ।

---

[1] क्वाचित्कः पाठः ।     [2] सूत्राक्षरलभ्यार्थपूरणमेतत् ।

स्वभावात्। क्त्रेर्मम्नित्यम् ।४।४।२०। क्त्रिप्रत्ययान्तान्मप्स्यान्निर्वृत्ते-ऽर्थे। पाकेन निर्वृत्तं-पक्त्रिमम्। 'डुवप्'। उप्त्रिमम्।

ट्वितोऽथुच् ।३।३।८६। [ट्वितोऽथुच्स्यात्[1]]। अयमपि भावे। 'टुवेपृ कम्पने'। वेपथुः। श्वयथुः।

यजयाचयतविच्छप्रच्छरक्षो नङ् ।३।३।९०। [[1]एभ्यो नङ् स्यात्]। यज्ञः। याच्ञा। यत्नः। विश्नः। प्रश्नः। रक्ष्णः।

स्वपो नन् ।३।३।९१। [स्वपो नन् स्यात्[1]]। स्वप्नः॥

उपसर्गे घोः किः ।३।३।९२। [[1]उपसर्गे उपपदे घोः किः स्यात्]। प्रधिः। उपाधिः। स्त्रियां क्तिन् ।३।३।९४। स्त्रीलिङ्गे भावादौ क्तिन्

---

वापेन निर्वृत्तम्-उप्त्रिमम्। वेपनं-वेपथुः। इज्यते इति, यजत्यनेनेति वा यज्ञः। कर्मणि, करणे वाऽत्र नङ्। याचनं-याच्ञा। स्वपनं-स्वप्नः। प्रधीयतेऽनेन प्रधिः=रथचक्रप्रान्तभागः। 'नेमिः स्त्री स्यात्प्रधिः पुमान्' इत्यमरः। अत्र 'आतो लोप इटि चे'त्यालोपः। उपाधीयतेऽनेनेति—उपाधिः।

---

क्त्रेर्मम्नित्यम्। 'क्त्रि' प्रत्ययान्त से तद्धितसञ्ज्ञक 'मप्' प्रत्यय हो, निर्वृत्त अर्थ में।

ट्वितोऽथुच्। ट्वित् धातु से 'अथुच्' प्रत्यय हो, भाव में।

यजयाच। यज आदि धातुओं से 'नङ्' प्रत्यय हो, भाव में, और कर्तृ भिन्न कारक अर्थ में।

स्वपो नन्। स्वप् धातु से 'नन्' प्रत्यय हो, भाव में, और कर्तृ भिन्न कारक अर्थ में।

उपसर्गे घोः किः। उपसर्ग उपपद रहते घुसञ्ज्ञक धातु से 'कि' प्रत्यय हो, भाव में, और कर्तृ भिन्न कारक अर्थ में।

स्त्रियां क्तिन्। भाव और कर्तृभिन्न कारक अर्थ में धातु से क्तिन् प्रत्यय हो, स्त्रीलिङ्ग में।

---

१ सूत्राक्षरलभ्यार्थपूरणमेतत्।

[ [1]स्यात् ] । घञोऽपवादः । कृतिः । स्तुतिः । * ॠल्वादिभ्यः क्तिन्निष्ठावद्वक्तव्यः । तेन नत्वम् । कीर्णिः । धूनिः । लूनिः । पूनिः ।

* सम्पदादिभ्यः क्विप् । सम्पत् । विपत् । आपत् ।

* क्तिन्नपीष्यते । सम्पत्तिः । विपत्तिः । आपत्तिः ।

ऊतियूतिजूतिसातिहेतिकीर्त्तयश्च ।३।३।९७। एते निपात्याः ।

[2]कृञः ।३।३।१००। [ [3]कृञः ] क्यप् [ स्यात् ] । कृत्या ।

श च ।३।३।१००। कृञः शः [ [1]स्यात् ] । चात्-क्तिन् । प्रकरणम्-प्रक्रिया । कृतिः ।

इच्छा ।३।३।१०१। इषेर्निपातोऽयम् । अ प्रत्ययात् ।३।३।१०२।

करणं-कृतिः । स्तवनं—स्तुतिः । करणं-कीर्णिः । गरण-गीर्णिः । धवनं-धूनिः । सम्पदनं-सम्पत् । करणं-कृत्या । एषणम्-इच्छा । अत्र इषेर्भावे शो, यगभावश्च, निपातनात् ।

ॠल्वादिभ्यः । ॠ धातु और ल्वादि धातुओं से परे जो क्तिन् वह निष्ठावत् हो ।

सम्पदादिभ्यः । क्तिन्नपि । सम्पदादि धातुओं से स्त्रीलिङ्ग भाव में क्विप् हों, और क्तिन् भी हो ।

ऊतियूति । ऊति यूति आदि शब्दों का निपातन हो ।

कृञः । कृञ् धातु से क्यप् हो, स्त्रीलिङ्ग भाव में ।

श च । कृञ् धातु से 'श' प्रत्यय हो, और चात्-क्तिन् भी हो, स्त्रीलिङ्ग भाव में ।

इच्छा । इष धातु से 'इच्छा' यह निपातित हो ।

अ प्रत्ययात् । प्रत्ययान्त से स्त्रीलिङ्ग भाव में 'अ' प्रत्यय हो ।

१ क्वाचित्कः पाठः ।

२ 'कृञः श च' इत्यस्य योगस्य विभागोऽयम् । ३ शेषपूरणम् ।

प्रत्ययान्ते [भ्यो धातु[1]] भ्यः स्त्रियामकारप्रत्ययः [[1]स्यात्]। चिकीर्षा। पुत्रकाम्या।

गुरोश्च हलः ।३।३।१०३। गुरुमतो हलन्तात्स्त्रियामप्रत्ययः [ स्यात् ]। ईहा। ऊहा।

षिद्भिदादिभ्योऽङ् ।३।३।१०४। षिद्भ्यो, भिदादिभ्यश्च अङ् स्यात् ]। 'जॄष्'। 'ऋदृशोऽङि गुणः'। जरा। 'त्रपूष्'। त्रपा। भिदा। विदारण एवायम्। भित्तिरन्या। छिदा। मृजा।

*क्रपेः सम्प्रसारणं च। कृपा।

आतश्चोपसर्गे ।३।३।१०६। [ [2]उपसर्गे उपपदे आदन्ताद्धातो-] रङ् स्यात्। उपदा। अन्तर्द्धा। ण्यासश्रन्थो युच् ।३।३।१०७। [ [2]एभ्यो युच्, स्त्रीलिङ्गे भावे ]। 'अ'स्याऽपवादः। कारणा।

---

पुत्रस्य इच्छा-पुत्रकाम्या। ईहनम्-ईहा।

जरणं-जरा। जीर्यतेऽनया इति वा जरा। त्रपणं—त्रपा। क्रपणं-कृपा। उपदानम्-उपदा-उपहारः। उपदीयते इति वा विग्रहः। अस्यापवाद इति। 'अ प्रत्ययात्' इति विहितस्याऽकारप्रत्ययस्यापवाद इत्यर्थः।

---

गुरोश्च हलः। गुरुमान् हलन्त धातु से स्त्रीलिङ्ग भाव में 'अ' प्रत्यय हो।

षिद्भिदादिभ्यो। षित् धातु और भिदादि धातुओं से स्त्रीलिङ्ग भाव में 'अङ्' प्रत्यय हो।

क्रपेः सम्प्रसारणं च। क्रप् धातु से स्त्रीलिङ्ग भाव में अङ् हो, और धातु को सम्प्रसारण भी हो।

आतश्चोपसर्गे। उपसर्गोपपद आदन्त धातु से स्त्रीलिङ्ग भाव में 'अङ्' प्रत्यय हो।

ण्यासश्रन्थो। ण्यन्त धातु आस धातु और श्रन्थ धातु से स्त्रीलिङ्ग में भाव में 'युच्' प्रत्यय हो।

---

१ क्वाचित्कः पाठः। २ शेषपूरणमेतत्।

रोगाख्यायां ण्वुल् बहुलम् ।३।३।१०८। [ [1]रोगाख्यायां बहुलं ण्वुल्स्यात् ]। प्रच्छर्दिका। प्रवाहिका। विचर्चिका। क्वचिन्न-शिरोर्तिः।

* धात्वर्थनिर्देशे ण्वुल्वक्तव्यः । आसिका । शायिका । * इक्श्तिपौ धातुनिर्देशे। पचिः। पचतिः। * वर्णात्कारः। निर्देश इत्येव । अकारः। ककारः। * रादिफः। रेफः।

नपुंसके भावे क्तः।३।३।११४। ल्युट् च ।३।३।११५। [नपुंसके भावे क्तः स्याल्ल्युट् च ]। हसितम्। हसनम्। करणाधिकरणयोश्च ।३।३।११७। [ [1]करणाधिकरणयोश्च ] ल्युट् [[2]स्यात् ]। अनुमानम्।

---

आसनम्–आसिका । निर्देशः = अनुकरणम् । 'पच्' इति–पचिः । पचिः = पच्-धातुः। अ इति–अकारः।

---

रोगाख्यायां। धातु से ण्वुल् हो, स्त्रीलिङ्ग भाव में, प्रत्ययान्त समुदाय यदि रोगविशेष की सञ्ज्ञा हो तो।

धात्वर्थनिर्देशे। धात्वर्थ ( क्रिया ) के निर्देश में धातु से ण्वुल् प्रत्यय हो।

इक्श्तिपौ। धातु के निर्देश ( बताने ) में धातु से 'इक्' और 'श्तिप्' प्रत्यय हों।

वर्णात्कारः। वर्ण के निर्देश ( बताने ) में वर्ण से 'कार' प्रत्यय हो।

रादिफः। 'र' के निर्देश में 'र' से 'इफ' प्रत्यय हो।

नपुंसके भावे। धातु से 'क्त' प्रत्यय हो, नपुंसकलिङ्ग में और भाव में।

ल्युट् च। धातु से नपुंसक भाव में ल्युट् प्रत्यय भी हो।

करणाधिकरणयोश्च। करण और अधिकरण अर्थ में धातु से ल्युट् प्रत्यय हो।

---

१ शेषपूरणमेतत्। २ क्वाचित्कः पाठः।

अनुमानी। गोदोहनी स्थाली। **पुंसि संज्ञायां घः प्रायेण ।३।३।११८।** [ पुंसि [1]सञ्ज्ञायां प्रायेण घः स्यात्करणाधिकरणयोरर्थयोः ]।

**छादेर्घेऽद्व्युपसर्गस्य ।६।४।९६।** द्विप्रभृत्युपसर्गहीनस्य छादेर्ह्रस्वः [ स्या]द्घे परे। दन्तच्छदः। आकुर्वन्त्यस्मिन्निति–आकरः। **अवे तॄस्त्रोर्घञ् ।३।३।१२०।** [ [1]अवे उपपदे आभ्यां घञ् स्यात्पुंसि, संज्ञायाम् ]। अवतारः। अवस्तारो जवनिका।

**हलश्च ।३।३।१२१।** हलन्ताद्घञ् [ स्यात्पुंसि, सञ्ज्ञायाम् ]। घापवादः। रमन्ते योगिनोऽस्मिन्निति–रामः। अपमृज्यतेऽनेन व्याध्यादिकमिति–अपामार्गः।

**ईषद्दुःसुषु कृच्छ्राऽकृच्छ्रार्थेषु खल् ।३।३।१२६।** एषु दुःखसुखार्थेषूपपदेषु खल् [ स्यात् ]। 'तयोरेवे'ति भावे, कर्मणि च।

---

दन्ताश्छाद्यन्तेऽनेन इति–दन्तच्छदः=ओष्ठः।

आकरः=खनिः। अवे इति। अवे उपपदे तॄस्तॄभ्यां करणाधिकरणयोः पुंसि सञ्ज्ञायां घञ् स्यात्। घाऽपवादः। अवतरन्त्यनेन–अवतारः–कूपादिमार्गः। अवस्तृणन्त्यनेन अवस्तारः–जवनिका। ( परदा 'क़नात' )।

भाव इति। अकर्मकेभ्यो भावे, सकर्मकेभ्यस्तु कर्मणि।

---

**पुंसि सञ्ज्ञायां घः।** धातु से सञ्ज्ञा में, पुंलिङ्ग में, करण और अधिकरण अर्थ में प्रायः 'घ' प्रत्यय हो।

**छादेर्घे।** 'घ' परक 'णि' परे रहते द्विप्रभृति उपसर्गहीन जो अङ्गावयव 'छाद्' ( छद् धातु ) उसकी उपधा को ह्रस्व हो।

**अवे तॄस्त्रोर्घञ्।** अवपूर्वक 'तॄ' और 'स्तॄ' धातु से प्रायः घञ् प्रत्यय हो, करण और अधिकरण अर्थ में, पुंलिङ्ग में, सञ्ज्ञा में।

**हलश्च।** करण और अधिकरण अर्थ में हलन्त धातु से प्रायः घञ् प्रत्यय हो, पुंलिङ्ग में, सञ्ज्ञा में।

**ईषद्दुः सुषु।** दुःखार्थक और सुखार्थक ईषदादि उपपद रहते धातु से खल् प्रत्यय हो, भाव और कर्म अर्थ में।

---

१ शेषपूरणमेतत्।

कृच्छ्रे-दुष्करः कटो भवता। अकृच्छ्रे-ईषत्करः। सुकरः।

आतो युच् ।३।३।१२८। [ [1]ईषदादिषूपपदेष्वादन्ताद्धातोर्युच् स्याद्भावे, कर्मणि च ]। ईषत्पानः सोमो भवता। दुष्पानः। सुपानः।

आवश्यकाऽऽधमर्ण्ययोर्णिनिः ।३।३।१७०। [ [1]आवश्यके,आधमर्ण्ये च द्योत्ये धातोर्णिनिः स्यात्कर्त्तरि ]। अवश्यङ्कारी। शतन्दायी।

कृत्याश्च ।३।३।१७१। तथा धातोः। अवश्यं सेव्यो हरिः। शतं देयम्। क्तिच्क्तौ च संज्ञायाम् ।३।३।१७४। [ [1]धातोः क्तिच्क्तौ स्तः, सञ्ज्ञायाम् ] आशिषि। भवताद्भूतिः। वातिर्वायुः। शिवो देयादेनं-शिवदत्तः।

---

आतो युजिति। ईषदादिषु कृच्छ्राऽकृच्छ्रार्थेषूपपदेषु आदन्ताद्धातोर्युच् स्यात्। खलोपवाद इति। अत्र वासरूपविधिस्तु न, 'क्तल्युटतुमुन्खलर्थेषु वासरूपविधिर्नास्ती'ति तन्निषेधात्।

तथा धातोरिति। आवश्यकाधमर्ण्ययोरर्थयोर्धातोः कृत्या अपि स्युरित्यर्थः। आशिषीति। धातोः क्तिच् क्तश्च स्यादाशिषि, सञ्ज्ञायाम्। वातिरिति। वायादिति-वातिः।

---

आतो युच्। दुःख-सुखार्थक ईषदादि उपपद रहते, आदन्त धातु से खल् का अपवाद युच् प्रत्यय हो।

आवश्यकाधमर्ण्ययोः। धातु से कर्त्ता अर्थमें 'णिनि' प्रत्यय हो, आवश्यक और आधमर्ण्य ( लेन देन, व्यवहार ) अर्थ गम्यमान हो तो।

कृत्याश्च। धातु से कृत्य प्रत्यय हों, आवश्यक और आधमर्ण्य अर्थ में।

क्तिच्क्तौच। धातु से 'क्तिच्' और 'क्त' प्रत्यय हों, आशीरर्थ में, सञ्ज्ञा में।

---

१ शेषपूरणमेतत्।

अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा ।३।४।१८। प्राचामिति पूजार्थम्। प्रतिषेधयोरलंखल्वोरुपपदयोः क्त्वा [[1]स्यात्]। 'दोदद्धोः'। अलं दत्त्वा। 'घुमास्थे'तीत्त्वम्। पीत्वा खलु। अलंखल्वोः किम्?। मा कार्षीः। प्रतिषेधयोः किम्?। अलङ्कारः।

समानकर्तृकयोः पूर्वकाले।३।४।२१। समानकर्तृकयोर्धात्वर्थयोः पूर्वकाले विद्यमानाद्धातोः क्त्वा [स्यात्[1]]। 'अव्ययकृतो भावे'। भुक्त्वा व्रजति। द्वित्वमतन्त्रम्। स्नात्वा, भुक्त्वा, पीत्वा व्रजति।

न क्त्वा सेट् ।१।२।१८। सेट् क्त्वा किन्न [[1]स्यात्]। शयित्वा। सेट् किम्?। कृत्वा। रलो व्युपधाद्धलादेः संश्च ।१।२।२६। इवर्णोवर्णोपधाद्धलादे रलन्तात्परौ क्त्वासनौ सेटौ वा कितौ स्तः। द्युतित्वा। द्योतित्वा। लिखित्वा। लेखित्वा। व्युपधात्किम्?। वर्त्तित्वा। रलः

---

ननु 'उदीचां माङो व्यतीहारे' इति सूत्रे उदीचांग्रहणादस्य सूत्रस्य नित्यत्वावश्यकतया 'प्राचां'ग्रहणमत्र नोचितं, विकल्पापत्तेरत आह–पूजार्थमिति। 'न विकल्पार्थ'मिति शेषः। प्रतिषेधयोरिति। प्रतिषेधार्थयोरित्यर्थः। धात्वर्थयोरिति। धातोरित्यधिकारादेतल्लब्धम्। अविवक्षितमिति। समानकर्तृकयोरिति द्विवचनेन प्रत्यायितं द्वित्वमविवक्षितमित्यर्थः। तेन समानकर्तृकेषु बहुषु धात्वर्थेषु सत्स्वपि पूर्वकाले विद्यमानादपि क्त्वा भवति।

---

अलंखल्वोः। प्रतिषेधार्थक 'अलम्' और 'खलु'–ये उपपद रहते धातु से 'क्त्वा' प्रत्यय हो, भाव में।

समानकर्तृकयोः। समानकर्तृक धात्वर्थों में पूर्व कालिक क्रियावाची धातु से क्त्वा प्रत्यय हो, भाव में।

न क्त्वा सेट्। सेट् (अर्थात्—इट् सहित) क्त्वा कित् नहीं हो।

रलो व्युपधात्। इवर्णोपध और उवर्णोपध जो हलादि रलन्त धातु, उनसे परे जो सेट् क्त्वा, और सन्, वे कित् हों, विकल्प करके।

---

१ क्वचिन्न।

किम् ?। सेवित्वा। हलादेः किम् ?। एषित्वा। सेट् किम् ?। भुक्त्वा।

**उदितो वा** ।७।२।५६। उदितः परस्य क्त्व इड् वा [[1]स्यात्]। शमित्वा। शान्त्वा। देवित्वा। 'छ्वोः शूडनुनासिके च'ति ऊठ्। द्यूत्वा। 'दधातेर्हिः'। हित्वा। **जहातेश्च क्त्वि** ।७।४।४३। [[2]जहातेर्हिः स्यात्, क्त्वाप्रत्यये परे]। हित्वा। हाङस्तु–हात्वा।

**समासेऽनञ्पूर्वे क्त्वो ल्यप्** ।७।१।३७। अव्ययपूर्वपदेऽनञ्समासे क्त्वो ल्यबादेशः [[1]स्यात्]। तुक्। प्रकृत्य। अनञ् किम् ?। अकृत्वा। अव्ययपूर्वपदात्किम् ?। परमकृत्वा। **वा ल्यपि** ।६।४।३८। अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो [[2]वा स्याल्ल्यपि परतः]। स च व्यवस्थितः। 'मान्तानिटां वा'। 'नान्ताऽनिटां, वनादीनाञ्च नित्यम्'। आगम्य। आगत्य। प्रहत्य। 'अदो जग्धिः'। प्रजग्ध्य।

---

शान्त्वेति। 'अनुनासिकस्य क्विझलोः' इति दीर्घः। तुगिति। प्रकृत्येत्यादौ 'ह्रस्वस्य पिति कृति तुक्' इति तुगित्यर्थः।

---

उदितो वा। उदित् धातु से परे जो क्त्वा, उसको इट् आगम विकल्प करके हो।

जहातेश्च क्त्वि। ओहाक् धातु को 'हि' आदेश हो, क्त्वा प्रत्यय परे रहते।

समासेऽनञ्। अव्यय पूर्वपदक अनञ् समास में क्त्वा के स्थान में ल्यप् आदेश हो।

वा ल्यपि। अनुदात्तोपदेश धातु के, वन् धातु के, और तनोत्यादि धातुओं के अनुनासिक का लोप हो, विकल्प करके, ल्यप् परे रहते। पर यह अनुनासिक लोप व्यवस्थित हो। यथा—मान्तानिटां वा। पूर्वोक्त धातुगत मान्त अनिट् धातुओं के अनुनासिक का लोप विकल्प से होता है।

नान्तानिटां। और नान्त अनिट् धातुओं के और वनादि धातुओं के अनुनासिक का लोप नित्य होता है।

---

१ क्वाचित्कः पाठः। २ शेषपूरणमेतत्।

न ल्यपि ।६।४।६९। घुमास्थेतीत्त्वं [ न स्याल्ल्यपि ]। प्रदाय। प्रमायेत्यादि ।

आभीक्ष्ण्ये णमुल् च ।३।४।२२। पौनःपुन्ये द्योत्ये क्त्वाविषये णमुल् [ स्यात् ], क्त्वा च। नित्यवीप्सयोः ८।१।४। आभीक्ष्ण्ये, वीप्सायां च द्योत्ये पदस्य द्वित्वं स्यात्। आभीक्ष्ण्यं तिङन्तेष्वव्यय-संज्ञककृदन्तेषु च। पचति-पचति। स्मार-स्मारं नमति गुरुम्। स्मृत्वा-स्मृत्वा। पायम्-पायम्। भोजम्-भोजम्। श्रावं-श्रावम्।

अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत्।३।४।२७। एषु कृञो णमुल्स्यात्, सिद्धोऽप्रयोगोऽस्य एवम्भूतश्चेत्कृञ्। व्यर्थत्वात्प्रयोगानर्ह इत्यर्थः। अन्यथाकारम्, एवङ्कारम्, इत्थङ्कारं भुङ्क्ते। इत्थं भुङ्क्ते

---

क्त्वाविषय इति। समानकर्तृकयोर्धात्वर्थयोः पूर्वकाले इत्यर्थः।

पचति पचतीति। अत्र तिङन्ते आभीक्ष्ण्यम्। अव्ययसञ्ज्ञककृदन्तेष्वाभीक्ष्ण्ये उदाहरति-स्मारं स्मारमिति। पायमिति। 'आतो युक् चिण्कृतोः' इति युक्। मान्तत्वादव्ययत्वम्। आभीक्ष्ण्ये द्वित्वम्।

व्यर्थत्वादिति। व्यर्थत्वात्—निष्प्रयोजनत्वात्। निष्प्रयोजनत्वमेव दर्शयति—इत्थमिति। इह शाब्दबोधे विशेषस्य सत्त्वेऽपि फलितार्थकथनपरतया कारमिति णमुलन्तस्य निष्फलत्वमुक्तम्, अनतिप्रयोजनकत्वात्।

---

न ल्यपि। घुसंज्ञक और मा स्था आदि धातुओं के आकार को ईत्त्व नहीं हो, ल्यप् परे रहते।

आभीक्ष्ण्ये। पौनःपुन्य अर्थ द्योत्य हो तो धातु से 'णमुल्' प्रत्यय हो, और क्त्वा प्रत्यय भी हो, भाव में।

नित्यवीप्सयोः। पौनःपुन्य और वीप्सा अर्थ द्योत्य हो तो पदको द्वित्व हो।

अन्यथैवम्। 'अन्यथा', 'एवम्' आदि उपपद रहते कृञ् धातु से 'णमुल्' प्रत्यय हो, यदि व्यर्थ होने से कृञ् धातु प्रयोगानर्ह हो तो।

इत्यर्थः। सिद्धेति किम् ?। शिरोऽन्यथा कृत्वा भुङ्क्ते।

**यावति विन्दजीवोः ।३।४।३०।** [ [1]यावच्छब्दे उपपदे आभ्यां णमुल्स्यात् ]। यावद्वेदं भुङ्क्ते। यावल्लभते तावदित्यर्थः। यावज्जीवमधीते। **निमूलसमूलयोः कषः ।३।४।३४।** [ [1]निमूले, समूले च ] कर्मण्युपपदे [कषतेर्णमुल्स्यात्[1]]। **कषादिषु यथाविध्यनुप्रयोगः ।३।४।४६।** [ [1]कषादिषु ] यस्माण्णमुलुक्तः स एवाऽनुप्रयोक्तव्यः। निमूलकाषं कषति। समूलकाषं कषति। निमूलं, समूलं कषतीत्यर्थः।

**शुष्कचूर्णरूक्षेषु पिषः ।३।४।३५।** एषु कर्मसु [ [1]उपपदेषु] पिषेर्णमुल् [[1]स्यात्]। शुष्कपेषं पिनष्टि। शुष्कं पिनष्टीत्यर्थः। चूर्णपेषम्। रूक्षपेषम्।

**समूलाऽकृतजीवेषु हन्कृञ्ग्रहः ।३।४।३६।** कर्मणीत्येव। [[1]समूलादिषु

---

शिरोऽन्यथेति। इह शिरोऽन्यथा कृत्वा भुङ्क्ते इत्यर्थलाभाय कृञः प्रयोग आवश्यकः। तदभावे तु भुजिक्रियागत एव प्रकारो गम्येत, न तु शिरसोऽन्यथाकरणम्। अतः करोतेरत्र प्रयोगार्हत्वमस्तीति नाऽत्र णमुलित्याशयः।

यावतीति। यावच्छब्दे उपपदे विन्दजीवोर्णमुल्स्यादित्यर्थः। निमूलेति। निमूले, समूले च कर्मण्युपपदे कषेर्णमुल्स्यादित्यर्थः।

---

यावति विन्द। 'यावत्' शब्द उपपद रहते 'विन्द' ( विद्लृ लाभे ) धातु और जीव धातु से णमुल् प्रत्यय हो।

निमूलसमूलयोः। कर्मसञ्ज्ञक निमूल और समूल उपपद रहते कष धातुसे णमुल् प्रत्यय हो।

कषादिषु। णमुलप्रकृति कषादि धातुओं में, जिस धातु से णमुल् कहा गया है, उसी धातु का अनुप्रयोग ( पश्चात् पुनः प्रयोग ) हो।

शुष्कचूर्ण। कर्मसञ्ज्ञक शुष्कादि उपपद रहते पिष् धातु से णमुल् हो।

समूलाऽकृत। समूल आदि कर्म उपपद रहते क्रमसे हनादि धातुओं से 'णमुल्' प्रत्यय हो।

---

१ शेषपूरणमेतत्।

कर्मसूपपदेषु हनादिभ्यो णमुल्स्यात्[1] ]। समूलघातं हन्ति। अकृतकारं करोति। जीवग्राहं गृह्णाति। जीवन्तं गृह्णातीत्यर्थः।

**करणे हनः** ।३।४।३७। [ [1]करणे उपपदे हन्तेर्णमुल्स्यात् ]। पादघातं हन्ति। पादेन हन्तीत्यर्थः। **स्नेहने पिषः** ।३।४।३८। स्निह्यते येन तस्मिन्करणे [ [1]उपपदे ] पिषेर्णमुल् [ [1]स्यात् ]। उदपेषं पिनष्टि। उदकेन पिनष्टीत्यर्थः। **हस्ते वर्त्तिग्रहोः** ।३।४।३९। हस्तार्थे करणे उपपदे [ वर्त्तिग्रहिभ्यां णमुल् स्यात् ]। हस्तवर्त्तं वर्त्तयति। करवर्त्तम्। हस्तेन गुलिकां करोतीत्यर्थः। हस्तग्राहं गृह्णाति। करग्राहम्। पाणिग्राहम्।

**स्वे पुषः** ।३।४।४०। करणे इत्येव। 'स्व' इत्यर्थग्रहणम्। [[1]स्ववाचिनि उपपदे पुषेर्णमुल्स्यात् ]। तेन—स्वरूपे, पर्याये, विशेषेषु च णमुल्। स्वपोषं पुष्णाति। धनपोषम्। गोपोषम्।

**समासत्तौ** ।३।४।५०। तृतीयासप्तम्योर्णमुल् [ [1]स्या- ]त्सन्निकर्षे।

---

जीवग्राहमिति। जीवतीति-जीवः। इगुपधलक्षणः कः। स्वरूपे=स्वशब्दे। पर्याये=धनादौ। विशेषेषु=गवादिषु। स्वपोषमिति। धनेन पुष्णातीत्यर्थः।

---

करणे हनः। करण सञ्ज्ञक सुबन्त उपपद रहते हन् धातु से णमुल् हो।

स्नेहने पिषः। करणसञ्ज्ञक स्नेहनवाचक सुबन्त उपपद रहते पिष् धातु से णमुल प्रत्यय हो।

हस्ते वर्त्ति। हस्तार्थक करण उपपद रहते वर्त्ति ( ण्यन्त वृत् ) धातु से, और ग्रह धातु से णमुल् प्रत्यय हो।

स्वे पुषः। स्व ( धन ) वाचक करणसञ्ज्ञक सुबन्त उपपद रहते पुष् धातु से णमुल् प्रत्यय हो।

समासत्तौ। तृतीयान्त और सप्तम्यन्त उपपद उपपद रहते धातु से णमुल् प्रत्यय हो, यदि सन्निकर्ष अर्थ गम्यमान हो तो।

---

१ शेषपूरणमेतत्।

केशग्राहं युध्यन्ते । हस्तग्राहं युध्यन्ते ।

**स्वाङ्गे तस्प्रत्यये कृभ्वोः ।३।४।६१।** [ [1]तस्प्रत्ययान्ते स्वाङ्गवाचिन्युपपदे कृभ्वो, भुवश्च ] क्त्वाणमुलौ स्तः । मुखतःकृत्य । मुखतःकृत्वा । मुखतःकारम् । मुखतोभूय । मुखतोभूत्वा । मुखतोभावम् ।

* इति उत्तरकृदन्तम् *

इति कृदन्तप्रक्रिया ॥

---

## अथ विभक्त्यर्थाः ।

**प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा । ।२।३।४६।** नियतोपस्थितिकः—प्रातिपदिकार्थः । मात्रशब्दस्य प्रत्येकं योगः ।

---

केशग्राहमिति । केशेषु ग्रहणं भवतु मा वा भूत्, सन्निकर्षमात्रप्रतिपादनमेतत् । एवञ्च अतिसन्निहिता युध्यन्ते इत्यर्थः । स्वाङ्ग इति । तस्प्रत्ययान्ते स्वाङ्गे उपपदे कृभ्वो, भुवश्च क्त्वाणमुलौ स्त इत्यर्थः ।

ननु त्रिकादिपक्षेषु लिङ्गस्यापि प्रातिपदिकार्थत्वात् लिङ्गस्य पृथग्ग्रहणं व्यर्थमित्यत आह—नियतेति । नियता उपस्थितिर्यस्येति विग्रहः । यस्मिन् प्रातिपदिके उच्चारिते यस्यार्थस्य नियमेनोपस्थितिः स प्रातिपदिकार्थ इत्यर्थः । एवञ्च तटः तटी तटमित्याद्यनियतलिङ्गेषु नियमेन कस्यापि लिङ्गस्योपस्थित्यभावात्तस्य प्रातिपदिकार्थशब्देनाऽग्रहणात् पृथक् लिङ्गग्रहणमावश्यकमिति भावः ।

मात्रशब्दस्य वचनशब्देनैवान्वय इति भ्रमं वारयति—मात्रशब्दस्येति । प्रातिपदिकार्थश्च, लिङ्गं च, परिमाणं च, वचनं चेति द्वन्द्वः । प्रातिपदिकार्थलिङ्ग-

---

स्वाङ्गे तस् । स्वाङ्गवाची तस् प्रत्ययान्त उपपद रहते कृ और भू धातु से 'क्त्वा' और 'णमुल्' प्रत्यय हो ।

प्रातिपदिकार्थ । प्रातिपदिकार्थमात्र में, लिङ्ग मात्र की अधिकता में, परिमाणमात्र में, और सङ्ख्यामात्र में प्रथमा विभक्ति हो ।

---

१ शेषपूरणमेतत् ।

प्रातिपदिकार्थमात्रे, [1]लिङ्गमात्राद्याधिक्ये, परिमाणमात्रे, सङ्ख्यामात्रे च प्रथमा स्यात्। प्रातिपदिकार्थमात्रे—[2]उच्चैः। नीचैः। कृष्णः। श्रीः। ज्ञानम्। लिङ्गमात्राद्याधिक्ये-तटः। तटी। तटम्। परिमाणमात्रे—

परिमाणवचनान्येव—'प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्र'मित्यस्वपदविग्रहः। मात्रशब्दोऽवधारणे। 'मात्रं कार्त्स्न्येऽवधारणे' इत्यमरः। 'मयूरव्यंसकादयश्च' इति नित्यसमासः। 'मात्र'शब्दस्य द्वन्द्वान्ते श्रूयमाणत्वात् प्रातिपदिकार्थे, लिङ्गे, परिमाणे, वचने च प्रत्येकमन्वय इत्यर्थः।

ननु 'प्रातिपदिकार्थमात्रे, लिङ्गमात्रे, परिमाणमात्रे, संख्यामात्रे च प्रथमे'-त्यनुपपन्नं, लिङ्गादीनां केवलानां प्रातिपदिकार्थं विना क्वाप्यनुपस्थितेरित्याशङ्क्य 'अतएव बाधकाल्लिङ्गमात्रेऽधिके इति विवक्षित'मित्यभिप्रेत्य व्याचष्टे—लिङ्गमात्राद्याधिक्ये इति। लिङ्गमात्राधिक्ये, परिमाणमात्राधिक्ये चेत्यर्थः।

प्रातिपदिकार्थमात्र इत्यस्योदाहरति—उच्चैरित्यादि। नन्वव्ययेषु 'सामान्ये नपुंसकम्' इति नपुंसकत्वस्य, कृष्णशब्दे पुंस्त्वस्य, श्रीशब्दे स्त्रीत्वस्य, ज्ञानशब्दे नपुंसकत्वस्य च भानात्, कथं प्रातिपदिकार्थस्योदाहरणान्येतानीति चेदुच्यते—'अव्ययादाप्सुपः' इति सूत्रे 'आब्ग्रहणं व्यर्थमलिङ्गत्वात्' इति भाष्योक्तरीत्या अव्यये कस्यापि लिङ्गस्यानुपस्थितिरिति अव्ययम्—'प्रातिपदिकार्थमात्रे' इत्यस्य उदाहरणं युक्तमेवेति। एवं कृष्णशब्दे पुंस्त्वस्य, श्रीशब्दे स्त्रीत्वस्य, ज्ञानशब्दे नपुंसकत्वस्य च नियमेन भानमस्ति, तेषां नियतलिङ्गत्वात्, अतस्तेषु लिङ्गानामपि प्रातिपदिकार्थान्तर्भावात्तेषामपि 'प्रातिपदिकार्थमात्रे' इत्यस्योदाहरणत्वं निर्बाधमिति भावः। यद्यपि 'कृष्णः पटः', 'कृष्णा शाटी', 'कृष्णं वस्त्र'मित्यादौ कृष्णशब्दस्त्रिलिङ्गः, तथापि वासुदेवे भगवति श्रीकृष्णे तु नियतपुंलिङ्ग एवेति स एवात्र कृष्णशब्दको विवक्षित इति भावः।

लिङ्गमात्र इति। अनियतलिङ्गास्तु तटादिशब्दा लिङ्गमात्राधिक्यस्योदाहरणमित्याशयः। तत्र लिङ्गानामनियतोपस्थितिकतया प्रातिपदिकार्थानन्तर्भावादित्यवधेयम्। तटः तटी तटमिति। 'तटं त्रिषु' इत्यमरः। परिमाणमात्रे

1 'लिङ्गमात्राधिक्ये' पा०। 2 'लिङ्गमात्रे' पा०।

द्रोणो व्रीहिः । [1]द्रोणरूपं यत्परिमाणं तत्परिच्छिन्नो [[1]व्रीहिरित्यर्थः] । वचनं-सङ्ख्या । एकः । द्वौ । बहवः ।

इति । उदाहरणं वक्ष्यते इत्यर्थः ।

द्रोणो व्रीहिरिति । द्रोणः—परिमाणविशेषः ( 'धूण' प्रायः २० सेर ) । व्रीहिरिति । जातावेकवचनम् । 'जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्या'-मिति वचनात् । व्रीहिराशिरिति यावत् । नहि व्रीहिव्यक्तेर्द्रोणपरिमाणं सम्भवति ।

ननु द्रोणशब्दस्य परिमाणविशेषवाचिनो नियतपुंलिङ्गत्वे 'प्रातिपदिकार्थमात्रे' इत्येव सिद्धम् । यदि तु 'अस्त्रियामाढकद्रोणौ' इति द्विलिङ्गता, तर्हि 'लिङ्गमात्राधिक्ये' इत्येव सिद्धम्, तत् किं परिमाणग्रहणेनेति चेन्न; न हि द्रोणत्वेन रूपेण परिमाणविशेषवाचिद्रोणशब्दात् स्वार्थे प्रथमा विभक्तिरिष्यते, येन 'प्रातिपदिकार्थमात्रे' इत्यनेन गतार्थता स्यात् । किन्तर्हि द्रोणत्वेन परिमाणवाचिनो द्रोणशब्दात् परिमाणत्वसामान्यरूपेण द्रोणपरिमाणे विवक्षिते प्रथमा विभक्तिर्विधीयते । ततश्च प्रत्ययार्थे परिमाणसामान्ये, द्रोणशब्दार्थात्मकप्रकृत्यर्थः परिमाणविशेषः सामान्यविशेषात्मकाऽभेदसंसर्गेणान्वेति । परिमाणसामान्यात्मकप्रत्ययार्थस्तु—परिच्छेद्यपरिच्छेदकभावेन व्रीहावन्वेति । तथाच द्रोणाख्यपरिमाणविशेषात्मकं यत् सामान्यपरिमाणं, तत्परिच्छिन्नो व्रीहिरिति बोधः फलति । परिमाणग्रहणाऽभावे तु द्रोणाख्यपरिमाणविशेषपरिच्छिन्नो व्रीहिरित्येव बोधः स्यात् । परिमाणसामान्यन्तु न प्रतीयेत । अतस्तदर्थमिह परिमाणग्रहणमित्याशयः । एवञ्च द्रोणरूपं यत्परिमाणं तत्परिच्छिन्नो व्रीहिरित्यर्थः । प्रत्ययार्थे परिमाणे, प्रकृत्यर्थोऽभेदेन संसर्गेण विशेषणं, प्रत्ययार्थस्तु परिच्छेद्यपरिच्छेदकभावेन व्रीहौ विशेषणमिति विवेकः ।

वचनं संख्येति । पूर्वाचार्यैस्तथा संज्ञाकरणादिति भावः । तथाच संख्यामात्रे प्रथमेति लभ्यते । नच 'लिङ्गमात्राधिक्ये' इतिवत् 'संख्यामात्राधिक्ये' इति कुतो न व्याख्यातमिति वाच्यं, केवललिङ्गपरिमाणयोः क्वाप्युपस्थित्यभावेन तथा व्याख्यानेऽपि एकद्विबहुशब्देष्वेकत्वद्वित्वबहुत्वानां केवलानां नियतोपस्थितिसत्त्वेन 'संख्यामात्रे' इत्येव व्याख्यातुमुचितत्वात् । अतएव भाष्ये वचनग्रहणं्रो-

[1] क्वचिन्न ।

सम्बोधने च ।२।३।४७। [ [1]सम्बोधने च ] प्रथमा [[1]स्यात् ]। हे राम । [ [2]कारके ।१।४।२३। इत्यधिकृत्य ]। कर्तुरीप्सिततमं कर्म ।१।४।४९। कर्तुः क्रिययाऽऽप्तुमिष्टतमं कारकं कर्मसंज्ञं स्यात् ।

कर्मणि द्वितीया ।२।३।२। [3]अनुक्ते [ [2]कर्मणि द्वितीया स्यात् ]।

---

'एको' 'द्वौ' 'बहव' इत्युदाहृतम् । ननु एको द्वौ बहव इत्यत्र एकत्वद्वित्व-बहुत्वानां नियमेनोपस्थित्या 'प्रातिपदिकार्थे' इत्येव सिद्धे, वचनग्रहणं व्यर्थमिति चेन्न; प्रकृतिभिरेवैकत्वादीनामुक्तत्वात् 'उक्तार्थानामप्रयोगः' इति न्यायेन प्रथमाविभक्तेरप्राप्तौ तदर्थं वचनग्रहणमित्याशयात् ।

सम्बोधने च । सम्बोधने अधिके गम्येऽपि प्रथमा स्यादित्यर्थः ।

हे रामेति । 'मां पाही'ति शेषः ।

कर्तुरीप्सितेति । 'कारके' इत्यनुवृत्तं प्रथमया विपरिणम्यते । आप्तुमिष्य-माणम्-ईप्सितम् । 'आप्लृ व्याप्तौ', इत्यस्मात् सन्नन्तात् 'मतिबुद्धिपूजार्थेभ्यश्च' इति वर्तमाने क्तः । मतिरिच्छा, बुद्धेः पृथग्ग्रहणात् । 'क्तस्य च वर्तमाने' इति कर्त्तरि षष्ठी । अतिशयेनेप्सितम्-ईप्सिततमम् । धातूपात्तव्यापाराश्रयः कर्त्ता । केनाप्तुमित्याकाङ्क्षायां कर्तृविशेषणीभूतव्यापारेणेत्यर्थाल्लभ्यते । तत् फलितमाह-कर्तुः क्रिययेत्यादिना ।

कर्मणि द्वितीया । 'अनभिहिते' इत्यनुवृत्तं व्याचष्टे-अनुक्ते इति ।

---

सम्बोधने च । सम्बोधन में प्रथमा विभक्ति हो ।

कारके । यह अधिकार सूत्र है ।

कर्त्तुरीप्सिततमं । कर्त्ता की क्रिया से सम्बन्ध करने को जो अत्यन्त इष्यमाण है, वह कारकसञ्ज्ञक होकर कर्म सञ्ज्ञक हो । [अर्थात्-'प्रकृतधातूपात्त-प्रधानीभूतव्यापारप्रयोज्य जो फल' तदाश्रयत्वेन जो इच्छोद्देश्य है, वह कर्म-सञ्ज्ञक होता है ]।

कर्मणि द्वितीया । अनुक्त कर्म में द्वितीया हो ।

---

१ शेषपूरणम् । २ क्वाचित्कः पाठः । ३ 'अनभिहिते कर्मणि द्वितीया स्यात्' पा०।

हरिं भजति। अभिहिते तु कर्मादौ-प्रथमैव[1]। हरिः सेव्यते। लक्ष्म्या सेवितो [2]हरिः। [शतेन क्रीतः[3]] शत्यः—[2]अश्वः। [2]प्राप्तानन्दः [[3]चैत्रः]। अभिधानञ्च-प्रायेण तिङ्कृत्तद्धितसमासैः। क्वचिन्निपातेनाऽभिधानम्। 'क्रमादमुं नारद इत्यबोधि सः'।

[2]तथा युक्तञ्चाऽनीप्सितम् ।१।४।५०। ईप्सिततमवत्, क्रियया

हरिं भजतीति। तुष्ट्यनुकूलपरिचरणात्मकव्यापारो भजेरर्थः। पूजादिव्यापारेण हरिं तोषयतीत्यर्थः। कर्तृनिष्ठपूजनादिव्यापारप्रयोज्यतुष्टिरूपफलाश्रयत्वाद्धरिः कर्म। हरिनिष्ठतुष्ट्यनुकूल एकदेवदत्तनिष्ठो वर्त्तमानो व्यापार इति बोधः। अभिहिते त्विति। 'हरिः सेव्यते' इत्यादा' विति शेषः। प्रथमैवेति। तद्विधावनभिहिताधिकाराऽभावात्, 'अभिहिते प्रथमा' इति वार्तिकाच्चेति भावः। अभिधानं चेति। 'समासै'रित्यनन्तरं 'विवक्षित'मिति शेषः।

हरिः सेव्यत इति। 'लः कर्मणि' इति कर्मणि लकारः। 'भावकर्मणो' रित्यात्मनेपदम्। तिङन्तेन अभिहितत्वाद्धरेः कर्मणो न द्वितीयेति भावः। लक्ष्म्या सेवित इति। भूते कर्मणि क्तः, कर्तरि तृतीया। लक्ष्मीनिष्ठपरिचरणजनिततुष्ट्याश्रयो हरिरिति बोधः। अत्र सेवितहरेः कर्मणः क्ता अभिहितत्वान्न द्वितीया।

शत्य इति। 'शताच्च ठन्यतावशते' इति यत्प्रत्ययस्तद्धितः। अत्र कर्मणस्तद्धितेनोक्तत्वान्न द्वितीया। प्राप्तानन्द इति। 'गत्यर्थाकर्मके'त्यादिना 'प्राप्ते'ति कर्तरि क्तः। अन्यपदार्थस्य कर्मणो बहुव्रीहिसमासेनाऽभिहितत्वान्न द्वितीयेति भावः। आनन्दकर्तृकप्राप्तिकर्मीभूत इति बोधः। प्रायेणेत्यस्य फलं दर्शयति—क्वचिदिति।

तथा युक्तं। ईप्सिततम की ही तरह क्रिया (जन्यफल) से युक्त अनीप्सित भी कारक होकर कर्मसञ्ज्ञक हो।

१ 'प्रथमा' पा०। २ क्वचिन्न।
३ क्वचिन्न। ४ सोदाहरणमिदं सूत्रमेकत्रादर्शे न दृश्यते।

युक्तमनीप्सितमपि कारकं कर्मसञ्ज्ञं स्यात्। ग्रामं गच्छन् तृणं स्पृशति। ओदनं भुञ्जानो विषं भुङ्क्ते ]।

अकथितं च ।१।४।५१। अपादानादिविशेषैरविवक्षितं कारकं कर्मसंज्ञं स्यात्।

'दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम् ।
कर्मयुक्स्यादकथितं तथा स्यान्नीहृकृष्वहाम्' ॥

गां दोग्धि पयः।

---

अकथितशब्दं व्याचष्टे—अपादानादिविशेषैरिति। अपादानं, संप्रदानम्, अधिकरणं, कर्म, करणं, कर्त्तेति कारकषट्कम्। तदेतद्यदा अपादानत्वादिविशेषात्मना न विवक्षितं, किन्तु संबन्धसामान्यात्मनैव विवक्षितं भवति तदा तत्कर्मसंज्ञकमित्यर्थः।

ननु नटसंबन्धि श्रवणमित्यर्थके 'नटस्य शृणोति' इत्यत्र नटस्यापि कर्मत्वं स्यात्, तस्य क्रियान्वयित्वेन कारकत्वात्, वस्तुतोऽपादानस्य संबन्धित्वेन विवक्षितत्वाच्चेत्याशङ्क्य परिगणयति—दुह्याजिति। वार्त्तिकार्थसंग्रहश्लोकोऽयम्। दुह् प्रपूरणे, टुयाचृ याच्ञायाम्, डुपचष् पाके, दण्ड दण्डनिपातने। रुधिर् आवरणे, प्रच्छ ज्ञीप्सायाम्, ( श्लोके 'प्रच्छी'त्यत्रेकार उच्चारणार्थः। इका निर्देशे तु 'प्रच्छ्या' इति संप्रसारणप्रसङ्गात्)। चिञ् चयने, ब्रूञ् व्यक्तायां वाचि, शासु अनुशिष्टौ, जि अभिभवे, मन्थ विलोडने, मुष स्तेये, णीञ् प्रापणे, हृञ् हरणे, कृष विलेखने, वह प्रापणे—इति षोडश धातूनां कर्मणा यद्युज्यते तदेवाऽकथितं कर्मेत्यर्थः।

गां दोग्धि पय इति। क्षरणानुकूलः क्षारणापरपर्यायो व्यापारो दोहनं

---

अकथितं च। अपादानादि विशेष से अविवक्षित जो कारक वह कर्मसञ्ज्ञक हो।

दुह्याच्। दुह आदि १६ धातुओं के कर्म के साथ जो युक्त है वही 'अकथित कर्म' होता है।

बलिं याचते वसुधाम् । अविनीतं विनयं याचते । तण्डुलानोदनं पचति ।

---

दुहेरर्थः । दोहना—( क्षारणा)ऽऽत्मकव्यापारप्रयोज्यक्षरणात्मकफलाश्रयत्वात्पयः कर्म । गौस्तु क्षरणे अपादानम् । तदपादानत्वमुपेक्ष्य, संबन्धित्वात्मना गोर्विवक्षायां कर्मत्वमनेन भवति । कर्मत्वाच्च शेषषष्ठीनिरासे द्वितीया भवति ।

बलिं याचते वसुधामिति । 'हरि'रिति शेषः । बलिर्नामाऽसुरविशेषः । 'मह्यं देही'ति प्रार्थना याचेरर्थः । दानानुकूलो 'मह्यं देही'ति शब्दप्रयोगरूपो व्यापार इति यावत् । बलिकर्तृकं वसुधाकर्मकं दानं प्रार्थयते इत्यर्थः । कर्त्तुः कर्मत्वविवक्षायां द्वितीयेति नव्याः । प्रार्थनारूपव्यापारजन्यदाने जनकतया आश्रयत्वात्, बलिसंबन्धि यद्वसुधाकर्मकं दानं तत् प्रार्थयत इत्यर्थ इति तु प्राचीनाः ।

अविनीतं विनयं याचत इति । अभ्युपगमप्रार्थना याचेरर्थः । यदा कश्चिद्बलवान् अविनीतो दुर्वलं कंचिद्बाधते तदा दुर्वलमधिकृत्येदं वाक्यं प्रवृत्तम् । अविनीतकर्तृकं विनयकर्मकमभ्युपगमं प्रार्थयते इत्यर्थः । कर्त्तुः कर्मत्वविवक्षायां द्वितीयेति नवीनाः । अविनीतसंबन्धिनमभ्युपगममिति तु प्राचीनाः ।

तण्डुलानोदनं पचतीति । विक्लित्त्यनुकूलव्यापारः पचेरर्थः । तप्तोदकप्रस्वेदनजनितप्रशिथिलावयवकत्वात्मकं मृदुविशदत्वं विक्लित्तिः । तथा च प्रकृतिभूतेषु तण्डुलेषु समवेतम् ओदनाख्यद्रव्यान्तरं निष्पद्यते इति स्थितिः । तत्र शिथिलावयवसंयोगविशेषात्मिका विक्लित्तिः समवायसंबन्धेन तण्डुलेषु वर्त्तते । ओदने तु जन्यजनकभावेन वर्त्तते । तण्डुलैः प्रकृतिभूतैरोदनं करोतीत्यर्थः । तण्डुलसमवायिकारणिकां तत्समवेतामोदनजनिकां विक्लित्तिं निर्वर्त्तयतीत्यर्थः । तत्र व्यापाररूपफलं—विक्लित्तिं—प्रति जन्यतया आश्रयत्वादोदनः प्रधानं कर्म । तादृश्यौदनजनिकां विक्लित्तिं प्रति समवायित्वेनाधारत्वात्तण्डुलानां गुणकर्मत्वमिति तद्विवक्षायां द्वितीया । तण्डुसम्बन्धिनीमोदनजनिकां विक्लित्तिं निर्वर्त्तयतीति तु प्राचीनाः ।

गर्गान् शतं दण्डयति। व्रजमवरुणद्धि गाम्। माणवकं पन्थानं पृच्छति। वृक्षमवचिनोति फलानि।

माणवकं धर्मं ब्रूते, शास्ति वा। शतं जयति देवदत्तम्।

दण्डयतीति। दण्डधातुर्ग्रहणानुकूलव्यापारार्थकः। ताडनादिना गर्गेभ्यः सुवर्णशतं गृह्णातीत्यर्थः। ताडनादिव्यापारप्रयोज्यग्रहणविषयत्वात् शतं प्रधानं कर्म। गर्गाणां तु तद्ग्रहणावधित्वाद् गुणकर्मत्वम्। ग्रहणं हि परकीयद्रव्यस्य परस्वत्वनिवृत्तिपूर्वकं स्वीकरणम्। तत्र स्वत्वविश्लेषे गर्गाणामवधित्वादपादानत्वम्, ग्रहणघटकताहशविश्लेषप्रतियोगिभूतस्वत्वाश्रयत्वात् कर्मत्वं च। तत्राऽपादानत्वमनादृत्य कर्मत्वविवक्षायां द्वितीया।

गामिति। निर्गमप्रतिबन्धपूर्वकयत्किञ्चिदधिकरणकचिरस्थित्यनुकूलबन्धनद्वारकपिधानादिव्यापारो रुधेरर्थः। गां निर्गमप्रतिबन्धपूर्वकं व्रजे चिरस्थितिकां करोतीत्यर्थः। अत्र चिरस्थितिं प्रति व्रजस्याधिकरणत्वमुपेक्ष्य गोद्वारा तत्स्थित्याश्रयतया कर्मत्वविवक्षायां द्वितीया। व्रजसम्बन्धिनं गोकर्मकं चिरस्थित्यनुकूलव्यापारं करोतीत्यर्थ इति प्राचीनाः।

माणवकं पन्थानं पृच्छतीति। जिज्ञासितव्यार्थज्ञानानुकूलः 'केन पथा गन्तव्य'मित्यभिलापादिरूपव्यापारः पृच्छेरर्थः। तत्र विषयतया ज्ञानरूपफलाश्रयत्वात् पन्थाः प्रधानं कर्म। तज्ज्ञानं प्रति जनकतया आश्रयत्वान्माणवको गुणकर्म। माणवकेन पन्थानं ज्ञातुमिच्छतीत्यर्थः। अत्र माणवके करणत्वाविवक्षायां द्वितीया। पथिविषयकं माणवकसंबन्धि ज्ञानमिच्छतीत्यर्थ इति प्राञ्चः।

वृक्षमवचिनोति फलानीति। वृक्षात् प्रच्याव्य फलान्यादत्त इत्यर्थः। प्रच्याव्यादानानुकूलव्यापारो लोष्टप्रहारादिरूपः—अवपूर्वकचिधातोरर्थः। तत्र प्रच्याव्यादानविषयत्वात् फलानि प्रधानकर्म। प्रच्यवावधित्वाद् वृक्षोऽपादानम्। तस्यापादानत्वमुपेक्ष्य कर्मत्वविवक्षायां द्वितीया, वृक्षस्य फलप्रच्यवाश्रयत्वेन कर्मत्वात्। प्रच्यवस्य विभागस्य द्विनिष्ठत्वात्। वृक्षसम्बन्धि यत् प्रच्युतफलादानं तत् करोतीत्यर्थ इति प्राचीना—इति वासुदेवदीक्षिताः।

माणवकं धर्मं ब्रूते शास्ति वेति। बोधनानुकूलव्यापारो ब्रूञोऽर्थः। माणवकाय धर्मं बोधयतीत्यर्थः। व्यापारप्रयोज्यबोधविषयत्वाद्धर्मः प्रधानकर्म।

सुधां क्षीरनिधिं मथ्नाति । देवदत्तं शतं मुष्णाति । ग्राममजां नयति, हरति, कर्षति, वहति वा ।

---

बोधविषयेण कर्मणाऽभिप्रेयमाणत्वान्माणवकः संप्रदानम् । तस्य संप्रदानत्वमुपेक्ष्य धर्मद्वारा बोधाश्रयत्वात् कर्मत्वविवक्षायां द्वितीया । धर्मविषयकं माणवकसंबन्धिनं बोधं जनयतीत्यर्थ इति तु प्राञ्चः । शासेस्तु धर्मं कुर्वित्यादिविधिघटितशब्दप्रयोगरूपो बोधानानुकूलव्यापारोऽर्थः । इतरत् प्राग्वत् ।

देवदत्तमिति । 'जि अभिभवे' । ग्रहणानुकूलताडनादिव्यापारो जयतेरर्थः । गर्गान् शतं दण्डयतीतिवद्व्याख्येयम् ।

मथ्नातीति ।'मन्थ विलोडने' । द्रवद्रव्यगतसारोद्भवनानुकूलो मन्थानदण्डभ्रमजनितसंक्षोभात्मक आस्फालपरपर्यायो व्यापारो मन्थेरर्थः । क्षीरोदधेः सकाशात् सुधां मन्थानदण्डभ्रमणेनोद्भावयतीत्यर्थः । व्यापारप्रयोज्योद्भवाश्रयत्वात् सुधा प्रधानकर्म । क्षीरोदधिस्तु उद्भवं प्रत्यपादानम् । तस्यापादानत्वमुपेक्ष्य सुधाद्वारा उद्भवाश्रयत्वात् कर्मत्वविवक्षायां द्वितीया । सुधाश्रयं क्षीरोदधिसम्बन्धिनमुद्भवं करोतीत्यर्थ इति तु प्राचीनाः ।

मुष्णातीति । अपश्यति देवदत्ते तदीयं सुवर्णशतं तस्मादपनीयाऽऽदत्ते इत्यर्थः । परस्वामिकद्रव्यस्य स्वामिनः सकाशादपनीयादानानुकूलः स्वाम्यज्ञातो निशासंचारभित्तिच्छिद्रकरणादिरूपव्यापारो मुषेरर्थः । व्यापारप्रयोज्यापनयनपूर्वकादानाश्रयत्वाच्छतं प्रधानकर्म । अपनयनावधित्वाद्देवदत्तोऽपादानम् । अपादानत्वमनादृत्यापनीयादेयद्रव्यस्वामितया देवदत्तस्यापनीयादानाश्रयत्वात् कर्मत्वविवक्षायां द्वितीया । शतकर्मकं देवदत्तसम्बन्ध्यपनीयादानं करोतीत्यर्थ इति तु प्राञ्चः ।

ग्राममजां नयतीति । ग्रामे अजां प्रापयतीत्यर्थः । 'णीञ् प्रापणे' । देशान्तरसंयोगानुकूलश्चलनगमनपर्यायो व्यापारः प्राप्तिः । नतु देशान्तरसंयोगमात्रम् । ग्रामं प्रति चलनदशायामेव—प्राप्नोति गच्छतीति प्रयोगदर्शनात् , चलनेन संयोगे जाते अजा ग्रामं गता, प्राप्तेत्येव दर्शनात् , तादृशप्राप्त्यनुकूलो दण्डोद्यमनमार्गान्तरगतिप्रतिबन्धपूर्वकयोग्यमार्गसंयोजनादिरूपव्यापारो नीधातोरर्थः । एतादृशव्यापारप्रयोज्यग्रामसंयोगतदनुकूलगमनोभयाश्रयत्वादजा प्रधान-

अर्थनिबन्धनेयं संज्ञा । बलिं भिक्षते वसुधाम् । माणवकं धर्मं भाषते, अभिधत्ते, वक्तीत्यादि ।

* अकर्मकधातुभिर्योगे देशः, कालो, भावो, गन्तव्योऽध्वा च कर्मसंज्ञक इति वाच्यम् । कुरून् स्वपिति ।

---

कर्म । तादृशाऽजाधारत्वाद् ग्रामोऽधिकरणम् । अधिकरणत्वमनादृत्य ग्रामस्यापि तथाविधसंयोगाश्रयत्वात् कर्मत्वविवक्षायां द्वितीया । अजाकर्मकं ग्रामसम्बन्धि नयनमित्यर्थं इति तु प्राचीनाः । एवमेव-ग्राममजां हरति, कर्षति, वहतीत्यपि व्याख्येयम् । तत्र देशान्तरसंयोगानुकूलमजाचलनं वाहकद्वारकं, तादृशचलनानुकूलव्यापारः स्कन्धग्रहणादिरूपो हरतेरर्थः । रज्जुबन्धनादिना बलाच्चालनं कृषेरर्थः । शकटाद्यारोपणादिरूपदेशान्तरसंयोगानुकूलप्राप्त्यनुकूलो वहेरर्थ इति विशेषः ।

अर्थनिबन्धनेयं संज्ञेति । कैयटादिभिस्तथा व्याख्यातत्वादिति भावः । तथा च एतदर्थकधात्वन्तरयोगेऽपि द्विकर्मत्वं लभ्यते ।

ननु कुरून्स्वपिति देवदत्तः, मासमास्ते इत्यादौ कुर्वादेरनुद्देश्यत्वात् 'कर्तुरीप्सिततमम्' इति कर्मत्वं न सम्भवति । कर्तुरेव स्वापादिक्रियाश्रयत्वात् 'तथायुक्तम्' इत्यपि न कर्मत्वमित्यत आह—अकर्मकधातुभिरिति । ग्रामसमूहात्मककुरुपञ्चालाऽवन्त्यादिपरोऽत्र देशशब्दः, नतु ग्रामादिरपि । तेन ग्रामे स्वपितीत्यत्र न द्वितीया । अत्र च 'अधिशीङ्स्थासां कर्म' इति लिङ्गम् । अन्यथा 'अधिशेते अधितिष्ठति अध्यास्ते वा वैकुण्ठं हरिः' इत्यत्राप्यनेनैव कर्मत्वसिद्धेस्तद्वैयर्थ्यं स्पष्टमेवेत्यभिप्रेत्योदाहरति—कुरून् स्वपितीति । 'देवदत्त' इति शेषः । कुरुषु निद्रां करोतीत्यर्थः । देवदत्तात्तु न तृतीया, तिङा अभिहितत्वादिति भावः । कुर्वादिशब्दा जनपदविशेषु स्वभावान्नित्यबहुवचनान्ताः ।

---

अर्थनिबन्धनेयं । दुहाद्यर्थक धातुओं के कर्म के साथ जो युक्त हो वह भी अकथित कर्म होता है ।

अकर्मकधातुभि । अकर्मक धातुओं के योग में देश, काल, भाव (क्रिया) और गन्तव्य मार्ग,—इनकी कर्म सञ्ज्ञा हो ।

मासमास्ते। गोदोहमास्ते। क्रोशमास्ते।

गतिबुद्धिप्रत्यवसानार्थशब्दकर्माऽकर्मकाणामणि कर्ता स णौ ।१।४।५२। गत्याद्यर्थानां, शब्दकर्मणामकर्मकाणां चाऽणौ यः कर्ता स णौ कर्म स्यात्।

'शत्रूनगमयत्स्वर्गं, वेदार्थं स्वानवेदयत्।
आशयच्चामृतं देवान्, वेदमध्यापयद्विधिम्' ॥

मासमास्ते इति। मासस्याधिकरणसंज्ञां बाधित्वा कर्मत्वम्।

गोदोहमिति। दोहनं दोहः। भावे घञ्। भावो धात्वर्थः। गोदोहनकालोऽत्र विवक्षितः। नचेह कालत्वादेव सिद्धिः शङ्क्या, अहोरात्रसमूहस्य मासादेरेव तत्र ग्रहणात्। गन्तव्यत्वेनाध्वनो विशेषितत्वान्नियतपरिमाणः क्रोशादिरेव गृह्यत इत्यभिप्रेत्योदाहरति—क्रोशमास्ते इति। गन्तव्यत्वविशेषणादध्वन्यास्ते इत्यत्र न भवति। अनत्यन्तसंयोगार्थमिदं वार्तिकम्। अत्यन्तसंयोगे तु 'कालाध्वनोरत्यन्तसंयोगे' इत्येव सिद्धम्।

गतिबुद्धिरिति। गतिश्च, बुद्धिश्च, प्रत्यवसानं च तानीति द्वन्द्वः। प्रत्यवसानं-भक्षणम्। गतिबुद्धिप्रत्यवसानानि अर्थो येषामिति विग्रहः। शब्दः कर्म येषां ते शब्दकर्माणः, तेषामिति बहुव्रीहिः। अविद्यमानं कर्म येषां ते अकर्मकाः। उभयत्रापि कर्मशब्दः कारकपरः। गतिबुद्धिप्रत्यवसानार्थाश्च, शब्दकर्माणश्च, अकर्मकाश्च तेषामिति द्वन्द्वः। अणौ कर्ता—अणिकर्ता। अत्र च यच्छब्दोऽध्याहार्यः। तदाह—गत्याद्यर्थानामिति। णौ अनुत्पन्ने सति शुद्धधातुवाच्यां क्रियां प्रति यः कर्ता स ण्यन्तधातुवाच्यां प्रयोजकव्यापारात्मिकां क्रियां प्रति कर्मसंज्ञकः स्यादित्यर्थः। क्रमेणोदाहरति—शत्रूनिति। 'शत्रूनगमयत् स्वर्गम्' इति गत्यर्थकस्योदाहरणम्। शत्रवो युद्धे मृताः स्वर्गमगच्छन्, तान्

गतिबुद्धि। गत्यर्थक, बुद्ध्यर्थक, भक्षणार्थक धातु, और शब्दकर्मक धातु तथा अकर्मक धातु-इन की अण्यन्त अवस्था का जो कर्ता वह ण्यन्त अवस्था में कर्मसञ्ज्ञक हो।

आसयत्सलिले पृथ्वीं यः, स मे श्रीहरिर्गतिः' ।

* नीवह्योर्न । नाययति, वाहयति वा भारं भृत्येन ॥ *नियन्तृ-

यो हरिः शस्त्राघातेनागमयत् स्वर्गं स श्रीहरिर्मे गतिरित्यत्रान्वयः । अत्र गमेर-ण्यन्तावस्थायां शत्रवो गमनक्रियां प्रति कर्तारः । स्वर्गस्तु कर्म । ण्यन्तावस्थायां तु णिज्वाच्यां प्रयोजकव्यापारात्मिकां शस्त्राघातक्रियां प्रति घातयिता हरिः कर्ता । शत्रवस्तु कर्म । शस्त्राघातजन्या या क्रिया स्वर्गप्राप्तिस्तदाश्रयत्वात् । एवं च हरिः प्रयोजककर्त्ता, शत्रवस्तु प्रयोज्यकर्त्तारः । स्वानवेदयदिति । बुद्ध्यर्थधातो-रुदाहरणम् । स्वशब्द आत्मीयपरः । स्वे = स्वकीया विधिप्रमुखाः, वेदार्थम-विदुः, तान् हरिर्वेदार्थमवेदयदित्यर्थः । अत्र स्वेषां प्रयोज्यकर्तॄणां कर्मत्वम् ।

देवानिति । शब्दकर्मण उदाहरणमेतत् । देवा अमृतमाश्नन्, तान् हरिराशय-दित्यर्थः । वेदमध्यापयद्विधिमिति । शब्दकर्मण उदाहरणमेतत् । विधिः= ब्रह्मा, वेदमधीतवान्, तं हरिरध्यापयदित्यर्थः । अत्र प्रयोज्यकर्तुर्विधेः कर्मत्वम् ।

आसयत्सलिले पृथ्वीमिति । अकर्मकस्योदाहरणम् । सलिले पृथ्वी आस्त, तां हरिरासयदित्यर्थः । अत्र पृथिव्याः प्रयोज्यकर्त्र्याः कर्मत्वम् । 'यः स मे श्रीहरिर्गतिः'रिति प्रतिवाक्यमन्वयः ।

नीवह्योर्नेति । 'णीञ् प्रापणे', 'वह प्रापणे' इत्यनयोर्ण्यन्तयोः प्रयोज्यकर्तुः 'गतिबुद्धी'त्युक्तं नेति वक्तव्यमित्यर्थः । नाययति वाहयति वेति । भृत्यो भारं नयति, वहति वा, तं प्रेरयतीत्यर्थः । अत्र प्रयोज्यकर्तुर्भृत्यस्य णिच्प्रकृत्यर्थनयनं, वहनं च प्रति कर्तुः, प्रयोजकव्यापारं प्रति कर्मत्वे निवृत्ते, णिच्प्रकृत्यर्थं प्रति कर्तृत्वस्यैव निरपवादत्वेनाऽवस्थानात्तृतीया बोध्या । यद्यपि नीवह्योः प्रापणमर्थः,

---

नीवह्योर्न । नी और वह धातु की अण्यन्तावस्था का जो कर्त्ता वह ण्यन्त अवस्था में कर्मसञ्ज्ञक नहीं हो ।

नियन्तृकर्तृकस्य । परन्तु नियन्तृ ( 'सूत' 'सारथि' ) कर्तृक वह् धातु की अण्यन्त अवस्था का जो कर्ता है, वह तो ण्यन्त अवस्था में कर्मसञ्ज्ञक होता ही है ।

कर्तृकस्य वहेरनिषेधः। वाहयति रथं वाहान्सूतः। *आदिखाद्योर्न। आदयति, खादयति वा अन्नं बटुना। *भक्षेरहिंसार्थस्य न। भक्षयत्यन्नं बटुना। अहिंसार्थस्य किम्?। भक्षयति बलीवर्दान् सस्यम्।

---

तथापि गत्यनुकूलव्यापारार्थके प्रापणे गतेर्विशेषणत्वेन प्रविष्टतया गत्यर्थत्वात् प्राप्तिरिति भावः।

वहेरनिषेध इति। एवंच तत्र प्रयोज्यकर्तुरुक्तस्य 'नीवह्योर्न' इति प्रतिषेधस्याऽभावे सति प्रयोज्यस्य कर्मत्वं वक्तव्यमिति फलितम्।

वाहयतीति। वाहाः=अश्वा वहन्ति, तान् सूतः प्रेरयतीत्यर्थः।

आदिखाद्योर्नेति। अद भक्षणे, खाद भक्षणे, अनयोः प्रयोज्यकर्तुः कर्मत्वं नेति वक्तव्यमित्यर्थः। प्रत्यवसानार्थकत्वात् प्राप्तिः। आदयति, खादयति वेति। अत्ति, खादति वा अन्नं बटुः, तं प्रेरयतीत्यर्थः।

भक्षेरिति। अहिंसार्थकस्य भक्षधातोः प्रयोज्यकर्तुः कर्मत्वं नेति वक्तव्यमित्यर्थः। 'गतिबुद्धि' इति सूत्रे अणौ कर्तुर्णौ कर्मत्वमुक्तम्। भक्षधातुस्तु चुरादित्वात् नित्यं स्वार्थिकण्यन्तः। तस्याऽणि कर्ता नास्त्येव। अतस्तस्य कर्मत्वनिषेधोऽनुपपन्नः, अप्रसक्तत्वादिति चेत्। न। अत एव निषेधाल्लिङ्गात् 'गतिबुद्धि'- इति सूत्रे णिग्रहणेन हेतुमतोणेरेव विवक्षितत्वात्। एवञ्च हेतुमण्णिचि अनुत्पन्ने सति, अण्यन्तभक्षिधातुवाच्यां क्रियां प्रति कर्तुः, हेतुमण्ण्यन्तवाच्यां क्रियां प्रति कर्मत्वमित्यर्थः पर्यवस्यतीति न दोषः।

भक्षयत्यन्नं बटुनेति। चुरादिण्यन्ताद्भक्षधातोर्हेतुमण्णिचि पूर्वणेर्लोपे, हेतुमण्ण्यन्तात्तिबादौ सति भक्षयतीति रूपम्। एवंच भक्षयत्यन्नं बटुः। खादतीत्यर्थः। तं प्रेरयतीति ण्यन्तस्यार्थः। सस्यमिति। क्षेत्रे प्ररूढमलूनं सस्यमिह विवक्षितम्। तस्य तदानीमन्तःप्रज्ञजीवत्वात्तद्भक्षणं हिंसैवेति भावः।

---

आदिखाद्योर्न। आदि और खादि धातु का प्रयोज्य कर्ता कर्मसञ्ज्ञक नहीं हो।

भक्षेरहिंसार्थस्य। अहिंसार्थक भक्ष धातु की अण्यन्तावस्था का जो कर्त्ता वह ण्यन्त अवस्था में कर्मसञ्ज्ञक नहीं हो।

* जल्पतिप्रभृतीनामुपसङ्ख्यानम् । जल्पयति, भाषयति [[1]वा धर्मं ] पुत्रं देवदत्तः । *दृशेश्च । दर्शयति हरिं भक्तान्।

[[1]सूत्रे ज्ञानसामान्यार्थानामेव ग्रहणं, न तु तद्विशेषार्थानामिति,–अनेन ज्ञाप्यते । तेन–स्मरति, जिघ्रत्यादीनां न। स्मारयति घ्रापयति देवदत्तेन ]।

*शब्दायतेर्न । शब्दाययति देवदत्तेन ।

---

जल्पतिप्रभृतीनामिति । एतेषामणौ यः कर्ता, स णौ कर्म स्यादिति वक्तव्यमित्यर्थः । जल्पयति भाषयति वेति । 'धर्म'मिति शेषः । पुत्रो धर्मं जल्पति, भाषते वा, तं देवदत्तः प्रेरयतीत्यर्थः । गत्यर्थादिष्वनन्तर्भावाद्वचनम् ।

दृशेश्चेति । 'दृशिर् प्रेक्षणे'। अस्याप्यणौ यः कर्ता, स णौ कर्म स्यादिति वक्तव्यमित्यर्थः । दर्शयतीति । हरिं भक्ताः पश्यन्ति, तान् गुरुः प्रेरयतीत्यर्थः ।

शब्दायतेर्नेति। शब्दं करोतीत्यर्थे 'शब्दवैरे'त्यादिना क्यङि, 'अकृत्सार्वधातुकयो'रिति दीर्घे, 'सनाद्यन्ताः' इति धातुत्वे श्तिपा निर्देशोऽयम् । 'शब्दाये'ति क्यङन्तधातोरणौ यः कर्त्ता स णौ कर्म नेति वक्तव्यमित्यर्थः ।

शब्दाययति देवदत्तेनेति। शब्दायते देवदत्तः, तं यज्ञदत्तः प्रेरयतीत्यर्थः । देवदत्तस्य कर्मत्वाऽभावात् प्रयोज्यकर्तृत्वमादाय तृतीयैव ।

---

जल्पति । जल्प आदि धातुओं का अण्यन्तावस्था का जो कर्ता, वह ण्यन्त अवस्था में कर्मसञ्ज्ञक हो ।

दृशेश्च । ज्ञानसामान्यार्थक दृश धातु का अण्यन्तावस्था का कर्ता ण्यन्तावस्था में कर्मसंज्ञक हो ।

शब्दायतेर्न । क्यङन्त शब्दाय धातु का जो अण्यन्त अवस्था का कर्ता वह ण्यन्त अवस्था में कर्मसञ्ज्ञक नहीं हो ।

---

१ क्वचिन्न ।

हृक्रोरन्यतरस्याम् ।१।४।५३। हृक्रोरणौ यः कर्त्ता, स णौ वा कर्म स्यात् । हारयति, कारयति भृत्येन, भृत्यं वा कटम् ।

* अभिवादिदृशोरात्मनेपदे वेति वाच्यम् । अभिवादयते, दर्शयते देवं भक्तेन, भक्तं वा ।

अधिशीङ्स्थाऽऽसां कर्म ।१।४।४६। अधिपूर्वाणामेषामाधारः कर्म स्यात् । अधिशेते, अधितिष्ठति, अध्यास्ते वा वैकुण्ठं हरिः ।

---

हृक्रोरिति । हृ च, कृ च हृकरौ, तयोरिति विग्रहः । हारयति, कारयति वेति । हरति, करोति वा कटं भृत्यः, तं हारयति कारयतीत्यर्थः । अत्र प्रयोज्यकर्तुर्भृत्यस्य कर्मत्वविकल्पः ।

अभिवादीति । हेतुमण्ण्यन्तस्याभिपूर्वकवदधातोर्दृशिप्रकृतिकण्यन्तस्य चात्मनेपदिनोऽणौ कर्ता णौ कर्म वेत्यर्थः । अभिवादयते इति । अभिवदति=नमस्करोति देवं भक्तः, तं गुरुः प्रेरयतीत्यर्थः । कर्तृगामिनि फले 'णिचश्च' इत्यात्मनेपदम् । अत्र भक्तस्य प्रयोज्यकर्तुः कर्मत्वविकल्पः ।

अधिशीङ् । शीङ्, स्था, आस् एषां द्वन्द्वः । अधिपूर्वाः शीङ्स्थाऽऽस इति विग्रहे शाकपार्थिवादित्वादुत्तरपदलोपः । तदाह—अधिपूर्वाणामिति । अधिकरणसंज्ञापवादोऽयम् । अधिशेते इति । अधिशेते वैकुण्ठं हरिः, अधितिष्ठति, अध्यास्ते वैकुण्ठं हरिरित्यन्वयः । अधिस्तु सप्तम्यर्थस्याधारस्य द्योतकः । वैकुण्ठे शेते, तिष्ठत्यास्ते वेत्यर्थः ।

---

हृक्रोरन्य । हृ और कृ धातु का अण्यन्त अवस्था का जो कर्त्ता, वह ण्यन्त अवस्था में कर्मसञ्ज्ञक हो, विकल्प करके ।

अभिवादि । आत्मनेपदपरक अभिवादि और दृश धातु का जो अण्यन्त अवस्था का कर्त्ता, वह ण्यन्त अवस्था में विकल्प करके कर्मसञ्ज्ञक हो ।

अधिशीङ । अधिपूर्वक शीङ्, स्था और आस् धातु का जो आधार वह कर्मसञ्ज्ञक हो ।

अभिनिविशश्च ।१।४।४७। 'अभिनी'त्येतत्सङ्घातपूर्वस्य विशतेराधारः कर्म स्यात् । अभिनिविशते सन्मार्गम् । [ [1]"परिक्रयणे सम्प्रदान-मिति‌सूत्रादिह मण्डूकप्लुत्याऽन्यतरस्याङ्ग्रहणमनुवर्त्य व्यवस्थित-विभाषाश्रयणात्-] क्वचिन्न—पापेऽभिनिवेशः ।

उपान्वध्याङ्वसः ।१।४।४८। उपादिपूर्वस्य वसतेराधारः कर्म स्यात् । उपवसति, अनुवसति, अधिवसति, आवसति वा वैकुण्ठं हरिः ।

* अभुक्त्यर्थस्य तु न । वने उपवसति ।

'उभसर्वतसोः कार्या, धिगुपर्यादिषु त्रिषु ।
द्वितीयाऽऽम्रेडितान्तेषु, ततोऽन्यत्रापि दृश्यते' ॥

---

अभिनिविशश्च । आधार इति, कर्मेति चानुवर्तते । अभिनीति सङ्घातग्रहणम् । सन्मार्गमिति । तत्र आग्रहवानित्यर्थः । अप्रतिहप्रवृत्तिमानिति यावत् । नन्वेवं सति पापेऽभिनिवेश इत्यत्रापि कर्मत्वात् द्वितीया स्यादित्यत आह—परिक्रयणे इति । सूत्रादन्यतरस्यांग्रहणमनुवर्त्य व्यवस्थितविभाषाश्रयणात् क्वचिन्नेत्यन्वयः । 'एश्वर्येष्वभिनिविष्टानाम्' इति समर्थसूत्रे भाष्यप्रयोगोऽत्र मानम् । उपान्वध्याङ्वसः । उप अनु अधि आङ् इत्येतेषां द्वन्द्वः । उपान्वध्याङ्पूर्वो वस् इति विग्रहे शाकपार्थिवादित्वात् समासः । तदाह—उपादिपूर्वस्येति । उपवसतीत्यादि । वैकुण्ठे वसतीत्यर्थः । उपसर्गा आधारत्वद्योतकाः । उभसर्वतसोरिति । वार्तिकमेतत् । उभशब्द-सर्वशब्दप्रकृतिकतसन्तयोः

---

अभिनिविशश्च । 'अभिनि' सङ्घातपूर्वक जो विश् धातु, उसका जो आधार, वह कर्मसञ्ज्ञक हो ।

उपान्वध्याङ् । उप, अनु, अधि और आङ् पूर्वक जो वस् धातु का आधार, वह कर्मसञ्ज्ञक हो ।

अभुक्त्यर्थस्य न । अभुक्त्यर्थक ( भोजननिवृत्त्यर्थक ) वस् धातु का आधर कर्मसञ्ज्ञक नहीं हो ।

उभसर्वतसोः । तसन्त उभ और सर्व शब्द के प्रयोग में द्वितीया हो ।

---

1 क्वचिन्न ।

उभयतः कृष्णं गोपाः । सर्वतः कृष्णम् । धिक्कृष्णाऽभक्तम् । उपर्युपरि लोकं हरिः । अध्यधि लोकम् । अधोऽधो लोकम् ॥

*अभितःपरितःसमयानिकषाहाप्रतियोगेऽपि । अभितः कृष्णम् ।

---

प्रयोगे सति द्वितीया कार्येत्यर्थः । धिगिति । धिक्शब्दस्य प्रयोगे सति द्वितीया कार्या । 'प्रकृतिवदनुकरणम्' इत्यव्ययत्वात्सुपो लुक् । उपर्यादिष्वित्यनेन 'उपर्यध्यधसः सामीप्ये' इति सूत्रोपात्तान्यव्ययानि गृह्यन्ते । 'द्विरुक्तस्य परमाम्रेडितम्', तदन्तेषु-कृतद्विर्वचनेष्विति यावत् । तथाच कृतद्विर्वचनेषु उपर्यादिषु त्रिषु प्रयुज्यमानेषु द्वितीयेत्यर्थः ।

तत इति । उक्तप्रदेशेभ्योऽन्यत्रापि द्वितीया दृश्यत इत्यर्थः ।

उभयतो गोपा इति । कृष्णस्य पार्श्वद्वयेऽपीत्यर्थः । आद्यादित्वात्तसिः । 'उभयोऽन्यत्र' इत्ययच् । षष्ठ्यर्थे द्वितीया । सर्वतः कृष्णमिति । कृष्णस्य सर्वेषु पार्श्वेषु गोपा इत्यर्थः । धिक् कृष्णाऽभक्तमिति । धिगिति निन्दायाम् । कृष्णाऽभक्तस्य निन्देत्यर्थः । केचित्तु कृष्णाभक्तो निन्द्य इत्यर्थः । प्रथमार्थे द्वितीयेत्याहुः । धिङ्मूर्खेत्यत्र तु निषिद्धाचरणमित्यध्याहार्यम् । उपर्युपरीति । 'उपर्यध्यधसः सामीप्ये' इति द्विर्वचनम् । लोकस्य समीपे उपरि हरिरस्तीत्यर्थः । अध्यधीति । लोकस्य समीपदेशे हरिरस्तीत्यर्थः ।

अधोऽध इति । लोकस्य समीपे अधो हरिरस्तीत्यर्थः ।

अभितःपरित इति । 'ततोऽन्यत्रापि दृश्यते' इत्यस्य प्रपञ्चोऽयम् । 'योगेऽपी'त्यनन्तरं 'द्वितीये'ति शेषः ।

अभितः कृष्णमिति । 'गोपा' इति शेषः । कृष्णस्य पार्श्वद्वयेऽपीत्यर्थः ।

---

और-धिक् शब्द के योग में भी द्वितीया हो । और-कृत द्विर्वचन जो 'उपरि' 'अधि' और 'अधस्' उनके योग में भी द्वितीया हो ।

और-प्रयोग के अनुसार से इनसे अन्यत्र भी कहीं द्वितीया हो जाती है ।

अभितः परितः । 'अभितः' आदि शब्दों के योग में भी द्वितीया हो ।

परितः कृष्णम्। ग्रामं [1]समया। निकषा लङ्काम्। हा कृष्णाऽभक्तम्। 'बुभुक्षितं न प्रतिभाति किञ्चित्'।

अन्तरा-ऽन्तरेण-युक्ते।२।३।४। [1]आभ्यां योगे द्वितीया स्यात्। अन्तरा त्वां मां [2]वा हरिः। [3]अन्तरेण हरिं न सुखम्।

कर्मप्रवचनीयाः।१।४।८३। इत्यधिकृत्य। अनुर्लक्षणे।१।४।८४।

---

परितः कृष्णमिति। कृष्णस्य सर्वेषु पार्श्वेषु गोपा इत्यर्थः। 'पर्यभिभ्यां च' इति तसिल्। ग्रामं समया। निकषेति। 'समया' 'निकषा' इति च आकारान्ते अव्यये। 'ग्राम'मित्यस्य प्रत्येकमन्वयः। ग्रामस्य समीपे इत्यर्थः। 'निकषाऽन्तिके' इति, 'समयाऽन्तिकमध्ययोः' इति चाऽमरः। 'विलङ्घ्य लङ्कां निकषा हनिष्यति' इति माघः।

हा कृष्णाभक्तमिति। हा इत्याकारन्तमव्ययं खेदे। 'हा विषादशुगार्त्तिषु' इत्यमरः। [ तदाह—तस्य शोच्यतेत्यर्थ इति। कृष्णाभक्तः शोच्य इत्यर्थं इत्यन्ये ]। प्रतियोगे उदाहरति—बुभुक्षितमिति। क्षुधार्त्तस्य किंचिदपि न स्फुरतीत्यर्थः। 'भा दीप्तौ'। इह तु उपसर्गबलात् स्फुरणे वर्त्तते।

अन्तरा-ऽन्तरेण-युक्ते। अन्तरा इत्याकारान्तमव्ययं, नतु टाबन्तम्। अन्तरेणेत्यप्यव्ययमेव, नतु तृतीयान्तमिति भाष्ये स्थितम्। अन्तरा त्वां मां हरिरिति। तव च, मम च मध्ये हरिरित्यर्थः। 'अन्तरा मध्ये' इत्यरः। अन्तरेण हरिमिति। हरेर्वर्जने सुखं नास्तीत्यर्थः। 'पृथग्विनाऽन्तरेणर्ते हिरुङ्नाना च वर्जने' इत्यमरः। इत्यधिकृत्येति। 'प्राग्रीश्वरान्निपाताः' इति पर्यन्तमिति बोध्यम्।

---

अन्तराऽन्तरेण। 'अन्तरा' और 'अन्तरेण' इन शब्दों के योग में द्वितीया हो।

कर्मप्रवचनीयाः। यह अधिकार है।

अनुर्लक्षणे। लक्षण द्योत्य हो तो अनुकी कर्म प्रवचनीय सञ्ज्ञा हो।

---

१ 'समया निकषा ग्रामम्' पा०। २ क्वचिन्न। ३ 'हरिमन्तरेण'।

लक्षणे द्योत्येऽनुः कर्मप्रवचनीयसंज्ञः [1]स्यात्। गत्युपसर्गसंज्ञापवादः।

**कर्मप्रवचनीययुक्ते द्वितीया ।२।३।८।** [ कर्मप्रवचनीययोगे द्वितीया स्यात ]। जपमनु प्रावर्षत् । हेतुभूतजपोपलक्षितं वर्षणमित्यर्थः।

[[2]जपे वर्षणलक्षणत्वञ्च-वर्षणज्ञानाऽनुकूलज्ञानविषयत्वम्। पराऽपि 'हेता'विति तृतीयाऽनेन बाध्यते, 'लक्षणेत्थम्भूते'त्यादिना सिद्धे पुनः-संज्ञाविधानसामर्थ्यात् ]।

---

अनुर्लक्षणे। लक्षणे द्योत्ये इति। लक्ष्यलक्षणभावसम्बन्धे द्योत्ये इत्यर्थः।

गत्युपसर्गसंज्ञापवाद इति। अनेन क्रियायोगे एव कर्मप्रवचनीयसंज्ञेति सूचितम्। 'कर्मप्रवचनीया इति महासंज्ञाकरणसामर्थ्यादन्वर्थत्वम्। कर्मेति क्रियोच्यते, तां प्रोक्तवन्तः-कर्मप्रवचनीयाः। भूते कर्त्तरि बाहुलकादनीयर्प्रत्ययः, ततश्च क्रियामेव न द्योतयन्ति, किंतु क्रियानिरूपितसम्बन्धविशेषं द्योतयन्ति। एवं च अनुप्रत्यादिषु क्रियानिरूपितसम्बन्धस्य द्योत्यत्वेन अन्वयात्, तत्र गत्युपसर्गसंज्ञयोः प्राप्तिर्बोध्या।

जपमन्विति। कदा पर्जन्योऽवर्षदिति प्रश्ने—उत्तरमिदम्। अत्र वृष्टिकाल उपदेश्यः, स च दुर्ज्ञानत्वात् 'शाखाग्रं प्रति द्विकलश्चन्द्र' इतिवत् प्रज्ञानं किंचिदवलम्ब्यैव ज्ञाप्यः। जपोऽत्र प्रज्ञानम्। तत्र जपकाले पर्जन्यः प्रावर्षदिति हेतुभूतजपो ह्यत्र लक्षणम्। हेतुत्वं च पूर्वकालवृत्तित्वघटितम्। एवं च वर्षहेतुभूतवरुणमन्त्रजपोत्तरकाले पर्जन्यः प्रावर्षदित्युत्तरं पर्यवस्यति। तत्र लक्षणत्वं, हेतुत्वं चेति द्वयं द्वितीयार्थः। तदुभयमनुना द्योत्यते। लक्षणत्वं च—ज्ञानजनकज्ञानविषयत्वम्। जपज्ञानेन तदुत्तरकालविशिष्टा वृष्टिर्ज्ञाप्यते। ततश्च जपात्मकहेतुज्ञानजन्यज्ञानविषयो वर्षणमिति बोधः। तदाह—हेतुभूतेति। अनभिहिताधिकारान्न पर्जन्यात्तृतीया, तस्य तिङा अभिहितत्वात्।

---

कर्मप्रवचनीययुक्ते। कर्मप्रवचनीय के योग में द्वितीया हो

---

१ क्वचिन्न। २ अयं पाठो लिखिते न दृश्यते।

तृतीयार्थे ।१।४।८५। अनुरुक्तसंज्ञः [स्यात्[1]]। नदीमन्ववसिता सेना । नद्या सह सम्बद्धेत्यर्थः । [ 'षिञ्[2] बन्धने' । क्तः ]।

हीने ।१।४।८६। [ [1]हीने द्योत्ये ] अनुरुक्तसंज्ञः[3] [ [2]स्यात् ]। अनु हरिं सुराः[4]। हरेर्हीना इत्यर्थः। उपोऽधिके च ।१।४।८७। अधिके, हीने च उपेत्यव्ययं प्राग्वत्। अधिके—सप्तमी वक्ष्यते। हीने—उप हरिं सुराः। लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रतिपर्यनवः ।१।४।९०। [ [1]एष्वर्थेषु प्रतिपर्यनव ] उक्तसंज्ञाः स्युः। लक्षणे-वृक्षं

तृतीयार्थे। अनुरित्यनुवर्त्तते। 'कर्मप्रवचनीयाः' इत्यधिकृतम्। सम्बद्धेतीति। साहित्यं द्वितीयार्थः। अनुस्तद्द्योतक इति भावः। प्राग्वदिति। कर्मप्रवचनीय-संज्ञ इत्यर्थः। अनु हरिं सुरा इति। अत्र निकृष्टभावोऽनुद्योत्यो द्वितीयार्थः। तदाह—हरेर्हीना इत्यर्थ इति। 'हरे'रिति षष्ठी प्रतियोगितायाम्, हरिप्रति-योगिकनिकर्षवन्त इत्यर्थः।

उपोऽधिके च। चकारात् 'हीने' इति समुच्चीयते। तदाह—अधिके, हीने चेति। आधिक्ये, निकर्षे चेत्यर्थः। वक्ष्यत इति। 'यस्मादधिकम्' इत्यनेन कर्मप्रवचनीयसंज्ञाकार्यं सप्तमी वक्ष्यते इत्यर्थः।

हीने इति। 'उदाहरणं वक्ष्यते' इति शेषः। उप हरिं सुरा इति। हरेर्हीना इत्यर्थः। लक्षणेत्थंभूतेति। लक्षणं—ज्ञापकम्। अयंप्रकार इत्थं, तं

तृतीयार्थे। तृतीयार्थ में अनुकी कर्मप्रवचनीय सञ्ज्ञा हो।

हीने। हीन अर्थ द्योत्य हो तो 'अनु' की कर्मप्रवचनीय सञ्ज्ञा हो।

उपोऽधिके च। अधिक और हीन अर्थ द्योत्य हो तो 'उप' इस अव्यय की कर्मप्रवचनीय संज्ञा हो।

लक्षणेत्थम्भूता। लक्षणादि अर्थों में-प्रति, परि, अनुकी कर्मप्रवचनीय सञ्ज्ञा हो।

१ शेषपूरणमेतत्। २ क्वचिन्न।

३ 'अनुः प्राग्वत्' इत्येव क्वचिद् वृत्तिः। ४ 'हरिमनु सुराः'।

प्रति, पर्यनु वा विद्योतते विद्युत्। इत्थंभूताख्याने—भक्तो विष्णुं प्रति, पर्यनु वा। भागे—लक्ष्मीर्हरिं प्रति, पर्यनु वा। [ हरेर्भाग [1]इत्यर्थः ]। वीप्सायाम्—वृक्षं वृक्षं प्रति पर्यनु वा—सिञ्चति। एषु किम्?। परिषिञ्चति।

अभिरभागे ।१।४।९१। भागवर्जे लक्षणादावभिरुक्तसंज्ञः स्यात्। हरिमभिवर्त्तते। भक्तो हरिमभि। देवं देवमभि सिञ्चति। अभागे

प्राप्तः—इत्थंभूतः, तस्याख्यानमुपपादकम् = इत्थंभूताख्यानम्। भागः—स्वीकीयोंऽशः; तत्स्वामी विवक्षितः। व्याप्तुं=कार्त्स्न्येन सम्बन्धुमिच्छा—वीप्सा। लक्षणं च इत्थंभूताख्यानं च भागश्च वीप्सा चेति द्वन्द्वाद्विषयसप्तमी। तदाह—एष्विति।

भक्तो विष्णुं प्रतीति। 'भज सेवायाम्'। भक्तिरस्त्यस्येति भक्तः। मत्वर्थीयोऽर्श आद्यच्। विषयतासम्बन्धः प्रत्यादिद्योत्यो द्वितीयार्थः। तस्य भक्तावेकदेशेऽन्वयः। विष्णुविषयकभक्तिमानित्यर्थः। अत्र भक्तो भक्तिरूपं प्रकारविशेषं प्राप्तत्वात्—इत्थंभूतः। तस्य विष्णुविषयकतया उपपाद्यत्वाद्विषयतासम्बन्धस्तदुपपादकः प्रतिद्योत्य इति ज्ञेयम्। लक्ष्मीर्हरिं प्रतीति। अत्र स्वामित्वं द्वितीयार्थः, प्रत्यादिद्योत्यः। तदाह—हरेर्भाग इत्यर्थ इति। हरेः स्वभूतेति यावत्।

वृक्षं वृक्षं प्रतीति। 'नित्यवीप्सयोः' इति द्विर्वचनम्। एषु किमिति। 'लक्षणेत्थंभूताख्यानभागवीप्सासु' इति किमर्थमित्यर्थः।

परिषिञ्चतीति। 'अग्निमित्यादि शेषः। अत्र लक्षणाद्यभावात् कर्मप्रवचनीयत्वाऽभावे 'उपसर्गात्सुनोति' इति षत्वमिति भावः।

लक्षणादाविति। आदिना इत्थंभूताख्यानवीप्सयोः संग्रहः। लक्षणे उदाहरति—हरिमभि वर्त्तत इति। विजयः क्वेति प्रश्ने इदमुत्तरम्। लक्ष्यभावोऽभिद्योत्यो द्वितीयार्थः। हरिलक्ष्यो जय इत्यर्थः। भक्तो हरिमभीति। इत्थं·

अभिरभागे। भागवर्जे लक्षणादि अर्थों में 'अभि' की कर्मप्रवचनीय सञ्ज्ञा हो।

१ क्वचिन्न।

किम् ? । यदत्र ममाभिष्यात्तद्दीयताम् ॥

सुः पूजायाम् ।१।४।९४। [ [1]सुः पूजायामुक्तसञ्ज्ञः स्यात् ] । सुसिक्तम् । सुस्तुतम् । अनुपसर्गत्वान्न षः । पूजायां किम् ? । सुषिक्तं किं तवाऽत्र । क्षेपोऽयम् ।

अतिरतिक्रमणे च ।१।४।९५। [ [1]अतिक्रमणे], चात्पूजायामति-

---

भूताख्याने उदाहरणमिदम् । विषयतासम्बन्धोऽभिद्योत्यो द्वितीयार्थः । हरिविषयकभक्तिमानित्यर्थः । वीप्सायामुदाहरति—देवं देवमभि सिञ्चतीति । कार्त्स्न्यसम्बन्धात्मिका व्याप्तिर्द्वितीयार्थः, अभिद्योत्यश्च । कृत्स्नं देवमभिसिञ्चतीत्यर्थः । षत्वाऽभावादि पूर्ववत् ।

यदत्रेति । बहूनां तण्डुलादिकं द्रव्यं यत्र संसृष्टं तत्रेदं वाक्यम् । स्वस्वामिभावः षष्ठ्यर्थः, अभिस्तद्द्योतकः । अत्र संसृष्टद्रव्ये यद्वस्तु मम स्वभूतं स्यात्तन्मह्यं दीयतामित्यर्थः । स्यादित्यस्तेर्लिङि रूपम् । अत्र मम भाग इत्यर्थतः पर्यवसानादभाग इति कर्मप्रवचनीयत्वपर्युदासादुपसर्गत्वस्य निर्बाधत्वात् 'उपसर्गप्रादुर्भ्यामस्तिर्यच्परः' इति षत्वम् ।

सुः पूजायामिति । 'कर्मप्रवचनीय' इति शेषः । सोः कर्मप्रवचनीयत्वे प्रयोजनमाह—अनुपसर्गत्वान्न ष इति । 'उपसर्गात् सुनोति' इत्यनेनेति शेषः । पूजायां किमिति । सुना पूजाया नित्यं प्रतीतेः प्रश्नः । तवात्रेति । त्वया सम्यक् सिक्तं, किन्तु अत्रास्मिन् सुसेके कृते सति सेक्तुस्तव किं, न किञ्चिदपीत्यर्थः । क्षेपोऽयमिति । निन्दाऽत्र गम्यत इत्यर्थः । सेकक्रियाकर्तुः पूज्यत्वे गम्य एवात्र कर्मप्रवचनीयत्वम् । तदभावात् 'उपसर्गात् सुनोति' इति षत्वमिति भावः ।

अतिरतिक्रमणे च । चकारात् पूजायामिति समुच्चीयत इत्याह—पूजायां

---

सुः पूजायां । पूजा अर्थ में 'सु' की कर्मप्रवचनीय सञ्ज्ञा हो ।

अतिरति । अतिक्रमण और पूजा अर्थ में 'अति' की कर्मप्रवचनीय संज्ञा हो ।

---

1 शेषपूरणमेतत् ।

रुक्तसंज्ञः [ [1]स्यात् ]। अति देवान्कृष्णः।

**कालाध्वनोरत्यन्तसंयोगे** ।२।३।५। [1]इह[=[2]कालाध्वनोर त्यन्तसंयोगे] द्वितीया [[2]स्यात् ]। मासं कल्याणी। मासमधीते। मासं गुडधानाः। क्रोशं कुटिला नदी। क्रोशमधीते। क्रोशं गिरिः। अत्यन्तसंयोगे किम्? । मासस्य द्विरधीते [ [1]छात्रः ]। क्रोशस्यैकदेशे पर्वतः।

---

चेति। अतिक्रमणमुचितादाधिक्यम्। अति देवान् कृष्ण इति। प्रपञ्चसंरक्षणविषये देवेभ्योऽधिकः कृष्ण इत्यर्थः। देवानां पूज्य इति वा। आद्येऽर्थे 'कुगतिप्रादयः' इति समासो न, 'स्वती पूजाया'मेवेति नियमात्। द्वितीये त्वनभिधानान्न। इहेति। कालाध्वनोरत्यन्तसंयोगे इत्यर्थः। निरन्तरसंयोगः—अत्यन्तसंयोगः। गुणक्रियाद्रव्यैः कालाध्वनोरविच्छिन्नसंयोगे गम्ये द्वितीया स्यादित्यर्थः। सा च कालाध्वभ्यामेव भवति, श्रुतत्वात्। तत्र गुणात्यन्तसंयोगे उदाहरति—मासं कल्याणीति। 'भवती'ति शेषः। त्रिंशद्दिनात्मको मासः। तस्मिन्नविच्छिन्नमङ्गलवतीत्यर्थः।

क्रियात्यन्तसंयोगे उदाहरति—मासमधीते इति। त्रिंशद्दिनात्मके प्रतिदिनमुचिते काले निरन्तरमधीत इत्यर्थः।

द्रव्यात्यन्तसंयोगे उदाहरति—मासं गुडधाना इति। मासे प्रतिदिनं निरन्तरं गुणधानाः सन्तीत्यर्थः। कालात्यन्तसंयोगमुदाहृत्य अध्वात्यन्तसंयोगे उदाहरति—क्रोशं कुटिला नदीत्यादि।

मासस्य द्विरिति। त्रिंशद्दिनात्मके मासे द्वयोर्दिनयोः प्रतिदिनमेकवारमित्येवं द्विरधीत इत्यर्थः। 'द्वित्रिचतुर्भ्यः सुच्' इति द्विशब्दात् कृत्वोऽर्थे सुच्। 'कृत्वोऽर्थप्रयोगे कालेऽधिकरणे' इति षष्ठी। शेषषष्ठीति केचित्।

---

कालाध्वनो। कालवाचक और अध्व (मार्ग) वाचक से अत्यन्त संयोग में द्वितीया हो।

---

१ क्वाचित्कः पाठः। २ शेषपूरणमेतत्।

स्वतन्त्रः कर्त्ता ।१।४।५४। [ [1]धातूपात्तक्रियायां स्वातन्त्र्येण विवक्षितोऽर्थः कर्त्ता स्यात्] । साधकतमं करणम् ।१।४।४२। क्रियासिद्धौ प्रकृष्टोपकारकं करणसंज्ञं [[2]स्यात्] । कर्त्तृकरणयोस्तृतीया ।२।३।१८। अनभिहिते कर्त्तरि, करणे च तृतीया स्यात् । रामेण बाणेन हतो वाली । *प्रकृत्यादिभ्य उपसंख्यानम् । प्रकृत्या चारुः ।

क्रियासिद्धाविति । क्रियोत्पत्तावित्यर्थः । कारकाधिकारलभ्यमिदम् । प्रकृष्टोपकारकमिति । कर्त्रा क्रियायां जनयितव्यायां यत् सहायभूतं तदुपकारकमित्युच्यते । साधकतममित्यस्य व्याख्यानमेतत् । साधकशब्दात् 'अतिशायने तमप्' इति तमप् । अतिशयितं साधकतममिति भावः । यद्व्यापारानन्तरं क्रियानिष्पत्तिः–तत्–प्रकृष्टम् । कर्तृव्यापाराधीनयद्व्यापाराऽव्यवहिता क्रियानिष्पत्तिः तत्तस्यां करणमिति यावत् । 'अनभिहिते' इत्यधिकारादाह–अनभिहित इति । रामेणेति । रामकर्तृकबाणकरणकहिंसाक्रियाविषयो वालीत्यर्थः ।

प्रकृत्यादिभ्य उपसङ्ख्यानमिति । 'तृतीयाया' इति शेषः । उपपदविभक्तिरियम् । यथायोगं सर्वविभक्त्यपवादः ।

प्रकृत्या चारुरिति । सम्बन्धस्तृतीयार्थः । प्रकृतिः–स्वभावः, तत्सम्बन्धिचारुत्ववानित्यर्थः । यदा तु स्वभावेनैवायमभिरूपो न त्वलंकारादिनेति करणान्तरव्युदासाय प्रकृतेः करणत्वं विवक्ष्यते, तदा 'कर्तृकरणयोः' इत्येव सिद्धमिति भाष्यम् ।

साधकतमं । क्रिया की सिद्धि में जो प्रकृष्ट ( अत्यन्त ) उपकारक है, वह करण संज्ञक हो ।

कर्त्तृकरणयो । अनभिहित कर्त्ता और करण में तृतीया हो ।

प्रकृत्यादिभ्यः । प्रकृत्यादि से ( अभेद अर्थ में ) तृतीया हो ।

१ क्वाचित्कः पाठः । क्वचित्तु–'स्वतन्त्रः कर्त्तेति कर्त्तृसञ्ज्ञा' इत्येव पाठः ।

२ क्वचिन्न ।

प्रायेण याज्ञिकः। गोत्रेण गार्ग्यः। समेनैति। विषमेणैति। द्विद्रोणेन धान्यं क्रीणाति। पञ्चकेन पशून्गृह्णाति। सुखेन, दुःखेन [ वा[1] ] यातीत्यादि।

दिवः कर्म च ।१।४।४३। दिवः साधकतमं [[1]कारकं] कर्मसंज्ञं स्यात्। चात्करणसंज्ञम्। अक्षैरक्षान्वा दीव्यति।

सहयुक्तेऽप्रधाने ।२।३।१९। सहार्थेन युक्तेऽप्रधाने तृतीया

---

प्रायेण याज्ञिक इति। प्रायशब्दो बहुलवाची। बहुलाचारसम्बन्धि-याज्ञिकत्ववानित्यर्थः। सम्बन्धश्च—ज्ञाप्यज्ञापकभावः। बहुलेन आचारेण हेतुना ज्ञाप्ययाज्ञिकत्ववानित्यर्थे तु 'इत्थंभूतलक्षणे' इत्येव सिद्धम्। बहुलेन आचारेण सम्पन्नयाज्ञिकत्ववानित्यर्थे तु करणत्वादेव सिद्धमिति भाष्यम्। गोत्रेण गार्ग्य इति। गोत्रमस्य गार्ग्य इत्यर्थः। अत्र प्रथमा प्राप्ता। गोत्रेण हेतुना ज्ञाप्य-गार्ग्यत्ववानित्यर्थे तु 'इत्थंभूतलक्षणे' इत्येव सिद्धम्।

समेन, विषमेणैतीति। क्रियाविशेषणमेतत्। समं, विषमं च गमनं करोतीत्यर्थः। कर्मणि द्वितीया प्राप्ता। 'समेन, विषमेण वा पथा एती'त्यर्थे तु करणत्वादेव सिद्धम्। क्रीणातीति। द्वयोर्द्रोणयोः समाहारो—द्विद्रोणम्। पात्रादित्वान्न स्त्रीत्वम्। द्विद्रोणसंबन्धि धान्यमित्यर्थे षष्ठी प्राप्ता। द्विद्रोणपरिमितधान्यमूल्यं हिरण्यं द्विद्रोणं, तेन क्रीणातीत्यर्थे तु करणत्वादेव सिद्धम्।

सुखेनेति। सुखजनकं यानं करोतीत्यर्थः। क्रियाविशेषणत्वात्—द्वितीया प्राप्ता।

दिवः कर्म च। साधकतममित्यनुवर्त्तते। तदाह—दिवः साधकतम-मिति। दिवुधात्वर्थं प्रति साधकतममित्यर्थः। चादिति। चकारात् करण-संज्ञकमित्यपि लभ्यत इत्यर्थः। 'पृथग्विनानानाभिः' इतिवत् सहेनेत्येव सिद्धे युक्तग्रहणं सहार्थकशब्दानां साकमित्यादीनामपि ग्रहणार्थमित्याह—सहार्थेनेति।

---

दिवः कर्म च। दिव् का जो साधकतम ( अत्यन्त उपकारक ) वह कारक सञ्ज्ञक होकर कर्मसंज्ञक हो, और करणसञ्ज्ञक भी हो।

सहयुक्ते। सहार्थक से युक्त जो अप्रधान उसमें तृतीया हो।

---

1 क्वचिन्न।

[[2]स्यात्]। पुत्रेण सहागतः पिता । एवं साकंसार्द्धंसमंयोगेऽपि । विनापि तद्योगं तृतीया, 'वृद्धो यूने'ति निर्देशात् ।

येनाङ्गविकारः ।२।३।२०। येनाङ्गेन विकृतेनाऽङ्गिनो विकारो लक्ष्यते, ततस्तृतीया [स्यात्[1]]। अक्ष्णा काणः । अक्षिसम्बन्धिकाणत्वविशिष्ट इत्यर्थः। अपवर्गे तृतीया ।२।३।६। अपवर्गः—फलप्राप्तिः, तस्यां द्योत्यायां कालाध्वनोरत्यन्तसंयोगे तृतीया [[1]स्यात्]। अह्ना, क्रोशेन वाऽनुवाकोऽधीतः । अपवर्गे किम् ? । मासमधीतो, नाऽऽयातः ।

हेतौ ।२।३।२३। [हेतौ[2]] तृतीया[3] स्यात् । [[1]द्रव्यादिसाधारणं

पुत्रेणेति । पितुरत्रागमनक्रियासम्बन्धः शाब्दः । पुत्रस्य तु तत्साहित्यगम्य आर्थिक इति तस्याऽप्राधान्यम् । अर्थग्रहणस्य प्रयोजनमाह—एवं साकमिति । ननु 'पुत्रेणागतः पिता' इत्यत्र सहादिशब्दाऽभावात् कथं तृतीयेत्यत आह—विनापीति । 'वृद्धो यूना तल्लक्षणश्चेत्' इति सूत्रे सहादिशब्दाभावेऽपि तदर्थावगमेऽपि तृतीयानिर्देशदर्शनादित्यर्थः ।

येनाङ्गविकारः । अङ्गान्यस्य सन्तीत्यङ्गं—शरीरम् । अर्श आद्यच् । तस्य विकार इति विग्रहः । येनेत्यनेन प्रकृत्यर्थभूतमङ्गं परामृश्यते । नह्यविकृतेन अङ्गेन अङ्गिनो विकारः सम्भवति । तदाह—येनाङ्गेनेत्यादिना ।

अक्ष्णा काण इति । काणशब्दः काणत्ववति वर्त्तते । सम्बन्धस्तृतीयार्थः । स च काणत्वेऽन्वेति । तदाह—अक्षिसम्बन्धीति । सम्बन्धश्च विकारप्रयुक्तत्वरूपः । अक्षिविकारप्रयुक्तकाणत्ववानिति यावदिति श्रीवासुदेवदीक्षिताः ।

येनाङ्गविकारः । जिस अङ्ग के विकृत होने से अङ्गी का विकार लक्षित हो, उस अङ्ग ( वाचक ) से तृतीया हो ।

अपवर्गे । फल की प्राप्ति द्योत्य हो तो कालवाचक और अध्ववाचक से तृतीया हो ।

हेतौ । हेतुवाचक से तृतीया हो ।

१ क्वाचित्कः पाठः । २ शेषपूरणमेतत् । ३ 'हेत्वर्थे तृतीया स्यात्' पा० ।

निर्व्यापारसाधारणञ्च हेतुत्वम् । करणत्वन्तु क्रियामात्रविषयं, व्यापार-नियतञ्च ]। दण्डेन घटः । पुण्येन दृष्टो हरिः ।

इत्थम्भूतलक्षणे ।२।३।२१। कञ्चित्प्रकारं प्राप्तस्य लक्षणे तृतीया [1]स्यात्। जटाभिस्तापसः । जटाज्ञाप्यतापसत्वविशिष्ट इत्यर्थः ।

संज्ञोऽन्यतरस्यां कर्मणि ।२।३।२२। सम्पूर्वस्य जानातेः कर्मणि तृतीया [1]वा स्यात् । पित्रा, पितरं वा सञ्जानीते ।

[*[2]अशिष्टव्यवहारे दाणः प्रयोगे चतुर्थ्यर्थे तृतीया । दास्या संयच्छते कामुकः । अशिष्टव्यवहारे किं ? । भार्यायै संयच्छति] ।

---

इत्थंभूतलक्षणे । अयं प्रकार इत्थं, तं भूतःप्राप्तः—इत्थंभूतः । 'भू प्राप्तौ' इति चौरादिकात् 'आधृषाद्वा' इति णिजभावे 'गत्यर्थाकर्मके'त्यादिना कर्तरि क्तः । लक्षणं—ज्ञापकम् । प्रकारविशेषं प्राप्तस्य ज्ञापके इत्यर्थः । तदाह—कंचित्प्रकारमिति । जटाभिस्तापस इति । तपः—अस्यास्तीति तापसः । 'तपस्सहस्राभ्यां विनीनी' 'अण्च' इति मत्वर्थीयोऽण् प्रत्ययः । तापसशब्दश्च तापसत्ववति वर्तते । लक्ष्यलक्षणभावस्तृतीयार्थः । तदाह—जटाज्ञाप्येति । संपूर्वस्य ज्ञाधातोरनुकरणात् षष्ठ्येकवचनं—'संज्ञ' इति । तदाह—संपूर्वस्य जानातेरिति । द्वितीयापवादोऽयं तृतीयाविकल्पः । संजानीते इति । सम्यक जानातीत्यर्थः । 'सम्प्रतिभ्यामनाध्याने' इत्यात्मनेपदम् ।

---

इत्थम्भूतलक्षणे । किसी विशेष रूप को प्राप्त हुए व्यक्ति का लक्षण ( ज्ञापन ) हो तो ज्ञापक से तृतीया हो ।

संज्ञोऽन्यतरस्यां । सम्पूर्वक ज्ञा धातु के कर्म में तृतीया हो ।

अशिष्ट । अशिष्ट व्यवहार में दाण् धातु के प्रयोग में चतुर्थी के अर्थ में तृतीया हो ।

---

१ क्वचिन्न । २ लिखितेऽयं पाठः क्वचित्पठ्यते ।

कर्मणा यमभिप्रैति स सम्प्रदानम् ।१।४।३२। दानस्य कर्मणा यमभिप्रैति स सम्प्रदानसंज्ञः [ [1]स्यात् ]

चतुर्थी सम्प्रदाने ।२।३।१३। अनुक्ते [ [2]सम्प्रदाने चतुर्थी स्यात् ]। विप्राय गां ददाति। [ [1]उक्ते तु-दानीयो विप्रः ]।

*क्रियया यमभिप्रैति सोऽपि सम्प्रदानम्। पत्ये शेते। परिक्रयणे सम्प्रदानमन्यतरस्याम् ।१।४।४४। नियतकालं भृत्या स्वीकरणं परिक्रयणं, तस्मिन्साधकतमं कारकं सम्प्रदानं वा [ [1]स्यात् ]। शतेन, शताय वा परिक्रीतः। *तादर्थ्ये चतुर्थी वाच्या। मुक्तये हरिं

---

कर्मणेति। कर्मसञ्ज्ञकेन गवादिना यमभिप्रैति=यं भोक्तृत्वेनाध्यवस्यति, स सम्प्रदानमित्यर्थः। सोपीति। दानक्रियाकर्मोद्देश्यवत् क्रियोद्देश्यमपि सम्प्रदानसञ्ज्ञं स्यादिति यावत्। पत्ये इति। पतिमुद्दिश्य शेते इत्यर्थः। परिक्रयणे इति। परिक्रयणे साधकतमं कारकं सत्सम्प्रदानसञ्ज्ञं वेत्यर्थः। तस्मै कार्याय इदं तदर्थं=कारणं, तदर्थस्य भावः-तादर्थ्यम्। ब्राह्मणादित्वात्ष्यञ्। उपकार्योपकारकभावसम्बन्धे उपकार्याच्चतुर्थीति तदर्थः। मुक्तय इति। मुक्त्यर्थमित्यर्थः।

---

कर्मणा। दान के कर्म से जिसके साथ सम्बन्ध करने की इच्छा करे वह सम्प्रदान सञ्ज्ञक हो।

चतुर्थी सम्प्रदाने। अनुक्त सम्प्रदान में चतुर्थी हो।

क्रिययायमभि। क्रिया से जिसके साथ सम्बन्ध की इच्छा करे वह भी सम्प्रदान सञ्ज्ञक हो।

परिक्रयणे। परिक्रयण (=नियत समय के लिए वेतन, मजूरी, भाडा आदि देकर किसी को नौकर रखना या किराये पर लेना रूप ) क्रिया में जो साधकतम ( अत्यन्त उपकारक ) है, उसकी कारक सञ्ज्ञा होकर सम्प्रदान सञ्ज्ञा हो, विकल्प करके।

तादर्थ्ये चतुर्थी। तादर्थ्य ( उसके वास्ते इस ) अर्थ में चतुर्थी हो।

---

१ क्वाचित्कः पाठः।　　२ शेषपूरणम्।

भजति। *उत्पातेन ज्ञापिते च। 'वाताय कपिला विद्युत्'। [* [1]हितयोगे च। [1]ब्राह्मणाय हितम्]। नमःस्वस्तिस्वाहास्वधाऽलंवषड्योगाच्च ।२।३।१६। एभिर्योगे चतुर्थी स्यात्। हरये नमः।

[(प०) [1]उपपदविभक्तेः कारकविभक्तिर्बलीयसी। नमस्करोति देवान्]। प्रजाभ्यः स्वस्ति। अग्नये स्वाहा। पितृभ्यः स्वधा।

* अलमिति पर्याप्त्यर्थग्रहणम्। तेन-दैत्येभ्यो हरिरलं, प्रभुः, समर्थः, शक्त इत्यादि। [3]वषडिन्द्राय।

ध्रुवमपायेऽपादानम् ।१।४।२४। अपायो—विश्लेषस्तस्मिन् साध्ये [2]ध्रुवमवधिभूतमपादानं स्यात्। अपादाने पञ्चमी ।२।३।२८। [[3]अनुक्तेऽपादाने पञ्चमी स्यात्। ग्रामादायाति। धावतोऽश्वात्पतति [[4]इत्यादि]।

---

उत्पातेनेति। आकस्मिकः प्राणिनां शुभाशुभसूचको भूतविकारविशेष उत्पातः। तेन सूचितेऽर्थे विद्यमानाच्चतुर्थीत्यर्थः। वाताय = वातस्य ज्ञापिका।

अलमितीति। वार्त्तिकमेतत्। 'ध्रुव स्थैर्ये' कुटादिः। पचाद्यच्। विश्लेषः = विभागः। 'ध्रुव'मित्यस्य विवरणम्—'अवधिभूत'मिति।

---

उत्पातेन। उत्पात से जो सूचित किया जाए उससे चतुर्थी हो।

हितयोगे च। हित के योग में चतुर्थी हो।

नमःस्वस्ति। नमः आदि के योग में चतुर्थी हो।

अलमिति। पर्याप्ति (शक्ति,सामर्थ्य) अर्थ वाची 'अलम्' का ही सूत्र में ग्रहण करना चाहिए।

ध्रुवमपाये। विश्लेष (विभाग) में जो अवधिभूत है, उसकी कारक संज्ञा होकर अपादान सञ्ज्ञा हो।

अपादाने पञ्चमी। अनुक्त अपादान में पञ्चमी हो।

---

१ क्वचिन्न। २ 'यद्ध्रुवमवधिभूतं, तदपादानं स्यात्' पा०।
३ शेषपूरणम्। ४ क्वचिते नास्ति।

जनिकर्त्तुः प्रकृतिः ।१।४।३०। जायमानस्य हेतुरपादानं स्यात् । ब्रह्मणः प्रजाः प्रजायन्ते । *ल्यब्लोपे कर्मण्यधिकरणे च । प्रासादा त्प्रेक्षते । आसनात्प्रेक्षते । प्रासादमारुह्य, आसने उपविश्य प्रेक्षत इत्यर्थः ।

विभाषा गुणेऽस्त्रियाम् ।२।३।२५। गुणे हेतावस्त्रीलिङ्गे पञ्चमी वा स्यात् । जाड्याज्जाड्येन वा बद्धः । गुणे किम् ? । धनेन कुलम् । अस्त्रियां किम् ? । बुद्ध्या मुक्तः । 'विभाषे'ति योगविभागादगुणे, स्त्रियां च क्वचित् । धूमादग्निमान् । नास्ति घटोऽनुपलब्धेः ।

पृथग्विनानानाभिस्तृतीयान्यतरस्याम् । २ । ३ । ३२ । एभिर्योगे तृतीया स्यात्, पञ्चमी-द्वितीये च । पृथग् ग्रामेण, ग्रामाद्, ग्रामं वा । एवं विना नाना । अन्यारादितरर्त्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते ।२।३।२९। [ [1]एभिर्योगे ] पञ्चमी [ [1]स्यात् ] । 'अन्य' इत्यर्थग्रहणम् । इतरग्रहणं प्रपञ्चार्थम् । अन्यो, भिन्न, इतरो वा कृष्णात् । आराद्वनात् । ऋते

---

जननं जनिः = उत्पत्तिः । जनेः कर्त्तेति शेषषष्ठ्या समासः । 'तृजकाभ्यां कर्त्तरी'ति निषेधस्तु कारकषष्ठ्या एव । प्रकृतिः=हेतुः । ल्यब्लोप इति । ल्यबन्तस्य लोपे =अप्रयोगे सति, गम्यमानल्य -न्तार्थं प्रतिकर्मणः, अधिकरणाच्च पञ्चमीत्यर्थः ।

---

जनिकर्त्तुः । जायमान का जो हेतु, वह कारक सञ्ज्ञक होकर अपादान सञ्ज्ञक हो ।

ल्यब्लोपे । ल्यप् के लोप में (अर्थात्–ल्यबन्त के अप्रयोग में ) गम्यमान-ल्यबन्तार्थ के प्रति जो कर्म हो, या अधिकरण हो, उसमें पञ्चमी हो ।

विभाषाऽगुणे । हेतु और अस्त्रीलिङ्ग जो गुणवाचक, उससे पञ्चमी हो, विकल्प करके ।

पृथग्विना । पृथक् आदिके योग में तृतीया हो । और पञ्चमी, द्वितीया भी हों ।

अन्यारादितर । अन्य आदि के योग में पञ्चमी हो ।

---

१ क्वाचित्कः पाठः ।

कृष्णात्। पूर्वो ग्रामात्। दिशि दृष्टः शब्दो—दिक्शब्दः। तेन-सम्प्रति देशकालवृत्ति[ [1]ना ] योगेऽपि भवति। चैत्रात्पूर्वः फाल्गुनः। प्राक्, प्रत्यग्वा ग्रामात्। आच्—दक्षिणा ग्रामात्। आहि—दक्षिणाहि ग्रामात्।

**अपपरी वर्जने** ।१।४।८८। [ [2]एतौ वर्जनार्थे ] कर्मप्रवचनीयसंज्ञौ स्तः। **आङ् मर्यादावचने** ।१।४।८९। [ [2]आङ् मर्यादाया-] मुक्तसंज्ञः[3] [[1]स्यात्]। वचनग्रहणादभिविधावपि। **पञ्चम्यपाङ्परिभिः** ।२।३।१०। एतैः कर्मप्रवचनीयैर्योगे पञ्चमी [ [1]स्यात् ]। अप हरेः, परि हरेः संसारः। परिरत्र वर्जने, अप-साहचर्यात्। लक्षणादौ तु—हरिं परि। आ मुक्तेः संसारः। आ सकलाद् ब्रह्म।

**प्रतिः प्रतिनिधिप्रतिदानयोः** ।१।४।९२। एतयोरर्थयोः प्रतिरुक्त-

---

आङ् मर्यादेति। तेन विना इति मर्यादा। तत्सहितोऽभिविधिः। मर्यादाशब्दो यत्रोच्यते तन्मर्यादावचनम् = 'आङ्मर्यादाभिविध्योः' इति सूत्रं, तत्र दृष्टो य आङ् स कर्मप्रवचनीयसञ्ज्ञ इत्यर्थः। तत्र च आङ् अभिविधावपि इष्यते इति वचनग्रहणादभिविधावपीति सूपपन्नम्। साहचर्यादिति। वर्जनार्थकेनाऽपेन साहचर्यात्। आमुक्तेरिति। मुक्तिं मर्यादीकृत्य संसार इत्यर्थः। मुक्तौ सत्यां निवर्त्तते इति यावत्। आ सकलादिति। सकलमभिव्याप्येत्यर्थः। अभिविधावत्र आङ्।

---

अपपरी। वर्जन अर्थ में अप और परि की कर्मप्रवचनीय सञ्ज्ञा हो।

आङ् मर्यादा। मर्यादा और अभिविधि अर्थ में आङ् की कर्मप्रवचनीय सञ्ज्ञा हो।

पञ्चम्यपाङ्। कर्मप्रवचनीय जो अप, आङ् परि उनके योग में पञ्चमी हो।

प्रतिः प्रतिनिधि। प्रतिनिधि और प्रतिदान अर्थ में प्रति की कर्मप्रवचनीय सञ्ज्ञा हो।

---

१ क्वाचित्कः पाठः। २ शेषपूरणं। ३ 'कर्मप्रवचनीयः' इत्येतावत्येव क्वचिद्वृत्तिः।

संज्ञः स्यात्। **प्रतिनिधिप्रतिदाने च यस्मात्** ।२।३।११। अत्र कर्मप्रवचनीययोगे पञ्चमी [ [1]स्यात् ]। प्रद्युम्नः कृष्णात् प्रति। तिलेभ्यः प्रति यच्छति माषान्।

**षष्ठी शेषे** ।२।३।५०। कारकप्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिभावादिः शेषस्तत्र षष्ठी [ [1]स्यात् ]। राज्ञः पुरुषः। कर्मादीनामपि सम्बन्धमात्रविवक्षायां षष्ठ्येव। सतां गतम्। सर्पिषो जानीते। मातुः स्मरति। एधो दकस्योपस्कुरुते। भजे शम्भोश्चरणयोः। फलानां तृप्तः।

**कर्तृकर्मणोः कृति** ।२।३।६५। कृद्योगे कर्त्तरि, कर्मणि च षष्ठी

---

कृष्णात्प्रतीति। कृष्णस्य प्रतिनिधिः। कृष्णनिरूपितसादृश्यवानित्यर्थः। दत्तस्य प्रतिनिर्यातनं-प्रतिदानम् ( बदला )।

शेष इति। उक्तादन्यः शेषः। प्रथमाद्वितीयादिविधिषु-प्रातिपदिकार्थः, कर्मादीनि कारकाणि च उक्तानि, एवञ्च एभ्यो व्यतिरिक्तः स्वस्वामिभावादिः सम्बन्धः शेषपदार्थ इत्यर्थः।

सतां गतमित्यादौ कर्तृतृतीयादिकनिरासायाह—कर्मादीनामिति। कर्मत्वकर्तृत्वादीनामपि सम्बन्धत्वेन विवक्षायां षष्ठ्येव, न तु कारकविभक्तय इत्यर्थः। सतामिति। सत्सम्बन्धि गमनमित्यर्थः।

दकस्येति। उदकपर्यायो दकशब्दोऽप्यस्ति। 'भुवनममृतं जीवनीयं दकञ्चे'ति हलायुधः। एधांसि च दकञ्चेति विग्रहः।

---

प्रतिनिधि–प्रतिदाने च। जिसका प्रतिनिधि हो और जिसका प्रतिदान हो उससे पञ्चमी हो, कर्मप्रवचनीय (प्रति) के योग में।

षष्ठी शेषे। कारक और प्रातिपदिकार्थ से भिन्न जो स्वस्वामिभावादि सम्बन्ध, वह 'शेष' कहाता है। शेष में ( स्वस्वामिभाव आदि सम्बन्ध में ) षष्ठी हो।

कर्त्तृकर्मणोः। कृत् के योग में कर्त्ता और कर्म में षष्ठी हो।

---

1 क्वाचित्कः पाठः।

[स्यात्]। कृष्णस्य कृतिः। जगतः कर्त्ता कृष्णः।

* गुणकर्मणि वेष्यते। नेताऽश्वस्य स्रुघ्नं, स्रुघ्नस्य वा। कृति किम्?। तद्धिते मा भूत्। कृतपूर्वी कटम्।

उभयप्राप्तौ कर्मणि २।३।६६। उभयोः प्राप्तिर्यस्मिन्कृति तत्र

---

कृष्णस्य कृतिरिति। अत्र कर्त्तरि षष्ठी। जगत इति। अत्र च 'जगत' इति कर्मणि षष्ठी। गुणेति। गौणे कर्मणि षष्ठी वा स्यादित्यर्थः। 'अकथितञ्चे'-त्यनेन यस्य गवादेः कर्मसञ्ज्ञा तत् गौणं कर्म। उदाहरणे—स्रुघ्नो गौणं कर्म।

कृति किमिति। नन्विह सूत्रे कर्तृकर्मभ्यां क्रिया आक्षिप्यते, क्रियावाची च धातुरेव। धातोश्च द्विविधा एव प्रत्यया भवन्ति—कृतस्तिङश्च। तत्र 'कटं करोती'त्यादौ तिङो योगे 'न लोके'ति निषेधान्न षष्ठी, ततश्च परिशेषात्कृद्योगे एवानेन षष्ठी भविष्यतीति किं कृद्ग्रहणेनेति प्रश्नः।

कृतपूर्वी कटमिति। अत्र हि करोतिक्रियापेक्षमनभिहितं कर्मत्वं कटस्यास्तीति ततोऽपि षष्ठी स्यात्। अतः सूत्रे कृद्ग्रहणम्। तथा च तद्धिताधिक्ये षष्ठी न भवतीत्यर्थः।

तद्धिते इति। तद्धितान्तशक्तिग्रहमात्रप्रयोज्योपस्थितिविषयक्रियायाः कर्त्तरि, कर्मणि च षष्ठी माभूदित्यर्थः।

कृतपूर्वीति। कृतपूर्वीत्यत्र सकर्मककृधात्वादिप्रकृतिकभावक्तान्तस्य ईदृशतद्धितवृत्तिमात्रविषयतया, तादृशतद्धितनिर्मुक्तस्य केवलस्य भावक्तान्तस्य 'कृते'त्यस्य क्वाप्यप्रयोगेण, तद्धितान्तसमुदायशक्त्यैव क्रियोपस्थापकतया तत्र न षष्ठी। कृद्ग्रहणात्—कृदन्तशक्तिग्रहप्रयोज्योपस्थितिविषयक्रियाकर्तृकर्मणोरेवेह ग्रहणात्। 'कृतपूर्वी कट'मित्यत्र चाऽतथात्वमिति न दोष इति तत्त्वम्।

उभयोः = कर्तृकर्मणोः।

---

गुणकर्मणि। गौण कर्म में विकल्प करके षष्ठी हो। [ अकथितसूत्र से जिसकी कर्म संज्ञा हो वह गौण कर्म कहाता है ]।

उभयप्राप्तौ। जिस कृत् के योग में कर्त्ता और कर्म इन दोनों में षष्ठी की प्राप्त हो, उस कृत् के योग में कर्म में ही षष्ठी हो।

कर्मण्येव षष्ठी [ [1]स्यात् ]। आश्चर्यो गवां दोहोऽगोपेन। **कृत्यानां कर्त्तरि वा ।२।३।७१।** [[2]कृत्यप्रत्यययोगे कर्त्तरि] षष्ठी [[2]वा स्यात्]। मया, मम वा सेव्यो हरिः। [[2]कर्त्तरि किं?। गेयो माणवकः साम्नाम्]।

**क्तस्य च वर्त्तमाने ।२।३।६७।** वर्त्तमानार्थस्य क्तस्य योगे षष्ठी [ [3]स्यात् ]। 'न लोके'ति वक्ष्यमाणनिषेधस्याऽपवादः। राज्ञां मतो, बुद्धः, पूजितो वा। **अधिकरणवाचिनश्च ।२।३।६८।** [[2]अधिकरणवाचिनः] क्तस्य योगे षष्ठी [स्यात् ]। इदमेषामासितम्। [[3]इदमेषां] शयितं[[3]वा]।

**न लोकाऽव्ययनिष्ठाखलर्थतृनाम् २।३।६९।** एषां प्रयोगे षष्ठी न [ [3]स्यात् ]। लादेशाः–कुर्वन्, कुर्वाणो वा सृष्टिं हरिः। उ(:)–हरिं दिदृक्षुः, अलङ्करिष्णुर्वा। 'उक[4]'—दैत्यान् घातुको हरिः।

---

आश्चर्य इति। अत्र 'गवा'मिति कर्मण्येव षष्ठी भवति, न तु 'अगोपेने'-त्यत्र कर्तुरपि षष्ठी भवतीत्याशयः। कृत्यानामिति। कृत्यसञ्ज्ञकप्रत्यययोगे कर्त्तरि षष्ठी वा स्यादित्यर्थः। मत इति। 'मतिबुद्धिपूजार्थेभ्यश्चे'ति वर्त्तमानेऽत्र क्तः। आस्यतेऽस्मिन्निति आसितं = स्थानम्। शय्यतेऽत्रेति शयितं = शयन-स्थानम्। 'क्तोऽधिकरणे च ध्रौव्ये'ति अधिकरणे क्तः। लादेशा इति। लपदेन लादेशग्रहणम्। उदाहरणे च शतृशानचौ लडादेशौ। दिदृक्षुरिति। 'सनांशसे'ति उः। अलङ्करिष्णुरिति। 'अलङ्कृ'ञिति इष्णुच्प्रत्ययः। घातुक इति। 'लषपतपदे'त्यादिना उकञ्।

---

कृत्यानां कर्त्तरि वा। कृत्यप्रत्यय के योग में कर्त्ता में विकल्प करके षष्ठी हो।

क्तस्य च। वर्त्तमानार्थक क्त के योग में षष्ठी हो।

अधिकरणवाचिनश्च। अधिकरणार्थक क्त के योग में षष्ठी हो।

न लोकाव्यय। 'लादेश' 'उक' 'अव्यय' 'निष्ठा' 'खलर्थ' और 'तृन्' के प्रयोग में षष्ठी नहीं हो।

---

१ क्वाचित्कः पाठः। २ शेषपूरणमेतत्। ३ क्वचिन्न। ४ 'उकञ्'।

*कमेरनिषेधः। लक्ष्म्याः कामुकः। अव्ययम्—जगत्सृष्ट्वा। निष्ठा—दैत्यान् हतवान् विष्णुः। विष्णुना हता दैत्याः। खलर्थः—ईषत्करः प्रपञ्चो हरिणा। तृन्निति प्रत्याहारः, शतृशानचाविति तृशब्दादारभ्य आ तृनो नकारात्। शानन्—सोमं पवमानः। चानश्—आत्मानं मण्डयमानः। शतृ—वेदमधीयन्। तृन्—कर्त्ता लोकान्।

*द्विषः शतुर्वा। मुरस्य, मुरं वा द्विषन्। सर्वोऽयं कारकषष्ठ्याः प्रतिषेधः। शेषे षष्ठी तु स्यादेव। ब्राह्मणस्य कुर्वन्। नरकस्य जिष्णुः।

अकेनोर्भविष्यदाधमर्ण्ययोः ।२।३।७०। भविष्यत्यकस्य, भविष्यदाधमर्ण्यार्थेनश्च योगे षष्ठी न [ स्यात् ]। सतः पालकोऽवतरति। व्रजं गामी। शतं दायी।

---

जगत् सृष्ट्वा। अत्र 'क्त्वातोसुन्कसुनः' इत्यव्ययत्वम्। पवमान इति। 'पूङ्यजोः शानन्' इति शानन्।

मण्डयेति। 'मडि भूषायाम्'। 'ताच्छील्यवयोवचनशक्तिषु चानश्' इति चानश्प्रत्ययः। अधीयन्निति। 'इङ्धार्योः शत्रकृच्छ्रिणि' इति शतृप्रत्ययः।

द्विष इति। 'द्विष अप्रीतौ' इत्यस्माद्विहितो यः—'द्विषः शतुर्वा' इति शतृप्रत्ययः, तद्योगे षष्ठीनिषेधो वा स्यादित्यर्थः। स्यादेवेति। 'अनन्तरस्ये'ति न्यायात्। अनयोश्च शाब्दबोधे वैलक्षण्यमस्तीत्याशयः। 'आधमर्ण्येऽकस्याऽसम्भवादाह—भविष्यत्यकस्येति।

सत इति। अत्र 'सत' इति शत्रन्तम्। गामीति। आवश्यकाधमर्ण्ययोः' इत्यावश्यके णिनिः। 'भविष्यति गम्यादयः' इत्युक्तेरयं भविष्यदर्थकः।

---

द्विषः शतुर्वा। द्विष् धातु से विहित शतृ प्रत्यय के योग में उक्त षष्ठीनिषेध विकल्प करके हो।

अकेनोः। भविष्यदर्थक अक, और भविष्यत् आधमर्ण्यार्थक इन् के योग में षष्ठी नहीं हो।

*निमित्तपर्यायप्रयोगे सर्वासां विभक्तीनां प्रायदर्शनम् ।

किं निमित्तं वसति । केन निमित्तेन । कस्मै निमित्तायेत्यादि । एवं—किं कारणं, को हेतुः, किं प्रयोजनमित्यादि । 'प्राय'ग्रहणादसर्वनाम्नः प्रथमाद्वितीये न स्तः । ज्ञानेन निमित्तेन [1]हरिः सेव्यः । ज्ञानाय निमित्तायेत्यादि ।

षष्ठ्यतसर्थप्रत्ययेन ।२।३।३०। [ [2]अतसर्थप्रत्ययान्तेन योगे षष्ठी स्यात् ]। ग्रामस्य दक्षिणतः, पुरः, पुरस्तात्, उपरि, उपरिष्टात् ।

एनपा द्वितीया ।२।३।३१। [[3]एनबन्तेन योगे द्वितीया स्यात् ] । 'एनपे'ति योगविभागात्षष्ठ्यपि । दक्षिणेन ग्रामं, ग्रामस्य वा । एवमुत्तरेण ।

दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम् ।२।३।३४। एतैर्योगे षष्ठी स्यात्,

---

अतसर्थेति । 'दक्षिणोत्तराभ्यामतसुच्' इत्यस्य योऽर्थो दिग्देशकालरूपः, सोऽर्थो यस्य प्रत्ययस्य सोऽतसर्थप्रत्ययः—(अस्तातिप्रभृतयः पञ्च प्रत्ययाः), तदन्तेन योगे षष्ठी स्यादित्यर्थः । एनपेति । एनबन्तेन योगे द्वितीया स्यादित्यर्थः । उदाहरणे 'एनबन्यतरस्या'मित्यनेन एनप् ।

---

निमित्तपर्याय । निमित्त पर्याय के प्रयोग में प्रायः सभी विभक्ति होती देखी जाती हैं ।

षष्ठ्यतसर्थ । अतसर्थ प्रत्यय के योग में षष्ठी हो ।

एनपा । एनबन्त के योग में द्वितीया हो, और षष्ठी भी हो ।

दूरान्तिकार्थैः । दूरार्थक और अन्तिकार्थक के योग में षष्ठी हो, विकल्प करके । पक्ष में—पञ्चमी हो ।

---

१ 'सेव्यो हरिः' पा० । २ शेषपूरणमेतत् ।

३ क्वचिन्मूलेऽपीयं वृत्तिर्दृश्यते ।

पञ्चमी च। दूरं, निकटं वा—ग्रामस्य, ग्रामाद्वा। दिवस्तदर्थस्य ।२।३।५८। द्यूतार्थस्य, क्रयविक्रयरूपव्यवहारार्थस्य च दिवः कर्मणि षष्ठी [[1]स्यात्]। शतस्य दीव्यति। तदर्थस्य किम्? । ब्राह्मणं दीव्यति। स्तौतीत्यर्थः। विभाषोपसर्गे ।२।३।५९। [[2]उपसर्गे उपपदे द्यूतार्थस्य, क्रयविक्रयरूपव्यवहारार्थस्य च दिवः कर्मणि षष्ठी वा स्यात्]। शतस्य, शतं वा प्रतिदीव्यति।

आधारोऽधिकरणम् ।१।४।४५। कर्तृकर्मद्वारा तन्निष्ठक्रियाया आधारः कारकमधिकरणसंज्ञं [[1]स्यात्]। सप्तम्यधिकरणे च ।२।३।३६। [[2]अनभिहितेऽधिकरणे सप्तमी स्यात्]। चाद् दूरान्तिकार्थेभ्यः।

---

तदर्थस्येति। तच्छब्देन व्यवहृपणौ परामृश्येते। तौ च द्यूते, क्रयविक्रयव्यवहारे च तुल्यार्थौ, पूर्वसूत्रे 'व्यवहृपणोः समर्थयोः'रित्यत्र तावेव हि परिगृहीतावित्याशयेनाह—द्यूतेति।

आधार इति। आध्रियतेऽस्मिन्नित्याधारः। स च आधारः कस्येत्याकाङ्क्षायां कारकाधिकारात् 'क्रियायाः' इति लभ्यते। इयञ्च सञ्ज्ञा साक्षात्क्रियाधारयोर्न सम्भवति, पराभ्यां कर्तृकर्मसञ्ज्ञाभ्यां बाधितत्वादतो व्याचष्टे-कर्तृकर्मद्वारेति। एवञ्च 'भूतले घट' इत्यादावन्ततोऽस्तिक्रियाया अध्याहारो बोध्यः।

---

दिवस्तदर्थस्य। 'व्यवहृ'-और 'पण्' धातु के समानार्थक-अर्थात्-द्यूतार्थक और क्रयविक्रयरूपव्यवहारार्थक जो दिव् धातु, उसके कर्म में षष्ठी हो।

विभाषोपसर्गे। द्यूतार्थक और क्रयविक्रयरूप व्यवहारार्थक जो सोपसर्ग दिव् धातु, उसके कर्म में विकल्प करके षष्ठी हो।

आधारोऽधिकरणम्। कर्त्ता और कर्म के द्वारा जो तन्निष्ठ ( कर्तृ कर्म निष्ठ ) क्रिया का आधार, वह कारक सञ्ज्ञक होकर अधिकरण सञ्ज्ञक हो।

सप्तम्यधिकरणे च। अनुक्त अधिकरण में सप्तमी हो। और दूरान्तिकार्थक से भी सप्तमी हो।

---

१ क्वाचित्कः पाठः। २ शेषपूरणम्।

औपश्लेषिको, वैषयिकोऽभिव्यापकश्चेत्याधारस्त्रिधा । कटे आस्ते। स्थाल्यां पचति । मोक्षे इच्छाऽस्ति। सर्वस्मिन्नात्माऽस्ति। वनस्य दूरेऽन्तिके वा।

*क्तस्येन्विषयस्य कर्मण्युपसंख्यानम्। अधीती व्याकरणे।

*साध्वसाधुप्रयोगे च। साधुः कृष्णो मातरि। असाधुर्मातुले।

*निमित्तात्कर्मयोगे। [[1]निमित्तमिह फलम्। योगः—संयोगसमवायात्मकः]।

'चर्मणि द्वीपिनं हन्ति, दन्तयोर्हन्ति कुञ्जरम्।
केशेषु चमरीं हन्ति, सीम्नि पुष्कलको हतः' ॥

---

कट इति। देवदत्तादिकर्तृद्वारा आसनादिक्रियाधारत्वात्कटस्याधिकरणत्वम्। स्थाल्यां पचतीति। अत्र च ओदनरूपकर्मद्वारा पाकक्रियाधारतया स्थाल्या अधिकरणत्वमिति विवेकः।

वैषयिकाधारमुदाहरति—मोक्षे इति। अधीतीति। अधीतमनेनेत्यर्थे 'इष्टादिभ्यश्च'ति कर्त्तरि इनिः। क्तस्येनिति। इन्=इन्नन्तः शब्दो, विषयः= वर्त्तनभूमिर्यस्य क्तान्तस्य तस्य योगे कर्मणि षष्ठीत्यर्थः।

निमित्तादिति। निमित्तवाचकात्=प्रवृत्तिप्रयोजनवाचकात्सप्तमी स्यात्,तस्य निमित्तस्य प्रत्यासत्त्या स्वान्वयिक्रियाकर्मणा योगे सतीत्यर्थः। योगः—संयोगसमवायात्मकः। तत्र—चर्मद्वीप्यादेश्च समवायः सम्बन्धः, दन्तकोशादेश्च संयोगः। चर्मादिनिमित्तं द्वीप्यादिकं हन्तीत्यर्थः। सीमा—अण्डकोशः। 'सीमाऽऽण्ट-

---

क्तस्येन्विषयस्य। इन्प्रत्यय का विषय अर्थात्-प्रकृति जो 'क्त', उसके योग में-कर्म में सप्तमी हो।

साध्वसाधु। साधु और असाधु के प्रयोग में सप्तमी हो।

निमित्तात्कर्मयोगे। निमित्त (=फल) वाचक से सप्तमी हो, कर्म के साथ यदि फल का योग हो तो।

---

१ क्वाचित्कः पाठः।

**यस्य च भावेन भावलक्षणम् ।२।३।३७।** यस्य क्रियया क्रियान्तरं लक्ष्यते, ततः सप्तमी [[1]स्यात्]। गोषु दुह्यमानासु गतः। **षष्ठी चाऽनादरे ।२।३।३८।** अनादराधिक्ये भावलक्षणे षष्ठीसप्तम्यौ स्तः। रुदति, रुदतो वा प्राव्राजीत्। रुदन्तं पुत्रादिकमनादृत्य संन्यस्तवानित्यर्थः।

**स्वामी-श्वरा-धिपति-दायाद-साक्षि-प्रतिभू-प्रसूतैश्च ।२।३।३९।** [[2]एभिर्योगे] षष्ठीसप्तम्यौ स्तः। गवां, गोषु वा स्वामी।

**आयुक्त-कुशलाभ्यां चाऽऽसेवायाम् ।२।३।४०।** आभ्यां योगे षष्ठीसप्तम्यौ स्तः। आयुक्तो—व्यापारितः। आयुक्तः, कुशलो वा हरिपूजने, हरिपूजनस्य वा। आसेवायां किम्?। आयुक्तो गौः शकटे। ईषद्युक्त इत्यर्थः।

**यतश्च निर्धारणम् ।२।३।४१।** जातिगुणक्रियासंज्ञाभिः समुदाया-

---

स्थितिक्षेत्रेष्वण्डकोशेषु च' इति मेदिनी। 'पुष्कलको गन्धमृगे क्षपणे कील-केऽपि चे'ति विश्वः। षष्ठी चानादर इति। षष्ठ्यामेव प्राप्तायां पाक्षिकसप्तम्यर्थं वचनमिदम्। गवामिति। गोसम्बन्धी स्वामीति बोधः।

---

यस्य च भावेन। जिसकी क्रिया से क्रियान्तर ( दूसरी क्रिया ) लक्षित हो, उससे सप्तमी हो।

षष्ठी चानादरे। अनादर का आधिक्य गम्यमान हो तो जिसकी क्रिया से क्रियान्तर लक्षित होता हो तद्वाचक से षष्ठी और सप्तमी हो।

स्वामीश्वरा। 'स्वामी' आदि के योग में षष्ठी और सप्तमी हो।

आयुक्त। आयुक्त और कुशल के योग में षष्ठी और सप्तमी हो, आसेवा ( तत्परता, उत्सुकता ) अर्थ गम्यमान हो तो।

यतश्च निर्धा। समुदाय से एक देश का—जाति, गुण, क्रिया, और सञ्ज्ञा से—जो पृथक्करण वह 'निर्धारण' कहलाता है।

जिस से निर्धारण ( पृथक् करण ) हो, तद्वाचक से षष्ठी और सप्तमी हो।

---

1 क्वाचित्कः पाठः। 2 शेषपूरणम्।

देकदेशस्य पृथक्करणं [–[1]निर्द्धारणं–] यतस्ततः षष्ठीसप्तम्यौ स्तः। नृणां, नृषु वा ब्राह्मणः श्रेष्ठः। गवां, गोषु वा कृष्णा गौर्बहुक्षीरा। गच्छतां, गच्छत्सु वा धावन् शीघ्रः। छात्राणां, छात्रेषु वा मैत्रः पटुः।

**पञ्चमी विभक्ते: ।२।३।४२।** विभागो-विभक्तम्। निर्द्धार्यमाणस्य यत्र भेद एव, तत्र पञ्चमी [ [1]स्यात् ]। माथुराः पाटलिपुत्रकेभ्य आढ्यतराः।

**साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः ।२।३।४३।** [[2]आभ्यां योगे सप्तमी स्यादर्चायां, नतु प्रतेर्योगे ]। मातरि साधुर्निपुणो वा। अर्चायां किम्?। निपुणो राज्ञो भृत्यः। इह तत्त्वकथने तात्पर्यम्। * **अप्रत्यादिभिरिति वक्तव्यम्**। साधुर्निपुणो वा मातरं प्रति, पर्यनु वा।

[[3]**प्रसितोत्सुकाभ्यां तृतीया च ।२।३।४४।** आभ्यां योगे तृतीया स्यात्, सप्तमी च। प्रसित, उत्सुको वा हरिणा, हरौ वा ]।

**अधिरीश्वरे ।१।४।९७।** स्वस्वामिसम्बन्धेऽधिः कर्मप्रवचनीयः [ [1]स्यात ]।

---

भेद एवेति। भेद एव भवेन्न तु शब्दान्तरोपात्तसामान्याक्रान्ततेति भावः। माथुरा इति। नह्यत्र निर्द्धारणावधेर्निर्द्धार्यमाणस्य च 'गवां कृष्णा बहुक्षीरे'त्या-

---

पञ्चमी विभक्ते। निर्धार्यमाण ( पृथक् किए जाने वाले ) का जिससे भेद ( विभाग ) ही हो, तद्वाचक से पञ्चमी हो।

साधुनिपुणाभ्या। अप्रत्यादिभ्यः। साधु और निपुण के योग में सप्तमी हो, पूजा में। परन्तु प्रत्यादि के योग में यह सप्तमी नहीं हो।

अधिरीश्वरे। स्वस्वामिभाव सम्बन्ध में अधि कर्मप्रवचनीय—सञ्ज्ञक हो।

---

१ क्वाचित्कः पाठः। २ शेषपूरणमेतत्।

३ लिखितादर्शे एवाऽयं पाठ उपलभ्यते।

यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी ।२।३।६। [अत्र कर्मप्रवचनीययुक्ते सप्तमी स्यात् ]। उप परार्द्धे हरेर्गुणाः । परार्द्धादधिका इत्यर्थः । [1]ऐश्वर्ये तु–स्वस्वामिभ्यां पर्यायेण [1]सप्तमी । अधिभुवि रामः । अधिरामे भूः ।

* इति विभक्त्यर्थाः ॥ *

## अथ समासप्रकरणम् ।

समासः पञ्चधा । तत्र समसनं—समासः । स च विशेष-संज्ञाविनिर्मुक्तः केवलसमासः प्रथमः । प्रायेण पूर्वपदार्थप्रधानोऽव्ययी-भावो द्वितीयः । प्रायेणोत्तरपदार्थप्रधानस्तत्पुरुषस्तृतीयः । तत्पुरुष-भेदः–कर्मधारयः । कर्मधारयभेदो द्विगुः । प्रायेणाऽन्यपदार्थप्रधानो बहुव्रीहिश्चतुर्थः । प्रायेणोभयपदार्थप्रधानो द्वन्द्वः–पञ्चमः ।

---

दाविव सामान्यविशेषभावोऽस्ति, किन्तु शब्दोपात्तयोर्धर्मयोर्विरोध एव ।

* इति कारकप्रकरणम् *

समसनं–सङ्क्षेपः । स च = समासश्च ।

विशेषेति । तत्पुरुषाव्ययीभावादिविशेषसञ्ज्ञारहितः ।

उन्मत्तगङ्गमित्यादावव्ययीभावेऽपि पूर्वपदार्थप्राधान्याऽभावादुक्तं—प्रायेणेति । अतिमालो, निष्कौशाम्बिरित्यादावुत्तरपदार्थप्राधान्यविरहादुक्तं–प्रायेणोत्तरपदार्थेति । 'द्वित्रा' इत्यादौ बहुव्रीहौ व्यभिचारात्प्रायेणेति । दन्तोष्ठमित्यादौ द्वन्द्वे व्यभिचारात्–प्रायेणेत्युपात्तम् ।

---

यस्मादधिकं । जिससे अधिक हो, उस ( तद्वाचक ) से सप्तमी हो । और जिस स्व का स्वामित्व कहा जाए, उस ( स्व वाचक ) से, तथा स्वामिवाचक [ यन्निष्ठ स्वामित्व कहा जाए, उस]–से भी पर्याय से सप्तमी हो, कर्मप्रवचनीय के योग में ।

---

१ अयं पाठः क्वाचित्कः ।

प्रयोगः। सुपो लुक्। एकदेशविकृतस्याऽनन्यत्वात् प्रातिपदिकसंज्ञायां स्वाद्युत्पत्तिः। 'अव्ययीभावश्चे'त्यव्ययत्वात्सुपो लुक्। अधिहरि।

**अव्ययीभावश्च** ।२।४।१८। [ अव्ययीभावसमासश्च[1] ] नपुंसकं स्यात्। गाः पातीति-गोपाः, [2]तस्मिन्निति—अधिगोपम्।

**नाऽव्ययीभावादतोऽम्त्वपञ्चम्याः** ।२।४।८३। अदन्तादव्ययीभावात्सुपो न लुक्, किन्तु तस्य पञ्चमीं विना अमादेशः [ [3]स्यात् ]। कृष्णस्य समीपम्—उपकृष्णम्।

**तृतीयासप्तम्योर्बहुलम्** ।२।४।८४। अदन्तादव्ययीभावात्तृतीयासप्तम्योर्बहुलमम्भावः [ [3]स्यात् ]। [4]उपकृष्णेन, उपकृष्णम्। बहुलग्रहणात्—सुमद्रसुन्मत्तगङ्गमित्यादौ [ [5]सप्तम्या ] नित्यमम्भावः।

मद्राणां समृद्धिः—सुमद्रम्। यवनानां व्यृद्धिः-दुर्यवनम्। मक्षिकाणामभावो—निर्मक्षिकम्। हिमस्यात्ययः-अतिहिमम्। निद्रा संप्रति न युज्यते-अतिनिद्रम्। हरिशब्दस्य प्रकाशः-इतिहरि। विष्णोः पश्चात्-

---

सुपो लुगिति। 'सुपो धात्वि'ति सूत्रेण ङिविभक्तेर्लुगित्यर्थः।

उपकृष्णमिति। उपेत्यव्ययं सामीप्यार्थकमित्यवधेयम्। समृद्धिः—धनधान्यसम्पत्तिः। विगता ऋद्धिः—व्यृद्धिः—अवनतिः।

अभाव इति। अर्थाभावेऽयं समासः। अत्ययो—ध्वंसः।

---

अव्ययीभावश्च। अव्ययीभाव समास नपुंसक लिङ्ग हो।

नाऽव्ययीभावा। अदन्त अव्ययी भाव से परे जो सुप् उसका लुक् नहीं हो, किन्तु पञ्चमी के विना उसको अमादेश हो।

तृतीयासप्त। अदन्त अव्ययीभावसे परे जो तृतीया और सप्तमी, उसको बहुलता ( विकल्प ) करके अम् भाव ( अम् आदेश ) हो।

---

१ शेषपूरणमेतत्। २ इतिः क्वचिन्न। ३ क्वाचित्कः पाठः।
४ 'उपकृष्णम्। उपकृष्णेन। उपकृष्णे' इति पा०। ५ एतन्नादर्शेऽस्ति पाठः।

अनुविष्णु। योग्यता-वीप्सा-पदार्थानतिवृत्ति-सादृश्यानि—यथार्थाः। रूपस्य योग्यमनुरूपम्। अर्थमर्थं प्रति—प्रत्यर्थम्। शक्तिमनतिक्रम्य [[1]इति]—यथाशक्ति।

अव्ययीभावे चाऽकाले।६।३।८१। सहस्य सः स्यादव्ययीभावे, न तु काले। हरेः सादृश्यं—सहरि। काले तु—सहपूर्वाह्णम्। ज्येष्ठस्यानुपूर्व्यणेति-अनुज्येष्ठम्। चक्रेण युगपत्-सचक्रम्। सदृशः सख्या-ससखि। [[1]यथार्थत्वेनैव सिद्धे पुनः सादृश्यग्रहणं गुणभूतेऽपि सादृश्ये यथा स्यादित्येवमर्थम्]। क्षत्राणां संपत्तिः—सक्षत्रम्। तृणमप्यपरित्यज्य—सतृणम्। अग्निग्रन्थपर्यन्तमधीते—साऽग्नि।

यथाऽसादृश्ये।२।१।७। असादृश्ये एव यथाशब्दः समस्यते। तेनेह न—यथा हरिस्तथा हरः।

यावदवधारणे।२।१।८। [[2]अवधारणे वर्त्तमानं यावदित्यव्ययं सुपा सह समस्यते, सोऽव्ययीभावः]। यावन्तः श्लोकास्तावन्तो-

सहपूर्वाह्णमिति। पूर्वाह्णशब्दोऽत्र कालवाचक इति नात्र सहस्य सादेशः। अनुरूप आत्मभावः—सम्पत्तिः। ऋद्धेराधिक्यं—समृद्धिरिति भेद इति विवेकः। साग्नीति। अन्तवचनस्येदमुदाहरणम्। 'अग्नि'पदेन अग्निहोत्रादिप्रतिपादकग्रन्थोऽत्र विवक्षितः।

अव्ययीभावे चा। 'सह' को 'स' आदेश हो, अव्ययीभावसमास में। परन्तु कालवाचक परे रहते नहीं हो।

यथाऽसादृश्ये। असादृश्यमें ही यथा शब्द समास को प्राप्त हो, और वह समास अव्ययीभावसञ्ज्ञक हो।

यावदवधारणे। अवधारण अर्थ में यावत् यह अव्यय समास को प्राप्त हो, और वह समास अव्ययीभावसञ्ज्ञक हो।

१ एकत्रादर्शेऽयं पाठः। २ शेषपूरणमेतत्।

ऽच्युतप्रणामाः—यावच्छ्लोकम् । **सुप्प्रतिना मात्राऽर्थे ।२।१।९।** [[1]मात्रार्थे वर्त्तमानेन प्रतिना सह सुबन्तं समस्यते। सोऽव्ययीभावः]। शाकस्य लेशः—शाकप्रति । [ [2]मात्रार्थे किं ?। वृक्षं प्रति विद्योतते विद्युत् ]।

**विभाषा ।२।१।११।** अधिकारोऽयम्। **अपपरिबहिरञ्चवः पञ्चम्या ।२।१।१२।** [ [1]अपपरिबहिरञ्चवः पञ्चम्यन्तेन सह वा समस्यन्ते; स चाऽव्ययीभावः ]। [3]अपविष्णु संसारः। अप विष्णोः। परिविष्णु। परि विष्णोः। बहिर्वनम्। बहिर्वनात्। प्राग्वनम्। प्राग्वनात्।

[ **आङ् मर्यादाऽभिविध्योः ।२।१।१३।** एतयोराङ् पञ्चम्यन्तेन सह वा समस्यते, सोऽव्ययीभावः। आ मुक्तेः संसारः। आमुक्ति संसारः। आ सकलाद् ब्रह्म। आसकलं ब्रह्म।

**तिष्ठद्गुप्रभृतीनि च ।२।१।१७।** एतानि निपात्यन्ते। तिष्ठन्ति गावो यस्मिन्काले स–तिष्ठद्गु दोहनकालः।

---

'यावच्छ्लोकम्' इत्यस्य 'अच्युतप्रणामाः' इति शेषः । सुप्प्रतीति। सुबित्यनुवर्त्तमाने पुनः सुब्ग्रहणमव्ययमित्यस्य निवृत्त्यर्थम् । तेन सुबन्तस्य शाकेत्यस्य प्रथमानिर्दिष्टतयोपसर्जनत्वात् पूर्वनिपातः ।

---

सुप्प्रतिना। मात्रार्थक प्रतिके साथ सुबन्तका समास हो, वह समास अव्ययीभावसञ्ज्ञक हो।

विभाषा। यह अधिकार है।

अपपरिबहिर। अप, परि, बहिस्, और अञ्च्—ये पञ्चम्यन्तके साथ विकल्प करके समास को प्राप्त हों। वह समास अव्ययीभावसञ्ज्ञक हो।

तिष्ठद्गु। तिष्ठद्गुप्रभृति निपातित हों।

---

१ शेषपूरणमेतत्। २ क्वाचित्कः पाठः।

३ 'अपविष्णोः, अपविष्णु' इत्येवं वैपरीत्येन क्वचित्पाठः। एवमग्रिमोदाहरणेष्वपि विपर्ययः।

पारे मध्ये षष्ठ्या वा ।२।१।१८। पारमध्यशब्दौ षष्ठ्यन्तेन सह वा समस्येते । एदन्तत्वं चाऽनयोर्निपात्यते । पक्षे-षष्ठीतत्पुरुषः । पारेगङ्गम् । गङ्गापारम् । मध्येगङ्गम् । गङ्गामध्यम् । महाविकल्पेन वाक्यमपि । गङ्गायाः पारम् । गङ्गाया मध्यम् ।

सङ्ख्या वंश्येन ।२।१।१९। वंशो द्विधा, विद्यया जन्मना च । तत्र भवो-वंश्यः । तद्वाचिना सह [1]सङ्ख्या वा समस्यते । द्वौ मुनी वंश्यौ-द्विमुनि । व्याकरणस्य—त्रिमुनि । विद्यातद्वतामभेदविवक्षायान्तु-त्रिमुनि व्याकरणम् । एकविंशति भारद्वाजम् ।

---

अनयोः = पारमध्यशब्दयोः ।

वाक्यमपीति । ननु प्रकृते षष्ठीतत्पुरुषापवादेऽव्ययीभावे महाविभाषया विकल्पिते सति, पक्षे षष्ठीतत्पुरुषप्रवृत्त्या ( तस्यापि वैकल्पिकतया ) तदभावे च वाक्यस्याऽपि सम्भवात् त्रैरूप्यस्य स्वतः सिद्धौ, वाग्रहणमत्र सूत्रे व्यर्थमिति चेन्न; 'यत्रोत्सर्गापवादौ महाविभाषया विकल्प्येते तत्राऽपवादेन मुक्ते उत्सर्गो न प्रवर्त्तते' इति ज्ञापनार्थं वाग्रहणस्य चारितार्थ्यात् । तेन पूर्वं कायस्येत्यत्रैकदेशिसमासाऽभावपक्षे उत्सर्गोऽपि षष्ठीसमासो न भवति, एवं दक्षस्यापत्यं दाक्षिरित्यत्र इञा मुक्तेऽण् न भवतीत्यवधेयम् । प्रकृते च वाग्रहणादेव पक्षे षष्ठीसमासोऽपि भवतीत्याशयः ।

द्वौ = पाणिनिकात्यायनौ । त्रिमुनीति । व्याकरणस्य पाणिन्यादयस्त्रयो मुनयो वंश्या इत्यर्थः ।

---

पारेमध्ये । पार और मध्य शब्द षष्ठ्यन्तके साथ विकल्पसे समासको प्राप्त हो । और वह समास अव्ययीभाव सञ्ज्ञक हो । यहाँ विभाषाधिकारसे पक्षमें वाक्य भी रहेगा ।

सङ्ख्या वंश्येन । वंश्यवाची सुबन्त के साथ सङ्ख्यावाचक समर्थ सुबन्त विकल्प करके समासको प्राप्त हो । और वह समास अव्ययीभाव सञ्ज्ञक हो ।

---

1 वा सङ्ख्या' पा० ।

नदीभिश्च ।२।१।२०। नदीभिः सह सङ्ख्या वा समस्यते। *समाहारे चाऽयमिष्यते। पञ्चगङ्गम्। द्वियमुनम्।

अन्यपदार्थे च संज्ञायाम् ।२।१।२१। अन्यपदार्थे वर्त्तमानं सुबन्तं नदीभिः सह नित्यं समस्यते, संज्ञायाम्। विभाषाऽधिकारेऽपि वाक्येन संज्ञाऽनवगमादिह नित्यसमासः। उन्मत्तगङ्गं नाम देशः। लोहितगङ्गम्।

तद्धिताः ।४।१।७६। आ पञ्चमसमाप्तेरधिकारोऽयम्।

अव्ययीभावे शरत्प्रभृतिभ्यः ।५।४।१०७। शरदादिभ्यष्टच् स्यात्समासान्तोऽव्ययीभावे। शरदः समीपम्-उपशरदम्। प्रतिविपाशम्।

शरद्। विपाश्। अनस्। मनस्। उपानह्। दिव्। हिमवत्। अनुडुह्। दिश्। दृश्। विश्। चेतस्। चतुर्। त्यद्। तद्। यत्। कियत्। (ग.) जराया जरस् च। उपजरसम्।

अनश्च ।५।४।१०८। अन्नन्तादव्ययीभावाट्टच् [स्यात्समासान्तः]।

---

नदीभिश्च। नदीवाचक सुबन्त के साथ सङ्ख्यावाचक समर्थ सुबन्त विकल्पसे समास को प्राप्त हो। वह समास अव्ययीभाव हो।

समाहारे चाऽय। नदीवाचकों का यह समास समाहारमें ही इष्ट है।

अन्यपदार्थे च। अन्यपदार्थमें वर्त्तमानं जो सुबन्त वह नदीवाचक समर्थ सुबन्त के साथ नित्य समासको प्राप्त हो, सञ्ज्ञा में।

तद्धिताः। पञ्चमाध्याय समाप्ति पर्यन्त यह अधिकार है।

अव्ययीभावे शरत्। शरदादि से समासान्त टच् प्रत्यय हो, अव्ययीभाव में।

जराया जरस्। जराशब्दको जरस् आदेश हो, और टच् भी हो, अव्ययीभाव समास में।

अनश्च। अन्नन्त अव्ययीभावसे समासान्त टच् हो।

नस्तद्धिते ।३।४।१४४। नान्तस्य भस्य टेर्लोपः [ स्या[1] ]त्तद्धिते । उपराजम् । अध्यात्मम् ।

नपुंसकादन्यतरस्याम् ।५।४।१०९। अन्नन्तं यत् क्लीबं, तदन्तादव्ययीभावाट्टच्वा स्यात् । उपचर्मम् । उपचर्म ।

झयः ।५।४।१११। झयन्तादव्ययीभावाट्टच्वा स्यात् । उपसमित् । उपसमिधम् ।

नदीपौर्णमास्याग्रहायणीभ्यः ।५।४।११०। [ [2]एतदन्तादव्ययीभावा-] ट्टच्वा स्यात् । उपनदम् । 'यस्येति चे'ति ईकारलोपः । उपनदि इत्यादि ।

गिरेश्च सेनकस्य ।५।४।११२। [ [3]गिरिशब्दान्तादव्ययीभावा-] ट्टच्वा स्यात् । उपगिरम् । उपगिरि । ( ग. ) प्रतिपरसमनुभ्योऽक्ष्णः । [ [2]प्रतिपरसमनुभ्योऽक्ष्ण-]ष्टच् स्यात् [ [2]समासान्तोऽव्ययीभावे ]। अक्ष्णोऽभिमुखं—प्रत्यक्षम् । अक्ष्णः परं—परोक्षम् । अत एव समासः । 'परोक्षे लि'डिति निपातनात्परस्योकार इत्यादि ।

इत्यव्ययीभावः ॥ * ॥

---

समिधः समीपम्–उपसमिधम् । नद्याः समीपम्–उपनदम् । उपनदि ।

* इत्यव्ययीभावसमासप्रकरणम् *

---

नस्तद्धिते । नान्त भसञ्ज्ञक को टि का लोप हो, तद्धित परे रहते ।

नपुंसकादन्य । अन्नन्त जो क्लीब, तदन्त अव्ययीभाव से समासान्त टच् प्रत्यय हो, विकल्प करके ।

झयः । झयन्त अव्ययीभावसे समासान्त टच् प्रत्यय हो, विकल्प करके ।

नदीपौर्णमास्या । नद्यादिसे अव्ययीभावमें टच् हो, विकल्प करके ।

गिरेश्च सेनकस्य । गिरि शब्द से विकल्प से टच् हो, अव्ययीभाव में ।

प्रतिपरसमनुभ्यो । प्रत्यादि से परे जो अक्षिशब्द, उससे विकल्पसे अव्ययीभाव में समासान्त टच् हो ।

---

१ क्वचित्कः पाठः । २ शेषपूरणम् । ३ लिखिते दृश्यतेऽयं पाठः ।

## अथ तत्पुरुषः ।

तत्पुरुषः ।२।१।२२। अधिकारोऽयं प्राग्बहुव्रीहेः ।

द्विगुश्च ।२।१।२३। [ द्विगुरपि[1] ] तत्पुरुषसंज्ञः [ स्यात्[2] ] ।

द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः ।२।१।२४। द्वितीयान्तं श्रितादिप्रकृतिकैः सुबन्तैः सह वा समस्यते, [ [1]स तत्पुरुषः ] । कृष्णं श्रितः—कृष्णश्रितः । दुःखमतीतो—दुःखाऽतीतः । कूपपतितः । ग्रामगतः । तुहिनाऽत्यस्तः । सुखप्राप्तः । दुःखाऽऽपन्नः ।

[ *[2]गम्यादीनामुपसङ्ख्यानम् । ग्रामं गमी-ग्रामगमी । अन्नं बुभुक्षुः—अन्नबुभुक्षुः । स्वयं क्तेन ।२।१।२५। द्वितीयेति न सम्बद्ध्यते, अयोग्यत्वात् । [ 'स्वय'मित्यव्ययं क्तान्तप्रकृतिकसुबन्तेन सह वा समस्यते । स तत्पुरुरुषः ] । स्वयङ्कृतस्यापत्यं—स्वायङ्कृतिः ] ।

तृतीया तत्कृताऽर्थेन गुणवचनेन ।२।१।३०। तृतीयान्तं तृती-

---

प्राग्बहुव्रीहेरिति । 'शेषो बहुव्रीहि'रिति यावत् । द्विगुश्चेति । द्विगुश्च तत्पुरुषसञ्ज्ञ इत्यर्थः । द्विगोस्तत्पुरुषसञ्ज्ञायाः फलन्तु—'पञ्चराज'मिति द्विगौ 'राजाहःसखिभ्यः' इति टच् । कृष्णश्रित इति । समासशास्त्रे द्वितीयान्तस्य कृष्णादेः प्रथमानिर्दिष्टत्वात्कृष्णशब्दस्य पूर्वनिपातः । तुहिनमत्यस्तः=विनाशितवान्—तुहिनाऽत्यस्तः = सूर्यः । कर्तरि क्तः ।

तृतीयेति । तत्कृतेति लुप्ततृतीयाकम् । तच्छब्देन तृतीयान्तपरामर्शिना

---

तत्पुरुषः । यह 'शेषो बहुव्रीहिः' इस सूत्रतक अधिकार है ।

द्विगुश्च । द्विगुसमास भी तत्पुरुष सञ्ज्ञक हो ।

द्वितीया श्रिता । द्वितीयान्त-श्रितादिप्रकृतिक समर्थ सुबन्त के साथ समास को प्राप्त हो, विकल्प करके । और वह समास तत्पुरुष सञ्ज्ञक हो ।

गम्यादीना । द्वितीयान्तके साथ गम्यादिक का भी तत्पुरुषसमास हो ।

तृतीया तत्कृत । ( १ ) तृतीयान्त — तृतीयान्तार्थकृत गुणवचन के साथ विकल्प से समासको प्राप्त हो ।

---

1 शेषपूरणम् । 2 क्वाचित्कः पाठः ।

यान्तार्थकृतगुणवचनेन, अर्थशब्देन[1] च सह प्राग्वत्। शङ्कुलया खण्डः- शङ्कुला-खण्डः। धान्येनाऽर्थो-धान्याऽर्थः। तत्कृतेति किम् ?। अक्ष्णा काणः॥

**पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः।२।१।३१।** तृतीयान्तमेतैः प्राग्वत्। मासपूर्वः। मातृसदृशः। पितृसमः। [2]ऊनार्थे-माषोनं कार्षापणम्। माषविकलम्। वाक्कलहः। आचारनिपुणः। गुणमिश्रः। आचारश्लक्ष्णः। ❋ **अवरस्योपसंख्यानम्** । मासाऽवरः।

**अन्नेन व्यञ्जनम् ।२।१।३४।** संस्कारकद्रव्यवाचकं तृतीयान्तमन्नेन सह प्राग्वत्। दध्ना उपसिक्त ओदनः—दध्योदनः।

---

तदर्थो लक्ष्यते, 'तत्कृते'त्येतच्च गुणद्वारा गुणवचनेऽन्वेति। ततश्च 'तृतीयान्तं— तृतीयान्तार्थकृतो यो गुणस्तद्वाचिना सह समस्यते'इत्येकोऽर्थः। 'अर्थशब्देन च तृतीयान्तं समस्यते' इत्यपरोऽर्थः। अत्र 'गुणेने'त्येव सिद्धे वचनग्रहणाद् गुणोपसर्जनद्रव्यवाचिनो ग्रहणमित्यवधेयम्।

अक्ष्णेति। नह्यत्राऽक्ष्णा काणत्वं, किन्तु रोगादिना।

मासपूर्व इति। मासात्प्रागुत्पन्न इत्यर्थः।

---

(३) और तृतीयान्त—अर्थ प्रकृतिक समर्थ सुबन्तके साथ विकल्पसे समास को प्राप्त हो। और वह समास तत्पुरुष सञ्ज्ञक हो।

पूर्वसदृश। तृतीयान्त-पूर्वादि प्रकृतिक समर्थ सुबन्त के साथ समासको प्राप्त हो, विकल्प करके। और वह समास तत्पुरुष सञ्ज्ञक हो।

अवरस्योप। तृतीयान्त—अवरप्रकृतिक समर्थ सुबन्तके साथ विकल्प से समासको प्राप्त हो। और समास तत्पुरुष सञ्ज्ञक हो।

अन्नेन व्यञ्जनं। संस्कारकद्रव्य वाचक जो तृतीयान्त वह अन्नवाचक समर्थ सुबन्तके साथ समासको प्राप्त हो, विकल्प से। और वह तत्पुरुष सञ्ज्ञक हो।

---

१ 'अर्थेन' पा०। २ 'ऊनार्थाः' पा०।

भक्ष्येण मिश्रीकरणम् ।२।१।३५। भक्ष्यवाचकेन [[1]सुबन्तेन] मिश्रीकरणवाचकं [ [1]तृतीयान्तं ] समस्यते । [ [1]स तत्पुरुषः] । गुडेन मिश्रा धाना गुडधानाः ।

कर्तृकरणे कृता बहुलम् ।२।१।३२। कर्त्तरि, करणे च तृतीया कृदन्तेन बहुलं प्राग्वत् । हरिणा त्रातो—हरित्रातः । नखभिन्नः ।

( प० ) कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम् । नखनिर्भिन्नः । [ [2]कृता किं ? । काष्ठैः पचतितराम् ] ।

चतुर्थी तदर्था-ऽर्थबलिहितसुखरक्षितैः ।२।१।३६। चतुर्थ्यन्तार्थाय यत्,तद्वाचिना,अर्थादिभिश्च चतुर्थ्यन्तं प्राग्वत् । यूपाय दारु यूपदारु । तदर्थेन-प्रकृतिविकृतिभावे एवेष्टिः । [ [3]बलिरक्षितग्रहणाज्ज्ञापकात् ] । तेनेह न—रन्धनाय स्थाली । अश्वघासादयस्तु षष्ठीतत्पुरुषाः ।

---

कर्त्तृकरण इति । कर्त्ता च, करणञ्च अनयाः समाहारः—कर्तृकरणं, तस्मिन् 'कर्तृकरणे' इति विग्रहः । चतुर्थ्यन्तार्थाय यत्तदिति । चतुर्थ्यन्तं—यूपायेति, तदर्थः—यूपः, तदर्थं यत्—दारु, तद्वाचिना दारुशब्देन यूपायेति चतुर्थ्यन्तं समस्यते इति समन्वयः ।

तेनेह नेति । अत्र रन्धनस्थाल्योः प्रकृतिविकृतिभावाऽभावात् ।

---

भक्ष्येण । मिश्रीकरण वाचक जो तृतीयान्त वह भक्ष्यवाचक समर्थसुबन्तके साथ विकल्प से समास को प्राप्त हो । और वह तत्पुरुषसञ्ज्ञक हो ।

कर्तृकरणे । कर्त्तृ तृतीयान्त और करणतृतीयान्त जो कृदन्त वह समर्थ सुबन्त के साथ समास को प्राप्त हो, विकल्प करके । वह तत्पुरुष हो ।

कृद्ग्रहणे । कृत् ग्रहण में गतिकारक पूर्व का भी ग्रहण हो ।

चतुर्थी तदर्था । चतुर्थ्यन्त के वास्ते जो है, तद्वाचक समर्थ सुबन्त के साथ चतुर्थ्यन्त समास को प्राप्त हो । और—अर्थ, बलि, हित, सुख और रक्षित प्रकृतिक सुबन्त समर्थ के साथ चतुर्थ्यन्त विकल्प करके समास को प्राप्त हो । और वह समास तत्पुरुषसञ्ज्ञक हो ।

---

१ शेषपूरणम् । २ लिखितादर्शे दृश्यतेऽयं पाठः । ३ लिखिते न दृश्यते ।

* अर्थेन नित्यसमासो, विशेष्यलिङ्गता चेति वक्तव्यम् । द्विजायाऽयं-द्विजार्थः सूपः । द्विजार्था—यवागूः । द्विजार्थं—पयः । भूतबलिः । गोहितम् । गोसुखम् । गोरक्षितम् ।

पञ्चमी भयेन ।२।१।३७। [ [1]पञ्चम्यन्तं भयप्रकृतिकेन सुबन्तेन सह वा समस्यते, स तत्पुरुषः]। चोराद्भयं-चोरभयम्। स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन ।२।१।३९। [ [2]एतानि क्तान्तेन सह वा समस्यन्ते, स तत्पुरुषः ]। पञ्चम्याः स्तोकादिभ्यः ।६।३।२। [ [1]स्तोकादिभ्यः पञ्चम्या ] अलुगुत्तरपदे । स्तोकान्मुक्तः । अन्तिकादागतः । अभ्याशादागतः । कृच्छ्रादागतः ।

षष्ठी ।२।२।८। [ [1]षष्ठ्यन्तं समर्थेन ] सुबन्तेन सह प्राग्वत् ।

---

भयेनेति । पञ्चम्यन्तं भयप्रकृतिकेन सुबन्तेन सह वा समस्यते, स तत्पुरुष इत्यर्थः ।

---

अर्थेन नित्या । अर्थ शब्द के साथ ( चतुर्थ्यन्त का ) नित्य समास हो, और विशेष्य लिङ्गता भी हो ।

पञ्चमी भयेन । भयप्रकृतिक सुबन्त समर्थ के साथ पञ्चम्यन्त-विकल्प करके समास को प्राप्त हो । और वह समास तत्पुरुष हो ।

स्तोकान्तिक । क्तान्त प्रकृतिक सुबन्त समर्थ के साथ स्तोकादिक समास को प्राप्त हो, विकल्प करके । वह तत्पुरुष हो ।

पञ्चम्याः स्तोका । स्तोकादि से परे जो पञ्चमी उसका अलुक् हो, उत्तर-पद परे रहते ।

षष्ठी । षष्ठ्यन्त-समर्थ सुवन्त के साथ विकल्प से समास को प्राप्त हो । वह समास तत्पुरुष हो ।

---

१ शेषपूरणमेतत्सूत्राक्षरलभ्यम् ।

राज्ञः पुरुषः—राजपुरुषः । याजकादिभिश्च ।२।२।९। षष्ठ्यन्तं [[1]याजकादिभिः समर्थैः सह ] समस्यते। वक्ष्यमाणनिषेधस्यापवादः । ब्राह्मणयाजकः । देवपूजकः । याजक,—पूजक,—परिचारक,—परिवेषक,—स्नातका—ऽध्यापको—त्सादको—द्वर्तक,—होतृ,—पोतृ, —भर्तृ, —रथगणक,—पत्तिगणका,—इति याजकादिः ।

*गुणात्तरेण, तरलोपश्च । तरबन्तं यद् गुणवाचि तेन समासः, [ [1]तरप्प्रत्ययलोपश्च ] । सर्वेषां श्वेततरः- सर्वश्वेतः । सर्वेषां महत्तरः—सर्वमहान् । [ [2]*कृद्योगा षष्ठी समस्यत इति वाच्यम् । इध्मप्रव्रश्चनः]।

न निर्द्धारणे ।२।२।१०। [ [1]निर्द्धारणे ] या षष्ठी [ सा ] न समस्यते । नृणां द्विजः श्रेष्ठः । [*प्रतिपदविधाना षष्ठी न समस्यत

---

वक्ष्यमाणेति। 'तृजकाभ्यां'कर्त्तरीति षष्ठासमासनिषेधस्य प्रतिप्रसवाऽयमित्यर्थः।

गुणात्तरेणेति । तरबन्तं यद् गुणवाचि तेन सह षष्ठ्यन्तस्य समासः, तप्प्रत्ययलोपश्चेति वक्तव्यमित्यर्थः 'न निर्द्धारण' इति 'पूरणगुण' इति निषेधस्य चाऽपवादोऽयम् । न निर्द्धारण इति । निर्द्धारणे या षष्ठी सा न समस्यते इत्यर्थः । नृणामिति । अत्र 'यतश्च निर्द्धारणम्' इति षष्ठी ।

---

याजकादिभिश्च । याजकादि प्रकृतिक सुबन्त समर्थ के साथ षष्ठ्यन्त विकल्प से समास को प्राप्त हो । वह तत्पुरुष हो ।

गुणात्तरेण । तरबन्त जो गुणवाची उसके साथ षष्ठ्यन्त का समास हो । और तरप् प्रत्यय का लोप भी हो ।

कृद्योगा । कृद्योगा षष्ठी—समर्थ सुबन्त के साथ विकल्प से समास को प्राप्त हो ।

न निर्द्धारणे । निर्द्धारण में जो षष्ठी वह समास को प्राप्त नहीं हो ।

प्रतिपदविधाना । प्रतिपदविधाना ( तत्तत् धातुओं का नाम लेकर उनके योग में 'ज्ञोऽविदर्थस्य'—आदि सूत्रों से विहित ) जो षष्ठी उसका समास नहीं हो ।

---

१ शेषपूरणम् । २ मुद्रितेषु नेदं दृश्यते। लिखितादर्शानुसारेणाऽत्रास्माभिः स्थापितः।

इति वाच्यम् । सर्पिषो ज्ञानम् ]।

**पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन ।२।२।११।** पूरणाद्यर्थैः, सदादिभिश्च षष्ठी न समस्यते । पूरणे-सतां षष्ठः । गुणे—काकस्य कार्ष्ण्यम् । सुहितार्थाः—तृप्त्यर्थाः । फलानां सुहितः । सत्-द्विजस्य कुर्वन्, कुर्वाणो वा । ब्राह्मणस्य कृत्वा । पूर्वोत्तरसाहचर्यात् कृदव्ययमेव गृह्यते । तेन 'तदुपरी'त्यादि सिद्धम् । ब्राह्मणस्य कर्तव्यम् । तक्षकस्य सर्पस्य ।

**क्तेन च पूजायाम् ।२।२।१२।** 'मतिबुद्धि'सूत्रेण विहितो यः क्तस्तदन्तेन षष्ठी न समस्यते । राज्ञां मतो, बुद्धः, पूजितो वा । [ '[1]राजपूजित' इत्यादौ तु भूते क्तान्तेन सह तृतीयान्तस्य समासः ]।

---

सर्पिषो ज्ञानमिति । अत्र 'ज्ञोऽविदर्थस्य करणे' इति षष्ठी । सा च विशिष्य तद्योगे विहितेति प्रतिपदविधाना ।

सदिति । अत्र 'सत्' पदेन शतृशानचौ ग्राह्यौ । 'तौ सत्' इत्युक्तेः । षष्ठ इति । षण्णां पूरणः-षष्ठः । 'तस्य पूरणे डट्' इति डटः 'षट्कतिकतिपयचतुरां थुक्' इति थुगागमे, थस्य ष्टुत्वे च रूपमिदम् । अव्यये उदाहरति—ब्राह्मणस्येति । कृत्साहचर्यादिति । सतस्तव्यतश्च कृत्प्रत्ययतया, तत्साहचर्यादित्यर्थः । तेनेति । उपरीत्यस्य कृदव्ययत्वाऽभावेन तत्र 'तस्योपरि–तदुपरी'त्येवं षष्ठीसमासो भवत्येवेत्याशयः ।

इदमवधेयम्-अत्र सूत्रे गुणेन षष्ठीसमासस्य निषेधोऽनित्यः,'तदशिष्यं सञ्ज्ञाप्रमाणत्वात्' इति निर्देशात् । तेनार्थगौरवं, बुद्धिमान्द्यं, शरीरकार्श्यं, वाक्पाटवमित्यादि सिध्यति ।

---

पूरणगुण । पूरणाद्यर्थ और सदादि के साथ षष्ठी का समास नहीं हो ।

क्तेन च । 'मतिबुद्धिपूजार्थेभ्यश्च' इस सूत्रसे विहित जो क्त, तदन्त के साथ षष्ठी का समास नहीं हो ।

---

१ लिखितादर्शेऽयं पाठो दृश्यते ।

अधिकरणवाचिना च ।२।२।१३। [ [1]अधिकरणवाचिना ] क्तेन षष्ठी न समस्यते । इदमेषामासितं,गतं,भुक्तं वा ।

कर्मणि च ।२।२।१४। 'उभयप्राप्तौ कर्मणि' इति या षष्ठी सा न समस्यते । आश्चर्यो गवां दोहोऽगोपेन ।

तृजकाभ्यां कर्तरि ।२।३।१५। कर्त्रर्थं तृजकाभ्यां षष्ठ्या न समासः । अपां स्रष्टा । वज्रस्य भर्ता । ओदनस्य पाचकः ।

कर्त्तरि च ।२।२।१६। कर्त्तरि षष्ठ्या अकेन न समासः । भवतः शायिका ॥

पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे ।२।२।१। अवयविना सह

---

आसितमिति । 'क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः' इत्यधिकरणेऽत्र क्तः । आस्यते अत्रेति आसितम् = आसनस्थानम् । गम्यतेऽत्रेति गतं=गमनस्थानम् । भुज्यतेऽत्रेति भुक्तं = भोजनाधिकरणम् ।

अपामिति । 'कर्तृकर्मणोः कृति' इति कर्मणि षष्ठी । एवमग्रेऽपि ।

शायिकेति । शयनं-शायिका । 'पर्यायाऽर्हणोत्पत्तिषु ण्वुच्' इति भावे ण्वुच् । 'भवत' इति च-'कर्त्तरि कर्मणोः कृति' इत्यनेन कर्त्तरि षष्ठी ।

'एकदेशिना' इत्यस्यार्थमाह—अवयविनेति ।

---

अधिकरणवाचिना च । अधिकरणार्थक जो क्त, तदन्त के साथ षष्ठी का समास नहीं हो ।

कर्मणि च । 'उभयप्राप्तौ कर्मणि' इस सूत्र से विहित जो षष्ठी उसका समास नहीं हो ।

तृजकाभ्यां । कर्त्रर्थक तृच् और अक के साथ षष्ठी का समास नहीं हो ।

कर्त्तरि च । कर्त्ता में जो षष्ठी, तदन्त का अक के साथ समास नहीं हो ।

पूर्वापराधरो । अवयववाची के साथ पूर्वादि सुबन्त समर्थ का समास हो, विकल्प करके, यदि एकत्व संख्या विशिष्ट अवयवी हो तो ।

---

1 शेषपूरणमेतत् ।

पूर्वादयः समस्यन्ते, एकत्वसङ्ख्याविशिष्टश्चेदवयवी । षष्ठीसमासाऽपवादः । पूर्वं कायस्य–पूर्वकायः । अपरकायः । एकदेशिना किम् ? । पूर्वं नाभेः कायस्य । एकाधिकरणे किम् ? । पूर्वश्छात्राणाम् ।

अर्द्धं नपुंसकम् ।२।२।२। समांशवाच्यर्द्धशब्दो नित्यं क्लीबे, स [ [1]सुबन्तेन ] प्राग्वत् । अर्द्धं पिप्पल्या–अर्द्धपिप्पली । ❋ एकविभक्ताववषष्ठ्यन्तवचनम् । इत्युपसर्जनसंज्ञाबाधाद्ध्रस्वो न[2] । क्लीबे किम् ? । ग्रामार्द्धः । द्रव्यैक्य एव । [ [3]नेह– ] अर्द्धं पिप्पलीनाम् ॥

---

'एकाधिकरणे' इत्यस्यार्थमाह—एकत्वेत्यादि । पूर्वं नाभेरिति । नाभेर्यः पूर्वो भागः स कायस्य–अवयव इत्यर्थः । अत्र 'नाभे'रिति दिग्योगे पञ्चमी । तेनात्र पूर्वस्य भागस्य नाभिरवधिरेव, नावयवी । कायस्याऽवयवित्वेन तेन सह 'पूर्व'मित्यस्य समासस्तु इष्ट एवेत्यवधेयम् । नित्यं क्लीब इति । पुंस्यर्द्धोऽर्द्धं समेंऽशके' इत्यमरात् । सः = समांशवाची नित्यं नपुंसकोऽर्द्धशब्दः । प्राग्वत्–इत्यस्य–अवयविना सह समस्यते, एकत्वसङ्ख्याविशिष्टश्चेदवयवीत्यर्थः ।

पिप्पल्यादिशब्दानामत्र समासे विग्रहे नित्यं षष्ठ्यन्ततया 'एकविभक्ति चाऽपूर्वनिपाते' इति सूत्रेण प्राप्तस्योपसर्जनत्वस्य निषेधायाह—एकेति । 'एकविभक्ति चाऽपूर्वनिपाते' इति सूत्रेण षष्ठ्यन्तस्य नियतविभक्तित्वेऽप्युपसर्जनसञ्ज्ञा न भवतीति वक्तव्यमिति वार्त्तिकार्थः । ह्रस्वो न = पिप्पलीशब्दान्तेकारस्य 'गोस्त्रियोः' इति सूत्रेण ह्रस्वो न । ग्रामार्द्धः=ग्रामस्यैकदेशः । द्रव्यैक्य एवेति । एकत्वसङ्ख्याविशिष्टेऽवयविन्येवायं समासो भवतीत्यर्थः । पिप्पलीनामिति । अत्राऽवयविनां बहुत्वादर्द्धं नपुंसकमिति समासो न भवतीत्याशयः ।

---

अर्द्धं नपुंसकम् । सम अंशवाची नित्य नपुंसक जो अर्द्ध शब्द, वह सुबन्त समर्थ के साथ विकल्प से समास को प्राप्त हो । वह समास तत्पुरुष हो ।

एकविभक्ताव । 'एकविभक्तिचाऽपूर्वनिपाते' इस सूत्र से नियतविभक्त्यन्त षष्ठ्यन्त की उपसर्जन सञ्ज्ञा नहीं हो ।

---

१ क्वचिन्न । २ 'सञ्ज्ञाऽभावात्' पा । ३ अयं पाठः क्वापि न दृश्यते ।

द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्याम् ।२।२।३। एतान्येकदेशिना सह [1]प्राग्वत् । द्वितीयं भिक्षायाः–द्वितीयभिक्षा । एकदेशिना किम् ? । द्वितीयं भिक्षाया भिक्षुकस्य । 'अन्यतरस्याङ्'ग्रहणसामर्थ्यात्पूरणगुणेति निषेधं बाधित्वा पक्षे षष्ठीसमासः । भिक्षाद्वितीयम् ।

प्राप्ताऽऽपन्ने च द्वितीयया ।२।२।४। [ [2]प्राप्ताऽऽपन्ने च द्वितीयया सह वा समस्येते, स तत्पुरुषः] । पक्षे–'द्वितीया श्रिते'ति समासः । प्राप्तो जीवनं–प्राप्तजीवनः । जीवनप्राप्तः । आपन्नजीवनः । जीवनापन्नः । इह सूत्रे 'द्वितीयया–अ' इति च्छित्वा अकारोऽपि विधीयते । तेन—जीविकां प्राप्ता स्त्री–प्राप्तजीविका । [3]आपन्नजीविका ।

कालाः परिमाणिना ।२।२।५। परिच्छेद्यवाचिना सुबन्तेन सह कालाः समस्यन्ते । मासो [4]जातस्य यस्य स–मासजातः ।

---

भिक्षुकस्येति । अत्र भिक्षुकशब्देन सह 'द्वितीय'शब्दस्य न समासः । भिक्षुकेण द्वितीयस्याऽवयवावयविभावाऽभावात् । द्वितीयाशब्देन भिक्षाशब्दस्य समासस्तु भवत्येवेत्याशयः । परिमाणिनेति । परिमाणं = परिच्छेदकतयाऽस्यास्तीति परिमाणी = परिच्छेद्यः । मासजात इति । अत्र च जातो बालकः परिच्छेद्यः, मासः—परिमाणं = परिच्छेदकः । साक्षात्क्रियापरिच्छेदकोऽपि कालः

---

द्वितीयतृतीयचतुर्थ । द्वितीय आदि का एकदेशी ( अवयवी = समुदाय ) के साथ समास हो, विकल्प करके । वह समास तत्पुरुष हो ।

प्राप्तापन्ने च । प्राप्त और आपन्न का द्वितीयान्त सुबन्त समर्थ के साथ विकल्प से समास हो । वह समास तत्पुरुषसञ्ज्ञक हो । और द्वितीयान्त को अकार आदेश भी हो ।

कालाः परिमाणिना । परिमाणी अर्थात् परिच्छेद्यवाची सुबन्त समर्थ के साथ कालवाचक का समास हो, विकल्प करके । वह समास तत्पुरुष हो ।

---

१ 'वे'ति क्वाचित्कम् । २ शेषपूरणमेतत् ।
३ क्वचिन्न । ४ 'जातो यस्य स' पा० ।

[* [1]उत्तरपदेन परिमाणिना द्विगोः सिद्धये बहूनां तत्पुरुषस्योपसङ्ख्यानम् । द्वे अहनी जातस्य यस्य स—द्व्यह्नजातः । 'अह्नोऽह्न' इति वक्ष्यमाणोऽह्नादेशः ।

**सप्तमी शौण्डैः ।२।१।४०।** सप्तम्यन्तं शौण्डादिभिः प्राग्वत् । अक्षेषु शौण्डः—अक्षशौण्डः । शौण्ड,–धूर्त्त,–कितव,–व्याड,–प्रवीण,–संवीता,–न्तरा–ऽधिप,–पटु,—पण्डित,—कुशल,–चपल,–निपुणा इति शौण्डादिः । 'द्वितीया' 'तृतीये'त्यादियोगविभागादन्यत्रापि द्वितीयादीनां प्रयोगवशात्समासो ज्ञेयः ।

**दिक्सङ्ख्ये संज्ञायाम् ।२।१।५०।** [ [2]दिग्वाचिनः, सङ्ख्यावाचिनश्च सञ्ज्ञायामेव समानाधिकरणेन सुबन्तेन सह वा समस्यन्ते ]। 'विशेषणं विशेष्येण बहुल'मित्येव सिद्धे 'संज्ञायामेवे'ति नियमार्थं सूत्रम् । पूर्वेषुकामशमी । सप्तर्षयः । तेनेह न—उत्तरा वृक्षाः । पञ्च ब्राह्मणाः ।

---

परम्परया जातबालादिपरिच्छेदकोऽपि भवत्येवेत्याशयः । शौण्डः = प्रवीणः ।

नियमार्थमिति । 'दिक्सङ्ख्ये सञ्ज्ञायामेव समस्येते तत्पुरुषे' इति नियमार्थमिदं सूत्रमित्यर्थः ।

तत्र सञ्ज्ञायामुदाहरति—पूर्वेषुकामेति ।

उत्तरा वृक्षा इति । असञ्ज्ञात्वान्नेह समासः ।

---

सप्तमी शौण्डैः । शौण्डादि प्रकृतिक सुबन्त समर्थ के साथ सप्तम्यन्त का विकल्प से समास हो । और वह समास तत्पुरुषसञ्ज्ञक हो ।

दिक्संख्ये । दिग्वाची और संख्यावाची का सञ्ज्ञा में ही समानाधिकरण सुबन्त के साथ समास हो, विकल्प करके। वह तत्पुरुष सञ्ज्ञक हो ।

---

१ लिखिते दृश्यतेऽयं पाठः । २ शेषपूरणम् ।

तद्धितार्थोत्तरपदसमाहारे च ।२।१।५१। [1]तद्धितार्थविषये, उत्तरपदे च परतः, समाहारे च वाच्ये दिक्संख्ये प्राग्वत्। पूर्वस्यां शालायां भवः । पूर्वा-शाला अ इति समासे जाते—। *सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः ।

दिक्पूर्वपदादसंज्ञायां ञः ।४।२।१०७। अस्माद्भवाद्यर्थे ञः स्यादसंज्ञायाम् । तद्धितेष्वचामादेः ।७।२।११७। ञिति, णिति च तद्धिते [ [2]परे ] अचामादेरचो वृद्धिः [3]स्यात् । 'यस्येति च'। पौर्वशालः ।

पूर्वा शाला प्रिया यस्येति त्रिपदे बहुव्रीहौ कृते, प्रियाशब्दे उत्तरपदे पूर्वयोस्तत्पुरुषः । तेन शालाशब्दे आकार उदात्तः । पूर्वशालाप्रियः ।

---

विषय इति । एकाऽपीह सप्तमी विषयभेदाद्भिद्यते ।

पूर्वयोः = पूर्वा-शालाशब्दयोः। उदात्त इति । समासान्तोदात्तत्वेन शालाघटकलकारोत्तरवर्त्याकार उदात्त इत्यर्थः । असति तु अवान्तरतत्पुरुषे 'बहुव्रीहौ प्रकृत्या' इति पूर्वपदप्रकृतिस्वरेण पूर्वशब्दस्याद्युदात्तत्वमेव स्यान्नतु शालाशब्दान्ताऽऽकारस्योदात्तत्वं स्यादित्याशयः ।

---

तद्धितार्थोत्तर । तद्धितार्थ के विषय में, उत्तर पद परे रहते, और समाहार वाच्य हो तो दिग्वाचक और संख्यावचक का समास हो । वह समास तत्पुरुष सञ्ज्ञक हो ।

सर्वनाम्नो । सर्वनामको पुंवद्भाव हो, वृत्तिमात्र में ।

दिक्पूर्वपदा । दिक्पूर्वपद ( समास ) से भवादि अर्थों में ञ प्रत्यय हो, असंज्ञा में ।

तद्धितेष्वचा । ञित् और णित् तद्धित परे रहते अचों के मध्य में जो आदि अच् उसको वृद्धि हो ।

---

१ तद्धितार्थे विषये' पा० । २ क्वचिन्न । ३ 'स्या'दिति क्वचिन्न ।

दिक्षु समाहारो नास्ति, अनभिधानात्। सङ्ख्यायास्तद्धिताथे— षण्णां मातृणामपत्यं—षाण्मातुरः। 'मातुरुत्सङ्ख्यासम्भद्रपूर्वायाः' इति वक्ष्यमाणोऽण्।

पञ्च गावो धनं यस्येति त्रिपदे बहुव्रीहौ [ कृते ] अवान्तरतत्पुरुषस्य विकल्पे प्राप्ते—। ॐद्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनम्।

गोरतद्धितलुकि।५।४।९२। गोऽन्तात्तत्पुरुषाट्टच् स्यात्समासान्तो, न तद्धितलुकि। पञ्चगवधनः। सङ्ख्यापूर्वो द्विगुः।२।१।५२। 'तद्धितार्थे'-त्यत्रोक्तः सङ्ख्यापूर्वो द्विगुः स्यात्। द्विगुरेकवचनम्।२।४।१। द्विग्वर्थः समाहार एकवत्स्यात्[2]। स नपुंसकम्।२।४।१७। समाहारे द्विगु-

---

दिक्षु तद्धितार्थोत्तरपदयोरुदाहृत्य, दिक्षु समाहारे विशेषमाह—नास्तीति। सङ्ख्यायास्तद्धितार्थ इति। 'उदाह्रियते' इति शेषः।

वक्ष्यमाणः = अपत्याधिकारे वक्ष्यमाणोऽपत्यार्थकोऽण्। सङ्ख्याया उत्तरपदे उदाहरति—पञ्चेति।

सङ्ख्यापूर्व इति। सङ्ख्यापूर्वकस्तत्पुरुषसमासो द्विगुसञ्ज्ञको भवतीत्यर्थः। द्विगुरेकेति। द्विग्वर्थः समाहार एकार्थप्रतिपादको भवतीत्यर्थः।

---

द्वन्द्वतत्पुरुषयो। समासचरमावयव उत्तरपद परे रहते, अवान्तर द्वन्द्व, और अवान्तर तत्पुरुष नित्य ही होते हैं।

गोरतद्धितलुकि। गो शब्दान्त तत्पुरुष से समासान्त टच् प्रत्यय हो। परन्तु तद्धितलुक् में यह टच् नहीं हो।

सङ्ख्यापूर्वो द्विगुः। 'तद्धितार्थोत्तरपद' इस सूत्र से जो सङ्ख्यापूर्वक का समास होता है, वह द्विगुसञ्ज्ञक हो।

द्विगुरेकवचनम्। द्विग्वर्थ जो समाहार वह एकवत् हो।

स नपुंसकम्। समाहार में द्विगु और द्वन्द्व—ये नपुंसक लिङ्ग हों।

---

१ क्वचिन्न। २ 'स्या'दिति क्वाचित्कम्।

द्वन्द्वश्च नपुंसकं [1]स्यात्। पञ्चानां गवां समाहारः–पञ्चगवम्।

**विशेषणं विशेष्येण बहुलम्** ।२।१।५७। भेदकं,–भेद्येन समानाधिकरणेन बहुलं प्राग्वत्। नीलमुत्पलम्। नीलोत्पलम्। 'बहुल'ग्रहणात् क्वचिन्नित्यम्—कृष्णसर्पः। क्वचिन्न–रामो जामदग्न्यः।

***अपरस्याऽर्द्धे पश्चभावो वक्तव्यः** । अपरश्चाऽसावर्द्धश्च पश्चार्द्धः।

**सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः** ।२।१।६१। [ [2]सदादिप्रकृतिकं सुबन्तं समानाधिकरणैः पूज्यमानैः ] सह [[2]वा ] समस्यते। सद्वैद्यः। **आन्महतः समानाधिकरणजातीययोः** ।६।३।४६।[[2]महत आत्त्वं स्यात्समानाधिकरणे, जातीये च परतः ]। महावैयाकरणः। [3]महाप्रकारो–[3]महाजातीयः।

---

नीलोत्पलमिति। । अत्र नीलं–विशेषणम्। उत्पलं–विशेष्यम्।

नित्यमिति। नित्यं = नित्यसमासः। क्वचिन्न = क्वचिन्नैवायं समासः। अपरस्येति। अपरस्य पश्चादेशः स्यादर्द्ध शब्दे परे इत्यर्थः। सन्महदिति। सदादिप्रकृतिकं सुबन्तं पूज्यमानैः सह वा समस्यते इत्यर्थः।

---

विशेषणं विशेष्येण। भेदक ( विशेषण ) का भेद्य ( विशेष्य ) वाचक समानाधिकरण समर्थ सुबन्तके साथ समास हो, बहुलता करके। वह समास तत्पुरुष हो।

अपरस्यार्द्धे। अपर को पश्च आदेश हो, अर्द्ध शब्द परे रहते।

सन्महत्। सदादि प्रकृतिक सुबन्त का पूज्यमान प्रकृतिक समानाधिकरण सुबन्त समर्थ के साथ विकल्प से समास हो। वह तत्पुरुषसञ्ज्ञक हो।

आन्महतः। महत् शब्दको आकार अन्तादेश हो, समानाधिकरण परे रहते, और जातीयर् प्रत्यय परे रहते।

---

१ 'स्या'दिति क्वाचित्कम्। २ शेषपूरणमेतत्। ३ क्वचिन्न।

**तत्पुरुषः समानाधिकरणः कर्मधारयः ।१।२।४२।** [ [1]समानाधिकरणपदस्तत्पुरुषः कर्मधारयसञ्ज्ञः स्यात् ]। **पुंवत्कर्मधारयजातियदेशीयेषु ।६।३।४२।** कर्मधारये, जातीय-देशीययोश्च परतो भाषितपुंस्कात्पर ऊङभावो यस्मिंस्तथाभूतं पूर्वं पुंवत्। पूरणीप्रियादिष्वप्राप्तः पुंवद्भावोऽनेन विधीयते। महानवमी। कृष्णचतुर्दशी। महाप्रिया। पूज्यमानैः किम् ?। उत्कृष्टो गौः। पङ्कादुद्धृत इत्यर्थः।

**उपमानानि सामान्यवचनैः ।२।१।५५।** [ [1]उपमानवाचीनि सुबन्तानि समानाधिकरणैः सामान्यवचनैः सुबन्तैः सह वा समस्यन्ते।

---

तत्पुरुषः समानाधिकरण इति। समानाधिकरणानां = समानाभिधेयानां पदानां, तत्पुरुषः कर्मधारयसञ्ज्ञो भवतीत्यर्थः। अधिकरणशब्दोऽत्राऽभिधेयवचनः।

जातीयेति। अत्र जातीय-देशीयौ प्रत्ययौ। अप्राप्त इति। 'स्त्रियाः पुंवद्भाषितपुंस्कात्—' इत्यत्र 'अपूरणीप्रियादिषु' इत्युक्तेरिति भावः। महानवमीति। महती चासौ नवमी च महानवमी। कृष्णेति। कृष्णा चासौ चतुर्दशी च कृष्णचतुर्दशी। महाप्रियेति। महती चासौ प्रिया च—महाप्रिया।

उत्कृष्टः—पङ्काद्बहिर्निःसारितः। उपमानानीति। उपमानवाचकं घनादिप्रकृतिकं समानाधिकरणं सुबन्तं, साधारणधर्मवचनैः श्यामादिभिः सह वा समस्यते इत्यर्थः।

---

तत्पुरुषः समानाधिकरणः। समानाधिकरणों ( समान विभक्त्यन्तों ) का तत्पुरुष कर्मधारय सञ्ज्ञक होता है।

पुंवत्कर्मधारय। भाषितपुंस्क से परे ऊङ्का अभाव है जिसमें, ऐसा जो पूर्वपद, उसको पुंवद्भाव हो, कर्मधारय समासमें, और जातीयर् देशीयर् प्रत्यय परे रहते।

उपमानानि। उपमानवाचक सुबन्त-समानाधिकरण सामान्यधर्म वाचक सुबन्त समर्थके साथ समासको प्राप्त हों। वह समास तत्पुरुष हो।

---

१. शेषपूरणमेतद्।

स तत्पुरुषः ]। घन इवश्यामो घनश्यामः। [ [1]इह पूर्वपदं तत्सदृशे लाक्षणिकमिति सूचयितुं लौकिकविग्रहे 'इव'शब्दः प्रयुज्यते। पूर्व-नियातनियमार्थं सूत्रम् ]। उपमितं व्याघ्रादिभिः सामान्याऽप्रयोगे[2] ।२।१।५६। [ [1]उपमेयवाचकं सुबन्तमुपमानवाचकैर्व्याघ्रादिभिः सह वा समस्यते, साधारणधर्मस्य प्रयोगेऽसति। स तत्पुरुषः। विशेष्यस्य पूर्वनिपातनियमार्थं सूत्रम्[3] ]। पुरुषो व्याघ्र इव—पुरुषव्याघ्रः। नृसोमः[3] । सामान्याऽप्रयोगे किम्?। पुरुषो व्याघ्र इव शूरः।

* शाकपार्थिवादीनां [ [3]सिद्धये ] उत्तरपदलोपश्च। शाकप्रियः पार्थिवः—शाकपार्थिवः। देवब्राह्मणः।

---

उपमितमिति। उपमेयवाचकं सुबन्तं व्याघ्रादिभिः सह वा समस्यते, साधारणधर्मस्य (तद्वाचकशूरादिशब्दस्य) प्रयोगे असतीत्यर्थः। शूर इति। अत्र शूरत्वस्य सामान्यधर्मत्वात्तद्वाचकशब्दस्य प्रयोगे नाऽनेन समास इत्याशयः।

शाकपार्थिवइति। पृथिव्या ईश्वरः-पार्थिवः। शाकं प्रियं यस्यासौ-शाकप्रियः। स चासौ पार्थिवश्च-शाकपार्थिवः। देवब्राह्मण इति। देवस्य पूजको-देवपूजकः। स चासौ ब्राह्मणश्चेति विग्रहः।

---

उपमितं व्याघ्रा। उपमेय वाचक सुबन्त—उपमानवाचक व्याघ्रादि प्रकृतिक सुबन्त समर्थके साथ समासको प्राप्त हो, साधारण धर्मका यदि प्रयोग नहीं हो तो। और वह समास तत्पुरुष सञ्ज्ञक हो।

शाकपार्थिवादीनां। शाकपार्थिव आदि की सिद्धि के लिए उत्तरपद का लोप हो।

---

१ लिखितेऽयं ग्रन्थ उपलभ्यते। मुद्रितेषु परं न दृश्यते।

२ 'उपमेयं व्याघ्रादिभिः सह प्राग्वत्। साधारणधर्मस्य प्रयोगेऽसति' इति वृत्तिर्लिखिते क्वचिदस्ति। ३ क्वचिन्न।

कडाराः कर्मधारये ।२।२।३८। कडारादयः शब्दाः कर्मधारये वा पूर्वं प्रयोज्याः। कडारजैमिनिः। जैमिनिकडारः। मयूरव्यंसकादयश्च ।२।१।७२। एते निपात्यन्ते। मयूरो व्यंसको-मयूरव्यंसकः। व्यंसको-धूर्त्तः। उदक् च अवाक् च-उच्चावचम्। निश्चितं च प्रचितं च-निश्चप्रचम्। नास्ति किञ्चन यस्याऽसौ—अकिञ्चनः।

* आख्यातमाख्यातेन क्रियासातत्ये। अश्नीत, पिबतेत्येवं सततं यत्राभिधीयते सा-अश्नीतपिबता। पचतभृज्जता। खादतमोदता। नास्ति कुतो भयं यस्य सः-अकुतोभयः। अन्यो राजा-राजान्तरम्। चिदेव—चिन्मात्रम्।

नञ् ।२।२।६। नञ् सुपा [ सह[1] ] प्राग्वत्। नलोपो नञः ।६।३।७३। नञो नस्य लोपः [ [1]स्यात् ] उत्तरपदे। अब्राह्मणः।

---

उच्चेति। 'उच्चावचं नैकविधम्' इत्यमरः। खादत, मोदध्वम् इति सततं यत्राऽभिधीयते सा खादतमोदता। अन्यो राजेति। नित्यसमासोऽयमिति सूचयितुमस्वपदविग्रहो दर्शितः। अब्राह्मण इति। न ब्राह्मणः-अब्राह्मण इति विग्रहः।

---

कडाराः कर्म। कडार आदि शब्दोंका कर्मधारय समासमें विकल्प करके पूर्वनिपात हो।

मयूरव्यंसकादयश्च। मयूरव्यंसकादि निपातित हों।

आख्यातमाख्यातेन। तिङन्त का तिङन्तके साथ समास हो, क्रियाओंका सातत्य ( नैरन्तर्य ) गम्यमान हो तो।

नञ्। नञ् का सुबन्त समर्थ के साथ समास विकल्प करके हो। और वह समास तत्पुरुष सञ्ज्ञक हो।

नलोपो नञः। नञ् के नकारका लोप हो, उत्तरपद परे रहते।

---

१ क्वचिन्न।

तस्मान्नुडचि ।६।३।७४। लुप्तनकारान्नञ उत्तरपदस्याऽजादेर्नुट् स्यात् । अनश्वः । 'नैकधे'त्यादौ तु 'न'शब्देन सह 'सुप्सुपे'ति समासः ।

कुगतिप्रादयः ।२।२।१८। एते समर्थेन [1]सह नित्यं समस्यन्ते । कुत्सितः पुरुषः–कुपुरुषः ।

ऊर्यादिच्विडाचश्च ।१।४।६१। ऊर्यादयश्च्व्यन्ता, डाजन्ताश्च क्रियायोगे गतिसंज्ञाः स्युः । [ [2]'समासेऽनञ्पूर्वे क्त्वो ल्यप्' । ह्रस्वस्य पिति कृति तुक्'] । ऊरीकृत्य । शुक्लीकृत्य । पटपटाकृत्य ।

*कारिकाशब्दस्योपसंख्यानम् । [[2]कारिका–क्रिया] । कारिकाकृत्य ।

---

'न' शब्देनेति । नञा सह समासे तु अनेकधेति रूपं भवत्येवेति ध्येयम् ।

कुपुरुष इति । नित्यसमासत्वादत्राऽस्वपदविग्रहो दर्शितः ।

ऊरीति । गतित्वात्कुगतीति समासे क्त्वो ल्यबादेशः । शुक्लीति । अशुक्लं शुक्लं सम्पद्यते तथा विधाय शुक्लीकृत्य । अत्र 'अस्य च्वौ' इतीत्वम् ।

पटपटेति । अव्यक्तानुकरणादिति डाचि 'डाचि बहुलं द्वे भवतः' इति द्वित्वम् । 'नित्यमाम्रेडिते डाची'ति तकारपकारयोः पररूपम् ।

कारिकेति । अकारिकां कारिकां सम्पद्यमानां विधाय–कारिकाकृत्य ।

---

तस्मान्नुडचि । लुप्तनकार जो नञ्, उससे परे जो अजादि उत्तरपद, उसको नुट् आगम हो ।

कुगतिप्रादयः । कु, गति, और प्रादि–ये समर्थ के साथ नित्य समास को प्राप्त हों । और वह समास तत्पुरुषसञ्ज्ञक हो ।

ऊर्यादि । ऊरी आदि शब्द, और च्व्यन्त, और डाजन्त–ये क्रियाके योगमें गतिसञ्ज्ञक हों ।

कारिकाशब्दस्यो । कारिकाशब्दकी क्रियाके योगमें गतिसञ्ज्ञा हो ।

---

१ नित्यमिति पाठः क्वचिन्न । परन्त्वावश्यकत्वाद्वर्द्धितोऽस्माभिः ।

२ लिखितेऽयं पाठो दृश्यते ।

**अनुकरणं चाऽनितिपरम्** ।१।४।६२। [ अनितिपरमनुकरणं गतिसञ्ज्ञं स्यात्[२] ] क्रियायोगे। अनितिपरं किम् ?। खाडिति कृत्वा निरष्ठीवत्। **आदराऽनादरयोः सदसती** ।१।४।६३। [ सदसती क्रियायोगे गतिसञ्ज्ञे स्त आदराऽनादरयोः ]। सत्कृत्य। असत्कृत्य।

**भूषणेऽलम्** ।१।४।६४। [ [२]क्रियायोगे भूषणेऽलं गतिसञ्ज्ञं स्यात् ]। अलङ्कृत्य। भूषणे किम् ?। अलं कृत्वौदनं गतः। पर्याप्तमित्यर्थः।

'अनुकरण'मित्यादित्रिसूत्री स्वभावात्कृञ्विषया।

**अन्तरपरिग्रहे** ।१।४।६५। [ [२]अपरिग्रहेऽन्तःशब्दो गतिसञ्ज्ञः स्यात् ]। अन्तर्हत्य। मध्ये हत्वेत्यर्थः। अपरिग्रहे किम् ?। अन्तर्हत्वा गतः। हतं परिगृह्य गत इत्यर्थः।

**कणेमनसी श्रद्धाप्रतीघाते** ।१।४।६६। [ [२]एतौ श्रद्धाप्रतीघाते

---

अनुकरणमिति। अनिति-परमनुकरणं गतिसञ्ज्ञं स्यात्, कृञो योगे इत्यर्थः। खाडितीति। अत्र खाडित्यस्य गतित्वाऽभावेन समासाऽप्रसक्त्या न क्त्वो ल्यबादेशः।

अलङ्कृत्वेति। परिपूर्णमित्यर्थः। परिगृह्येति। आदायेत्यर्थः।

---

अनुकरणं चानिति। इतिपरक से भिन्न जो अनुकरण वह क्रिया ( कृञ् धातु ) के योगमें गतिसञ्ज्ञक हो।

आदरानादरयोः। आदर और अनादर अर्थ में सत् और असत्-ये शब्द-क्रिया ( कृञ् धातु ) के योगमें गतिसञ्ज्ञक हों।

भूषणेऽलम्। भूषण अर्थ में क्रिया ( कृञ्धातु ) के योगमें अलम्-यह गतिसञ्ज्ञक हो।

अन्तरपरिग्रहे। अपरिग्रह अर्थ में अन्तर् शब्द गतिसञ्ज्ञक हो।

कणेमनसी। श्रद्धा के प्रतीघात अर्थ में (यथेच्छ कार्य करने में ) 'कणे' और 'मनस्'—ये गतिसञ्ज्ञक हों।

---

१ लिखितेऽयं पाठ उपलभ्यते। २ शेषपूरणमेतत्। ३ अयं पाठः क्वचिन्न।

गतिसञ्ज्ञौ स्तः ]। कणेहत्य पयः पिबति। मनोहत्य। 'कणे'शब्दः सप्तमीप्रतिरूपको निपातोऽभिलाषाऽतिशये वर्त्तते। 'मनस्'शब्दोऽप्यत्रैव।

पुरोऽव्ययम् ।१।३।६७। [ [1]अव्ययं पुरःशब्दो गतिसञ्ज्ञः स्यात् ]। पुरस्कृत्य। अस्तञ्च ।१।४।६८। 'अस्त'मिति मान्तमव्ययं गतिसंज्ञं स्यात्। अस्तङ्गत्य।

अच्छ गत्यर्थवदेषु ।१।४।६९। 'अव्यय'मित्येव।[ [1]अच्छेत्यव्ययं गतिसञ्ज्ञं स्याद्गत्यर्थेषु धातुषु, वदतौ च परतः[1] ]। अच्छगत्य। अच्छोद्य। अभिमुखङ्गत्वा, उक्त्वा चेत्यर्थः। अव्ययं किम् ?। जलमच्छं गच्छति।

अदोऽनुपदेशे ।१।४।७०। [ [2]अदश्शब्दोऽनुपदेशे गतिसञ्ज्ञः स्यात् ]। अदःकृत्याऽदःकृतम्। परं प्रत्युपदेशे प्रत्युदाहरणम्—[ [2]अदः कृत्वा, अदः कुरु ]।

---

अभिलाषाऽतिशये—अतिशयिताभिलाषे। कणेहत्येति। अभिलाषपूर्त्तिपर्यन्तं यथेष्टं पयः पिबतीत्यर्थः।

अच्छ गत्यर्थेति। अच्छेत्यव्ययं गत्यर्थवदेषु परतो गतिसञ्ज्ञकमित्यर्थः। अच्छं = स्वच्छम्। ( अच्छा )। अदः कृत्येति। अत्र वस्तुतत्त्वकथनं, नोपदेशः। ( अमुक काम करके अमुक किया )।

---

पुराऽव्ययम्। अव्यय पुरस् शब्द गतिसञ्ज्ञक हो।

अस्तञ्च। 'अस्तम्' यह मान्त अव्यय गतिसञ्ज्ञक हो।

अच्छ गत्यर्थ। 'अच्छ' यह अव्यय गतिसञ्ज्ञक हो, गत्यर्थक धातु और वद धातु परे रहते।

अदोऽनुपदेशे। अदस् शब्द की गतिसञ्ज्ञा हो, अनुपदेश में।

---

१ शेषपूरणमेतत्। २ अयं पाठः क्वचिन्न।

तिरोऽन्तर्द्धौ ।१।४।७१। [ [1]तिरश्शब्दोऽव्ययं गतिसञ्ज्ञः स्यादन्तर्द्धौ ]। तिरोभूय। विभाषा कृञि ।१।४।७२। [ [1]तिरःशब्दो गतिसञ्ज्ञो वा स्यात्कृञि ]।

[तिरसोऽन्यतरस्याम्[2] ।८।३।४२। [1]तिरसः सो वा स्यात्कुप्वोः। तिरःकृत्य। तिरस्कृत्य। तिरः कृत्वा ]।

उपाजेऽन्वाजे ।१।४।७३। एतौ [ [3]विभक्तिप्रतिरूपकौ निपातौ ] कृञि वा गतिसंज्ञौ [[2]स्तः]। उपाजेकृत्य। अन्वाजेकृत्य। उपाजे कृत्वा। अन्वाजे कृत्वा। दुर्बलस्य बलमाधायेत्यर्थः।

साक्षात्प्रभृतीनि च ।१।४।७४। [ [1]साक्षात्प्रभृतीनि शब्दस्वरूपाणि ] कृञि वा गतिसंज्ञानि स्युः।

*च्व्यर्थ इति वक्तव्यम्। साक्षात्कृत्य। साक्षात्कृत्वा। लवणङ्कृत्य। लवणङ्कृत्वा। मान्तत्वं निपातनात्।

---

उपाजे इति। एतौ विभक्तिप्रतिरूपकौ निपातौ। एवञ्चाऽनयोरव्ययत्वम्।

---

तिरोऽन्तर्द्धौ। अव्यय तिरस् शब्द की गतिसञ्ज्ञा हो, अन्तर्द्धि ( छिपना ) अर्थ में।

विभाषा कृञि। अव्यय तिरस् शब्द कृञ् के योग में विकल्प करके गतिसञ्ज्ञक हो।

तिरसोऽन्यतरस्याम्। तिरस् के विसर्ग को सत्व हो, विकल्प करके, कवर्ग और पवर्ग परे रहते।

उपाजेऽन्वाजे। 'उपाजे' और 'अन्वाजे' ये विभक्तिप्रतिरूपक निपात कृञ् के योग में विकल्प करके गतिसञ्ज्ञक हों।

साक्षात्प्रभृतीनि च। च्व्यर्थ इति॥ साक्षात् प्रभृति की कृञ् के योग में विकल्प करके गतिसञ्ज्ञा हो। च्विके अर्थ ( अभूततद्भाव अर्थ ) में।

---

१ शेषपूरणमेतत्। २ क्वचिन्न।

३ अस्माभिर्योजितोऽयं पाठः, काशिकाऽनुसारात्।

**अनत्याधान उरसिमनसी** ।१।४।७५। [ [1]उरसि-मनसि-शब्दौ कृञि वा गतिसञ्ज्ञौ स्तोऽनत्याधाने ]। उरसिकृत्य । उरसि कृत्वा । अभ्युपगम्येत्यर्थः । मनसिकृत्य । मनसि कृत्वा। निश्चित्येत्यर्थः। अत्याधानमुपश्लेषः, तत्र न,–उरसि कृत्वा पाणिं शेते ।

**मध्ये पदे निवचने च** ।१।४।७६। एते कृञि गतिसंज्ञा वा स्युरनत्याधाने । मध्येकृत्य । मध्ये कृत्वा । पदेकृत्य । पदे कृत्वा । निवचनेकृत्य । निवचने कृत्वा । वाचं नियम्येत्यर्थः ।

**नित्यं हस्ते पाणावुपयमने** ।१।४।७७। [[1]एतौ ] कृञि [[1]नित्यं गतिसञ्ज्ञौ स्त, उपयमने]। उपयमनं– विवाहः। 'स्वीकारमात्र'मित्यन्ये। हस्तेकृत्य । पाणौकृत्य ।

**प्राध्वं बन्धने** ।१।४।७८। 'प्राध्व'[2]मित्यव्ययं [ [1]कृञि नित्यं-गतिसञ्ज्ञं स्याद्बन्धने ]। प्राध्वङ्कृत्य । बन्धनेनाऽनुकूलङ्कृत्वेत्यर्थः। प्रार्थनादिना स्वानुकूल्यकरणे—प्राध्वं कृत्वा ।

---

उपश्लेषः = सम्पर्कः । सम्बन्धस्थापनमिति यावत् । प्राध्वंकृत्य = सरलं कृत्वा । ( प्राध्वं–पादरा । ठोक पीटकर पादरा-करके, सीधा-करके ) ।

---

अनत्याधाने । 'उरसि' और 'मनसि' ये शब्द कृञ् के योग में विकल्प से गतिसञ्ज्ञक हो, अत्याधान (=उपश्लेष, चिपटाना ) से भिन्न अर्थ में ।

मध्येपदे । मध्ये, पदे, और निवचने–ये कृञ् के याग में विकल्प करके गतिसञ्ज्ञक हों । अनत्याधान अर्थ में ।

नित्यं हस्ते । 'हस्ते' और 'पाणौ' ये कृञ् के योग में नित्य गतिसञ्ज्ञक हों, उपयमन ( स्वीकार करना और विवाह ) अर्थ में ।

प्राध्वं बन्धने । बन्धन अर्थ में 'प्राध्वम्' यह अव्यय कृञ् के योग में नित्य गतिसञ्ज्ञक हो ।

---

१ शेषपूरणमेतत् । २ क्वचिन्न ।

जीविकोपनिषदावौपम्ये ।१।४।७६। [ एतौ कृञि नित्यं गति-सञ्ज्ञौ स्त, औपम्ये ]। जीविकामिव कृत्वा—जीविकाकृत्य। उपनिषत्कृत्य। औपम्ये किम् ?। जीविकां कृत्वा।

प्रादिग्रहणमगत्यर्थम्—सुपुरुषः।

*प्रादयो गताद्यर्थे प्रथमया। प्रगत आचार्यः—प्राचार्यः।

*अत्यादयः क्रान्ताद्यर्थे द्वितीयया। अतिक्रान्तो मालामिति विग्रहे—।

एकविभक्ति चाऽपूर्वनिपाते ।१।२।४४। विग्रहे यन्नियतविभक्तिकं तदुपसर्जनं, [[1]स्यात् ], न तु तस्य पूर्वनिपातः।

गोस्त्रियोरुपसर्जनस्य ।१।२।४८। उपसर्जनं यो गोशब्दः, स्त्रीप्रत्ययान्तं च, तदन्तस्य प्रातिपदिकस्य ह्रस्वः [ [1]स्यात् ]। अतिमालः।

---

प्रादीनां गतित्वादेव समासे सिद्ध पुनः कुगतिसूत्रे प्रादीनां ग्रहणस्य फलमाह—अगत्यर्थमिति। अत्र क्रियायोगाऽभावाद्गतिश्चेति गतित्वं नेत्याशयः।

सुष्ठु पुरुषः-सुपुरुषः। 'कुगतिप्रादयः' इति नित्यसमासः।

उपसर्जनसञ्ज्ञाफलभूतं ह्रस्वमाह—गोस्त्रियोरिति।

---

जीविकोप। 'जीविका' और 'उपनिषत्'-ये कृञ् के योग में नित्य गति-सञ्ज्ञक हों, उपमा में।

प्रादयो गताद्यर्थे। गतादि अर्थों में प्रादि प्रथमान्त के साथ नित्य समास को प्राप्त हों। और वह समास तत्पुरुष संज्ञक हो।

अत्यादयः। क्रान्त आदि अर्थों में अत्यादि का द्वितीयान्त के साथ नित्य समास हो। वह तत्पुरुष संज्ञक हो।

एकविभक्ति चा। विग्रह में जो नियत विभक्त्यन्त है, उसकी उपसर्जन संज्ञा हो, परन्तु उसका पूर्व निपात नहीं हो।

गोस्त्रियो। उपसर्जन जो गो शब्द, और स्त्री प्रत्ययान्त, तदन्त प्रातिपदिक को ह्रस्व हो।

---

१ क्वचिन्न।

*अवादयः क्रुष्टाद्यर्थे तृतीयया। अवक्रुष्टः कोकिलया—अवकोकिलः। *पर्यादयो ग्लानाद्यर्थे चतुर्थ्या। परिग्लानोऽध्ययनाय पर्यध्ययनः। *निरादयः क्रान्ताद्यर्थे पञ्चम्या। निष्क्रान्तः कौशाम्ब्या निष्कौशाम्बिः।

*कर्मप्रवचनीयानां प्रतिषेधः। वृक्षं प्रति।

तत्रोपपदं सप्तमीस्थम् ।३।१।९२। सप्तम्यन्ते पदे-'कर्मणी'त्यादौ वाच्यत्वेन स्थितं कुम्भादि, तद्वाचकं पदमुपपदसञ्ज्ञं स्यात्। [ [1]तस्मिंश्च सत्येव वक्ष्यमाणः प्रत्ययः स्यात् ]।

उपपदमतिङ् ।२।२।१९। उपपदं सुबन्तं समर्थेन नित्यं समस्यते।

---

तत्रोपपदमिति। सप्तम्यन्ते पदे 'कर्मणि' इत्यादौ वाच्यत्वेन स्थितं यत्कुम्भादि, तद्वाचकं कुम्भादिपदमुपपदसञ्ज्ञं स्यादित्यर्थः।

---

अवादयः। क्रुष्ट आदि अर्थों में अवादि का तृतीयान्त के साथ नित्य समास हो। वह समास तत्पुरुष सञ्ज्ञक हो।

पर्यादयो। ग्लान आदि अर्थों में परि आदि का चतुर्थ्यन्त के साथ नित्य समास हो। वह तत्पुरुष संज्ञक हो।

निरादयः क्रान्ता। क्रान्त आदि अर्थों में निरादि का पञ्चम्यन्त के साथ नित्य समास हो। वह तत्पुरुष हो।

कर्मप्रवचनीयानां। कर्मप्रवचनीयों का प्रादि समास नहीं हो।

तत्रोपपदं। सूत्रस्थ सप्तम्यन्त 'कर्मणि' आदि पदों का वाच्य जो कुम्भादि, तद्वाचक ( कुम्भ आदि ) पद की उपपदसञ्ज्ञा हो। और उपपद संज्ञा होने पर ही वक्ष्यमाण अणादि प्रत्यय हों।

उपपदमतिङ्। उपपद सुबन्त का अतिङन्त समर्थके साथ नित्य समास हो।

---

1 क्वाचित्कः पाठः।

अतिङन्तश्चायं समासः। कुम्भं करोतीति-कुम्भकारः। [ [1]कुम्भ अस् कारे-त्यलौकिकं प्रक्रियावाक्यम् ]। अतिङ् किम्? । मा भवान् भूत्। 'माङि लुङि'ति सप्तमीनिर्देशान्माङुपपदम्। [ [3]अतिङ्ग्रहणं ज्ञापयति—'सुपे'त्येतन्नेहानुवर्त्तते [ [1]इति ]। पूर्वसूत्रेऽपि गतिग्रहणं पृथक्कृत्याऽतिङ्ग्रहणं तत्राऽपकृष्यते। 'सुपे'ति च निवृत्तम् ]। [ [1]तथा च ]—

(५०) 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः'

[ इति [1]सिद्धम् ]। व्याघ्री। अश्वक्रीती। कच्छपीत्यादि।

---

कुम्भ अस् कार इत्यलौकिकं विग्रहवाक्यम्। 'कर्तृकर्मणोः कृति' इति कुम्भशब्दात् कर्मणि षष्ठी। लौकिकविग्रहे तु 'न लोके'ति निषेधान्न ततः षष्ठी। किन्तु कर्मणि द्वितीयैव।

मा भवानिति। समासाऽभावबोधनाय 'भवा'निति पदं मध्ये प्रयुक्तम्। व्याघ्रीति। व्याजिघ्रतीति व्याघ्री। गतिसञ्ज्ञकानां सुबुत्पत्तेः प्राक् समासादेव आङो घ्रशब्देन, वेश्च 'आघ्र' शब्देन समासेऽदन्तत्वाज्जातिलक्षणो ङीष् भवति। सुबुत्पत्त्यनन्तरं समासाङ्गीकारे तु स्वार्थद्रव्यलिङ्गसङ्ख्याकारकाणां क्रमेणोपस्थित्या सङ्ख्याद्युपस्थितिसाकाङ्क्षसुबुत्पत्तेः पूर्वमेव लिङ्गोपस्थित्या, लिङ्गबोधकटाबुत्पत्तौ, ततः सुबुत्पत्तावदन्तत्वाऽभावाज्जातिलक्षणो ङीष् न स्यादित्याशयः। समासात्पूर्वं तु न जातिलक्षणङीषः प्राप्तिः, घ्रमात्रस्य जातिवाचकत्वाऽभावादित्यप्यवधेयम्। एवमग्रेऽपि बोध्यम्।

अश्वक्रीतीति। अश्वेन क्रीतेति विग्रहः। सुबुत्पत्त्यनन्तरं समासे तु पूर्वं टाप्यदन्तत्वाऽभावात् 'क्रीतात्करणपूर्वात्'इति ङीष् न स्यात्।

कच्छपीति। कच्छेन पिबतीति विग्रहः। उपपदस्य चेदमुदाहरणम्।

---

गतिकारकोप। गति, कारक, और उपपद—इनका सुबुत्पत्ति से पूर्व ही कृदन्तके साथ समास हो।

---

१ अयं पाठो लिखिते न दृश्यते।

**अमैवाऽव्ययेन ।२।२।२०।** अमैव तुल्यविधानं यदुपपदं तदेवाऽव्ययेन सह समस्यते । स्वादुङ्कारम् । 'स्वादुमि णमुल्' इति णमुल् । नेह–'कालसमयवेलासु तुमुन्' । कालः, समयो, वेला वा भोक्तुम् । अमैवेति किम् ? । अग्रे भोजम् । अग्रे भुक्त्वा । 'विभाषाऽग्रेप्रथमपूर्वेष्वि'ति क्त्वाणमुलौ । अमा चाऽन्येन च तुल्यविधानमेतत् ।

**तृतीयाप्रभृतीन्यन्यतरस्याम् ।२।२।२१।** 'उपदंशस्तृतीयाया'मित्यादीनि उपपदानि अमन्तेनाऽव्ययेन सह वा समस्यन्ते । मूलकेनोपदंशं भुङ्क्ते । मूलकोपदंशम् । 'उपदंशस्तृतीयाया'मिति णमुल् ।

**क्त्वा च ।२।२।२२।** तृतीयाप्रभृतीन्युपपदानि क्त्वान्तेन सह वा समस्यन्ते । उच्चैःकृत्य । उच्चैः कृत्वा । 'अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ' इति क्त्वाणमुलौ । [तृतीयाप्रभृतीति किम् ? । अलं कृत्वा । खलु कृत्वा ] ।

---

स्वादुङ्कारमिति । अत्र अमा ( णमुला ) सहैव 'स्वादुम्' इत्यस्य 'तत्रोपपदम्' इत्यनेनोपपदसंज्ञा विधीयते इति, 'कार'मित्यव्ययेन सह 'स्वादु'मित्यस्य समासो भवत्येवेत्याशयः । काल इति । अत्र 'काल' इत्यादेरुपपदसञ्ज्ञाया अमा सह विधानाऽभावात्, ( तुमुना सहैव तस्या विधानात् ) नोपपदसमासः ।

अमा चान्येनेति । अन्येन=क्त्वाप्रत्ययेन च । एतत् = उपपदत्वम् ।

अव्ययेऽयथेति । अव्यये उपपदेऽयथाऽभिप्रेताख्याने कृञः क्त्वाणमुलौ स्त इत्यर्थः ।

---

अमैवाव्ययेन । अम् के ही साथ तुल्य विधान है जिसका ऐसा जो उपपद, उसी का अव्यय के साथ समास हो ।

तृतीयाप्रभृतीन्य । तृतीया प्रभृति जो उपपद, उनका अमन्त अव्यय के साथ विकल्पकरके समास हो । और वह तत्पुरुष हो ।

क्त्वा च । तृतीयाप्रभृति उपपदों का क्त्वान्त के साथ विकल्प करके समास हो । और वह समास तत्पुरुष सञ्ज्ञक हो ।

तत्पुरुषस्याऽङ्गुलेः सङ्ख्याऽव्ययादेः ।५।४।८६। सङ्ख्याऽव्ययादेरङ्गुल्यन्तस्य तत्पुरुषस्य समासान्तोऽच् स्यात् । द्वे अङ्गुली प्रमाणमस्य द्व्यङ्गुलं [ [1]दारु ]। निरङ्गुलम् ।

अहःसर्वैकदेशसङ्ख्यातपुण्याच्च रात्रेः ।५।४।८७। एभ्यो रात्रेरच् स्यात् । चात्सङ्ख्याऽव्ययादेः । अहर्ग्रहणं द्वन्द्वार्थम् ।

रात्राऽह्नाऽहाः पुंसि ।२।४।२९। एते पुंस्येव । अहश्च रात्रिश्च—अहोरात्रः । सर्वरात्रः । पूर्वरात्रः । सङ्ख्यातरात्रः। पुण्यरात्रः ।

*संख्यापूर्वं रात्रं क्लीबम् । द्विरात्रम् । अतिरात्रः ।

राजाहःसखिभ्यष्टच् ।५।४।९१। एतदन्तात्तत्पुरुषाट्टच् [स्यात् [1]]।

---

द्व्यङ्गुलमिति । 'तद्धितार्थोत्तरपदे'ति समासः ।

निरङ्गुलमिति । 'निरादयः क्रान्ताद्यर्थे पञ्चम्या' इति समासः ।

अह्नो रात्रिरिति षष्ठीतत्पुरुषस्य, अहश्चासौ रात्रिश्चेति कर्मधारयस्य चाऽर्थासङ्गत्याऽसम्भवादाह—द्वन्द्वार्थमिति । अहोरात्र इति । 'जातिरप्राणिनाम्'इति एकवद्भावः । 'रात्राह्नाहाः'इति पुंस्त्वम् । रात्रेः पूर्वं—पूर्वरात्रः । द्वयोः रात्र्योः समाहारो—द्विरात्रम् । रात्रिमतिक्रान्तः—अतिरात्रः । अत्र सङ्ख्यापूर्वत्वाऽभावान्न क्लीबता ।

---

तत्पुरुषस्याङ्गुलेः । सङ्ख्यादि और अव्ययादि जो अङ्गुल्यन्त तत्पुरुष, उससे समासान्त अच् प्रत्यय हो ।

अहःसर्वैक । अहरादि और सङ्ख्याव्ययादिपूर्वपदक जो रात्रिशब्दान्त ( तत्पुरुष ) समास, उससे समासान्त 'अच्' प्रत्यय हो ।

रात्राह्नाहाः । 'रात्र' 'अह्न' और 'अह' एतदन्त जो द्वन्द्व और तत्पुरुष, वह पुंलिङ्ग में ही हो ।

सङ्ख्यापूर्वं । सङ्ख्यापूर्वक 'रात्र' शब्द नपुंसकलिङ्ग हो ।

राजाहःसखिभ्यः । राजाद्यन्त तत्पुरुषसे समासान्त 'टच्' प्रत्यय हो ।

---

१ क्वचिन्न ।

परमराजः। कृष्णसखः। **अह्नष्टखोरेव** ।६।४।१४५। [ अह्नष्टखोरेव[1] ] टिलोपः [ [1]स्यान्नाऽन्यत्र ]। [2]उत्तमाहः।

**अह्नोऽह्न एतेभ्यः** ।५।४।८८। सर्वादिभ्योऽहन्शब्दस्याऽह्नादेशः [[3]स्या]त्समासान्ते परे। **अह्नोऽदन्तात्** ।८।४।७। अदन्तपूर्वपदस्थान्निमित्तात्परस्याऽह्नो नस्य णः [ [3]स्यात् ]। सर्वाह्णः।

**न संख्यादेः समाहारे** ।५।४।८९। [ [1]समाहारे वर्त्तमानस्य स ख्यादे—] रह्नोऽह्नादेशो, न [ [3]स्यात् ]। द्व्यहः। त्र्यहः। **उत्तमैकाभ्यां च** ।५।४।९०। [ [1]आभ्याम्परस्य ] अह्नोऽह्नादेशो न [ [3]स्यात् ]। 'उत्तम'शब्दोऽन्त्यार्थः–'पुण्य'शब्दमाह।

---

परमश्चासौ राजा च–परमराजः।

कृष्णस्य सखा-कृष्णसखः। अह्नष्टखोरेवेति। 'नस्तद्धिते' इत्येव सिद्धे 'अह्नष्टखोरेव टिलोपो नान्यत्रे'ति नियमार्थमिदमित्याशयः। उत्तमञ्च तदहश्च उत्तमाहः। 'रात्राह्नाहाः पुंसि' इति पुंस्त्वम्। द्वयोरह्नोः समाहारो–द्व्यहः। पुण्यशब्देति। तस्य 'अहःसर्वैकदेशे'ति सूत्रेऽन्त्यत्वात्।

---

अह्नष्टखोरेव। 'ट' और 'ख' प्रत्यय परे रहते ही अहन् शब्द की टि का लोप हो।

अह्नोऽह्नः। सर्व, एकदेश, सङ्ख्यात और पुण्य शब्द से परे जो 'अहन्' शब्द, उसको 'अह्न' आदेश हो, समासान्त परे रहते।

अह्नोऽदन्तात्। अदन्त पूर्वपद में स्थित रेफषकाररूप निमित्तसे परे जो 'अहन्' का नकार, उसको णत्व हो।

न सङ्ख्यादेः। समाहारमें वर्त्तमान जो सङ्ख्यादि अहन् शब्द, उसको 'अह्न' आदेश नहीं हो।

उत्तमैकाभ्यां च। [ उत्तम अर्थात्—] पुण्य शब्द से, और एकशब्द से परे जो अहन् उसको 'अह्न' आदेश नहीं हो।

---

१ शेषपूरणमेतत्। २ 'परमाहः' इति तु मुद्रिते पाठः। ३ क्वचिन्न।

*पुण्यसुदिनाभ्यामह्नः क्लीबतेष्टा । पुण्याहम् । सुदिनाहम् । एकाहः । [[1] उत्तमग्रहणमुपान्त्यस्यापि सङ्ग्रहार्थमित्येके। सङ्ख्याताहः] ।

अग्राख्यायामुरसः ।५।४।९३। [[2]अग्राख्यायामुरस] ष्टच् [स्यात्] । अश्वानामुर इव—अश्वोरसम् । मुख्योऽश्व इत्यर्थः ।

ग्रामकौटाभ्यां च तक्ष्णः ।५।४।९५। [ [2]आभ्यां परस्य तक्ष्ण-ष्टच्स्यात् ] । ग्रामतक्षः । कौटतक्षः । अतेः शुनः ।५।४।९६। [ [2]अतेः परस्य शुनष्टच् स्यात् ] । अतिश्वो वराहः । [3]अतिश्वी सेवा ।

उपमानादप्राणिषु ।५।४।९७। अप्राणिविषयकोपमानवाचिनः शुन-ष्टच् [ [3]स्यात् ] आकर्षः श्वेव—आकर्षश्वः । [ [1]अप्राणिष्विति किं ? । वानरः श्वेव—वानरश्वा ] ।

---

कुट्यां भवः-कौटः, स चासौ तक्षा (वर्धकिः) च—कौटतक्षः । श्वानमति-क्रान्तः—अतिश्वः । वराहः=शूकरः । आकर्षश्व इति । कुक्कुरमुखो वैद्योपकरण-भूतः शस्त्रविशेषः ।

---

पुण्यसुदिना । पुण्य और सुदिन से परे जो अहन् शब्द वह नपुंसकलिङ्ग हो ।

अग्राख्याया । अग्राख्या में जो उरस् शब्द, तदन्ततत्पुरुष से समासान्त टच् हो ।

ग्रामकौटाभ्यां । ग्राम और कौट से परे जो तक्षन् शब्द, तदन्त तत्पुरुष से समासान्त टच् प्रत्यय हो ।

अतेः शुनः । अति से परे जो श्वन् शब्द, तदन्ततत्पुरुष से समासान्त टच् प्रत्यय हो ।

उपमानदप्राणिषु । अप्राणिविषयक उपमानवाची श्वन्शब्दान्त तत्पुरुषसे समासान्त टच् प्रत्यय हो ।

---

१ लिखितेषूपलभ्यतेऽयं पाठः ।

२ शेषपूरणमेतत् । ३ क्वचिन्न ।

उत्तरमृगपूर्वाच्च सक्थ्नः ।५।४।९८। [ [1]उत्तरमृगपूर्वाच्च सक्थ्न ष्टच् स्यात् ]। चादुपमानात्। उत्तरसक्थम्। मृगसक्थम्। पूर्वसक्थम्। फलकमिव सक्थि—फलकसक्थम्।

नावो द्विगोः ।५।४।९९। [ [1]नौशब्दान्ताद् द्विगोष्टच् स्यान्न तु तद्धितलुकि ]। द्विनावम्। त्रिनावम्। अर्द्धाच्च ।५।४।१००। [ [1]अर्द्धान्नावष्टच् स्यात् ]। अर्द्धनावम्। [2]क्लीबत्वं लोकात्।

खार्याः प्राचाम् ।५।४।१०१। द्विगोरर्द्धाच्च खार्याष्टज्वा [ [2]स्यात् ]। द्विखारम्। द्विखारि। अर्द्धखारि।

द्वित्रिभ्यामञ्जलेः ।५।४।१०२। [ [1]द्वित्रिभ्यामञ्जलेष्टच् स्यात् ]।

---

फलकं = काष्ठपट्टम्। द्वयोर्नावोः समाहारो—द्विनावम्।

तिसृणां नावां समाहारः—त्रिनावम्।

नावोऽर्द्धम्—अर्द्धनावम्। द्वयोः खार्योः समाहारो—द्विखारम्। 'द्विखारि'इति। अत्र क्लीबत्वात् 'ह्रस्वो नपुंसके' इति ह्रस्वत्वम्। उपसर्जनह्रस्वस्तु न, 'एकविभक्तावषष्ठ्यन्तवचनम्' इत्युपसर्जनसञ्ज्ञानिषेधस्य 'अर्द्धपिप्पली'इत्यत्रोक्तत्वात्।

---

उत्तरमृगपूर्वा। उत्तर पूर्वक मृगपूर्वक और उपमान पूर्वक जो सक्थि शब्द, तदन्त तत्पुरुषसे टच् प्रत्यय हो।

नावो द्विगोः। नौ शब्दान्त द्विगुसे समासान्त टच् प्रत्यय हो। परन्तु तद्धितलुक् में यह टच् नहीं हो।

अर्द्धाच्च। अर्द्ध शब्द से परे जो नौ शब्द, तदन्त तत्पुरुषसे टच् हो।

खार्याः प्राचां। द्विगुसमास में जो खारीशब्द, और अर्द्ध शब्द से परे जो खारीशब्द, उससे समासान्त टच् प्रत्यय हो।

द्वित्रिभ्यामञ्जलेः। द्वि और त्रिशब्दसे परे जो अञ्जलि शब्द, तदन्त द्विगुसे टच् प्रत्यय हो।

---

१ शेषपूरणमेतत्। २ क्वाचित्कः पाठः।

द्व्यञ्जलम् । द्व्यञ्जलि ।

**ब्रह्मणो जानपदाख्यायाम्** ।५।४।१०४। ब्रह्मान्तात्तत्पुरुषाट्टच् [¹स्यात्, समासेन जानपदत्वमाख्यायते चेत्]। सुराष्ट्रे ब्रह्मा–सुराष्ट्रब्रह्मः।

**कुमहद्भ्यामन्यतरस्याम्** ।५।४।१०५। [¹आभ्यां ब्रह्मणो वा टच् स्यात्तत्पुरुषे ]। कुब्रह्मः। कुब्रह्मा। महाब्रह्मः। महाब्रह्मा। [²'आन्महत'इत्यात्त्वम्। महाराजः]। 'प्रकारवचने जातीयर्'। महाप्रकारो–महाजातीयः।

**द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः** ।६।३।४७। [द्व्यष्टनः सङ्ख्याया-]मात्स्यात्, [¹न तु बहुव्रीह्यशीत्योः]। द्वादश। अष्टादश। अबहुव्रीह्यशीत्योः किम्?। द्वित्राः। द्व्यशीतिः।

*** प्राक्शतादिति वक्तव्यम्** । नेह—द्विशतम्।

**त्रेस्त्रयः** ।६।३।४८। त्रिशब्दस्य त्रयसादेशः स्यात्पूर्वविषये ।

---

कुत्सितो ब्रह्मा–कुब्रह्मः। द्वौ च दश च—द्वादश।

---

ब्रह्मणो जानपदा। ब्रह्मान्त तत्पुरुष से टच् प्रत्यय हो, समास से यदि जनपदसम्बन्धित्व (अमुकदेशनिवासित्व) प्रकट होता हो तो। (जनपद=जिला)।

कुमहद्भ्या। कु और महत् से परे जो ब्रह्मन् शब्द, तदन्त तत्पुरुष से समासान्त टच् प्रत्यय हो, विकल्प करके।

द्व्यष्टनः। संख्या परे रहते द्वि और अष्टन् शब्द को आत्त्व हो। परन्तु बहुव्रीहि में और अशीति शब्द परे रहते यह आत्व नहीं हो।

प्राक्शतादिति। शत शब्द से प्राक् जो २ संख्यावाचक शब्द हैं, वे परे रहते ही यह आत्व हो।

त्रेस्त्रयः। 'त्रि' शब्द को 'त्रयस्' आदेश हो, शत से पूर्व जो संख्यावाचक शब्द वे परे रहते। परन्तु बहुव्रीहि समास में और 'अशीति' शब्द परे रहते यह त्रयस् आदेश नहीं हो।

---

१ शेषपूरणमेतत्। २ क्काचित्कः पाठः।

त्रयोदश। त्रयोविंशतिः।

विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम् ।६।३।४९। द्व्यष्टनस्त्रेश्च प्रागुक्तं वा स्याच्चत्वारिंशदादौ परे। द्विचत्वारिंशत्। द्वाचत्वारिंशत्। अष्टचत्वारिंशत्। अष्टाचत्वारिंशत्। त्रिचत्वारिंशत्। त्रयश्चत्वारिंशत्। एवं-पञ्चाशत्-षष्टि-सप्तति-नवतिषु।

परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः ।२।४।२६। [1]एतयोः परपदस्येव लिङ्गं [स्यात्]। कुक्कुटमयूर्याविमे। मयूरीकुक्कुटाविमौ। अर्द्धपिप्पली।

*द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु न। पञ्चसु कपालेषु संस्कृतः-पञ्चकपालः पुरोडाशः। प्राप्तो जीविकां-प्राप्तजीविकः। आपन्नजीविकः। अलं कुमार्यै-अलङ्कुमारिः। अत एव ज्ञापकात् समासः। निष्कौशाम्बिः।

पूर्ववदश्ववडवौ ।२।४।२७। [ [1]अश्ववडवयोः पूर्वपदस्येव लिङ्गं

---

एवमिति। द्विपञ्चाशत्, द्वापञ्चाशत्, अष्टपञ्चाशत्, अष्टापञ्चाशत्। त्रयःपञ्चाशत्, त्रिपञ्चाशत्। एवमग्रेऽपि।

द्विग्विति। अत्र परवल्लिङ्गतायाः प्रतिषेधो वाच्य इत्यर्थः। अलंकुमार्यै इति। अलङ्कुमारिः—वरः। अत एव ज्ञापकात्तत्पुरुषसमासः। गतिसमासे उदाहरति—निष्कौशाम्बिरिति। पूर्ववदिति। अत्र पूर्वपदस्येव लिङ्गं स्यादित्यर्थः।

---

विभाषा चत्वा। द्वि, अष्टन् और त्रि शब्द का प्रागुक्त कार्य (आत्व और त्रयस् आदेश) विकल्प करके हों, चत्वारिंशत्प्रभृति (शत से पूर्व) संख्यावाचक शब्द परे रहते।

परवल्लिङ्गं। द्वन्द्व और तत्पुरुष में पर पद की तरह ही लिङ्ग हो।

द्विगुप्राप्ता। द्विगु समास और प्राप्त, आपन्न, अलम्—एतत्पूर्वक समास, और गति समास—इनको परपदकी तरह लिङ्ग नहीं हो।

पूर्ववदश्व। अश्व और वडवा को तत्पुरुष समास में पूर्व पद की तरह लिङ्ग हो।

---

1 शेषपूरणमेतत्।

स्यात् ]। द्वित्वमतन्त्रम् । अश्ववडवौ । अश्ववडवान् ।

अपथं नपुंसकम् ।२।४।३०। [[1]अपथं नपुंसकं स्यात् ]। तत्पुरुष इत्येव । अन्यत्र तु–अपथो देशः । कृतसमासान्तग्रहणान्नेह–अपन्थाः ।

*अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः । [2]पञ्चमूली ।

*आबन्तो वा । पञ्चखट्वी । पञ्चखट्वम् ।

[*अनो नलोपश्च वा द्विगुः स्त्रियाम् । पञ्चतक्षी पञ्चतक्षम् । ]।

*पात्राद्यन्तस्य न । पञ्चपात्रम् । त्रिभुवनम् । चतुर्युगम् ।

छाया बाहुल्ये ।२।४।२२। छायान्तस्तत्पुरुषो नपुंसकं स्यात्[3], पूर्वपदार्थबाहुल्ये । इक्षूणां छाया–इक्षुच्छायम् ।

सभा राजाऽमनुष्यपूर्वा ।२।४।२३। राजपर्यायपूर्वोऽमनुष्यपूर्वश्च

---

अश्वश्च,वडवा च-अश्ववडवौ। अत्र अश्वशब्दस्य पुंस्त्वात्समासस्य पुंस्त्वम् । न पन्थाः—अपथम्। पात्रेति । पात्राद्यन्तस्य द्विगोः स्त्रीत्वं नेत्यर्थः ।

---

अपथं नपुंसकम् । तत्पुरुष समास में जो 'अपथ' शब्द, वह नपुंसक लिङ्ग हो ।

अकारान्तोत्तर । अकारान्तोत्तर जो समाहारार्थक में द्विगु समास, वह स्त्री लिङ्ग होता है ।

आबन्तो वा । आबन्तोत्तरपद समाहारद्विगु विकल्प करके स्त्री लिङ्ग होता है ।

अनो नलोपश्च । अन् के नकार का लोप हो । और अन्नन्त द्विगु विकल्प करके स्त्री लिङ्ग हो ।

पात्राद्यन्तस्य । पात्राद्यन्त जो द्विगु वह स्त्रीलिङ्ग में नहीं होता है ।

छाया बाहुल्ये । छायान्त जो तत्पुरुष वह नपुंसक लिङ्ग हो ।

सभा राजा । राजपर्यायपूर्वक और अमनुष्य पूर्वक जो सभान्त तत्पुरुष, वह नपुंसक हो ।

---

१ शेषपूरणमेतत् । २ 'पञ्चकुली' पा० । ३ क्वचिन्न ।

सभाऽन्तस्तत्पुरुषो नपुंसकं स्यात्[1]। इनसभम्। ईश्वरसभम्। [* [1]पर्यायस्यैवेष्यते। नेह–राजसभा। चन्द्रगुप्तसभा। 'अमनुष्य'शब्दो रूढ्या रक्षःपिशाचादीनाह—रक्षःसभम्। पिशाचसभम्।

**विभाषा सेना-सुरा-च्छाया-शाला-निशानाम्** ।२।४।२५। एतदन्तस्तत्पुरुषः क्लीबं वा स्यात्। ब्राह्मणसेनम्। ब्राह्मणसेना। इत्यादि।

**अशाला च** ।२।४।२४। सङ्घातार्था या सभा, तदन्तस्तत्पुरुषः क्लीबं [1]स्यात्। स्त्रीसभम्। स्त्रीसङ्घात इत्यर्थः। अशाला किम्?। धर्मसभा। धर्मशालेत्यर्थः।

**अर्द्धर्चाः पुंसि च** ।२।४।३१। अर्द्धर्चादयः [[1]शब्दाः] पुंसि, क्लीबे च स्युः। अर्द्धर्चः। अर्द्धर्चम्। एवं–ध्वज-तीर्थ-शरीर-मण्डप-यूष-देहा-ऽङ्कुश-कलश-सूत्र-पात्रादयः। * **सामान्ये नपुंसकम्**। [ [1]विशेषाऽनिर्देशेन वस्तुनिर्देशे–नपुंसकम् ]। मृदु पचति। प्रातः कमनीयम्।

* इति तत्पुरुषः ॥ * ॥

---

इत्यादीति। यवसुरम्। यवसुरा। कुड्यच्छायम्। कुड्यच्छाया। गोशालम्। गोशाला। श्वनिशम्। श्वनिशा।

विशेषाऽनिर्देशेन = लिङ्गविशेषाऽविवक्षया।

इति श्रीगुरुप्रसादशास्त्रिविरचितायामभिनवराजलक्ष्म्यां तत्पुरुषप्रकरणम्।

---

विभाषा। सेनाद्यन्त तत्पुरुष विकल्प से नपुंसक लिङ्ग हो।

अशाला च। अशालार्थक (अर्थात् संघातार्थक) जो सभा शब्द, तदन्त तत्पुरुष नपुंसक लिङ्ग हो।

अर्द्धर्चाः। अर्द्धर्चादि गणपठित शब्द पुंलिङ्ग में और नपुंसक लिङ्ग में हों।

सामान्ये नपुंसकम्। लिङ्ग विशेष की विवक्षा न करके केवल लिङ्ग सामान्य की ही विवक्षा हो तो नपुंसक लिङ्ग हो।

---

१ क्वचिन्न।

## अथ बहुव्रीहिः ।

**शेषो बहुव्रीहिः** ।२।२।२३। अधिकारोऽयं, प्राग्द्वन्द्वात् ।

**अनेकमन्यपदार्थे** ।२।२।२४। अनेकं प्रथमान्तमन्यपदार्थे वर्त्तमानं वा समस्यते, स बहुव्रीहिः ।

**सप्तमी-विशेषणे बहुव्रीहौ** ।२।२।३५। सप्तम्यन्तं, विशेषणं च बहुव्रीहौ पूर्वं स्यात् । **हलदन्तात्सप्तम्याः संज्ञायाम्** ।६।३।९।

---

शेष इति । 'द्वितीया श्रिते'त्यादिना यस्य त्रिकस्य = 'सु औ जस्'इत्यस्य, विशिष्य समासो नोक्तः स शेषः । प्रथमान्तमित्यर्थः । 'द्वितीयाश्रिते'त्यादिना द्वितीयान्तादेरिव, प्रथमान्तस्याऽपि, विशिष्य = नामनिर्देशपूर्वकं, समासस्य क्वचिदपि विधानाऽभावात् । यद्यपि 'विशेषणं विशेष्येणे'त्यादि विशेषणसमासस्य वस्तुतः प्रथमान्त एव प्रवृत्तिस्तथापि प्रथमापदमुच्चार्य तद्विधानाऽभावात्प्रथमान्तमेव शेषपदेनाऽत्र गृह्यत इत्याशयः ।

प्रथमान्तमिति । शेषग्रहणानुवृत्तिलभ्यमेतत् । अन्यपदेति । उपस्थितप्रथमान्ताऽतिरिक्तद्वितीयान्तादिपदार्थे वर्त्तमानमित्यर्थः । एवञ्च शेषग्रहणात्— अप्रथमाविभक्त्यर्थे बहुव्रीहिरिति, समानाधिकरणानामिति च फलितम् । तेन— वृष्टे देवे यो गतः स 'वृष्टदेव' इत्येवं प्रथमार्थे बहुव्रीहिर्न भवति । नापि पञ्चभिर्भुक्तमस्यासौ 'पञ्चभुक्त'इति व्यधिकरणानां बहुव्रीहिसमासो भवतीत्यवधेयम् ।

---

शेषो बहुव्रीहिः । यह द्वन्द्व से पूर्व तक अधिकार है ।

अनेकमन्य । अनेक जो प्रथमान्त, अन्य पद के अर्थ में वर्तमान, वे ( परस्पर में ) समास को प्राप्त हों, विकल्प करके । और वह समास बहुव्रीहि सञ्ज्ञक हो ।

सप्तमी-विशेषणे । सप्तम्यन्त और विशेषण का बहुव्रीहि में पूर्व निपात हो ।

हलदन्तात्सप्तम्याः । हलन्त और अदन्त से परे जो सप्तमी, उसका अलुक् हो, सञ्ज्ञा में ।

हलन्ताददन्ताच्च सप्तम्या अलुक् ['स्यात्सञ्ज्ञायाम्']। त्वचिसारः। कण्ठेकालः। अत एव ज्ञापकाद्व्यधिकरणपदो बहुव्रीहिः। प्राप्तमुदकं यं-स-प्राप्तोदको ग्रामः। ऊढरथोऽनड्वान्। उपहृतपशू रुद्रः। उद्धृतौदना स्थाली। पीताम्बरो हरिः। वीरपुरुषको ग्रामः। प्रथमार्थे न—वृष्टे देवे गतः।

* प्रादिभ्यो धातुजस्य वाच्यो, वा चोत्तरपदलोपः। प्रपतितपर्णः। प्रपर्णः। * नञोऽस्त्यर्थानां वाच्यो, वा चोत्तरपदलोपः। अविद्यमानपुत्रः। अपुत्रः। [ [२]'अस्ती'ति विभक्तिप्रतिरूपकमव्ययम्।

---

ननु 'त्वचिसारः' 'कण्ठेकाल' इत्यादौ 'सप्तमीविशेषणे' इत्यनेन कथं सप्तम्याः पूर्वनिपातो विधीयते, व्यधिकरणबहुव्रीहेरसम्भवादत आह—अत एवेति। बहुव्रीहौ सप्तम्यन्तस्य पूर्वनिपातविधानादेवेत्यर्थः। अन्यथा सप्तम्या पूर्वनिपातविधानं व्यर्थं स्यात्। त्वचिसारः—वंशः ( बांस )। कण्ठेकालः = नीलकण्ठः। शिवः। ( कालः=विषम् )।

प्रथमार्थे बहुव्रीहेरभावात् द्वितीयाद्यर्थे उदाहरति—प्राप्तमिति।

अत्र 'वृष्टदेव' इति समासो न भवतीत्यर्थः। प्रादिभ्य इति। प्रादिभ्यः परं यद्धातुजं = पतितादि, तत्प्रकृतिकं यत्प्रथमान्तं, तदन्तस्य प्रपतितादिपदस्य पदान्तरेण पर्णादिना बहुव्रीहिर्वाच्यः, प्राद्युत्तरपदलोपश्च वा वक्तव्य इत्यर्थः।

प्रपर्ण इति। प्रकर्षेण पतितानि प्रपतितानि। प्रादिसमासः। प्रपतितानि पर्णानि यस्मात्—असौ—प्रपर्णः। प्रपतितपर्ण इति। इदं लोपाऽभावपक्षे रूपम्।

नञ इति। नञः परेषामस्त्यर्थवाचिनां सुबन्तानां बहुव्रीहिर्वाच्यः, तत्र अस्त्यर्थवाचिनामुत्तरपदभूतानां लोपश्च वा वक्तव्य इत्यर्थः।

---

प्रादिभ्यो धातुजस्य। प्रादि से परे जो धातुज ( पतितादि पद ), तत्प्रकृतिक जो प्रथमान्त, तदन्त जो प्रपतितादिपद उनका पदान्तर के साथ बहुव्रीहि समास हो। और प्रादि से जो उत्तर पद (पतितादि) उसका विकल्प से लोप हो।

नञोऽस्त्यर्थानां। नञ् से परे जो अस्त्यर्थवाची सुबन्त, उनका बहुव्रीहि समास हो। और अस्त्यर्थवाची जो उत्तर पद उसका लोप हो, विकल्प करके।

---

१ शेषपूरणम्। २ क्लिखते क्वचिन्न दृश्यते।

अस्तिक्षीरा गौः ]।

**स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रि-यादिषु ।६।३।३४।** उक्तपुंस्कात् पर अनूङ् = ऊङभावो,-यत्र तथाभूतस्य स्त्रीवाचकशब्दस्य पुंवाचकस्येव रूपं स्यात्, समानाधिकरणे स्त्रीलिङ्गे उत्तरपदे,न तु पूरण्यां,प्रियादौ च परतः। 'गोस्त्रियो'रिति ह्रस्वः।

---

अपुत्र इति। न विद्यमानः अविद्यमानः, अविद्यमानः पुत्रो यस्यासो-अपुत्रः। लोपाऽभावे च 'अविद्यमानपुत्र'इत्यपि रूपम्।

अस्तिक्षीरा = विद्यमानदुग्धा। प्रशस्तप्रभूतदुग्धवतीति यावत्।

भाषितेति। 'भाषितपुंस्कादनूङ्'इत्येकं पदं 'स्त्रियाः' इति षष्ठ्यन्तस्य विशेषणम्। न ऊङ्—अनूङ्। नञ्तत्पुरुषः। भाषितः पुमान् यस्मिन् प्रवृत्तिनिमित्तरूपेऽर्थे तत् भाषितपुंस्कम् = प्रवृत्तिनिमित्तम्। तदस्यास्तीति भाषित-पुंस्कं-शब्दस्वरूपम्। अर्शआद्यच्। भाषितपुंस्कात्—अनूङ् यस्या (स्त्रियां) सा-भाषितपुंस्कादनूङ्। तस्याः—भाषितपुंस्कादनूङ्। अत्र यद्यपि 'भाषित-पुंस्कानूङः' इति रूपमुचितं, तथापि सौत्रत्वात्पञ्चम्या अलुक्, षष्ठ्याश्च लुक्। भाषितपुंस्कादिति दिग्योगलक्षणा पञ्चमी। तदाह—उक्तपुंस्कात्पर इति। तुल्ये प्रवृत्तिनिमित्ते यत् उक्तपुंस्कं = भाषितपुंस्कं शब्दस्वरूपं, तस्मात्पर ऊङ-भावो यत्र तथाभूतस्य स्त्रीवाचकस्य पुंवाचकस्येव रूपमित्यादिरर्थः। ह्रस्व इति। 'अनेक'मिति प्रथमानिर्दिष्टतया 'प्रथमानिर्दिष्ट'मिति,'एकविभक्ती'ति वोपसर्जनतया गोशब्दस्य 'गोस्त्रियो'रिति ह्रस्वत्वमित्यर्थः। चित्राशब्दस्य तु 'स्त्रियाः पुंव'दिति पुंवद्भावः, चित्रत्वरूपप्रवृत्तिनिमित्तमादाय त्रिषु लिङ्गेषु चित्रशब्दस्य प्रवृत्त्या प्रवृत्तिनिमित्तैक्ये भाषितपुंस्कतया ततः परस्य ऊङभावस्यापि सत्त्वात्।

---

**स्त्रियाः पुंवत्।** भाषितपुंस्क से परे ऊङ् प्रत्ययका अभाव है जिसमें, ऐसा जो स्त्री वाचक शब्द, उसको पुंवाचक की तरह रूप हो, समानाधिकरण स्त्रीलिङ्ग उत्तर पद परे रहते। परन्तु—पूरणी ( पूरण प्रत्ययान्त ) और प्रियादि परे रहते यह पुंवद्भाव नहीं हो।

चित्रगुः । रूपवद्भार्यः ।

[¹भाषितपुंस्कात्किम् ? । गङ्गाभार्यः] । अनूङ् किम् ? । वामोरूभार्यः ।

पूरण्यां तु—अप्पूरणीप्रमाण्योः ।५।४।११६। पूरणार्थप्रत्ययान्तं यत्स्त्रीलिङ्गं, तदन्तात्प्रमाण्यन्ताच्च बहुव्रीहेरप् स्यात् । कल्याणी पञ्चमी यासां रात्रीणां ताः—कल्याणीपञ्चमा रात्रयः । स्त्री प्रमाणी यस्य स-

---

चित्रगुरिति । अत्र चित्रा गावो यस्येति लौकिकविग्रहः । चित्रा अस् गो अस् इत्यलौकिकविग्रहः । 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधते' इति परिभाषया सवर्णदीर्घात् पूर्वमेव जसो लुक् । अन्यथा चित्राशब्देन सह दीर्घे एकादेशस्य पूर्वादिवद्भावेन जसो लुकि चित्रशब्दोत्तरमकारो न श्रूयेतेत्यवधेयम् ।

रूपवद्भार्य इति । रूपवती भार्या यस्यासौ रूपवद्भार्यः । षष्ठ्यर्थे बहुव्रीहिः । रूपवत्त्वरूपप्रवृत्तिनिमित्तस्य त्रिष्वपि लिङ्गेषु ऐक्येन–प्रवृत्तिनिमित्तैक्ये भाषितपुंस्कतया, ऊङभाववत्तया च समानविभक्तिकत्वेन समानाधिकरणस्योत्तरपदस्य भार्यापदस्य परत्वाच्च 'स्त्रियाः पुंवद्'दिति पुंवद्भावः । 'गोस्त्रिया'-रिति ह्रस्वत्वम् ।

वामोरूभार्य इति । वामौ-सुन्दरौ ऊरू यस्याः सा वामोरूः । 'संहितशफलक्षणवामादेश्च' इत्यूङ् । वामत्वस्य प्रवृत्तिनिमित्तस्यैक्ये भाषितपुंस्कतया प्राप्तः पुंवद्भावो नात्र भवति, ततः परस्य ऊङः सत्त्वादित्याशयः । पूरण्यान्त्विति । 'पुंवत्त्वनिषेधोदाहरण विशेषो वक्ष्यते' इति शेषः । पञ्चमीति । अत्र 'पञ्चमी'त्यस्य पूरणप्रत्ययान्ततया तस्मिन्परतः 'कल्याणी'त्यस्य न पुंवद्भावः, 'अपूरणीप्रियादिष्वि'ति पर्युदासात् । पञ्चानां पूरणी–पञ्चमी । अत्र बहुव्रीहौ समासान्ते–अपि, तस्मिन् परतः पूर्वस्य भत्वाद्यस्येति चेत्यकारलोपः ।

---

अप्पूरणी । पूरणार्थ प्रत्ययान्त जो स्त्रीलिङ्ग, तदन्त बहुव्रीहि से, तथा प्रमाण्यन्त बहुव्रीहि से समासान्त 'अप्' प्रत्यय हो ।

---

१ क्वचिन्न ।

स्त्रीप्रमाणः । पुंवद्भावनिषेधोऽप्प्रत्ययश्च प्रधानपूरण्यामेव । रात्रिः पूरणी, वाच्या चेत्युक्तोदाहरणे मुख्या ।

अन्यत्र तु—नद्यृतश्च ।५।४।१५३। नद्युत्तरपदादृदन्तोत्तरपदाच्च बहुव्रीहेः कप् [ स्यात् ] । पुंवद्भावः ।

केऽणः ।७।४।१३। [ के परेऽणो ह्रस्वः स्यात् ] । इति प्राप्ते ।

न कपि ।७।४।१४। [1]कपि परे ह्रस्वो न स्यात् । कल्याणपञ्चमीकः पक्षः । अत्र [2]तिरोहितावयवभेदस्य पक्षस्याऽन्यपदार्थतया

---

प्रधानेति । स्त्रियाः पुंवदिति सूत्रे, अप्पूरणीतिसूत्रे च प्रधानपूरणीग्रहणं कर्तव्यमित्यर्थः । परेतु प्रधाने कार्यसम्प्रत्ययान्न्यायसिद्धमिदं नापूर्वं वचनमित्याहुः । ननु बहुव्रीहेरन्यपदार्थप्रधानतया, पञ्चम्याश्च समस्यमानपदार्थतया, कथं पञ्चम्याः पूरण्याः प्राधान्यमत आह—रात्रिरिति । 'कल्याणीपञ्चमा रात्रयः' इत्यत्र या पञ्चमी—(पञ्चानां पूरणी) साऽपि रात्रिः, समासार्थोऽन्यपदार्थश्च उद्भूतावयवभेदो रात्रिसमूह एवेति तद्घटकतया बहुव्रीहिवाच्याऽपि पञ्चमी रात्रिरिति, रात्रेः प्राधान्यं स्पष्टमेवेत्याशयः । वाच्या = समासवाच्या ।

अन्यत्र तु = यत्र अन्यपदार्थो रात्रिसमूहो नास्ति—तत्र—'कल्याणपञ्चमीकः पक्षः' इत्यादौ तु । पुंवदिति । 'स्त्रियाः पुंवद्'दिति पुंवद्भावः । पूरण्या रात्रेः समासवाच्यत्वाऽभावात् । केऽण इति । 'के परेऽणो ह्रस्वः स्या'दिति वृत्तिरेकत्र लिखितेऽधिका । क्वचित्तु 'ह्रस्व'इत्येव वृत्तिः ।

न कपीति । कपि परेऽणो ह्रस्वो न स्यादित्यर्थः । ननु पक्षस्य पञ्चदशाऽहोरात्रसमूहरूपत्वेन तत्प्रविष्टतयाऽत्रापि रात्रेः प्राधान्यं दुर्वारमत आह—अत्रेति ।

---

नद्यृतश्च । नद्युत्तर पद और ऋदन्तोत्तर पद जो बहुव्रीहि, उससे समासान्त कप् प्रत्यय हो ।

केऽणः । 'क' प्रत्यय परे रहते अण् को ह्रस्व हो ।

न कपि । कप् प्रत्यय परे रहते अण् को ह्रस्व नहीं हो ।

---

१ क्वचित्तु—'ह्रस्वः' इत्येव वृत्तिः । २ 'तिरोहितावयवस्य पक्षस्य' पा० ।

रात्रिरप्रधानम्। बहुकर्तृकः। अप्रियादिषु किम् ?। कल्याणीप्रियः। प्रिया। मनोज्ञा। कल्याणी। सुभगा। दुर्भगा। भक्तिः। सचिवा। स्वसा। कान्ता। क्षान्ता। समा। चपला। दुहिता। वामा। अबला। तनया।

*'सामान्ये नपुंसकम्'। दृढं भक्तिर्यस्य स—दृढभक्तिः। स्त्रीत्व-विवक्षायां तु—दृढाभक्तिः।

**तसिलादिष्वा कृत्वसुचः ।६।३।३५।** तसिलादिषु कृत्वसुजन्तेषु [1]स्त्रियाः पुंवत्। परिगणनं कर्त्तव्यम्, अव्याप्त्यतिव्याप्तिपरिहाराय। त्र-तलौ। तरप्तमपौ। चरट्-जातीयरौ। कल्पब्देशीयरौ। रूपप्-पाशपौ। थाल्। तिल्-थ्यनौ। [2]एतेषु परेषु स्त्रियाः पुंवत्। बह्वीषु [3]इति—बहुत्र। बहुतः इत्यादि।

---

तिरोहितावयवभेदतया रात्रेरन्यपदार्थे पक्षे प्रवेशाऽभावादप्राधान्यमेवेत्यर्थः। अत्रोद्भूतावयवभेदाऽविवक्षायां, तिरोहितावयवभेदविवक्षायाञ्च भाष्ये एतदुदाहरणमेव लिङ्गमित्यवधेयम्। ऋदन्तोत्तरपदात्कपमुदाहरति—बह्विति। बहवः कर्त्तारो यस्यासौ बहुकर्तृकः पटः। सामान्य इति। 'इत्याश्रित्ये'ति शेषः।

दृढेति। पुंवद्भावस्य प्रियादिषु परतोऽप्रवृत्तेर्नात्र पुंवद्भावः। तसिलादिष्विति। 'पञ्चम्यास्तसि'लित्यारभ्य 'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' इत्येतत्पर्यन्तसूत्रविहितेषु—इत्यर्थः। उत्तरपदपरकत्वाऽभावात्स्त्रियाः पुंवदित्यस्याऽप्राप्त्या वचनमिदम्। परिगणनमिति। तसिलाद्यनन्तर्भूतेषु तिल्थ्यनादिष्वपि पुंवद्भावप्रवृत्तये, देश्यरूप्यप्रत्यययोस्तसिलाद्यन्तर्भूतयोः परतः पुंवद्भावस्याऽप्रवृत्तये च परिगणनमिदमावश्यकमित्याशयः।

ए[ते]षु=एष्वेव परेषु सत्सु 'तसिलादिष्वि'ति सूत्रेण पुंवद्भाव इत्यर्थः।

---

सामान्ये नपुंसकम्। लिङ्ग सामान्य की विवक्षा में नपुंसक हो।

तसिलादिष्वा। तसिल् से आदि लेकर कृत्वसुच् प्रत्यय पर्यन्त प्रत्यय परे रहते स्त्रीवाचक को पुंवद्भाव हो।

---

[1] 'स्त्री पुंवत्' पा०। [2] 'एषु'। [3] इतिः क्वचिन्न।

[※[1]शसि बह्वल्पार्थस्य पुंवद्भावो वक्तव्यः। बह्वीभ्यो देहि-बहुशः। अल्पशः]। ※त्वतलोर्गुणवचनस्य। शुक्लत्वम्। शुक्लता। [[2]गुणवचनस्य किं ?। कर्त्र्या भावः-कर्त्रीत्वम् ]।

※भस्याऽढे तद्धिते। हस्तिनीनां समूहो-हास्तिकम्। अढे किम् ?। रौहिणेयः। ※कुक्कुट्यादीनामण्डादिषु। कुक्कुटाण्डम्। मृगपदम्। मृगक्षारम्। काकशावः।

क्यङ्-मानिनोश्च।६।३।३६। [[3]एतयोः परतः] पुंवत्। एनीवा-

---

त्वतलोरिति। त्वतलोः परतो गुणोपसर्जनद्रव्यवाचिनः पुंवद्भाव इत्यर्थः। शुक्लाया भावः शुक्लत्वम्। शुक्लता। हास्तिकमिति। 'अचित्तहस्तिधेनोष्ठ'गिति ठक्। रौहिणेय इति। रोहितशब्दाद्वर्णादनुदात्तादिति ङीप्, नकारादेशश्च। पुंवद्भावे तु नकारस्याऽपि निवृत्त्या 'रौहितेय' इति रूपं स्यादिति भावः।

कुक्कुट्यादीनामिति। कुक्कुट्यादीनां पुंवत्त्वमण्डादिषु परेष्विति वक्तव्यमित्यर्थः। कुक्कुट्या अण्डं-कुक्कुटाण्डम्। मृग्याः पदं---मृगपदम्। काक्याः शावः=( बालः---) काकशावः।

क्यङ्मानिनोरिति। एतयोः परतः पुंवदित्यर्थः।

---

शसि बह्वल्पार्थस्य। शस् प्रत्यय परे रहते बह्वर्थक और अल्पार्थक को पुंवद्भाव हो।

त्वतलोर्गुण। त्व और तल् परे रहते गुणवाचक को पुंवद्भाव हो।

भस्याऽढे। ढप्रत्ययभिन्न तद्धित परे रहते भसञ्ज्ञक को पुंवद्भाव हो।

कुक्कुट्यादीना। 'कुक्कुटी' आदि को पुंवद्भाव हो, अण्डादि उत्तर पद परे रहते।

क्यङ्मानिनोश्च। क्यङ् और मानिन् परे रहते स्त्रीवाचक को पुंवद्भाव हो।

---

१ लिखिते दृश्यतेऽयं पाठः। २ क्वाचित्कः पाठः। ३ शेषपूरणम्।

ऽऽचरति—एतायते । श्येनीवाचरति—श्येतायते । स्वभिन्नां काञ्चिद्दर्शनीयां मन्यते—दर्शनीयमानिनी । [ [1]दर्शनीयां स्त्रियं मन्यते दर्शनीयमानी चैत्रः ] ।

न कोपधायाः ।६।३।३७। [[2]कोपधायाः ] स्त्रियाः [न[2]] पुंवत् । पाचिकाभार्यः । रसिकाभार्यः । मद्रिकायते । मद्रिकामानिनी ।

*कोपधप्रतिषेधे तद्धित-वु-ग्रहणम् । नेह—पाकभार्यः ।

---

एतायत इति । 'चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे' इत्यमराच्चित्रपर्यायादेतशब्दाद्वर्णादनुदात्ताचादिति ङीब्नकारौ । 'कर्तुः क्यङ्'ङिति क्यङ् । पुंवद्भावान्ङीब्नकारयोर्निवृत्तिः । अकृत्सार्वे'ति दीर्घः । श्येतायत इति । 'शुक्लशुभ्रशुचिश्वेतविशदश्येतपाण्डराः' इत्यमराच्छ्वेतपर्यायः श्येतशब्दः ।

स्वभिन्नां काञ्चिद्दर्शनीयां मन्यते-दर्शनीयमानिनी । अत्र 'दर्शनीया'मिति द्वितीयान्ते उपपदे मन्यतेः 'मनः' इति णिनिः । 'उपपदमति'ङिति उपपदसमासः । 'ऋन्नेभ्य' इति ङीप् । एवञ्च समानाधिकरणे उत्तरपदे प्रवर्त्तमानस्य 'स्त्रियाः पुंव'दित्यस्य नाऽत्र प्रवृत्तिरिति मानिनो ग्रहणम् । या त्वात्मानमेव दर्शनीयां मन्यते, तत्र तु 'स्त्रियाः पुंवत्' इत्येव सिद्धम् । एकस्या अपि ईप्सिततमत्व-व्यापाराश्रयत्व-विवक्षाभेदेन कर्मत्वकर्तृत्वयोः सत्त्वेऽपि तयोर्वास्तवाऽभेदेन सामानाधिकरण्याऽविघातादित्यवधेयम् ।

न कोपधायाः । कोपधायाः स्त्रिया न पुंवदित्यर्थः । पचतीति—पाचिका । पाचिका भार्या यस्यासौ—पाचिकाभार्यः । रसिकेति । रसोऽस्या अस्तीति रसिका । 'अत इनिठनौ' इति ठन् । मद्रेषु भवा—मद्रिका । 'मद्रवृज्योः कन्' । 'क्यङ्मानिनोश्चे'ति पुंवत्त्वप्राप्तिरत्र । पुंवद्भावे तु इकारो न श्रूयेतेत्याशयः ।

कोपधेति । तद्धितग्रहणं, वुग्रहणञ्चेत्यर्थः ।

---

न कोपधायाः । कोपध जो स्त्रीवाचक शब्द, उसको पुंवद्भाव नहीं हो । कोपधप्रतिषेधे । कोपध के प्रतिषेध में तद्धित का, और 'वु' का ही ग्रहण हो ।

---

१ क्वचिन्न । २ शेषपूरणम् ।

**संज्ञापूरण्योश्च** ।६।३।३८। [[1]अनयो]र्न पुंवत् । दत्ताभार्यः । पञ्चमीभार्यः । **वृद्धिनिमित्तस्य च तद्धितस्याऽरक्तविकारे** ।६।३।३९। वृद्धिशब्देन विहिता या वृद्धिस्तद्धेतुर्यस्तद्धितोऽरक्तविकारार्थस्तदन्ता स्त्री न पुंवत् । स्रौघ्नीभार्यः । [ [2]माथुरीयते । माथुरीमानिनी ] । रक्ते तु–काषायकन्थः । विकारे तु–[हैमी [2]मुद्रिका यस्य]–हैममुद्रिकः ।

**स्वाङ्गाच्चेतः** ।६।३।४०। स्वाङ्गाद्य ईकारस्तदन्ता स्त्री न पुंवत् । सुकेशीभार्यः । स्वाङ्गात्किम् ? । पटुभार्यः । ईतः किम् ? । अकेशभार्यः ।

---

पाका=बाला–भार्या यस्यासौ पाकभार्यः । अत्र 'अर्भकपृथुकपाका वयसो'-स्युणादिषु निपातितोऽयं 'पाक'शब्दः । एवञ्च तद्धितस्य, वुञो वा नायं ककारः ।

दत्तेति । दानक्रियानिमित्तः स्त्रियां,पुंसि च संज्ञाभूतोऽयमिति 'दत्ता'शब्दस्य भाषितपुंस्कत्वात्स्त्रियाः पुंवदिति पुंवद्भावप्राप्तिरस्ति । स्रौघ्नीति । स्रुघ्ने भवा स्रौघ्नी । 'तत्र भव' इत्यणि 'टिड्ढे'ति ङीप् । 'स्त्रियाः पुंव'दिति पुंवद्भावप्राप्तिः । कषायेण=गैरिकेण रक्ता-काषायी । काषायी कन्था यस्यासौ–काषायकन्थः । हेम्नो विकारो–हैमी । 'अनुदात्तादेरञ्' इति विकारार्थकोऽञ् । 'टिड्ढे'ति ङीप् । हैमी मुद्रिका यस्यासौ–हैममुद्रिकः ।

शोभनाः केशा यस्याः सा–सुकेशी । 'स्वाङ्गाच्चोपसर्जना'दिति ङीष् । सुकेशी भार्या यस्यासौ–सुकेशीभार्यः । पट्वी भार्या यस्यासौ-पटुभार्यः । पटुत्वं हि गुणो, न स्वाङ्गम् । 'वोतो गुणवचना'दिति वा ङीष् । पुंवद्भावः ।

अकेशेति । न विद्यमानाः केशा यस्याः सा–अकेशा । 'सहनञ्विद्यमान-

---

सञ्ज्ञापूरण्योश्च । सञ्ज्ञावाचक और पूरण प्रत्ययान्त जो स्त्रीलिङ्ग शब्द, उसको पुंवद्भाव नहीं हो ।

वृद्धिनिमित्त । वृद्धिशब्द से विहित जो वृद्धि, उसका हेतु जो रक्तार्थक-विकारार्थकभिन्न तद्धित, तदन्त जो स्त्रीवाचक शब्द, उसको पुंवद्भाव नहीं हो ।

स्वाङ्गाच्चेतः । स्वाङ्ग वाचक से परे जो ईकार, तदन्त जो स्त्रीवाचक शब्द, उसको पुंवद्भाव नहीं हो ।

---

१ शेषपूरणम् । २ क्वाचित्कः पाठः ।

*अमानिनीति वक्तव्यम् । सुकेशमानिनी ।

जातेश्च ।६।३।४१। [1]जातेः परो यः स्त्रीप्रत्ययस्तदन्तं न पुंवत् । [ [1]ब्राह्मणीभार्यः ] । [1]शूद्राभार्यः ।

सङ्ख्ययाऽव्ययाऽऽसन्नाऽदूराऽधिकसङ्ख्याः सङ्ख्येये ।२।२।२५। सङ्ख्येयार्थया सङ्ख्ययाऽव्ययादयः समस्यन्ते, स बहुव्रीहिः । बहुव्रीहौ सङ्ख्येये डजबहुगणात् ।५।४।७३। सङ्ख्येये यो बहुव्रीहिस्तस्माड्डच् [ स्या ]त्समासान्तो, [ न तु [2]बहुगणान्तात् ] । दशानां समीपे ये सन्ति ते—उपदशाः । [ [1]नव, एकादश वेत्यर्थः] । अबहुगणात् किम् ? ।

---

पूर्वाच्चे'ति निषेधात्स्वाङ्गाच्चोपसर्जनादिति ङीप् न । अकेशा भार्या यस्यासौ—अकेशभार्यः । अत्र 'स्त्रियाः पुंवद'दिति पुंवद्भावो भवत्येवेत्याशयः ।

अमानिनीति । अमानिनि शब्दे परतोऽयं निषेधः, मानिनि शब्दे परतस्तु पुंवद्भावो भवत्येवेत्याशयः । आत्मानं सुकेशीं मन्यते या सा—सुकेशमानिनी ।

सङ्ख्येति । सामानाधिकरण्यस्याऽन्यपदार्थवृत्तेश्च विरहात्पूर्वेणाऽप्राप्तौ वचनम् । तस्माड्डजिति । व्यत्ययेन पञ्चम्यर्थे सप्तमीत्याह—तस्मादिति ।

---

अमानिनीति । 'स्वाङ्गाच्चेतः' यह पुंवद्भाव का निषेध 'मानिन्' परे रहते नहीं हो । अर्थात् मानिन् परे रहते पुंवद्भाव हो जाए ।

जातेश्च । जातिवाचक से परे जो स्त्री प्रत्यय, तदन्त को पुंवद्भाव नहीं हो ।

सङ्ख्यया । सङ्ख्येयार्थ जो सङ्ख्यावाचक शब्द, उसके साथ अव्यय, और आसन्न आदि का समास ( विकल्प करके ) हो । और वह समास बहुव्रीहि सञ्ज्ञक हो ।

बहुव्रीहौ सङ्ख्येये । सङ्ख्येयार्थक सङ्ख्यावाचक के साथ 'सङ्ख्ययाव्ययासन्ना' इस सूत्र से हुआ जो 'बहुव्रीहि, उससे समासान्त 'डच्' प्रत्यय हो । बहु शब्दान्त और गणान्त बहुव्रीहि को छोड़ कर ।

---

१ क्वाचित्कः पाठः । २ शेषपूरणम् ।

उपबह्वः । उपगणाः । [ * [1]सङ्ख्यायास्तत्पुरुषस्य वाच्यः । निर्गत-त्रिंशतोऽङ्गुलिभ्यो-निस्त्रिंशः खड्गः ] ।

**ति विंशतेर्डिति ।६।४।१४२।** विंशतेर्भस्य [2]तिशब्दस्य लोपो, डिति [3]परे । आसन्नविंशाः । विंशतेरासन्ना इत्यर्थः । अदूरत्रिंशाः । अधिकचत्वारिंशाः । द्वौ वा त्रयो वा-द्वित्राः ।

**दिङ्नामान्यन्तराले ।२।२।२६।** दिशो नामान्यन्तराले वाच्ये प्राग्वत् । दक्षिणस्याः, पूर्वस्याश्च दिशो [ यद्- ] ऽन्तरालं-दक्षिणपूर्वा । [[3]नामग्रहणाद्यौगिकानां न । ऐन्द्र्याश्च कौबेर्याश्चान्तरालं दिक् ] ।

**तत्र तेनेदमिति सरूपे ।२।२।२७।** सप्तम्यन्ते ग्रहणविषये सरूपे

---

बहूनां समीपे ये सन्ति ते-उपबह्वः । गणस्य समीपे ये सन्ति ते-उपगणाः । 'ति' इति लुप्तषष्ठीकं, तदाह-तिशब्दस्येति ।

आसन्नविंशा इति । तिशब्दस्य लोपे 'अतो गुणे' इति पररूपम् ।

अदूराः-त्रिंशतः-अदूरत्रिंशाः ।

अधिकाश्चत्वारिंशतः-अधिकचत्वारिंशाः ।

दक्षिणपूर्वेति । 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भाव' इति पुंवद्भावः ।

'तत्रे'ति सूत्रे 'तत्रे'ति सप्तम्यन्तस्य ग्रहणम् । 'तेने'ति पदेन च तृतीयान्तं गृह्यते । 'सरूपे' इत्युभयत्रान्वेति । तथा च-सप्तम्यन्ते सरूपे पदे-इदं युद्धं प्रवृत्तमित्यर्थे-

---

ति विंशते । भसञ्ज्ञक 'विंशति' का जो 'ति'शब्द, उसका लोप हो । डित् प्रत्यय परे रहते ।

दिङ्नामान्य । अन्तराल वाच्य हो तो दिङ्नामों का समास हो ( विकल्प करके ) । वह समास बहुव्रीहि सञ्ज्ञक हो ।

तत्र तेनेदमिति । सप्तम्यन्त ग्रहणविषय जो दो सरूप पद, और तृतीयान्त प्रहरण विषय जो दो सरूप पद, वे-'इदं युद्धं प्रवृत्तं' इस अर्थ में विकल्प से समास को प्राप्त हों । कर्मव्यतिहार में । वह समास बहुव्रीहि हो ।

---

१ लिखिते दृश्यतेऽयं ग्रन्थः । २ 'तेर्लोपो' पा० । ३ क्वचिन्न ।

पदे, तृतीयान्ते च प्रहरणविषये [[1]सरूपे पदे] 'इदं युद्धं [2]प्रवृत्त'मित्यर्थे समस्येते, कर्मव्यतिहारे। ['[3]इति'शब्दादयं विषयविशेषो लभ्यते]।

इच् कर्मव्यतिहारे ।५।४।१२७। [[1]कर्मव्यतिहारे यो बहुव्रीहिस्तस्मादिच् स्यात्, समासान्तः]। अन्येषामपि दृश्यते ।६।३।१३७। [[1]इचि कर्मव्यतिहारे बहुव्रीहौ पूर्वपदान्तस्य] दीर्घः [स्यात्]। इच्समासान्तो वक्ष्यते । तिष्ठद्गुप्रभृतिष्विच्प्रत्ययस्य पाठादव्ययीभावत्वमव्ययत्वञ्च ]। केशेषु केशेषु गृहीत्वा इदं युद्धं प्रवृत्तं—केशाकेशि । दण्डैश्च दण्डैश्च प्रहृत्येदं युद्धं प्रवृत्तं—दण्डादण्डि । मुष्टीमुष्टि ।

---

समस्येते । एवं तृतीयान्ते सरूपे पदे इदं युद्धं प्रवृत्तमित्यर्थे समस्येते । यत्रेति निर्दिष्टं ग्रहणं =(केशादि) चेत्तद्भवति । यत्तेनेति निर्दिष्टं प्रहरणं ( शस्त्रादि ) चेत्तद्भवतीत्यर्थः । इतिकरणाच्चायं विषयविभागो लभ्यते इति तत्त्वम् ।

ग्रहणविषये इति । गृह्यतेऽनेनेति ग्रहणं—केशादि, तद्विषयो = वाच्यो ययोस्ते सरूपे पदे, एवं प्रह्रियतेऽनेनेति प्रहरणं = दण्डादि, तद् विषयो = वाच्यो ययोस्ते च सरूपे पदे 'इदं युद्धं प्रवृत्त'मित्यर्थे समस्येते । स च बहुव्रीहिरित्यर्थः । अत्र 'सप्तम्यन्ते' इति, 'ग्रहणविषये' इति च प्रथमाद्विवचनान्तं, 'पदे' इत्यस्य विशेषणम् । एवमग्रेऽपि ।

अन्येषामपीति । इचि कर्मव्यतिहारे बहुव्रीहौ पूर्वपदान्तस्य दीर्घ इत्यर्थः ।

मुष्टीति । मुष्टिभिर्मुष्टिभिः प्रहृत्येदं युद्धं प्रवृत्तं—मुष्टीमुष्टि ।

---

इच् कर्मव्यतिहारे । कर्मव्यतिहार में जो बहुव्रीहि, उससे समासान्त इच् प्रत्यय हो ।

अन्येषामपि । कर्मव्यतिहार में जो बहुव्रीहि समास, उसमें पूर्वपद के अन्त को दीर्घ हो, इच् परे रहते ।

---

१ शेषपूरणम् । २ 'प्रवृत्त'मिति क्वचिन्नास्ति । ३ अयं पाठः क्वाचित्कः ।

**तेन सहेति तुल्ययोगे ।२।२।२८।** तुल्ययोगे वर्त्तमानं सहेत्येतत्तृतीयान्तेन [सह] प्राग्वत्। **वोपसर्जनस्य ।६।३।८२।** बहुव्रीहेरवयवस्य सहस्य सः स्याद्वा । पुत्रेण सह सपुत्रः, सहपुत्रो वा आगतः ।

**प्रकृत्याशिषि ।६।३।८३।** सहशब्दः [ [1]प्रकृत्या स्यादाशिषि ] । स्वस्ति राज्ञे सहपुत्राय, सहामात्याय । *अगोवत्सहलेष्विति वक्तव्यम् । [[2]स्वस्ति राज्ञे सगवे ] सवत्साय । सहलाय ।

**बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच् ।५।४।११३।** स्वाङ्गवाचिसक्थ्यक्ष्यन्ताद्बहुव्रीहेः षच् [ स्यात्[2] ] । दीर्घसक्थः । जलजाक्षी । स्वाङ्गात्किम् ? । दीर्घसक्थि शकटम् । स्थूलाक्षा वेणुयष्टिः ।

---

तुल्ययोग इति । तुल्यः समानो योगः—क्रियायामन्वयः—तुल्ययोगः, तस्मिन् तुल्ययोगे । एककालिकक्रियायोगे इत्यर्थः । प्रकृत्येति । सहशब्दः प्रकृत्या स्यादादिषि । बहुव्रीहाविति । बहुव्रीहाविति सप्तमी, 'सक्थ्यक्ष्णो'रिति षष्ठी च—व्यत्ययेन पञ्चम्यर्थे । जलजे इव अक्षिणी यस्याः सा—जलजाक्षी ।

दीर्घे सक्थिनी= तदाकारावीषादण्डौ यस्यासौ—दीर्घसक्थः ।

स्थूलानि अक्षीणि=पर्वग्रन्थयो यस्याः सा–स्थूलाक्षा ।

---

तेन सहेति । तुल्य योग में वर्त्तमान जो 'सह' इसका तृतीयान्त के साथ समास हो, विकल्प करके । वह समास बहुव्रीहि सञ्ज्ञक हो ।

वोपसर्जनस्य । बहुव्रीहि का अवयव जो सह, उसको 'स' आदेश विकल्प करके हो ।

प्रकृत्याशिषि । 'सह'शब्द प्रकृति से रहे, आशीर्वाद अर्थ में ।

अगोवत्स । गोवत्सादि परे रहते 'सह'को प्रकृति भाव नहीं हो । अर्थात् उसे 'स' आदेश हो जाए ।

बहुव्रीहौ सक्थ्य । स्वाङ्गवाची जो सक्थ्यन्त और अक्ष्यन्त बहुव्रीहि, उससे समासान्त 'षच्' प्रत्यय हो ।

---

१ शेषपूरणमेतद् । २ क्वाचित्कः पाठः ।

'अक्ष्णोऽदर्शना'दिति वक्ष्यमाणोऽच्।

**द्वित्रिभ्यां ष मूर्ध्नः।५।४।११५।** आभ्यां मूर्ध्नः षः स्याद्बहुव्रीहौ। द्विमूर्द्धः। त्रिमूर्द्धः। **अन्तर्बहिर्भ्यां च लोम्नः।५।४।११७।** [ [1]आभ्यां लोम्नोऽ] अप् [ [1]स्याद्बहुव्रीहौ]। अन्तर्लोमः। बहिर्लोमः। **पादस्य लोपोऽहस्त्यादिभ्यः।५।४।१३८।** हस्त्यादिवर्जितादुपमानात्परस्य पादस्य लोपः [ [1]स्याद्बहुव्रीहौ ] व्याघ्रस्येव पादावस्य—व्याघ्रपात्। अहस्त्यादिभ्यः किम् ?। [[2]हस्तिन इव पादो यस्य]-हस्तिपादः। कुसूलपादः।

**सङ्ख्यासुपूर्वस्य।६।४।१४०।** [[1]सङ्ख्यासुपूर्वस्य] पादशब्दस्य

---

वक्ष्यमाण इति। अच्=समासान्तोऽच्। 'यस्येति चे'त्यकारलोपः। टाप्। द्वित्रिभ्यामिति। 'ष' इति लुप्तप्रथमान्तम्। द्वौ मूर्द्धानो यस्यासौ द्विमूर्द्धः। त्रयो मूर्द्धानो यस्यासौ—त्रिमूर्द्धः। समासान्ते षे सति 'नस्तद्धिते' इति टिलोपः। अन्तः-मध्ये लोमानि यस्यासो-अन्तर्लोमः। बहिः—लोमानि यस्यासौ—बहिर्लोमः। समासान्ते सति 'नस्तद्धिते' इति टिलोपः।

लोप इति। स्थानिद्वाराऽभावरूपस्यापि लोपस्याऽत्र समासान्तताऽक्षता। लोपस्य समासान्तताऽनङ्गीकारे तु 'शेषाद्विभाषे'ति वैकल्पिकः कप्प्रसज्येत। कुसूलस्येव पादौ यस्यासौ—कुसूलपादः। कुसूलं—धान्यावपनम्। ('ओबरी')।

---

द्वित्रिभ्यां ष। द्वि और त्रि शब्द से परे जो मूर्द्धन् शब्द, तदन्त बहुव्रीहि से समासान्त 'ष' प्रत्यय हो।

अन्तर्बहिर्भ्यां च। अन्तर् और बहिष् से परे जो लोमन् शब्द, तदन्त, बहुव्रीहि से समासान्त 'अप्' प्रत्यय हो।

पादस्य लोपो। हस्त्यादि भिन्न उपमान से परे जो पादशब्द, उसके अन्त का (समासान्त) लोप हो, बहुव्रीहि समास में।

सङ्ख्यासुपूर्वस्य। सङ्ख्या और 'सु' पूर्वक जो पादशब्दान्त बहुव्रीहि, उस ( के अन्त ) का समासान्त लोप हो।

---

१ शेषपूरणम्। २ क्वचिन्न।

लोपः [ [1]स्यात्समासान्तो बहुव्रीहौ ]। द्विपात्। सुपात्।

**उद्विभ्यां काकुदस्य ।६।४।१४८।** [ [1]उद्विभ्यां परस्य काकुदस्य ]। लोपः [ [1]स्यात्समासान्तो, बहुव्रीहौ ]। उत्काकुत्। विकाकुत्।

**पूर्णाद्विभाषा ।५।४।१४९।** [ [1]पूर्णात्परस्य काकुदस्य लोपो वा स्यात्समासान्तो, बहुव्रीहौ ]। पूर्णकाकुत्। पूर्णकाकुदः।

**सुहृद्-दुर्हृदौ मित्रा-ऽमित्रयोः ।५।४।१५०।** [ [1]सुदुर्भ्यां परस्य हृदयस्य हृद्भावो निपात्यते ]। सुहृन्मित्रम्। दुर्हृद्-अमित्रः।

*** नेतुर्नक्षत्रे अब्वक्तव्यः** । मृगो नेता यासां रात्रीणां ताः- मृगनेत्रा रात्रयः।

---

द्वौ पादावस्य-द्विपात्। शोभनो पादावस्य-सुपात्। उत्=ऊर्ध्वं, काकुदं= तालु यस्यासौ-उत्काकुत्। विकृतं, विशिष्टं वा—काकुदं यस्यासौ-विकाकुत्।

सुहृदिति। 'सुदुर्भ्यां परस्य हृदयस्य हृद्भावो निपात्यते' इत्यपि क्वचित्पाठः।

नेतुरिति। नक्षत्रे यो नेतृशब्दस्तदन्ताद्बहुव्रीहेरप्स्यात्समासान्तः।

मृगः=मृगशीर्षं नाम नक्षत्रम्। नेता=प्रधानं। तदुदये एव यासां रात्रीणामारम्भस्तदस्तमिते च यासां रात्रीणामवसानं ता-मृगनेत्रा इत्यर्थः।

नेता—नायकः, प्रधानम्। तादृश्यश्च मार्गशीर्षमासरात्रयः।

---

उद्विभ्यां। उत् और वि उपसर्ग से परे जो काकुद शब्द, तदन्त जो बहुव्रीहि, उसके अन्त का ( समासान्त ) लोप हो।

पूर्णाद्विभाषा। पूर्ण से परे जो काकुद शब्द, उसके अन्त का लोप विकल्प करके हो, बहुव्रीहि में।

सुहृद्दुर्हृदौ। सुहृत् और दुर्हृत् ये क्रम से मित्र और अमित्र अर्थ में निपातित हों।

नेतुर्नक्षत्रे। नक्षत्र में विद्यमान जो नेतृ शब्द, तदन्त बहुव्रीहि से समासान्त 'अप्' प्रत्यय हो।

---

1 शेषपूरणमेतत्।

अच् नासिकायाः संज्ञायां नसं चाऽस्थूलात् ।५।४।११८।
नासिकान्ताद्बहुव्रीहेरच् [स्यात्समासान्तः],नासिकाशब्दश्च नसं प्राप्नोति, न[1] तु स्थूलपूर्वात्। पूर्वपदात्संज्ञायामगः ।८।४।३। पूर्वपदस्थान्निमित्तात्परस्य नस्य णः स्यात्सञ्ज्ञायां[1], न तु गकारव्यवधाने। द्रुरिव नासिका यस्य--द्रुणसः। *खुरखराभ्यां वा नस्। खुरणाः। खरणाः।
*पक्षे अजपीष्यते। खुरणसः। खरणसः। उपसर्गाच्च ।५।४।११९।
[उपसर्गात्=प्रादेर्यो नासिकाशब्दस्तदन्ताद्बहुव्रीहेरच्स्यात्समासान्तः। नासिकाया नसादेशश्च। असञ्ज्ञार्थं वचनम्]। उन्नसः। वेर्ग्रो वक्तव्यः। विगता नासिकाऽस्य-विग्रः॥ * ख्यश्च। विख्यः।

---

खुरखरेति। खुरखराभ्यां परस्य नासिकाशब्दस्य नसादेश इत्यर्थः।
खुरस्येव नासिका यस्यासौ-खुरणाः। एवमग्रेऽपि।
उद्गता नासिका यस्यासौ—उन्नसः। विगता नासिका अस्य विख्यः।

---

अच् नासिकायाः। स्थूलपूर्वक से भिन्न जो नासिकान्त बहुव्रीहि, उससे समासान्त अच् प्रत्यय हो। और नासिका शब्दको 'नस्' आदेश भी हो,सञ्ज्ञा में।

पूर्वपदात्सञ्ज्ञायां। पूर्वपदस्थ निमित्त से परे जो नकार, उसको णकार हो, सञ्ज्ञा में। परन्तु गकार के व्यवधान में यह णत्व नहीं हो।

खुरखराभ्यां। खुर और खर से परे जो नासिका शब्द, उसको विकल्प से समासान्त नस् आदेश हो, बहुव्रीहि में।

पक्षेऽजपी। पक्षमें—नासिका शब्द को नस् आदेश हो, और समासान्त अच् प्रत्यय भी हो।

उपसर्गाच्च। उपसर्ग से परे जो नासिका शब्द, तदन्त जो बहुव्रीहि, उससे समासान्त 'अच्' प्रत्यय हो, और नासिका को नस् आदेश भी हो। (असञ्ज्ञा में)।

वेर्ग्रो वक्तव्यः। ख्यश्च। 'वि' उपसर्ग से परे जो नासिका शब्द, उसको 'ग्र' आदेश हो। और 'ख्य' आदेश भी हो।

---

१ क्वचित्कः पाठः।

**नञ्दुःसुभ्यो हलिसक्थ्योरन्यतरस्याम्** ।५।४।१२१। [ [२]नञ्दुःसुभ्यः परौ यौ हलिसक्थिशब्दौ तदन्ताद्बहुव्रीहेरच्समासान्तो वा स्यात् ]। अहलः। अहलिः। असक्थः। असक्थिः। एवं दुःसुभ्याम्। 'शक्त्योः' रिति पाठान्तरम्। अशक्तः। अशक्तिः।

**नित्यमसिच् प्रजामेधयोः** ।५।४।१२२। नञ्दुःसुभ्य एव। [[२]एभ्यः पराभ्यामाभ्यां नित्यमसिच्स्याद्बहुव्रीहौ]। अप्रजाः। दुष्प्रजाः। सुप्रजाः[१]। अमेधाः। दुर्मेधाः। सुमेधाः।

**धर्म्मादनिच् केवलात्** ।५।४।१२४। केवलपूर्वपदाद्यो धर्म्मशब्दस्तदन्ताद्बहुव्रीहेरनिच् [ [२]स्यात्समासान्तः ]। कल्याणधर्म्मा। केवलात् किम्?। परमः स्वो धर्म्मो यस्येति त्रिपदे बहुव्रीहौ मा भूत्। [ [३]परमस्वधर्म्मः। 'सन्दिग्धसाध्यधर्मे'त्यादौ तु कर्मधारयपूर्वपदो बहुव्रीहिः। एवन्तु 'परमस्वधर्मे'त्यपि साध्वेव, 'निवृत्तिधर्मा' 'अनुच्छित्तिधर्मे'त्यादिवत् ]।

**इच्कर्मव्यतिहारे** ।५।४।१२७। [ [२]कर्मव्यतिहारे यो बहुव्रीहि-

---

नास्ति हलिर्यस्यासौ-अहलः। महद्धलं-हलिः। नास्ति प्रजा यस्यासौ-अप्रजाः। 'अत्वसन्तस्ये'ति दीर्घः। एवमग्रेऽपि। कल्याणो धर्मो यस्यासौ—कल्याणधर्मा।

---

नञ् दुःसुभ्यो। नञादि से परे जो हलि और सक्थि शब्द, तदन्त बहुव्रीहि से समासान्त अच् हो, विकल्प करके।

नित्यमसिच्। नञादि से परे जो प्रजा और मेधा शब्द, तदन्त बहुव्रीहि से समासान्त असिच् नित्य हो।

धर्मादनिच्। केवल ( एकाकी ) पूर्वपद से परे जो धर्म शब्द, तदन्त बहुव्रीहि से समासान्त अनिच् प्रत्यय हो।

इच्कर्मव्यति। 'तत्र तेनेदमिति सरूपे' इस सूत्र से कर्मव्यतिहार में विहित जो बहुव्रीहि, उससे समासान्त इच् प्रत्यय हो।

---

१ क्वाचित्कः पाठः। २ शेषपूरणम्। ३ क्वाचित्कः पाठोऽयम्।

स्तस्मादिच्स्यात्समासान्तः ]। केशा-केशि। मुसला-मुसलि।

**प्रसम्भ्यां जानुनोर्ज्ञुः** ।५।४।१२९। [ [1]प्र-सम्भ्याम्परस्य जानु-शब्दस्य ज्ञुरादेशः स्यात्समासान्तो बहुव्रीहौ ]। प्रज्ञुः। संज्ञुः।

**ऊर्ध्वाद्विभाषा** ।५।४।१३०। [ [1]ऊर्ध्वात्परस्य जानुशब्दस्य ज्ञुरादेशो वा स्यात्समासान्तो, बहुव्रीहौ]। ऊर्ध्वज्ञुः। ऊर्ध्वजानुः।

**ऊधसोऽनङ्** ५।४।१३१। [ [1]ऊधोऽन्तस्य बहुव्रीहेरनङादेशः स्यात्समासान्तः, स्त्रियाम् ]। कुण्डोध्नी। **धनुषश्च** ।५।४।१३२। धनुरन्ताद्बहुव्रीहेरनङादेशः [ [1]स्यात्समासान्तः ]। शार्ङ्गधन्वा। **वा संज्ञायाम्** ।५।४।१३३। [ [1]धनुरन्ताद्बहुव्रीहेरनङादेशो वा स्यात्सञ्ज्ञायाम् ]।

---

केशाकेशीति। 'तत्र तेनेद'मिति समासः। इच्प्रत्ययस्य तिष्ठद्गुप्रभृतिषु पाठादव्ययीभावत्वेनाऽव्ययतयाऽत्र विभक्तिलुक्।

ऊर्ध्वे जानुनी यस्यासौ-ऊर्ध्वज्ञुः। ऊर्ध्वजानुः। कुण्डमिव ऊधो यस्याः सा-कुण्डोध्नी। 'बहुव्रीहेरूधसो ङीष्' इति ङीष्। शृङ्गस्येदं शार्ङ्गं। शार्ङ्गं धनुर्यस्यासौ शार्ङ्गधन्वा।

---

प्रसम्भ्यां। प्र और सम् उपसर्ग से परे जो जानुशब्द, उसका समासान्त 'ज्ञु' आदेश हो, बहुव्रीहि में।

ऊर्ध्वाद्विभाषा। ऊर्ध्व से परे जो जानु शब्द, उसको समासान्त 'ज्ञु' आदेश हो, विकल्प करके, बहुव्रीहि में।

ऊधसोऽनङ्। ऊधोऽन्त जो बहुव्रीहि उसको समासान्त अनङ् आदेश हो, स्त्री लिङ्ग में।

धनुषश्च। धनुरन्त बहुव्रीहि, को समासान्त अनङ् आदेश हो।

वा सञ्ज्ञायां। धनुरन्त बहुव्रीहि को समासान्त अनङ् आदेश हो, विकल्प करके सञ्ज्ञा में।

---

१ शेषपूरणमेतत्।

शतधन्वा । शतधनुः ।

**जायाया निङ्** ।५।४।१३४। जायान्तस्य बहुव्रीहेर्निङादेशः [ [1]स्यात्समासान्तः ]। **लोपो व्योर्वलि** ।६।१।६६। [ [1]वकारयकारयोर्लोपः स्याद्वलि परतः । पुंवद्भावः]। युवतिर्जाया यस्य--युवजानिः ।

**गन्धस्येदुत्पूतिसुसुरभिभ्यः** ।५।४।१३५। [ [1]उदादिभ्यः परस्य गन्धस्येकारोऽन्तादेशः स्यात्समासान्तो,बहुव्रीहौ] उद्गन्धिः। पूतिगन्धिः। सुगन्धिः । [नेह-[2]शोभना गन्धा द्रव्याण्यस्य सुगन्ध आपणः [3]। सुरभिगन्धिः[2] । *** गन्धस्येत्वे तदेकान्तग्रहणम्** । एकान्तः= एकदेश इव अविभागेन लक्ष्यमाण इत्यर्थः। सुगन्धि पुष्पम् । सुगन्धि जलम् । सुगन्धिर्वायुः[2]।

**उपमानाच्च** ।५।४।१३७। उपमानात्परस्य गन्धस्येकारान्तादेशः स्यात्समासान्तो, बहुव्रीहौ ] । पद्मस्येव गन्धोऽस्य पद्मगन्धिः ।

---

शतं धनूंषि यस्यासौ-शतधन्वा । उद्गतो गन्धो यस्यासौ---उद्गन्धिः। पूतिः=असुरभिः-गन्धो यस्यासौ-पूतिगन्धिः । शोभनो गन्धो यस्यासौ-सुगन्धिः ।

---

जायाया निङ्। जायान्त बहुव्रीहि को समासान्त निङ् आदेश हो ।

लोपो व्यो । वकार और यकार का लोप हो, वल् परे रहते ।

गन्धस्येदुत्। उदादि से परे जो गन्ध शब्द, तदन्त जो बहुव्रीहि, उसको समासान्त इकार अन्तादेश हो ।

उपमानाच्च। उपमान से परे जो गन्धशब्द, तदन्त बहुव्रीहि को समासान्त इकार अन्तादेश हो ।

---

१ शेषपूरणमेतदस्मत्कृतम् । २ क्वाचित्कः पाठः ।

३ 'आपणिक' इति तु सिद्धान्तकौमुद्यां पाठः ।

वयसि दन्तस्य दतृ ।५।४।१४१। 'सङ्ख्यासुपूर्वस्ये'त्येव । [ [1]सङ्ख्या-सु-पूर्वस्य दन्तस्य 'दतृ' आदेशः स्यात्समासान्तो बहुव्रीहौ; वयसि गम्यमाने ] । द्विदन् । चतुर्दन् । [ [2]वयसि किम् ? । सुदन्तः । द्विदन्तः करी ] ।

अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्च ।५।४।१४५। एभ्यो दन्तस्य दतृ वा [ [1]स्यात्समासान्तो, बहुव्रीहौ] । कुड्मलाग्रदन् । कुड्मलाग्रदन्तः ।

*षष उत्वं दतृदशधासूत्तरपदादेश्च ष्टुत्वं, धासु वेति वाच्यम् । षोडन् । [[2]षोडश । षोढा-षड्ढा] ।

उरःप्रभृतिभ्यः कप् ।५।४।१५१। [ [1]उरःप्रभृत्यन्ताद्बहुव्रीहेः कप् स्यात्समासान्तः ] । व्यूढोरस्कः । प्रियसर्पिष्कः ॥

---

द्वौ दन्तौ अस्य–द्विदन् = वार्षिकः शिशुः । उगित्त्वान्नुम् ।

कुड्मलाग्र इव दन्ता यस्यासौ-कुड्मलाग्रदन् ।

उर इति । उरःप्रभृत्यन्ताद्बहुव्रीहेः कब्वा स्यादित्यर्थः । व्यूढं = विशाल-मुरो यस्यासौ-व्यूढोरस्कः । 'सोऽपदादा'विति सत्वम् । प्रियं सर्पिर्यस्यासौ—प्रियसर्पिष्कः । 'इणः षः' इति षत्वम् ।

---

वयसि दन्तस्य । सङ्ख्या और सु पूर्वक जो दन्त शब्द, उसको समासान्त दतृ आदेश हो, बहुव्रीहि में । अवस्था ( वय ) गम्यमान हो तो ।

अग्रान्त । अग्रादि से परे जो दन्त शब्द, उसको समासान्त दतृ आदेश हो, विकल्प करके बहुव्रीहि में ।

षष उत्वं । 'दतृ' आदि परे रहते षष् को उत्व हो, और उत्तर पदादि को ष्टुत्व हो । और धा प्रत्यय परे रहते उत्व विकल्प करके हो ।

उरःप्रभृतिभ्यः । उरःप्रभृत्यन्त बहुव्रीहि से समासान्त कप् प्रत्यय हो ।

---

१ शेषपूरणम् । २क्वाचित्कः पाठः ।

*अर्थान्नञः । [ [1]कप् ]। अनर्थकः । नञः किम् ? । अपार्थः । [1]अपार्थकः ।

इनः स्त्रियाम् ।५।४।१५२। इन्नन्ताद्बहुव्रीहेः कप् [स्यात्स्त्रियाम्[2]] । बहुदण्डिका नगरी । (प.) अनिनस्मन्ग्रहणान्यर्थवता चाऽनर्थकेन च तदन्तविधिं प्रयोजयन्ति । बहुवाग्मिका [ [1]नगरी ] ।

शेषाद्विभाषा ।५।४।१५४। अनुक्तसमासान्ता [[3]च्छेषाधिकारस्था]-द्बहुव्रीहेः कब्वा [[1]स्यात् ]। [बहुमालकः । बहुमालो वा [1]]। महायशस्कः । महायशाः । अनुक्तेत्यादि किम् ? । व्याघ्रपात् ।

आपोऽन्यतरस्याम् ।७।४।१५। कपि [[2]आबन्तस्य] ह्रस्वो [ [2]वा स्यात् ]। बहुमालाकः । बहुमालकः । [ [1]कबभावे—बहुमालः ] ।

---

नास्ति अर्थो यस्यासौ—अनर्थकः । बहवो दण्डिनो यस्यां सा—बहुदण्डिका काशीनगरी ।

व्याघ्रपादिति । अत्र 'पादस्य लोपोऽहस्त्यादिभ्यः' इति लोपः समासान्तः ।

---

अर्थान्नञः । नञ् से परे जो अर्थशब्द, तदन्तबहुव्रीहि से समासान्त कप् प्रत्यय हो ।

इनः स्त्रियाम् । इन्नन्त बहुव्रीहिसे समासान्त कप् हो, स्त्रीलिङ्गमें ।

अनिनस्मन् । सूत्रों में—यदि अन्, इन्, अस्, मन् इनका अर्थवान् का, या अनर्थक का भी ग्रहण हो तो भी इनसे तदन्त विधि होती है ।

शेषाद्विभाषा । अनुक्तसमासान्त शेषाधिकारस्थ जो बहुव्रीहि, उससे समासान्त कप् हो विकल्प करके ।

आपोऽन्यतरस्याम् । कप् परे रहते आबन्त को ह्रस्व हो, विकल्प से ।

---

१ क्वाचित्कः पाठः । २ शेषपूरणम् ।
३ सिद्धान्तकौमुद्यनुसारेण वर्द्धितोऽयं पाठः ।

न संज्ञायाम् ।५।४।१५५। 'शेषा'दिति प्राप्तः कब् न [[2]स्यात्सञ्ज्ञायाम्] । विश्वे देवा अस्य विश्वदेवः । ईयसश्च ।५।४।१५६। ईयसन्तोत्तरपदा [ [1]द्बहुव्रीहे–] र्न कप् । बहवः श्रेयांसोऽस्य—बहुश्रेयान् । 'गोस्त्रियो'रिति ह्रस्वे प्राप्ते–।

*ईयसो बहुव्रीहेर्न । बहुश्रेयसी । बहुव्रीहेः किम् ? । अतिश्रेयसिः ।

वन्दिते भ्रातुः ।५।४।१५७। [2]पूजितार्थभ्रात्रन्तान्न कप् । प्रशस्तो भ्राताऽस्य[3]—प्रशस्तभ्राता । सुभ्राता । वन्दिते किम् ? । मूर्खभ्रातृकः । 'नद्यृतश्चे'ति कप् ।

*सर्वनामसङ्ख्ययोर्बहुव्रीहौ पूर्वनिपातः । सर्वश्वेतः । [[4]द्विशुक्लः] । त्रिशुक्लः । * सङ्ख्याया अल्पीयस्याः । द्वित्राः । *द्वन्द्वेऽपि[5] । द्वादश । *वा प्रियस्य । गुडप्रियः । प्रियगुडः । *गड्वादेः परा सप्तमी ।

---

द्वौ च दश च—द्वादश ।

---

न सञ्ज्ञायाम् । 'शेषाद्विभाषा' इस सूत्रसे प्राप्त जो कप्, वह सञ्ज्ञामें नहीं हो ।

ईयसश्च । ईयसन्तोत्तर पदजो बहुव्रीहि, उससे कप् नहीं हो ।

ईयसो बहुव्रीहेर्न । ईयसन्त बहुव्रीहि में उपसर्जन ह्रस्व नहीं हो ।

वन्दिते भ्रातुः । पूजितार्थक भ्रात्रन्त बहुव्रीहिसे कप् नहीं हो ।

सर्वनामसङ्ख्ययोः । सर्वनाम और सङ्ख्या वाचक का बहुव्रीहिमें पूर्व निपात हो ।

सङ्ख्याया अल्पी । अपेक्षाकृत अल्प ( छोटी ) सङ्ख्यावाचकका बहुव्रीहिमें पूर्व निपात हो ।

द्वन्द्वेऽपि । द्वन्द्वसमासमें भी अन्यापेक्षया छोटी सङ्ख्या का पूर्व निपात हो ।

वा प्रियस्य । बहुव्रीहिसमासमें प्रिय का पूर्व निपात हो, विकल्प करके ।

गड्वादेः परा । बहुव्रीहि समासमें सप्तम्यन्तका गड्डु आदिसे पर प्रयोग हो ।

---

१ शेषपूरणम् । २ 'पूजार्थ' पा० । ३ 'यस्य' पा० ।
४ क्वाचित्कः पाठः । ५ 'द्वन्द्वे च' पा० ।

गडुकण्ठः। क्वचिन्न–वहेगडुः।

निष्ठा ।२।२।३६। निष्ठान्तं बहुव्रीहौ पूर्वं [ [1]स्यात् ]। कृतकृत्यः।

*जातिकालसुखादिभ्यः परा निष्ठा वाच्या। सारङ्गजग्धी। मासजाता। [2]सुखजाता। [ [2]प्रायिकं चेदम्। कृतकटः। पीतोदकः ]।

वाऽऽहिताग्न्यादिषु ।२।२।३७। [ [3]एषु निष्ठान्तं वा पूर्वं प्रयोज्यम् ]। आहिताग्निः। अग्न्याहितः। आकृतिगणोऽयम्।

[* [1]प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ। अस्युद्यतः। दण्डपाणिः। क्वचिन्न–विवृताऽसिः ]।

इति बहुव्रीहिः॥

---

गडुः = मांसग्रन्थिः–कण्ठे यस्यासौ—गडुकण्ठः=बर्करः। (बकरा आदि)।

वहः=स्कन्धः। वहे गडुर्यस्यासौ—वहेगडुः। 'हलदन्तात्सप्तम्याः सञ्ज्ञायाम्' इत्यलुक्।

सारङ्गः=मृगः–जग्धो = भुक्तो–यया सा–सारङ्गजग्धी। 'अस्वाङ्गपूर्वपदाद्वा' इति ङीष्। मासो जातायाः यस्याः सा-मासजाता।

इति श्रीगुरुप्रसादशास्त्रिकृतायां बालमनोरमायां बहुव्रीहिप्रकरणम्।

—:*:—

---

निष्ठा। बहुव्रीहिसमासमें निष्ठान्तका पूर्व निपात हो।

जातिकाल। बहुव्रीहि समासमें जातिवाचक, कालवाचक और सुखादिसे परे निष्ठान्त का प्रयोग हो। अर्थात् निष्ठान्तका पर निपात हो।

वाऽऽहिता। आहिताग्न्यादि शब्दों में निष्ठान्त का पूर्व निपात हो, विकल्प करके।

---

१ क्वाचित्कः पाठः। २क्वचिन्न। ३ शेषपूरणमेतत्।

## अथ द्वन्द्वसमासः ।

**चार्थे द्वन्द्वः ।२।२।२९।** अनेकं सुबन्तं चार्थे वर्त्तमानं वा समस्यते, स द्वन्द्वः । समुच्चयाऽन्वाचयेतरेतरयोगसमाहाराश्चार्थाः । तत्र–'ईश्वरं गुरुं च भजस्वे'ति परस्परनिरपेक्षस्याऽनेकस्यैकस्मिन्नन्वयः समुच्चयः । 'भिक्षामट गां चानये'त्यन्यतरस्याऽऽनुषङ्गिकत्वेनाऽन्वयो[1]ऽन्वाचयः । अनयोरसामर्थ्यात् समासो न । 'धवखदिरौ छिन्धी'ति मिलितानामन्वय इतरेतरयोगः । 'संज्ञापरिभाष'मिति समूहः समाहारः ।

**राजदन्तादिषु परम् ।२।२।३१।** एषु पूर्वप्रयोगार्हं परं स्यात् ।

---

चार्था इति । चशब्दद्योत्याः । एकस्मिन्=भजनादौ । अनेकस्य=ईश्वरादेः । 'ईश्वरं गुरुञ्चे'त्यादौ क्रियायां द्रव्ययोः समुच्चयः । 'राज्ञो गजश्च, पुरुषश्चे'त्यादौ द्रव्ये द्रव्ययोः समुच्चयः । 'पटः शुक्लो,रक्तश्चे'त्यत्र च द्रव्ये गुणयोः समुच्चयः । 'रक्तः पटः, कुण्डलञ्चे'त्यत्र गुणे द्रव्ययोः समुच्चय इति विवेकः ।

भिक्षामटेति । अत्र हि अलाभाद्गामनानयन्नपि भिक्षामटत्येव, अटन्नपि नाऽन्विष्य गामानयति, भिक्षामनटंस्तु गां नानयति, अतो भिक्षाटनं प्रधानम् । गवानयनन्त्वानुषङ्गिकम् । अनुद्देश्यत्वञ्चाऽऽनुषङ्गिकत्वम् ।

असामर्थ्यात्–एकार्थीभावाऽभावात् ।

---

चार्थे द्वन्द्वः । 'च' के अर्थ ( इतरेतर योग और समाहार अर्थ ) में वर्त्तमान जो अनेक समर्थ सुबन्त, उनका समास विकल्प करके हो । और वह समास द्वन्द्व सञ्ज्ञक हो ।

राजदन्तादिषु । राजदन्तादि में पूर्वप्रयोगार्हका पर प्रयोग (पर निपात) हो ।

---

[1] 'अन्वय' इति क्वचिन्न ।

दन्तानां राजा [ [1]इति ]—राजदन्तः । *धर्मादिष्वनियमः । अर्थधर्मौ । धर्मार्थौ । दम्पती । जम्पती । जायापती । 'जायाशब्दस्य जम्भावो, दम्भावश्च [2]वा निपात्यते । आकृतिगणोऽयम् । द्वन्द्वे घि ।२।२।३२। [ [3]द्वन्द्वे घिसंज्ञं ] पूर्वं स्यात् । हरिहरौ । [ * [1]अनेकप्राप्तावेकत्र नियमोऽनियमः शेषे । हरिगुरुहराः । हरिहरगुरवः ] ।

अजाद्यदन्तम् ।२।२।३३। [ [3]अजाद्यदन्तं द्वन्द्वे पूर्वं स्यात् ] । ईशकृष्णौ । [ [1]* बहुष्वनियमः । अश्वरथेन्द्राः । इन्द्राश्वरथाः ] ।

अल्पाच्तरम् ।२।२।३४। [ [3]इदं द्वन्द्वे पूर्वं स्यात् ] । शिवकेशवौ । *ऋतुनक्षत्राणां समाक्षराणामानुपूर्व्येण । हेमन्त-शिशिर-वसन्ताः । कृत्तिका-रोहिण्यौ । समाक्षराणां किम् ? । ग्रीष्म-वसन्तौ ।

---

राजदन्त इति । दन्तोपरिवर्त्ती दन्तो 'राजदन्त' इत्युच्यते । राजन्तादिषु द्वन्द्वतत्पुरुषयोरुभयोः पाठेऽपि 'अर्थधर्मौ' इत्यादिद्वन्द्वाभिप्रायेणेह पाठः । अनियम इति । सर्वेषामेवेह 'अनेक'मिति प्रथमानिर्दिष्टत्वेनोपसर्जनत्वाऽविशेषादनियमप्राप्तावयमारम्भः । अर्थधर्माविति । अत्र अर्थस्य अजाद्यदन्ततया पूर्वनिपातनियमः प्राप्तः । आकृतीति । अयं = राजदन्तादिः । आनुपूर्व्येणेति । अत्र ऋतूनां प्रादुर्भावकृतमानुपूर्व्यं, नक्षत्राणाञ्चोदयकृतमिति विवेकः । अभ्यर्हितञ्चेति । पूज्यवाचि शब्दस्वरूपं पूर्वं प्रयोज्यमित्यर्थः ।

---

धर्मादिष्व । धर्मादि में पूर्व निपात का कोई नियम नहीं है ।

द्वन्द्वे घि । द्वन्द्व समासमें घिसञ्ज्ञकका पूर्व निपात हो ।

अजाद्यन्तं । अजादि जो अदन्त उसका द्वन्द्वमें पूर्व निपात हो ।

अल्पाच्तरम् । द्वन्द्वमें अपेक्षाकृत अल्पाच् का पूर्व निपात हो ।

ऋतुनक्षत्राणां । समाक्षर ( तुल्य सङ्ख्यक अक्षर वाले ) जो ऋतु और नक्षत्रवाचक शब्द, उनका—द्वन्द्व में आनुपूर्वी (क्रम) से पूर्व प्रयोग हो ।

---

१ क्वाचित्कः पाठः । २ क्वचिन्न । ३ शेषपूरणम् ।

* लघ्वक्षरं पूर्वम् । कुशकाशम् । *अभ्यर्हितं च । तापस-पर्वतौ ।
*वर्णानामानुपूर्व्येण । ब्राह्मण-क्षत्रिय-विट्-शूद्राः ।
*भ्रातुर्ज्यायसः । युधिष्ठिरा-ऽर्जुनौ ।

द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् ।२।४।२। एषां द्वन्द्व एकवत्स्यात् । पाणिपादम् । मार्दङ्गिकपाणविकम् । रथिकाश्वारोहम् ।

अध्ययनतोऽविप्रकृष्टाख्यानाम् ।२।४।५। अध्ययनेन प्रत्यासन्ना आख्या येषां, तेषां द्वन्द्व एकव[त्स्या]त् । पदक-क्रमकम् ।

---

ज्यायस इति । ज्येष्ठभ्रातुरित्यर्थः ।

पाणी च पादौ च एषां समाहारः—पाणिपादम् । मृदङ्गवादनं शिल्पमस्य—मार्दङ्गिकः । पाणिवादनं शिल्पमस्य—पाणविकः । 'तदस्य शिल्प'मिति ठक् । मार्दङ्गिकाश्च, पाणविकाश्च एषां समाहारः—मार्दङ्गिक—पाणविकम् । 'मार्दङ्गिकवैणविक'मिति क्वचित्पाठः ।

रथेन चरन्ति—रथिकाः । 'पर्पादिभ्यः ष्ठन्' । रथिकाश्च अश्वारोहाश्च एषां समाहारः—रथिकाश्वारोहम् । समाहारस्यैकत्वादेव सिद्धे नियमार्थं प्रकरणं-'प्राण्यङ्गादीनां समाहार एव यथा स्या'दिति ।

पदान्यधीते—पदकः । 'क्रमादिभ्यो वुन्' इति वुन् । क्रममधीते—क्रमकः । वेदे—पदान्यधीत्य क्रमोऽध्येतव्य इति स्पष्टा तयोः प्रत्यासत्तिः ।

---

लघ्वक्षरं । लघु अक्षरवाले का गुरु अक्षर वालेसे पूर्व प्रयोग हो, द्वन्द्व में ।

अभ्यर्हितं च । पूज्य ( आदरणीय ) का द्वन्द्व में पूर्व निपात हो ।

वर्णानामानु । ब्राह्मण आदिवर्णों का द्वन्द्वसमास में आनुपूर्वी ( क्रम ) से पूर्व निपात हो ।

भ्रातुर्ज्यायसः । द्वन्द्वमें बडे भाईका पूर्व निपात हो ।

द्वन्द्वश्च प्राणि । प्राण्यङ्ग, तूर्याङ्ग और सेनाङ्गोंका जो द्वन्द्व वह एकवत् हो ।

अध्यनतो । अध्ययन से जिनको आख्या (सञ्ज्ञा) प्रत्यासन्न (पास में) है, उनका द्वन्द्व—एकवत् हो ।

**जातिरप्राणिनाम्** ।२।४।६। प्राणिवर्ज्जजातिवाचिनां द्वन्द्व एकवत् [ [1]स्यात् ]। धाना-शष्कुलि । प्राणिनां तु—विट्-शूद्राः ।

**विशिष्टलिङ्गो नदोदेशोऽग्रामाः** ।२।४।७। ग्रामवर्ज्जं-नदी-देशवाचिनां भिन्नलिङ्गानां द्वन्द्व एकवत् [ [1]स्यात् ]। उद्धयश्च इरावती च उद्धये-रावति। गङ्गा-शोणम्। कुरवश्च कुरुक्षेत्रञ्च—कुरु-कुरुक्षेत्रम्।

**क्षुद्रजन्तवः** ।२।४।८। एषां द्वन्द्व एकवत् [ [1]स्यात् ]। यूका-लिक्षम्। आ नकुलात्क्षुद्रजन्तवः। **येषां च विरोधः शाश्वतिकः** ।२।४।९। प्राग्वत्। [=येषां[2] शाश्वतिको नित्यो विरोधस्तद्वाचिनां द्वन्द्व एकवत्स्यात्]। अहिनकुलम्। गोव्याघ्रम्। काकोलूकमित्यादौ परत्वाद्विभाषा वृक्षेति

---

'विशिष्टलिङ्ग' इत्यादौ व्यत्ययेन बहुत्वे एकवचनम्। अत्र—ग्रामवाचक-भिन्ना ये—भिन्नलिङ्गा नदीवाचिनः, भिन्नलिङ्गा देशवाचिनश्च—तेषां समाहारे द्वन्द्व एकवदित्यर्थः।

उद्धयः—ब्रह्मपुत्रनदः। इरावती = ब्रह्मदेशनदी। ( बर्माकी इरावदी नामक महानदी )।

क्षुद्रेति। 'क्षुद्रजन्तुरनस्थिः स्यादथवा क्षुद्र एव वा।
शतं वा प्रसृतौ येषां, केचिदानकुलादपि॥'

—इति संग्रहः। आ नकुलादिति। नकुलपर्यन्तम्। शाश्वतिकः—त्रैकालिकः, सहजः, नित्यः। परत्वादिति। पशुशकुनिद्वन्द्वस्यावकाशः—गोमहिषम्। गोमहिषाः। हंसचक्रवाकम्। हंसचक्रवाकाः। 'येषाञ्च विरोधः' इत्यस्यावकाशः—

---

जातिरप्राणिनां। प्राणी भिन्न जातिवाचियों का द्वन्द्व एकवत् हो।

विशिष्टलिङ्गो। भिन्न लिङ्ग जो ग्रामवर्ज देशवाची और नदीवाची, उनका द्वन्द्व एकवत् हो।

क्षुद्रजन्तवः। क्षुद्र जन्तुओं का द्वन्द्व एकवत् हो।

येषां च। जिनका सदा से ही सहज वैर है, उनका द्वन्द्व एकवत् हो।

---

१ क्वाचित्कः पाठः। २ शेषपूरणम्।

प्राप्तं चकारेण बाध्यते ।

**शूद्राणामनिरवसितानाम् ।२।४।१०।** अवहिष्कृतानां शूद्राणां द्वन्द्व [1]एकव [त्स्या]त्। तक्षायस्कारम्। **पात्राद्बहिष्कृतानां तु**–चण्डाल-मृतपाः ।

**गवाश्वप्रभृतीनि च ।२।४।११।** [ [2]गवाश्वप्रभृतीनि ] यथोच्चारितानि तथैव साधूनि [ [3]स्युः ]। गवाश्वम्। दासी–दासमित्यादि ।

**विभाषा वृक्ष-मृग-तृण-धान्य-व्यञ्जन-पशु-शकुन्य-श्ववडव-पूर्वा-परा-ऽधरोत्तराणाम् ।२।४।१२।** वृक्षादीनां सप्तानां द्वन्द्वोऽश्ववडवेत्यादि द्वन्द्वत्रयं च प्राग्वद्वा । वृक्षादौ विशेषाणामेव ग्रहणम्। प्लक्षन्यग्रोधम् ।

---

अहिनकुलम्। मार्जारमूषकम् । श्रमणब्राह्मणम् इति। 'गोव्याघ्रं' 'काकोलूक'-मित्यादौ तु परत्वाद्विभाषेति प्राप्तमित्याशयः ।

बाध्यते इति । अत्र चकारः पुनर्विधानार्थ इत्याशयः ।

पात्रादिति । यैर्भुक्ते सति भोजनपात्रं भस्मादिनाऽपि न शुध्यति, ते पात्राद्बहिष्कृताः । तक्षा = वर्द्धकिः। ( बढ़ई )। अयस्कारः = लोहकारः। ( लोहार )।

गवाश्वमिति। गावश्च अश्वाश्च–एषां समाहारः—गवाश्वम्। अत्र पशु-द्वन्द्वतया 'विभाषा वृक्षमृगे'ति वैकल्पिक एकवद्भावः प्राप्तः।

दासीदासमिति। अत्र 'पुमान् स्त्रिया:' इत्येकशेषः प्राप्तोऽनेन बाध्यते ।

विशेषाणामेवेति। वृक्षादिशब्दैः प्रत्येकं द्वन्द्वस्य विशेषितत्वेन, केवलवृक्ष-

---

शूद्राणामनि। पात्र से अवहिष्कृत शूद्रों का द्वन्द्व एकवत् हो ।

गवाश्वप्रभृतीनि । गवाश्व प्रभृति द्वन्द्व-गण में जिस तरह से उच्चारित हैं, उसी तरह साधु हों।

विभाषा वृक्ष। वृक्षादि सातका द्वन्द्व, और अश्ववडव आदि तीन द्वन्द्व एकवत् हों, विकल्प करके।

---

1 'प्राग्वत्' पा०। 2 शेषपूरणम्। 3. क्वचिन्न।

प्लक्षन्यग्रोधाः। रुरुपृषतम्। रुरुपृषताः। कुशकाशम्। कुशकाशाः। व्रीहियवम्। व्रीहियवाः। दधिघृतम्। दधिघृते[1]। गोमहिषम्। गोमहिषाः। शुकबकम्। शुकबकाः। अश्ववडवम्। अश्ववडवौ[2]। पूर्वापरम्। पूर्वापरे। अधरोत्तरम्। अधरोत्तरे।

*फल-सेना-वनस्पति-मृग-शकुनि-क्षुद्रजन्तु-धान्य-तृणानां बहु-प्रकृतिरेव द्वन्द्व एकवदिति वाच्यम्। बदराणि चामलकानि च—बदरामलकम्। [3]'जातिरप्राणिना'मित्येकवद्भावः। नेह—बदरामलके। रथिकाश्वारोहावित्यादि।

**न दधिपयआदीनि ।२।४।१४।** [[4]एतानि] नैकवत्स्युः। दधि-पयसी। इध्माबर्हिषी। निपातनाद्दीर्घः। ऋक्सामे। वाङ्मनसे।

**आनङ् ऋतो द्वन्द्वे ।६।३।२५।** विद्यायोनिसम्बन्धवाचिना—

---

शब्दस्य च एकशेषप्रवृत्त्या द्वन्द्वाऽसम्भवात्,सामान्यविशेषाणां वृक्षधवादीनान्तु द्वन्द्वस्याऽनभिधानात्तद्विशेषस्यैव ग्रहणमत्रेत्याशयः।

न दधीति। एतानि नैकवत्स्युरित्यर्थः।

दधिपयसी इति। अत्र व्यञ्जनत्वाद्विकल्पः प्राप्तः।

इध्मेति। इध्मं च बर्हिश्च–इध्माबर्हिषी। इध्मशब्दस्य च इहैव निपातनाद्दीर्घः। इध्मं = काष्ठम्। बर्हिः–कुशः। 'इध्ममेधः समित्स्त्रिया' मित्यमरः।

वाक्च मनश्च-वाङ्मनसे। 'अचतुरे'त्यादिना समासान्तोऽच्।

---

फलसेना। फल आदि का बहु प्रकृतिक ( बहुवचनान्त प्रकृतिक ) ही द्वन्द्व एकवत् हो।

न दधिपयः। 'दधिपयः' आदि द्वन्द्व एकवत् नहीं हों।

आनङ् ऋतो। विद्या सम्बन्धवाची और योनिसम्बन्धवाची जो ऋदन्त, उनको द्वन्द्व में आनङ् आदेश हो, उत्तरपद परे रहते।

---

१ 'घृतानि' पा०। २ 'वडवाः'।
३ अयं पाठः क्वचिन्न। ४ शेषपूरणम्।

ऋदन्तानां द्वन्द्वे आनङ् स्यादुत्तरपदे । होतापोतारौ । [[1]होतृपोतृनेष्टोद्गातारः । द्वयोर्द्वयोर्द्वन्द्वं कृत्वा पुनर्द्वन्द्वे तु—होतापोतानेष्टोद्गातारः]। मातापितरौ । 'पुत्रे' इत्यनुवृत्तेः—पितापुत्रौ ।

देवताद्वन्द्वे च ।६।३।२६। इहोत्तरपदे [2]पूर्वपदस्याऽऽनङ् [[3]स्यात्]। मित्रावरुणौ । *वायोः प्रयोगे प्रतिषेधः । अग्निवायू । वाय्वग्नी ।

ईदग्नेः सोमवरुणयोः ।६।३।२७। [ [3]सोमवरुणयोरुत्तरपदयोरग्नेरीदादेशः स्यात् ]। 'देवताद्वन्द्वे' इत्येव ।

अग्नेः स्तुत्स्तोमसोमाः- ।८।३।८२। अग्नेः परेषामेषां सस्य षः [4]स्यात्समासे । अग्निष्टुत् । अग्निष्टोमः । अग्नीषोमौ । अग्नीवरुणौ ।

---

होतापोतेति । अत्र अनयोरेकयज्ञे आर्त्विज्यरूपो विद्याकृतः सम्बन्धः ।

मातापितराविति । अनयोः पुत्रोत्पादने योनिकृतः सम्बन्धः । अनुवृत्तेरिति । 'पुत्रेऽन्यतरस्या'मित्यतो मण्डूकप्लुत्या 'पुत्र'पदानुवृत्तेरित्यर्थः ।

पितापुत्राविति । अनयोर्जन्यजनकभावलक्षणो योनिकृतः सम्बन्धः ।

अग्नेःस्तुदिति । 'सात्पदाद्यो'रिति निषेधे प्राप्तेऽयमारम्भः ।

अग्निः स्तूयतेऽत्र अग्निष्टुत्—क्रतुविशेषः । सम्पदादित्वादधिकरणे क्विप् ।

अग्नीनां स्तोमः—अग्निष्टोमः—सोमयागस्य संस्थाविशेषः ।

---

देवताद्वन्द्वे च । देवताओं के द्वन्द्व में उत्तरपद परे रहते पूर्वपद को आनङ् हो ।

वायोः प्रयोगे । जहाँ देवता द्वन्द्व में वायु का प्रयोग हो, वहां आनङ् नहीं हो ।

ईदग्नेः । सोम और वरुण उत्तरपद परे रहते अग्नि को ईत् आदेश हो देवता द्वन्द्व में ।

अग्नेः स्तुत् । अग्नि से परे जो 'स्तुत्' आदि का सकार, उसको षत्व हो, समास में ।

---

१ क्वचिदयं पाठ उपलभ्यते । २ 'इहोत्तरपदे आनङ्' पा० ।

३ शेषपूरणमेतत् । ४ स्यादिति क्वचिन्न ।

**इद् वृद्धौ** ।६।३।२८। वृद्धिमत्युत्तरपदे अग्नेरिदादेशः [ [1]स्या ]- देवताद्वन्द्वे। अग्नामरुतौ देवते अस्य—आग्निमारुतं कर्म। अग्नीवरुणौ देवते अस्य—आग्निवारुणम्। 'देवताद्वन्द्वे चे'त्युभयपदवृद्धिः। * **विष्णौ न**। आग्नावैष्णवम्।

**दिवो द्यावा** ।६।३।२९। देवताद्वन्द्वे उत्तरपदे [दिवो [2]द्यावादेशः स्यात्]। द्यावाभूमी। **मातरपितरावुदीचाम्** ।६।३।३२। [ [2]अत्र उदीचामाचार्याणां मतेन मातृशब्दस्याऽरङादेशो निपात्यते ]। मातरपितरौ। उदीचां किम्?। मातापितरौ।

**द्वन्द्वाच्चुदषहान्तात्समाहारे** ।५।४।१०६। चवर्गान्ताद्दषहान्ताच्च

---

इद्वृद्धाविति। अत्र हि वृद्धिरदं वृद्धिमत्परं, केवलाया वृद्धे रुत्तरपदत्वाऽसम्भवात्। अग्नामरुताविति। 'देवताद्वन्द्वे चे'त्यानङ् लौकिकविग्रहवाक्ये। अलौकिके वाक्ये तु—आनङमोत्वं च बाधित्वा इत्।

माता च पिता च—मातरपितरौ।

---

इद्वृद्धौ। वृद्धिमान् उत्तरपद परे रहते अग्नि शब्द के इकार का इकार ही आदेश हो, देवता द्वन्द्व में।

विष्णौ न। वृद्धिमत् विष्णु उत्तरपद परे रहते अग्नि को इत् ( इकार ) आदेश नहीं हो।

दिवो द्यावा। दिव् शब्द को 'द्यावा' आदेश हो, उत्तरपद परे रहते, देवता द्वन्द्व में।

मातरपितरौ। 'मातरपितरौ' इस द्वन्द्व में मातृशब्द को अरङ् आदेश हो; उदीच्य (कश्मीरी) आचार्यों के मत में।

द्वन्द्वाच्चुदष। चवर्गान्त, दकारान्त, षकारान्त, और हकारान्त जो द्वन्द्व, उससे समासान्त टच् प्रत्यय हो, समाहार में।

---

१ क्वचिन्न। २ शेषपूरणमेतत्।

द्वन्द्वाट्टच् [[1]स्या–] त्समाहारे। वाक्त्वचम्। त्वक्स्रजम्। शमीदृषदम्। वाक्त्विषम्। छत्रोपानहम्। समाहारे किम्?। प्रावृट्शरदौ।

इति [2]द्वन्द्वसमासः।

---

## [3]अथैकशेषप्रकरणम्।

'[1]सरूपाणामेकशेष एकविभक्तौ'। 'रामौ। रामाः'[1]।

*विरूपाणामपि समानार्थानाम्। वक्रदण्डश्च कुटिलदण्डश्च–वक्रदण्डौ। कुटिलदण्डौ। वृद्धो यूना तल्लक्षणश्चेदेव विशेषः।१।२।६५। यूना सहोक्तौ गोत्रं शिष्यते, गोत्र-(-प्रत्यय-)-युवप्रत्ययमात्रकृतं चेत्तयोः कृत्स्नं वैरूप्यं स्यात्। गार्ग्यश्च गार्ग्यायणश्च–गार्ग्यौ। वृद्धः किम्?। गर्ग-गार्ग्यायणौ। यूना किम्?। गर्ग-गार्ग्यौ। तल्लक्षणः किम्?।

---

वाक् च त्वक् च–वाक्त्वचम्। शमी च दृषच्च–शमीदृषदम्। विवाहोपकरणमेतत्। (शमी = 'जांटी'। दृषत् = 'पत्थर')। वाक्च त्विट् च–वाक्त्विषम्। छत्रश्चोपानहौ च-छत्रोपानहम्।

* इति श्रीगुरुप्रसादशास्त्रिविरचितायामभिनवराजलक्ष्म्यां द्वन्द्वप्रकरणम् ॥*॥

वक्रेति। अत्र अनियमेनोभयोरेकशेष इत्याशयः। 'अपत्यं पौत्रप्रभृति वृद्ध'मिति पूर्वाचार्यैः परिभाषितं, पाणिनिनये च 'गोत्र'पदेन यत्प्रसिद्धं पौत्रप्रभृति, तदिह 'वृद्ध'पदेन गृह्यते, कृत्रिमेण यूना साहचर्यात्। तदाह वृत्तौ—गोत्रमिति। गर्गगार्ग्याविति। गार्ग्यो हि गोत्रप्रत्ययान्तो, न युवप्रत्ययान्तः।

---

विरूपाणामपि। समानार्थक विरूपों का भी एक शेष हो, विभक्ति परे रहते।

वृद्धो यूना। युव संज्ञक के साथ कहा गया जो गोत्रसञ्ज्ञक, उसका शेष रहे। यदि गोत्रप्रत्यय और युवप्रत्यय मात्र कृत ही उनका कृत्स्न (सभी प्रकारका) वैरूप्य हो तो।

---

१ क्वचिन्न। २ 'इति द्वन्द्वः' पा०। ३ 'अथैकशेषः' पा०।

भागवित्ति-भागवित्तिकौ । कुत्स्नं किम् ? । गार्ग्य-वात्स्यायनौ ।

**स्त्रीपुंवच्च ।१।२।६६।** यूना सहोक्तौ वृद्धा स्त्री शिष्यते, तदर्थश्च[1] पुंवत् । गार्गी च, गार्ग्यायणौ च-गर्गाः । **पुमान्स्त्रिया ।१।१।६७।** स्त्रिया सहोक्तौ पुमान् शिष्यते, तल्लक्षण एव विशेषश्चेत् । हंसी च, हंसश्च-हंसौ । [ [2]तल्लक्षणः किम् ? । कुक्कुटमयूर्यौ ] ।

**भ्रातृ-पुत्रौ स्वसृ-दुहितृभ्याम् ।१।२।६८।** [ [3]स्वसृ-दुहितृभ्यां सहोक्तौ क्रमात्-भ्रातृ-पुत्रौ शिष्येते । अर्थात्-स्वस्रा सहोक्तौ भ्राता, दुहित्रा सहोक्तौ पुत्रः शिष्यते ] । भ्राता च स्वसा च-भ्रातरौ । पुत्रश्च दुहिता च-पुत्रौ । **नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम् ।१।२।६९।** अक्लीबेन सहोक्तौ क्लीबं शिष्यते, तच्च वा एकवत्स्यात्, तल्लक्षण एव विशेषश्चेत् । शुक्लः पटः । शुक्ला शाटी । शुक्लं वस्त्रम् ।

---

भागवित्तीति । अत्र प्रकृत्यापि वैरूप्यं, न तु केवलप्रत्ययमात्रकृतमेव वैरूप्यम् । शुक्लमिति । अत्र-शुक्लः, शुक्ला, शुक्लश्चेति—शुक्लमिति विग्रहः । अत्र पटाद्युपादानन्तु शुक्लस्य गुणिलिङ्गत्वबोधनाय ।

---

**स्त्री पुंवच्च** । युवप्रत्ययान्तके साथ वृद्धा स्त्री (गोत्रप्रत्ययान्त स्त्रीवाचक) की उक्ति ( सहविवक्षा ) में वृद्धा ( गोत्र प्रत्ययान्त स्त्रीवाचक शब्द ) का शेष हो। और स्त्रीवाचक को पुंवद्भाव हो । अर्थात् उसका पुंवत् अर्थ हो ।

**पुमान् स्त्रिया** । स्त्रीवाचक के साथ पुंवाचक की उक्ति ( सहविवक्षा ) में पुंवाचक का शेष हो । यदि पुंस्त्व और स्त्रीत्वमात्र कृत ही उनका वरूप्य हो तो।

**भ्रातृपुत्रौ** । स्वसा के साथ भ्राता की उक्ति में भ्राता का, और दुहिता के साथ पुत्र की उक्ति ( सहविवक्षा ) में पुत्रका शेष रहे ।

**नपुंसकमन** । अनपुंसक के साथ नपुंसक की उक्ति ( सहविवक्षा ) में नपुंसकका शेष हो । और वह नपुंसक एकवत् हो, विकल्प करके । यदि उनका नपुंसकत्व और अनपुंसकत्व मात्र कृत ही वैरूप्य हो तो ।

---

१ 'तदर्थश्च स्त्री—पुंवत्' पा० । २ क्वाचित्कः पाठः । ३ शेषपूरणम् ।

तदिदं शुक्लम्। तानीमानि शुक्लानि।

**पिता मात्रा ।१।२।७०।** मात्रा सहोक्तौ पिता वा शिष्यते। माता च पिता च—पितरौ। मातापितरौ। **श्वशुरः श्वश्र्वा ।१।२।७१।** [ [1]श्वश्र्वा ] सहोक्तौ [ [1]श्वशुरो ] वा शिष्यते। श्वशुरौ। श्वश्रूश्वशुरौ।

**त्यदादीनि सर्वैर्नित्यम् ।१।२।७२।** सर्वैः सहोक्तौ त्यदादीनि [ नित्यं ] शिष्यन्ते। स च, देवदत्तश्च–तौ।

***त्यदादीनां मिथः सहोक्तौ, यत्परं तच्छिष्यते।** स च, यश्च–यो।

**'पूर्वशेषोऽपि दृश्यते'** इति भाष्यम्। स च, यश्च—तौ।

---

तदिदमिति। स च, सा च, तच्च–तत्। अयञ्च, इयञ्च, इदञ्च-इदम्।

मातापितराविति। 'आनङृतो' द्वन्द्वे इत्यानङ्। श्वशुर इति। श्वश्र्वा सहोक्तौ श्वशुरो वा शिष्यते। सर्वैः = सकलैः शब्दैः। त्यदाद्यत्यदादिशब्दमात्रेणेति यावत्। परमिति। त्यदादिगणे यत्परं पठितं, तच्छिष्यते इत्यर्थः। शब्दपरविप्रतिषेधादिति भावः।

याविति। गणपाठे यच्छब्दस्य तच्छब्दापेक्षया परत्वाद्यच्छब्दस्येह शेषः। अत्र 'द्विपर्यान्तानामेवेष्टि'रिति न प्रवर्त्तते, 'अहञ्च भवांश्च आवा'मिति भाष्योक्तेः।

---

पिता मात्रा। माता के साथ पिता की सह विवक्षा में पिता ( पितृ शब्द ) का शेष रहे, विकल्प करके।

श्वशुरः। श्वश्रू के साथ श्वशुर की सह विवक्षा में श्वशुर का शेष रहे, विकल्प करके।

त्यदादीनि। त्यदादि के साथ इतर सभी शब्दों की सह विवक्षा में, त्यदादि का नित्य शेष रहे।

त्यदादीनां मिथः। पूर्वशेषोऽपि। त्यदादि के साथ त्यदादि की सह विवक्षा में, त्यदादि गण में जो शब्द–पर है, उसका शेष हो। और कहीं २ त्यदादिगण में जो पूर्व पठित शब्द हैं, उनका भी शेष होता देखा गया है।

---

1 शेषपूरणम्।

* त्यदादितः शेषे पुंनपुंसकतो लिङ्गवचनानि । सा च, देवदत्तश्च–तौ । तच्च, देवदत्ता च, यज्ञदत्ता च—तानि ।

* [1]पुं-नपुंसकयोस्तु परत्वान्नपुंसकं शिष्यते । तच्च, देवदत्तश्च–ते ।

*अद्वन्द्वतत्पुरुषविशेषणानामिति वक्तव्यम् । कुक्कुटमयूर्याविमे । मयूरीकुक्कुटाविमौ । तच्च, सा च, अर्द्धपिप्पल्यौ–ते ।

ग्राम्यपशुसङ्घेष्वतरुणेषु स्त्री ।१।२।७३। एषु सह विवक्षायां स्त्री शिष्यते । गाव इमा । ग्राम्येति किम् ? । रुरव इमे । पशुग्रहणं किम् ? । ब्राह्मणाः । सङ्घेषु किम् ? । एतौ गावौ । अतरुणेषु किम् ? । वत्सा इमे ।

---

त्यदादित इति । आद्यादित्वात्षष्ठ्यर्थेऽत्र तसिः । त्यदादीनां शेषेऽपि-सह विवक्षितेषु यः पुंलिङ्गो,यश्च नपुंसकलिङ्गस्तद्वदेव स्त्रीलिङ्गानामपि त्यदादीनां लिङ्ग, वचनं च भवतीत्यर्थः । ताविति । अत्र तच्छब्दस्य शेषे, तस्य स्त्रीलिङ्गत्वेऽपि, देवदत्तगतपुंलिङ्गानुरोधेन पुंस्येव तच्छब्दः प्रयुज्यते ।

गाव इमा इति । गावश्च ( धेनवश्च ), गावश्च (वृषभाश्च)—गाव इमाः ।

रुरुः=मृगविशेषः ।

---

त्यदादितः शेषे । स्त्रीलिङ्ग त्यदादि के शेष होने पर भी, सहविवक्षित जो पुंलिङ्ग या नपुंसकलिङ्ग शब्द, उनकी तरह ही उस शिष्ट स्त्रीलिङ्ग त्यदादि का भी लिङ्ग और वचन होता है ।

पुंनपुंसकयोस्तु । त्यदादिके शेषमें—यदि सहविवक्षित शब्द पुंलिङ्ग और नपुंसक लिङ्ग—दोनों प्रकार के हों, तो परत्वात्—नपुंसक के अनुसार ही लिङ्ग और वचन होते हैं ।

अद्वन्द्वतत्पुरुष । द्वन्द्व और तत्पुरुषके विशेषण जो त्यदादि, उनमें 'पुंनपुंसकतो लिङ्गवचनानि' यह नहीं लगता है । अर्थात्—वे तो विशेष्य लिङ्ग ही होते हैं ।

---

१ लिखिते प्रायो न दृश्यते ।

* अनेकशफेष्विति वाच्यम् । नेह–अश्वा इमे ।

* इत्येकशेषप्रकरणम् ॥ *

---

## अथ समासान्ताः ।

ऋक्पूरब्धूःपथामानक्षे ।५।४।७४। ऋगाद्यन्तस्य समासस्य अप्रत्ययोऽन्तावयवः [ स्यात् ], अक्षे या धूस्तदन्तस्य न । अर्द्धर्चः ।

* अनृचबह्वृचावध्येतर्यैव । नेह–अनृक् साम । बह्वृक् सूक्तम् । विष्णुपुरम् । विमलापं सरः ।

---

अश्वा इति । अश्वस्त्वेकशफो, न द्विशफ इति स्त्रियाः शेषो न भवति ।

* इत्येकशेषप्रकरणम् *

अत्र–'अ–अनक्षे' इति च्छेदः । 'अ' इति लुप्तप्रथमान्तम् । 'समासान्ताः' इत्यधिक्रियते । तदाह–समासस्येति । अक्षे येति । 'अनक्षे' इत्येतत्सामान्यतः श्रुतमपि धुरा सहैव सम्बध्यते, सामर्थ्यात्, न ऋगादिभिस्तदाह—अक्षे येति । ऋचामर्द्धम्—अर्द्धर्चः । 'अर्द्धं नपुंसकम्' इति समासः । 'अर्द्धर्चाः पुंसि च' इति पुंस्त्वम् । नेहेति । 'अप्रत्यय' इति शेषः । अविद्यमाना ऋचः अस्मिन्निति विग्रहः । विष्णोः पूः–इति विष्णुपुरम् ।

---

ग्राम्यपशु । अनेकशफेष्विति । अतरुण (जवान) जो ग्राम्य पशु, उनका जो सङ्घ, उनकी वह विवक्षामें स्त्री वाचक का शेष हो ।

परन्तु वह स्त्री वाचक यदि अनेकशफ ( चीरे हुए खुर वाला ) हो तभी उसका शेष होता है । अन्यथा नहीं ।

---

ऋक्पूर । ऋगाद्यन्त जो समास, उसका अन्तावयव 'अ' प्रत्यय हो । परन्तु अक्ष सम्बन्धी धुरीवाचक जो धूःशब्द, तदन्त समासमें 'अ' प्रत्यय नहीं हो ।

अनृचबह्वृचा । 'अनृच' और 'बह्वृच' इस समासमें—अध्येता अर्थ गम्यमान होने से ही समासान्त 'अ' प्रत्यय होता है ।

**द्व्यन्तरुपसर्गेभ्योऽप ईत्** ।६।३।९७। [ [1]एभ्योऽपस्य ईत्स्यात्[2] ]। द्विर्गता आपो यस्मिन्निति–द्वीपम् । अन्तरीपम् । प्रतीपम् । समीपम् ।

* **अवर्णान्ताद्वा** । प्रेपम् । प्रापम् ।

**ऊदनोर्देशे** ।६।३।९८। [ [1]अनोः परस्य अपस्य ऊत्स्याद्देशे ]। अनूपो देशः । राजधुरा । अक्षे तु–अक्षधूः । दृढधूः–अक्षः । सखिपथः । रम्यपथो देशः ।

**अच्प्रत्यन्ववपूर्वात्सामलोम्नः** ।५।४।७५। [ [1]एतत्पूर्वात्साम-

---

द्व्यन्तेति । एभ्योऽपस्य ईत्स्यात् । 'अप' इति च कृतसमासान्तस्यानुकरणम् । षष्ठ्यर्थे च प्रथमा । द्विर्गता आपो यस्मिन्निति–द्वीपम् । अन्तर्गता आपो यस्मिन्निति–अन्तरीपम् । प्रतिकूला आपो यस्मिन्–प्रतीपम् । सङ्गता आपो यस्मिन्–समीपम् ।

प्रगताः, प्रकृष्टा वा आपो यस्मिन्–प्रेपम् । अनुगता आपोऽस्मिन्–अनूपः । राज्ञां धूः—राजधुरा । धूरत्र राज्ये लाक्षणिकी । दृढा धूर्यस्य दृढधूः–अक्षः । सखीनां पन्थाः—सखिपथः । रम्यः पन्था यस्मिन्निति–रम्यपथः ।

---

द्व्यन्तरुप । 'द्वि' आदि से परे जो कृतसमासान्त 'अप' शब्द, उसके अकार को ईत्त्व हो ।

अवर्णान्ताद्वा । अवर्णान्त उपसर्ग से परे जो कृतसमासान्त 'अप' शब्द, उसके आदि के अकार को ईत्त्व हो, विकल्प करके ।

ऊदनोर्देशे । अनु से परे जो कृतसमास 'अप' शब्द, उसके आदिके अकार को ऊत् आदेश हो, देशविशेष गम्यमान हो तो ।

अच्प्रत्यन्वव । प्रत्यादि पूर्वक जो सामन् और लोमन् शब्द, तदन्त समास से समासान्त अच् प्रत्यय हो ।

---

१ शेषपूरणम् । २ क्वचित्तु–'एभ्योऽपोऽकार ईत्' इति पा० ।

लोमान्तात्समासादच् स्यात् ]। प्रतिसामम्। अनुसामम्। अवसामम्। प्रतिलोमम्। अनुलोमम्। अवलोमम्।

* कृष्णोदक्पाण्डुसङ्ख्यापूर्वाया भूमेरजिष्यते। कृष्णभूमः। उदग्भूमः। पाण्डुभूमः। द्विभूमः, त्रिभूमः-प्रासादः।

*सङ्ख्याया नदीगोदावरीभ्याञ्च। पञ्चनदम्। [[1]पञ्चगोदावरम्]। सप्तगोदावरम्। 'अ'जिति योगविभागादन्यत्राऽपि—पद्मनाभः।

अक्ष्णोऽदर्शनात् ।५।४।७६। अचक्षुःपर्यायादक्ष्णोऽच् स्यात् [ समासान्तः ]। गवामक्षीव—गवाक्षः।

---

प्रतिसाममिति। साम्नः समीपमिति, साम प्रतिगतमिति वा विग्रहः। अनुसाममिति। अनुगतं, प्रतिगतं सामेति विग्रहः। कृष्णा भूमिर्यस्यासौ कृष्णभूमः—केदारादिः। भूमिः = भूतलप्रदेशः, कक्ष्या (तल्ला) वा। एवमग्रेऽपि विग्रहो बोध्यः।

पञ्चानां नदीनां समाहारः—पञ्चनदम्।

पद्मं नाभौ यस्यासौ पद्मनाभः। गड्वादित्वान्नाभेः परनिपातः। दृश्यतेऽनेन तत्—दर्शनं = चक्षुः। तद्वाचिनोऽक्षिशब्दस्य पर्युदासादमुख्यस्येह ग्रहणमित्याशयेनाह—अचक्षुरिति। गवाक्ष इति। गावः—किरणाः। अक्षि—छिद्रम्।

---

कृष्णोदक्। कृष्णादिपूर्वक जो भूमि शब्दान्त समास, उससे समासान्त अच प्रत्यय हो।

सङ्ख्याया नदी। सङ्ख्यापूर्वक जो नद्यन्त और गोदावर्यन्त समास, उससे समासान्त अच् प्रत्यय हो।

अक्ष्णोऽदर्शनात्। अचक्षुःपर्याय जो अक्षिशब्द, तदन्त समास से समासान्त अच् प्रत्यय हो।

---

१ क्वाचित्कः पाठः।

अचतुर-विचतुर-सुचतुर-स्त्रीपुंस-धेन्वनडुह-र्क्साम-वाङ्मनसा-ऽक्षिभ्रुव-दारगवो-र्वष्ठीव-पदष्ठीव-नक्तन्दिव-रात्रिन्दिवा-ऽहर्दिव-सरजस-निःश्रेयस-पुरुषायुष-द्व्यायुष-त्र्यायुष-र्ग्यजुष-जातोक्ष-महोक्ष-वृद्धोक्षो-पशुन-गोष्ठश्वाः ।५।४।७७। [1]एते पञ्चविंशतिरजन्ता निपात्यन्ते । [ [2]आद्यास्त्रयो बहुव्रीहयः । अविद्यमानानि चत्वार्यस्य—अचतुरः । विगतानि चत्वार्यस्य—विचतुरः । सुचतुरः] । *त्र्युपाभ्यां चतुरोऽजिष्यते । त्रिचतुराः । चतुर्णां समीपे ये सन्ति ते—उपचतुराः । [ [2]तत एकादश द्वन्द्वाः । स्त्रीपुंसौ । धेन्वनडुहौ । ऋक्सामे । वाङ्मनसे । अक्षिणी च भ्रुवौ च—अक्षिभ्रुवम् । दाराश्च गावश्च—दारगवम् । ऊरू च अष्ठीवन्तौ च—ऊर्वष्ठीवम् । निपातनाट्टिलोपः । पदष्ठीवम् । निपातनात्पादशब्दस्य पद्भावः । नक्तं च दिवा च—नक्तन्दिवम् । रात्रौ च दिवा च—रात्रिन्दिवम् । रात्रेर्मान्तत्वं निपात्यते । अहनि च दिवा च—अहर्दिवम् । वीप्सायां द्वन्द्वो निपात्यते । अहन्यहनीत्यर्थः ।

'सरजस'मिति साकल्येऽव्ययीभावः । बहुव्रीहौ तु—सरजः पङ्कजम् । निश्चितं श्रेयो-निःश्रेयसम् । तत्पुरुष एव । नेह—निःश्रेयान्पुरुषः ।

---

अजन्ताः = अच्प्रत्ययान्ताः । शोभनानि चत्वार्यस्य—सुचतुरः । त्रयश्चत्वारो वा—त्रिचतुराः । स्त्री च, पुमांश्च—स्त्रीपुंसौ । धेनुश्च, अनड्वांश्च—धेन्वनडुहौ । अष्ठीवान्=जानुपर्व । पादौ च अष्ठीवन्तौ च पदष्ठीवम् ।

रजोऽपि अपरित्यज्य-सरजसम् ।

रजोभिः सहेति—सरजः । निश्चितं श्रेयो यस्याऽसौ—निःश्रेयान् पुरुषः ।

---

अचतुर विचतुर । 'अचतुर' आदि २५ शब्द अजन्त निपातित हों ।

त्र्युपाभ्यां । त्रि और उप से परे जो चतुर् शब्द, तदन्त समास से समासान्त अच् प्रत्यय हो ।

---

१ 'अजन्ताः पञ्चविंशतिर्निपात्यन्ते' । २ अयं पाठः क्वचिन्न ।

पुरुषस्यायुः—पुरुषायुषम् ।

ततो द्विगू । द्व्यायुषम् । त्र्यायुषम् ।

ततो द्वन्द्वः । ऋग्यजुषम् ।

ततस्त्रयः कर्मधारयाः । जातोक्षः । महोक्षः । वृद्धोक्षः ।

शुनः समीपम्—उपशुनम् । टिलोपाऽभावः, संप्रसारणञ्च निपात्यते । गोष्ठे श्वा—गोष्ठश्वः[1] ] ।

**ब्रह्म-हस्तिभ्यां वर्चसः ।५।४।७८।** [ [2]आभ्यां वर्चसः ] अच् [3]स्यात् । ब्रह्मवर्चसम् । हस्तिवर्चसम् ।

***पल्यराजभ्याञ्च ।** पल्यवर्चसम् । राजवर्चसम् ।

**अवसमन्धेभ्यस्तमसः ।५।४।७९।** [ एभ्यस्तमसोऽच्स्यात्समासान्तः ] । अवतमसम् । सन्तमसम् । अन्धतमसम् ।

**अन्ववतप्ताद्रहसः ।५।४।८१।** [ [2]अन्ववतप्ताद्रहसोऽच्स्यात्समा-

---

द्वयोरायुषोः समाहारो द्व्यायुषम् । ब्रह्मणो वर्चः—ब्रह्मवर्चसम् ।

अवतमसमित्यादि । पलं = मांसमर्हति पल्यो मांसभोजी, तस्य वर्चः—पल्यवर्चसम् । अवतमसमिति । अवहीनं तमः, सन्ततं तमः, अन्धं-गाढं-तम इति च यथा-यथं विग्रहः ।

---

**ब्रह्महस्तिभ्यां ।** ब्रह्मन् और हस्तिशब्द से परे जो वर्चस् शब्द, तदन्त समास से समासान्त अच् प्रत्यय हो ।

**पल्यराजभ्यां ।** पल्य और राज शब्द से परे जो वर्चस् शब्द, तदन्त समास से, समासान्त अच् प्रत्यय हो ।

**अवसमन्धेभ्यः ।** अवादि से परे जो तमस् शब्द, तदन्त जो समास, उससे समासान्त अच् प्रत्यय हो ।

**अन्ववतप्तात् ।** अन्वादि से परे जो रहस् शब्द, तदन्त समास से समासान्त अच् प्रत्यय हो ।

---

१ अयं पाठो लिखिते प्रायो न दृश्यते । २ शेषपूरणम् । ३ क्वचिन्न ।

सान्तः ]। अनुरहसम्। अवरहसम्। तप्तरहसम्।

**प्रतेरुरसः सप्तमीस्थात्** ।५।४।८२। [ [1]सप्तम्यर्थे वर्त्तमानात्प्रतेः परस्मादुरसोऽच्स्यात्, समासान्तः ]। उरसीति—प्रत्युरसम्[2]।

**अनुगवमायामे** ।५।४।८३। एतन्निपात्यते दीर्घत्वे। अनुगवं यानम्। [ [3]दीर्घमित्यर्थः ]। 'यस्य चायाम' इति समासः।

**उपसर्गादध्वनः** ।५।४।८५। [ [1]उपसर्गात्परो योऽध्वन्-शब्दस्तदन्तात्समासादच्स्यात्समासान्तः ]। प्रगतोऽध्वानं—प्राध्वो रथः।

**न पूजनात्** ।५।४।६९। पूजनार्थात्परेभ्यः समासान्ता न स्युः। सुराजा। * **स्वतिभ्यामेव**। नेह—परमराजः।

---

अनुरहसमित्यादि। अत्र यथायथम्—अनुगतं रहः, अवहीनं रहः, तप्तं रह इति च विग्रहो बोध्यः। तप्तं=परैरगम्यम्।

प्रतेरुरस इति। सप्तम्यर्थे वर्त्तमानात्प्रतेः परस्मादुरसोऽच्स्यादित्यर्थः।

प्रत्युरसमिति। विभक्त्यर्थेऽव्ययीभावः।

शोभनो राजा—सुराजा।

---

प्रतेरुरसः। सप्तम्यर्थ में वर्त्तमान प्रति शब्द से परे जो उरस् शब्द, तदन्त समास से समासान्त अच् प्रत्यय हो।

अनुगवमायामे। आयाम ( लम्बाई ) अर्थ गम्यमान हो तो 'अनुगव' यह निपातन हो।

उपसर्गादध्वनः। उपसर्ग से परे जो अध्वन् शब्द, तदन्त समास से समासान्त अच् प्रत्यय हो।

न पूजनात्। स्वतिभ्यामेव। पूजनार्थक सु और अति से परे जो(राजादि) शब्द, तदन्त समास से समासान्त प्रत्यय नहीं हो।

---

१ शेषपूरणम्। २ 'उरसि प्रति वर्त्तते प्रत्युरसम्' पा०। ३ क्वाचित्कः पाठः।

किमः क्षेपे ।५।४।७०। [[1]क्षेपे यः किं-शब्दस्ततः परं यत्,तदन्तात्समासान्ता न स्युः ]। कुत्सितो राजा–किंराजा । किंसखा । किंगौः ।

नञस्तत्पुरुषात् ।५।४।७१। [2]नञ्पूर्वात्तत्पुरुषात्समासान्तो न [स्यात्]। अराजा । असखा । तत्पुरुषात्किम् ?। अधुरं शकटम् ।

पथो विभाषा ।५।४।७२। [[1]नञः परो यः पथिन्-शब्दस्तदन्तात्तत्पुरुषात्समासान्तो न स्याद्वा]। अपथम्। अपन्थाः। 'तत्पुरुषा'दित्येव। अपथो देशः ।

इति समासान्ताः ॥*॥

---

किम इति । किमः क्षेपे समासान्ता न स्युः । नञ इति । नञः सम्बन्धी यस्तत्पुरुषो, नञवयवकस्तस्मात्समासान्तो नेत्यर्थः । न पन्थाः–अपथम् । अपथो देश इति । न विद्यते पन्था यस्मिन्निति विग्रहः।

* इति मध्य-सिद्धान्त-कौमुदीबालमनोरमायां समासान्ताः । *

---

किमः क्षेपे । निन्दा अर्थ में जो किम् शब्द, उससे परे जो ( राजादि ) शब्द, तदन्त समाससे समासान्त प्रत्यय नहीं हो ।

नञस्तत्पुरु । नञ् पूर्वपदक जो तत्पुरुष समास, उससे समासान्त प्रत्यय नहीं हों ।

पथो विभाषा । नञ्पूर्वक जो 'पथिन्' शब्द, तदन्त जो तत्पुरुष, उससे समासान्त प्रत्यय नहीं हों, विकल्प करके ।

---

१ शेषपूरणम् । २ क्वचिल्लिखिते दृश्यतेऽयं पाठः ।

## अथ अलुक्समासः ।

अलुगुत्तरपदे ।६।३।१। इत्यधिकृत्य । ओजः-सहो-ऽम्भ-स्तमस-स्तृतीयायाः ।६।३।३। [ [1]एभ्यस्तृतीयाया अलुक्स्यादुत्तरपदे ] । ओजसाकृतमित्यादि । * अञ्जस उपसङ्ख्यानम् । अञ्जसाकृतम् । [ [2] आर्जवेन कृतमित्यर्थः ] ।

आत्मनश्च ।६।३।६। [ [1]आत्मनस्तृतीयाया ] अलुक् [ [2]स्यात् ] । * पूरणे इति वक्तव्यम् । पूरणप्रत्ययान्ते उत्तरपदे इत्यर्थः । आत्मनापञ्चमः । [ [2]'तस्य पूरणे डट्' । 'नान्तादसङ्ख्यादेर्मट्' । 'जनार्दनस्त्वात्मचतुर्थ एवे'ति बहुव्रीहिर्बोध्यः] ।

वैयाकरणाख्यायां चतुर्थ्याः ।६।३।७। 'आत्मन' इत्येव ।

---

ओज इति । एभ्यस्तृतीयाया अलुक्स्यादुत्तरपदे इत्यर्थः ।

ओजसाकृतमिति । 'कर्तृकरणे कृता बहुलम्' इति समासः ।

पूरण इति । आत्मनस्तृतीयाया अलुक्स्यात्पूरणप्रत्ययान्ते उत्तरपदे इत्यर्थः ।

आत्मनापञ्चम इति । 'तृतीये'ति योगविभागात्समासः ।

---

अलुगुत्तर । यह अधिकार सूत्र है ।

ओजःसहो । ओजस् आदि से परे तृतीया विभक्तिका 'सुपो धातुप्रातिपदिकयोः' इस सूत्रसे लुक् नहीं हो, उत्तरपद (समासचरमावय पद) परे रहते ।

अञ्जस उप । अञ्जस् शब्द से परे तृतीयाका लुक् नहीं हो, उत्तर पद परे रहते ।

आत्मनश्च । पूरणे इति । आत्मन् शब्दसे परे तृतीयाका लुक् नहीं हो, पूरण प्रत्ययान्त उत्तरपद परे रहते ।

वैयाकरणाख्यायां । आत्मन् शब्दसे परें चतुर्थी का अलुक् हो ( अर्थात् लुक् नहीं हो, ), उत्तरपद परे रहते । वैयाकरणों की आख्या ( सञ्ज्ञा ) वाच्य हो तो ।

---

१ शेषपूरणम् । २ क्वचिल्लिखिते दृश्यते ।

[ [1]आत्मनश्चतुर्थ्या अलुक् स्याद्वैयाकरणाख्यायाम् ] । आत्मनेपदम् । आत्मनेभाषाः । परस्य च ।६।३।८। [ [1]परशब्दाच्चतुर्थ्या अलुक् स्यात्पूर्वविषये ]। परस्मैपदम् । परस्मैभाषाः ।

हलदन्तात्सप्तम्याः सञ्ज्ञायाम् ।६।३।६। [2]हलन्तादन्ताच्च सप्तम्या अलुक्स्यात्सञ्ज्ञायाम् । त्वचिसारः[2] ।

गवियुधिभ्यां स्थिरः ।८।३।६५। [ [1]आभ्यां स्थिरस्य ] सस्य षः [[1]स्यात्] । गविष्ठिरः । युधिष्ठिरः । अरण्येतिलकाः । अत्र 'संज्ञाया'-मिति सप्तमीसमासः । * हृद्द्युभ्यां च । हृदिस्पृक् । दिविस्पृक् ।

मध्याद् गुरौ ।६।३।११। [[1]मध्यात्परस्याः सप्तम्या अलुक् स्याद् गुरौ

---

आत्मनेपदमिति । आत्मार्थमित्यर्थः । संज्ञैषा । तादर्थ्ये चतुर्थी । चतुर्थीति योगविभागात्समासः ।

हृदयं स्पृशतीति हृदिस्पृक् । अलुग्विधानसामर्थ्यात् कर्मणि सप्तमी, कर्मणोऽधिकरणत्वविवक्षया वा ।

---

परस्य च । पर शब्द से परे जो चतुर्थी, उसका अलुक् हो, उत्तरपद परे रहते । वैयाकरणों की आख्या ( संज्ञा ) वाच्य हो तो ।

हलदन्तात् । हलन्त और अदन्तसे परे जो सप्तमी, उसका लुक् नहीं हो, सञ्ज्ञा में ।

गवियुधिभ्यां । 'गवि' और 'युधि' से परे स्थिरके सकारको षत्व हो ।

हृद्द्युभ्यां च । हृद् और दिव् से परे जो सप्तमी, उसका लुक् नहीं हो ।

मध्याद् गुरौ । मध्य शब्दसे परे सप्तमी का अलुक् हो, गुरु शब्द उत्तर पद परे रहते ।

---

१ शेषपूरणम् ।

२ क्वचित्तु "हलदन्तादिति ङेरलुक् । त्वचिसारः" इति पाठः ।

परतः ] मध्येगुरुः । * अन्ताच्च। अन्तेगुरुः ।

**अमूर्द्धमस्तकात्स्वाङ्गादकामे ।६।३।१२।** [ [1]अमूर्द्ध-मस्तका-स्स्वाङ्गवाचिनः सप्तम्या अलुक् स्यादुत्तरपदे । न तु कामशब्दे उत्तरपदे]। उरसिलोमा । अमूर्द्धमस्तकात्किम् ? । मूर्द्धशिखः । [[2]मस्तकशिखः] । अकामे किम् ? । मुखे कामोऽस्य—मुखकामः ।

**तत्पुरुषे कृति बहुलम् ।६।३।१४।** [ [1]कृदन्ते उत्तरपदे सप्तम्या बहुलमलुक् स्यात्तत्पुरुषे, सञ्ज्ञायाम्]। स्तम्बेरमः । कर्णेजपः । **शयवास-वासिष्वकालात् ।६।३।१८।** [ [1]शयादिषूत्तरपदेषु हलदन्तात्सप्तम्या ] वाऽलुक् [ [1]स्यान्न तु कालात् ] खेशयः । खशयः । ग्रामेवासः । ग्राम-वासः । ग्रामेवासी । ग्रामवासी । हलदन्तादित्येव । नेह—भूमिशयः ।

**षष्ठ्या आक्रोशे ।६।३।२१।** [[1]षष्ठ्या अलुक् स्यादुत्तरपदे, निन्दा-याम् ] । चोरस्यकुलम् । आक्रोशे किम् ? । ब्राह्मणकुलम् ।

---

मध्येगुरुः—जगणः । अन्तेगुरुः—तगणः । कण्ठेकालः—शिवः । स्तम्बेरमः—हस्ती । 'स्तम्बकर्णयो रमिजपोः' इत्यच् । कर्णेजपः—सूचकः ।

---

अन्ताच्च । अन्त शब्द से परे जो सप्तमी उसका अलुक् हो, गुरु उत्तरपद परे रहते ।

अमूर्द्धमस्तकात् । मूर्द्ध और मस्तक से भिन्न जो स्वाङ्गवाची, उससे परे जो सप्तमी, उसका अलुक् हो, काम शब्द भिन्न उत्तरपद परे रहते ।

तत्पुरुषे कृति । कृदन्त उत्तरपद परे रहते तत्पुरुष समास में सप्तमी का बहुलता करके अलुक् हो, सञ्ज्ञा में ।

शयवास । शय आदि उत्तरपद परे रहते, कालभिन्न जो हलन्त और अदन्त, उससे परे सप्तमी का अलुक् हो, विकल्प करके ।

षष्ठ्या आक्रोशे । षष्ठी का अलुक् हो, उत्तरपद परे रहते, निन्दा में ।

---

१ शेषपूरणम् । २ क्वचिन्न ।

*वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु । वाचोयुक्तिः । दिशोदण्डः । पश्यतोहरः ।

* आमुष्यायणा-ऽऽमुष्यपुत्रिका-ऽऽमुष्यकुलिकेति च ।

*देवानांप्रिय इति च मूर्खे । अन्यत्र—देवप्रियः । *शेपपुच्छलाङ्गूलेषु शुनः । शुनःशेपः । शुनःपुच्छः । शुनोलाङ्गूलः ।

*दिवश्च दासे । दिवोदासः ।

ऋतो विद्यायोनिसम्बन्धेभ्यः ।६।३।२३। [ [1]विद्यासम्बन्ध-

---

पश्यतः—पश्यन्तमनादृत्य—हरतीति पश्यतोहरः—स्वर्णकारादिः । (सुनार)। 'षष्ठी चानादरे' इति षष्ठी । अमुष्य पुत्रः—आमुष्यायणः । नडादित्वात्फक् । अमुष्य पुत्रस्य भावः—आमुष्यपुत्रिका । अमुष्य कुलस्य भावः—आमुष्यकुलिका । 'द्वन्द्वमनोज्ञादिभ्यश्चे'ति मनोज्ञादित्वाद् वुञ् । शुन इव शेपमस्य—शुनः शेपः । शेपं—लिङ्गम् । त्रयोऽप्यमी ऋषिविशेषाणां संज्ञाः । दिवोदास इति । काशिराजविशेषस्य नाम । ऋत इति । विद्या सम्बन्ध-योनिसम्बन्धवाचिन ऋदन्तात्षष्ठ्या अलुक् ।

---

वाग्दिक्पश्य । वाक् आदि से परे षष्ठी का अलुक् हो, क्रमशः युक्ति आदि उत्तरपद परे रहते ।

आमुष्यायणा । षष्ठीके अलुक् से घटित इन तीन शब्दों का निपातन हो ।

देवानांप्रियः। मूर्ख अर्थमें 'देवानाम्प्रिय' यह (षष्ठ्यलुक् का) निपातन हो।

शेपपुच्छ । श्वन् शब्दोत्तर षष्ठी का अलुक् हो, शेप आदि उत्तरपद परे रहते ।

दिवश्च दासे । दिव् शब्द से परे षष्ठी का अलुक् हो, दास उत्तरपद परे रहते ।

ऋतो विद्या । विद्यासम्बन्ध वाची और योनिसम्बन्धवाची ऋदन्त से परे षष्ठी का अलुक् हो, उत्तरपद परे रहते ।

---

१ शेषपूरणम् ।

योनिसम्बन्धवाचिन ऋदन्तात्षष्ठ्या अलुक् स्यादुत्तरपदे[1] ]। होतुरन्तेवासी। [ [2]होतुःपुत्रः ]। पितुरन्तेवासी। [ पितुःपुत्रः[2] ]।

विभाषा स्वसृपत्योः ।६।३।२४। ऋदन्तात्षष्ठ्या [ [1]वाऽलुक् स्यात्स्वसृपत्योः परयोः ]। ननान्दुःपतिः। ननान्दृपतिः।

मातुःपितुर्भ्यामन्यतरस्याम् ।८।३।८५। [ [1]आभ्यां ] स्वसुः सस्य षो [[1]वा स्या] त्समासे। मातुःष्वसा। मातुःस्वसा। पितुःष्वसा। पितुःस्वसा।

लुक्पक्षे तु—मातृपितृभ्यां स्वसा ।८।३।८४। [[1]आभ्यां परस्य] स्वसुः सस्य षः [ [2]स्या ] त्समासे। मातृष्वसा। पितृष्वसा।

असमासे तु—मातुः स्वसा। पितुः स्वसा।

॥ * इत्यलुक्समासः * ॥

---

असमासे त्विति। समासाऽभावे 'मातुःपितुर्भ्यां'मिति षत्वं नेत्याशयः।

इत्यलुक्समासः।

---

विभाषा स्वसृ। ऋदन्त से परे षष्ठी का विकल्प से अलुक् हो, स्वसृ और पति शब्द उत्तरपद परे रहते।

मातुःपितुर्भ्यां। 'मातुर्' और 'पितुर्' से परे स्वसृ के सकार को षत्व हो, विकल्प करके, समास में।

मातृपितृभ्यां। 'मातृ' और 'पितृ' से परे जो स्वसृ का सकार, उसको षकार हो, समास में।

---

१ शेषपूरणम्। २ क्वचिन्न।

## अथ समासाश्रयप्रकरणम् ।

**घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः ।६।४।४३।** भाषितपुंस्काद्यो ङी, तदन्तस्याऽनेकाचो ह्रस्वः स्यात्, घरूपकल्पप् प्रत्ययेषु परेषु, चेलडादिषु चोत्तरपदेषु । ब्राह्मणितरा । ब्राह्मणितमा । [ [1]ब्राह्मणिरूपा । ब्राह्मणिकल्पा । ब्राह्मणिचेली । ब्राह्मणिब्रुवा । ब्राह्मणिगोत्रा ] इत्यादि ।

[ब्रुवः[1] पचाद्यचि वच्यादेशगुणयोरभावो निपात्यते । ङ्यः किम् ? । दत्तातरा । भाषितपुंस्कात्किम् ? । आमलकीतरा । कुवलीतरा ] ।

**नद्याः शेषस्याऽन्यतरस्याम् ।६।३।४४।** अङ्यन्तनद्याः, ङ्यन्त-[2]स्यैकाचश्च घादिषु ह्रस्वो वा [स्यात्[1]] । ब्रह्मबन्धुतरा । ब्रह्मबन्धूतरा । स्त्रितरा । स्त्रीतरा । ***कृन्नद्या न ।** लक्ष्मीतरा ।

---

घरूपेति । अत्र घपदेन 'तरप्तमपौ घः' इति बोधितौ सूत्रेण तरप्तमपौ गृह्येते । चेलट्शब्दः पचाद्यजन्तः । ब्राह्मणितरेति । 'तसिलादिष्वाकृत्वसुचः' इति पुंवद्भावस्त्वत्र न, 'जातेश्चे'ति निषेधात् ।

प्रशस्ता ब्राह्मणी—ब्राह्मणिरूपा । ब्राह्मणिचेलीति । टित्वान्ङीप् । चेलडादयः शब्दा निन्दार्थकाः । आमलकीतरेति । आमलकी-कुवलीशब्दौ वृक्षे नित्यस्त्रिलिङ्गौ ।

उक्तादन्यः शेषः, स च द्विधेत्याह—अङ्यन्तेति । उपलक्षणमेतत् । 'भाषितपुंस्कात्' इत्यपि नेह सम्बध्यते, इत्याशयेनाह—स्त्रीतरेति ।

---

घरूप । भाषितपुंस्क से परे जो ङी, तदन्त अनेकाच् को ह्रस्व हो, घ-रूप-कल्पप् प्रत्यय परे रहते, और चेलडादि उत्तरपद परे रहते ।

नद्याः । अङ्यन्त नदी, और ङ्यन्त एकाच्, उन को ह्रस्व हो, विकल्प करके, घादि परे रहते ।

कृन्नद्या न । कृन्नदी ( नदी सञ्ज्ञक कृदीकार ) को ह्रस्व नहीं हो ।

---

१ क्वाचित्कः पाठः । २ 'ङ्यन्तैकाचश्च' ।

**उगितश्च** ।६।३।४५। [ [1]उगितः परा या नदी, तदन्तस्य घादिषु ह्रस्वो वा स्यात् ]। विदुषितरा। ह्रस्वाऽभावपक्षे पुंवत्। 'वसुस्रंस्वि'-ति दत्वम्। विद्वत्तरा।

**पादस्य पदाज्यातिगोपहतेषु** ।६।३।५२। [2]एषूत्तरपदेषु पादस्य 'पद' इत्यदन्तादेशः स्यात्। पादाभ्यामजतीति—पदाजिः। पदातिः। 'अज्यतिभ्यां पादे च' इतीण् प्रत्ययः। पदगः। पदोपहतः।

**पद्यत्यतदर्थे** ।६।३।५३। पादस्य पत्स्यादतदर्थे यति [[1]परे]। पादौ विध्यन्ति—पद्याः शर्कराः। 'विध्यत्यधनुषे'ति यत्। अतदर्थे किम्?। पादार्थमुदकं पाद्यम्। 'पादार्घाभ्यां चे'ति यत्

**उदकस्योदः संज्ञायाम्** ।६।३।५७। [ [1]उदकस्य 'उद' इत्यादेशः

---

नदीति। 'ईदूतोः केवलयोरपि नदीसञ्ज्ञे'ति पक्षाभिप्रायेणेदमुक्तम्।

विदुषीति। 'उगितश्चे'ति ङीपि 'वसोः सम्प्रसारणम्'।

विद्वत्तरेति। 'तसिलादिष्वाकृत्वसुचः' इति पुंवद्भावः।

पदाजिरिति। अजेर्व्यभावो, निपातनात्।

पादाभ्यामततीति—पदातिः। पादाभ्यां गच्छतीति—पदगः। 'अन्येभ्योऽपि दृश्यते' इति डः। पादाभ्यामुपहतः—पदोपहतः।

---

उगितश्च। उगित् से परे जो नदी (ईकार), तदन्त को ह्रस्व हो, विकल्प करके, घादि परे रहते।

पादस्य पदा। पाद को 'पद' यह अदन्त आदेश हो, 'आजि' आदि उत्तरपद परे रहते।

पद्यत्यतदर्थे। पाद को 'पद्' आदेश हो, अतदर्थक यत् प्रत्यय परे रहते।

उदकस्योदः। सञ्ज्ञा में उदक को 'उद' यह अदन्त आदेश हो, उत्तर पद परे रहते।

---

१ क्वचित्कः पाठः। २ इयं वृत्तिः क्वचिन्न।

स्यात्सञ्ज्ञायाम्[1] ] उत्तरपदे। उदमेघः। [ [2]उदवाहः ]। *उत्तरपदस्य चेति वक्तव्यम्। क्षीरोदः। पेषं-वास-वाहन-धिषु च ।६।३।५८। [ [1]पेषमिति णमुलन्तेऽव्यये, वासवाहनधिषु चोत्तरपदेषु उदकस्य-'उद'-स्यादेशः स्यात्। असञ्ज्ञार्थमिदम् ]। उदपेषं पिनष्टि। उदवासः। उदवाहनः। उदधिर्घटः।

**एकहलादौ पूरयितव्येऽन्यतरस्याम्** ।६।३।५९। [ [1]असंयुक्तहलादौ पूरयितव्य-[ पूरणार्ह-]-वाचके उत्तरपदे उदकस्य 'उद' इत्यादेशो वा स्यादसञ्ज्ञायाम् ]। उदकुम्भः। उदककुम्भः। एकेति किम्?। उदकस्थाली। पूरयितव्येति किम्?। उदकपर्वतः।

**मन्थौदनसक्तुबिन्दुवज्रभारहारवीवधगाहेषु च** ।६।३।६०। [ [1]मन्थादिषूत्तरपदेषु उदकस्य 'उद'इत्यादेशो वा स्यात् ]। उदमन्थः। उदकमन्थः। [[3]उदौदनः। उदकौदनः]। [3]इत्यादि।

---

उदकपूर्णो मेघ इव—उदमेघः। सादृश्यनिबन्धना कस्यचित्पुंसः सञ्ज्ञेयम्। उदकस्योद इति। उत्तरपदस्थस्योदकशब्दस्य उदादेशः, सञ्ज्ञायाम्। क्षीरमिव, क्षीरं वा उदकं यस्यासौ—क्षीरोदः। उदपेषमिति। 'स्नेहने पिषः' इति णमुल्। उदकेन पिनष्टीत्यर्थः। उदकस्य वासः—उदवासः। उदकं वाहनं यस्यासौ— उदवाहनः। उदकं धीयतेऽस्मिन् इति-उदधिः = समुद्रः 'कर्मण्यधिकरणे च' इति किः।

---

उत्तरपदस्य च। उत्तरपदस्थ उदक को (भी) 'उद' आदेश हो, सञ्ज्ञा में।
पेषंवास। उदक को 'उद' आदेश हो, 'पेषम्' आदि उत्तरपद परे रहते।
एकहलादौ। उदक को 'उद' आदेश हो, विकल्प करके, असञ्ज्ञामें, असंयुक्तहलादि, पूरण ( भरने ) के योग्य (पात्रवाची) उत्तरपद परे रहते।
मन्थौदन। उदक को 'उद' आदेश विकल्प करके हो, मन्थादि उत्तर पद परे रहते।

---

१ शेषपूरणमेतत्। २ क्वचिद् दृश्यते। ३ क्वचिन्न।

**इको ह्रस्वोऽङ्यो गालवस्य ।६।३।६१।** इगन्तस्याऽङ्यन्तस्य ह्रस्वो वा, [ स्यात् ] उत्तरपदे। ग्रामणिपुत्रः। ग्रामणीपुत्रः। इकः किम् ?। रमापतिः। अङ्यः किम् ?। गौरीपतिः।

**ष्यङः संप्रसारणं पुत्रपत्योस्तत्पुरुषे ।६।१।१३।** ष्यङन्तस्य पूर्वपदस्य संप्रसारणं स्यात्, पुत्रपत्योः परतः।

**संप्रसारणस्य ।६।३।१३९।** [1]सम्प्रसारणस्य दीर्घः स्यादुत्तरपदे। कौमुदगन्ध्यायाः पुत्रः—कौमुदगन्धीपुत्रः। कौमुदगन्धीपतिः।

**इष्टकेषीकामालानां चिततूलभारिषु ।६।३।६५।** इष्टकादीनां, तदन्तानां च पूर्वपदानां, चितादिषु क्रमादुत्तरपदेषु ह्रस्वः स्यात्। इष्टकचितम्। पक्वेष्टकचितम्। इषीकतूलम्। मुञ्जेषीकतूलम्। मालभारी। उत्पलमालभारी।

---

ग्रामण्यः पुत्रः—ग्रामणिपुत्रः। तत्पुरुषपदेन पूर्वपदमुत्तरपदञ्चाक्षिप्यते, तत्र ष्यङा पूर्वपदस्य विशेषणात्तदन्तविधिरित्याह—ष्यङन्तस्येति।

कुमुदगन्धेरपत्यं स्त्री—कौमुदगन्ध्या। 'तस्याऽपत्य'मित्यणः स्थाने,—'अणिञोः' इति ष्यङादेशः। 'यङश्चाप्'।

इष्टकाभिश्चितम्—इष्टकचितम्। 'कर्तृकरणे' इति समासः। तदन्तानामिति। पदाधिकारात् 'पदाङ्गाधिकारे तस्य—'इति तदन्तविधिः।

मालां बिभर्त्ति तच्छीलो—मालभारी।

---

इको ह्रस्वो। अङ्यन्त जो इगन्त, उसको ह्रस्व हो, विकल्प करके, उत्तर पद परे रहते।

ष्यङः सम्प्र। ष्यङन्त पूर्वपद को सम्प्रसारण हो, पुत्र और पति उत्तरपद परे रहते।

सम्प्रसारणस्य। सम्प्रसारण को दीर्घ हो, उत्तरपद परे रहते।

इष्टकेषीका। इष्टकादि, और इष्टकाद्यन्त जो पूर्वपद, उसको क्रमसे चित आदि उत्तरपद परे रहते ह्रस्व हो।

---

१ 'सम्प्रसारणान्तस्य' पा०।

ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयोवचनबन्धुषु ।६।३।८५। [ [1]एषु द्वादशसूत्तरपदेषु] समानस्य सः स्यात् । सज्योतिः । [ [1]समानं नाम यस्यासौ-सनामाः। इत्यादि ] ।

चरणे ब्रह्मचारिणि ।६।३।८६। ब्रह्मचारिण्युत्तरपदे समानस्य सः स्याच्चरणे समानत्वेन गम्यमाने । चरणः-शाखा । ब्रह्म-वेदः, तद-ध्ययनार्थं व्रतमपि ब्रह्म । तच्चरतीति-ब्रह्मचारी । समानः स-सब्रह्म-चारीत्यादि ।

तीर्थे ये ।६।३।८७। [ [2]तीर्थे उत्तरपदे ], यादौ प्रत्यये विवक्षिते, समानस्य सः [ स्यात् ] । सतीर्थ्यः-एकगुरुकः । 'समानतीर्थे वासी'ति यत्प्रत्ययः । विभाषोदरे ।६।३।८८। '[1]यादौ प्रत्यये विवक्षिते' इत्येव । [ [2]उदरे उत्तरपदे, यादौ प्रत्यये विवक्षिते, समानस्य सो वा स्यात् ] । सोदर्यः । समानोदर्यः ।

---

ब्रह्मचारीति । 'व्रते' इति णिनिः । समानो ब्रह्मचारी-सब्रह्मचारी । ब्रह्म-चारिणः समानत्वञ्च ब्रह्मणो = वेदस्य समानत्वात् । एवञ्च समाने तुल्ये ब्रह्मणि= वेदे—व्रतचारीति फलति । समाने तीर्थे-वसतीति-सतीर्थ्यः । तीर्थ=गुरुः ।

---

ज्योतिर्जनपद । ज्योतिर् आदि १२ उत्तरपद परे रहते 'समान' को 'स' आदेश हो ।

चरणे ब्रह्म । 'ब्रह्मचारी' उत्तरपद परे रहते 'समान' को 'स' आदेश हो, चरण ( शाखा ) की समानता गम्यमान हो तो ।

तीर्थे ये । तीर्थ उत्तरपद परे रहते, यादि प्रत्यय की विवक्षा में 'समान' को 'स' आदेश हो ।

विभाषोदरे । 'उदर' उत्तरपद परे रहते, यादि प्रत्यय की विवक्षा में, 'समान' को 'स' आदेश हो, विकल्प करके ।

---

१ क्वाचित्कः पाठः । २ शेषपूरणम् ।

दृग्दृशवतुषु ।६।३।८९। [ [1]समानस्य सः स्याद्, दृग्दृशवतुषु ]। सदृक्। सदृशः। *दृक्षे च। सदृक्षः।

इदंकिमोरीश्की ।६।३।९०। [ [1]इदम ईश्, किमः 'की' स्याद् ], दृग्दृशवतुषु। ईदृक्। ईदृशः। कीदृक्। कीदृशः।

* दृक्षे च[2] ॥ ईदृक्षः। कीदृक्षः।

अषष्ठ्यतृतीयास्थस्याऽन्यस्य दुगाशी-राशा-ऽऽस्था-स्थितो-त्सुको-ति-कारक-राग-च्छेषु ।६।३।९९। [ [1]अषष्ठी-तृतीयास्थस्य [2]अन्यशब्दस्य दुगागमः स्यादाशीरादिषु परेषु ]। अन्यदाशीः। अन्यदाशा। अन्यदास्था। अन्यदास्थितः। अन्यदुत्सुकः। अन्यदूतिः। अन्यद्रागः। अषष्ठीत्यादि किम्? । अन्यस्य, अन्येन वा आशीः—अन्याशीः। * कारके, छे च नायं निषेधः। अन्यस्य कारकः—

---

समानो दृश्यते इति—सदृक्। 'समानान्ययोश्चेति वक्तव्यम्' इति क्विन्। 'सदृश' इत्यत्र च कन्। । इदमिव दृश्यते इति—ईदृक्।

किमिव दृश्यते इति—कीदृक्, कीदृक्षः। अन्या आशीः—अन्यदाशीः। नाऽयमिति। 'अषष्ठ्यतृतीयास्थस्ये'ति निषेधो न प्रवर्त्तते इत्यर्थः।

---

दृग्दृशवतुषु। 'समान' को 'स' आदेश हो, दृक्, दृश और वतु परे रहते।

दृक्षे च। 'समान' को 'स' आदेश हो, दृक्ष उत्तरपद परे रहते।

इदंकिमो। दृक्षे च। इदम् को 'ईश्' और किम् को 'की' आदेश हो, दृक्, दृश और वतु परे रहते। और 'दृक्ष' परे रहते।

अषष्ठ्यतृतीया। षष्ठ्यन्त और तृतीयान्त से भिन्न, जो अन्य शब्द, उसको 'दुक्' आगम हो, 'आशीः' आदि परे रहते।

कारके, छे च। कारक परे रहते, और छप्रत्यय परे रहते, 'अषष्ठ्यतृतीयास्थस्य' यह निषेध नहीं लगे। अर्थात्—षष्ठ्यन्त और तृतीयान्त जो अन्य शब्द, उसको दुक् आगम होता ही है।

---

१ शेषपूरणम्। २ क्वाचित्कः पाठः।

अन्यत्कारकः । अन्यस्यायम्—अन्यदीयः ।

**अर्थे विभाषा** ।६।३।१००। [ [1]अन्यस्य दुगागमो वा स्यादर्थे उत्तरपदे ]। अन्यदर्थः । अन्यार्थः । **कोः कत्तत्पुरुषेऽचि** ।६।३।१०१। अजादावुत्तरपदे [ [1]कोः कदादेशः स्यात्तत्पुरुषे ]। कुत्सितोऽश्वः—कदश्वः । कदन्नम् । तत्पुरुषे किम् ? । कूष्ट्रो राजा ।

* **त्रौ च** । कुत्सितास्त्रयः[2]—कत्त्रयः ।

**रथवदयोश्च**।६।३।१०२। [ [1]कोः कदादेशः स्याद्रथवदयोरुत्तरपदयोस्तत्पुरुषे ]। कद्रथः । कद्वदः ।

**तृणे च जातौ** ।६।३।१०३। [ [1]कोः कदादेशः स्यात्तृणे उत्तरपदे, जातौ वाच्यायाम् ]। कत्तृणम् ।

**का पथ्यक्षयोः** ।६।३।१०४। [3]कोः काऽऽदेशः स्यात्पथ्यक्षयोरुत्तर-

---

कुत्सिता उष्ट्रा अस्य—कूष्ट्रः ।

---

**अर्थे विभाषा** । अन्य शब्दको दुक् आगम हो, विकल्प करके, अर्थ शब्द उत्तरपद परे रहते ।

**कोः कत्तत्पुरुषे** । तत्पुरुष समास में 'कु' को 'कत्' आदेश हो, अजादि उत्तरपद परे रहते ।

**त्रौ च** । 'कु' को 'कत्' आदेश हो, त्रिशब्द उत्तरपद परे रहते ।

**रथवदयोश्च** । तत्पुरुष समासमें 'कु' को 'कत्' आदेश हो, रथ और उत्तरपद परे रहते ।

**तृणे च** । तत्पुरुष समासमें 'कु' को कत् आदेश हो, तृण उत्तर पद परे रहते । जाति गम्यमान हो तो ।

**का पथ्यक्षयोः** । 'कु' को 'का' आदेश हो, पथिन् शब्द, और अक्ष ( अक्षि ) शब्द उत्तरपद परे रहते ।

---

१ शेषपूरणम् ।　　२ क्वचिन्न ।　　३ इयं वृत्तिः क्वचित्पठ्यते ।

पद्योः[१] । कापथम् । काक्षः ।

**ईषदर्थे** ।६।३।१०५। [२]कोः काऽऽदेशः स्यादीषदर्थे । ईषज्जलं-काजलम् ।

**विभाषा पुरुषे** ।६।३।१०६। [ [३]कोः काऽऽदेशो वा स्यात्पुरुषे उत्तरपदे ] । कापुरुषः । कुपुरुषः ।

**कवं चोष्णे** ।६।३।१०७। उष्णशब्दे उत्तरपदे कोः 'कवं,' 'का' च वा स्यात् । [[२]चात्-कत्] । कवोष्णम् । कोष्णम् । [[२]चात्-कदुष्णम्] ।

**पृषोदरादीनि यथोपदिष्टम्** ।६।३।१०९। [१]पृषोदरप्रकाराणि शिष्टैर्यथोच्चारितानि तथैव साधूनि स्युः । पृषत उदरं-पृषोदरम् । तल्लोपः । वारिवाहको-बलाहकः । पूर्वपदस्य बः, उत्तरपदादेश्च लत्वम् ।

---

कुत्सितः पन्थाः—कापथम् । 'कुगती'ति समासः । 'ऋक्पूरब्धू'रिति 'अः' समासान्तः । 'पथः संख्याव्ययादे'रिति नपुंसकत्वम् । कुत्सितोऽक्षः-काऽक्षः । 'कुगती'ति समासः । कुत्सिते अक्षिणी यस्येति वा विग्रहः । अत्र च-'बहुव्रीहौ सक्थ्यक्ष्णो'रिति षच् । ईषदर्थे इति । ईषदर्थे विद्यमानस्य कोः कादेशः स्यादुत्तरपदे इत्यर्थः । ईषदुष्णं-कोष्णम् ।

---

ईषदर्थे । ईषदर्थ में विद्यमान 'कु' को 'का' आदेश हो, उत्तर पद परे रहते ।

विभाषा पुरुषे । 'कु' को 'का' आदेश हो, विकल्प करके, पुरुष उत्तर पद परे रहते ।

कवं चोष्णे । उष्ण शब्द उत्तर पद परे रहते 'कु' को 'कव' और 'का' आदेश हो, विकल्प करके । पक्षमें 'कत्' आदेश भी हो ।

पृषोदरादीनि । 'पृषोदर' आदि के सदृश शब्द,-शिष्टोनें जैसे उच्चारण किए हैं, वैसेही साधु हों ।

---

१ इयं वृत्तिः क्वचिदेव दृश्यते, न सर्वत्र । २ क्वाचित्कः पाठः । ३ शेषपूरणम् ।

'भवेद्वर्णागमाद्धंसः, सिंहो वर्णविपर्ययात् ।
गूढोत्मा वर्णविकृतेर्वर्णनाशात्पृषोदरम्' ॥

[ [1]मह्यामतिशयेन रौतीति—मयूरः । आकृतिगणोऽयम् । ]

**मतौ बह्वचोऽनजिरादीनाम्** ।६।३।११९। [ [2]मतौ परतोऽजिरादिवर्जितस्य बह्वचो ] दीर्घः स्यात्, [ [3]संज्ञायाम् ] । अमरावती । अनजिरादीनां किम् ? । अजिरवती । बह्वचः किम् ? । व्रीहिमती । संज्ञायामित्येव । नेह—वलयवती ।

**शरादीनां च** ।६।३।१२०। [ [2]शरादीनां दीर्घः स्यान्मतौ परतः, सञ्ज्ञायाम् ] । शरावती ।

---

वर्णागमादिति । 'हसे हसने' इत्यतः पचाद्यचि—वर्णागमात् = अनुस्वारागमात्—'हंसः' इति, भवेत् = सिद्ध्यति । एवं 'हिसि हिंसाया'मित्यतश्च पचाद्यचि नुमि, अनुस्वारे, सकारहकारयोर्विपर्यये च, 'सिंह' इति रूपम् । एवं-गूढ आत्मा यस्येति विग्रहे वर्णविकृतेः=आत्माऽऽकारस्य उकारादेशात्, गुणे च 'गूढोत्मा' इति रूपं सिद्ध्यति । एवं—वर्णनाशात्=तकारलोपात्, पृषोदरमिति 'रूपं सिध्यती'ति शेषः ।

शरावतीति । नदीविशेषस्य (गोरखपुर प्रदेशे 'राप्ती'ति प्रसिद्धस्य) सञ्ज्ञा ।

---

भवेद्वर्णा । वर्ण ( अनुस्वार ) का आगम होने से 'हंस' बनता है । 'सिंह' में वर्ण का विपर्यय ( हिंसका सिंह ) होता है । वर्ण के विकारसे ( आत्माके आकारको उकार आदेश से ) 'गूढोत्मा' बनता है । और वर्णके ( नकार के ) लोपसे 'पृषोदर' बनता है । इसी प्रकार अन्यत्र भी जानना ।

मतौ बह्वचो । अजिरादि से भिन्न जो बह्वच्, उसको दीर्घ हो, मतुप् परे रहते सञ्ज्ञा में, ।

शरादीनां च । शरादि को दीर्घ हो, मतुप् परे रहते सञ्ज्ञा में ।

---

१ लिखिते दृश्यतेऽयं पाठः । २ शेषपूरणमेतत् ।

उपसर्गस्य घञ्यमनुष्ये बहुलम् ।६।३।१२२। [1]उपसर्गस्य बहुलं दीर्घः स्याद्घञन्ते परे, नतु मनुष्ये। परीपाकः। परिपाकः[2]। अमनुष्ये किम्?। निषादः।

नरे संज्ञायाम् ।३।३।१२९। [[3]विश्वस्य दीर्घः स्यात्सञ्ज्ञायां, नरे उत्तरपदे ]। विश्वानरः। मित्रे चर्षौ ।६।३।१३०। [[3]विश्वस्य दीर्घः स्यान्मित्रे उत्तरपदे, ऋषेः सञ्ज्ञायाम् ]। विश्वामित्रः।

* शुनो दन्तदंष्ट्राकर्णकुन्दवराहपुच्छपदेषु । दीर्घो वाच्यः । श्वादन्तः।

प्रनिरन्तः शरेक्षुप्लक्षाम्रकार्ष्यखदिरपीयूक्षाभ्योऽसंज्ञायामपि ।८।४।५। [4]एभ्यो वनस्य [ [5]नस्य ] णत्वं [ [3]स्यादसञ्ज्ञायामपि ]।

---

उपसर्गस्येति। उपसर्गस्य बहुलं दीर्घो, घञन्ते परे।

निषीदत्यस्मिन् पापमिति—निषादः। 'हलश्चे'ति अधिकरणे घञ्।

नरे इति। विश्वस्य दीर्घः स्यात्, नरे परतः सञ्ज्ञायाम्। मित्र इति। विश्वस्य दीर्घःस्यान्मित्रे परतः,ऋषेः सञ्ज्ञायाम्। 'दीर्घो वाच्य' इति वार्त्तिकस्य शेषपूरणम्।

---

उपसर्गस्य घञि। उपसर्ग को बहुलता करके दीर्घ हो, घञन्त उत्तरपद परे रहते। पर मनुष्य वाच्य हो तो यह दीर्घ नहीं हो।

नरे संज्ञायाम्। 'विश्व' को दीर्घ हो, 'नर' उत्तरपद परे रहते, संज्ञा में।

मित्रे चर्षौ। 'विश्व' को दीर्घ हो, 'मित्र' उत्तरपद परे रहते। ऋषि विशेष की संज्ञा वाच्य हो तो।

शुनो दन्त। 'श्वन्' शब्द को दीर्घ हो, दन्तादि उत्तरपद परे रहते।

प्रनिरन्तः। प्रादि से परे जो वन का नकार, उसको णकार हो, असञ्ज्ञा में भी।

---

१ वृत्तिरियं न सार्वत्रिकी। २ लिखिते दृश्यतेऽयं पाठः। ३ शेषपूरणमेतत्। ४ 'एभ्यः परस्य' पा०। ५ क्वचिन्न।

प्रवणम् । **विभाषौषधिवनस्पतिभ्यः ।८।४।६।** [ [1]एभ्यो वनस्य णत्वं वा स्यात् ] । दूर्वावणम् । दूर्वावनम् । शिरीषवणम् । शिरीषवनम् । *द्व्यच्त्र्यच्भ्यामेव । नेह—देवदारुवनम् ।

*इरिकादिभ्यो न । इरिकावनम् । मिरिकावनम् ।

**वाहनमाहितात् ।८।४।८।** आरोप्य यदुह्यते, तद्वाचिस्थान्निमित्ताद्वाहनस्य नस्य णत्वम्[2] । इक्षुवाहणम् । [ [3]आहितात्किम् ? । इन्द्रवाहनम् । वहतेर्ल्युटि वृद्धिरिहैव निपातनात् ] ।

**पानं देशे ।८।४।९।** पूर्वपदस्थान्निमित्तात्परस्य पानस्य[2]नस्य णत्वं [ [3]स्याद्देशे गम्ये ] । क्षीरं पानं येषां ते—क्षीरपाणा उशीनराः । सुरापाणाः प्राच्याः । [ [3]पीयते इति—पानम् । कर्मणि ल्युट् ] ।

---

इरिकादिभ्य इति । इरिकादय ओषधिविशेषाः । ओषधित्वात्प्राप्ते निषेधोऽयम् । इक्ष्विति । इक्षवो हि वहनाय परैः शकटादावारोप्यन्ते, न तु ते स्वयमारोहन्ति । इन्द्रेति । इन्द्रः स्वयमेव स्ववाहनमारोहति, नान्यैरारोप्यते, अतोऽत्र न णत्वम् । उशीनराः—टेहरीदेशः । ( उशीनर = श्रीनगर-टेहरी ) । प्राच्याः—अङ्गवङ्गादयः ।

---

विभाषौषधि । ओषधि वाचक और वनस्पति वाचक से परे वन के नकार को विकल्प करके णत्व हो । वह ओषध्यादि वाचक द्व्यच्क या त्र्यच्क ही होना चाहिए ।

इरिकादिभ्यो । इरिकादि से परे वन के नकार को णत्व नहीं हो ।

वाहनमाहितात् । आहित-अर्थात् उठाकर जो ले जाया जावे, तद्वाची में स्थित जो निमित्त ( रेफ षकार ), उससे परे वाहन के नकार को णत्व हो ।

पानं देशे । पूर्वपदस्थ निमित्त से परे पान के नकार को णत्व हो, देश विशेष की रीति गम्यमान हो तो ।

---

१ क्वचिदेव दृश्यतेऽयं पाठः । २ 'नस्य णः' पा० ।
३ लिखिते प्रायो नास्ति ।

**वा भावकरणयोः ।८।४।१०।** 'पानस्ये'त्येव । [[1]पूर्वपदस्थान्निमित्तात्परस्य भावकरणयोः पानशब्दस्य नस्य णत्वं वा स्यात् ]। क्षीरपाणम् । क्षीरपानम् ।

**प्रातिपदिकान्तनुम्विभक्तिषु च ।८।४।११।** पूर्वपदस्थान्निमित्तात्परस्य एषु स्थितस्य नस्य णो वा [[2]स्यात् ]। [3]प्रातिपदिकान्ते—माषवापिणौ । [3]नुमि—व्रीहिवापाणि । [3]विभक्तौ—व्रीहिवापेण । पक्षे—माषवापिनावित्यादि ।

**कुमति च ।८।४।१३।** कवर्गवत्युत्तरपदे प्राग्वत्—[ [1]प्रातिपदिकान्त-नुम्-विभक्तिस्थस्य नस्य णत्वं स्यात् ]। हरिकामिणौ । हरिकामाणि । हरिकामेण ।

---

क्षीरपानमिति। क्षीरस्य पानमिति विग्रहः। क्षीरस्य पानं, पानपात्रं वेत्यर्थः।
माषान्वपतः—इति माषवापिणौ । 'बहुलमाभीक्ष्ये' इति णिनिः । व्रीहिवापेणेति । व्रीहीन् वपतीति व्रीहिवापः, तेनेति विग्रहः ।
हरिं कामयतस्तच्छीलौ—हरिकामिणौ । हरिं कामयन्तो कुलानि—हरिकामाणि । अत्र—अजन्तलक्षणो नुम् ।

---

वा भाव । पूर्वपदस्थ निमित्त से परे जो भाव—करण ल्युडन्त पान शब्द का नकार, उसको णकार हो, विकल्प करके ।

प्रातिपदिकान्त । पूर्वपदस्थ निमित्त से परे जो प्रातिपदिकान्त नकार, नुम् का नकार और विभक्तिस्थ नकार, उसको णत्व हो, विकल्प करके ।

कुमति च । कवर्गवत् उत्तरपद परे रहते जो प्रातिपदिकान्त नकार, नुम् का नकार, और विभक्तिस्थ नकार, उसको णत्व हो ।

---

१ शेषपूरणम् । २ लिखिते प्रायो नास्ति । ३ क्वचिदेव लिखिते दृश्यते

**पदव्यवायेऽपि ।८।४।३८।** [ [1]पदेन व्यवधानेऽपि ] णत्वं न [2]स्यात् । माषकुम्भवापेन । * **अतद्धिते इति** [3]**वक्तव्यम्** । आर्द्रगोमयेण । शुष्कगोमयेण ।

**पारस्करप्रभृतीनि च संज्ञायाम् ।६।१।१५७।** एतानि ससुट्कानि निपात्यन्ते, नाम्नि । पारस्करः । किष्किन्धा ।

*( ग. ) **तद्बृहतोः करपत्योश्चोरदेवतयोः सुट्, तलोपश्च ।** तात्पूर्वं चर्त्वेन दकारोऽपि बोध्यः । तद्-बृहतोर्दकारतकारौ लुप्येते, करपत्योस्तु सुट् । 'चोरदेवतयो'रिति समुदायोपाधिः । तस्करः । बृहस्पतिः ।

---

पदव्यवाये इति । निमित्तनिमित्तिनोर्मध्ये पदे सति, न णत्वमित्यर्थः । माषकुम्भवापेनेति । माषस्य कुम्भस्तं वपतीति माषकुम्भवापः, तेनेति विग्रहः । अतद्धित इति । व्यवधायकपदात् तद्धितश्चेत्परो न भवति, तदा निषेध इत्यर्थः । पारं करोति—पारस्करो देशविशेषो, मुनिविशेषश्च । 'कृञो हेतुताच्छील्ये'ति टः । किमपि धत्ते इति, किं किं न धत्ते इति वा—किष्किन्धा ।

तत्करोतीति तस्करः = चोरः । बृहत्या = वाचः पतिः—बृहस्पतिः ।

---

पदव्यवायेऽपि । पूर्वपदस्थ निमित्त से परे, पद से व्यवहित, जो प्रातिपदिकान्त-नुम्-विभक्तिस्थ नकार, उसको णत्व नहीं हो ।

अतद्धित इति । व्यवधायकपद से तद्धित परे रहते यह णत्व निषेध नहीं हो, अर्थात् तद्धित परे रहते णत्व होता ही है ।

पारस्कर । 'पारस्कर' आदि सुट् सहित निपातित हो, सञ्ज्ञा में ।

तद्बृहतोः । तद् के दकार का और 'बृहत्' के तकार का लोप हो, क्रम से कर और पति उत्तरपद परे रहते । और कर और पति को सुट् आगम भी हो । समुदाय से यदि क्रम से चोर और देवता अर्थ गम्यमान हो तो ।

---

१ शेषपूरणम् ।  २ क्वाचित्कः पाठः ।  ३ 'वाच्यं' पा० ।

*( ग. ) प्रायस्य चित्तिचित्तयोः । प्रायश्चित्तिः । प्रायश्चित्तम् । वनस्पतिरित्यादि । आकृतिगणोऽयम् ।

इति समासाश्रयविधयः ।*।

—:०:—

## अथ तद्धितप्रकरणम् ।

**समर्थानां प्रथमाद्वा ।४।१।८२।** इदं पदत्रयमधिक्रियते 'प्राग्दिशः' इति यावत् । [ [1]कृतसन्धिकार्याणां प्रथमोच्चारिताद्वेत्यर्थः ]।

---

प्रायश्चित्तमिति । 'प्रायः पापं विजानीयाच्चित्तं तस्य विशोधनम्' इति स्मृतिः । प्रायस्य चित्तमिति विग्रहः ।

इति श्रीगुरुप्रसादशास्त्रिविरचितायां मध्यसिद्धान्तकौमुद्यभिनवराजलक्ष्म्यां समासाश्रयप्रकरणम् । *

पदत्रयमिति । अनेन प्रत्येकं स्वरितत्वप्रतिज्ञा सूचिता । तत्प्रयोजनं तु एषु त्रिषु कस्य चिदंशस्य निवृत्तावपि, अपरस्याऽनिवृत्तिरेव । तथा च 'प्राग्दिशः' इति सूत्रे 'समर्थानां प्रथमात्' इति निवृत्तं, 'वा' इति त्वनुवर्त्तत एव'इति वक्ष्यमाणमूलग्रन्थः साधु सङ्गच्छते ।

सामर्थ्यञ्चात्र–परिनिष्ठितत्वं । कृतसन्धिकार्यत्वमिति यावत् । तेन सूत्थितस्यापत्यं सौत्थितिरिति रूपं भवति । समर्थाधिकाराऽभावे तु–अकृतव्यूहपरिभाषया सवर्णदीर्घाऽप्रवृत्त्या 'सु–उत्थित' इत्यत इञि वृद्धौ, सावुत्थितिरिति स्यात् । 'सौत्थिति'रिति चेष्यते । अतः समर्थाधिकारः ।

---

प्रायस्य चित्ति । प्राय से परे जो चित्त और चित्ति उनको सुट् आगम हो।

[ * इति समास प्रकरण भाषा टीका * ]

समर्थानां । 'समर्थानां','प्रथमात्', 'वा'–इन तीनों पदों का 'प्राग्दिशो विभक्तिः' इस सूत्र तक अधिकार है ।

---

१ लिखिते दृश्यतेऽयं पाठः ।

प्रागदीव्यतोऽण् ।४।१।८३। 'तेन दीव्यती'त्यतः प्रागणधिक्रियते ।

अश्वपत्यादिभ्यश्च ।४।१।८४। एभ्योऽण् स्यात्प्राग्दीव्यतीयेष्वर्थेषु । अश्वतेरपत्यादि–आश्वपतम् । [ [1]'यचि भम्' इति भसञ्ज्ञा । 'यस्येति चे'तीकारलोपः । 'तद्धितेष्वचामादे'रित्यनेन आद्यचो वृद्धिः ] । गाणपतम् ।

दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः ।४।१।८५। [ [2]दित्यादिभ्यः, पत्युत्तरपदाच्च ] प्राग्दीव्यतीयेष्वर्थेषु [ [1]ण्यः स्यात् ] । दितेरपत्यादि-दैत्यः । अदितेरादित्यस्य वा–आदित्यः ।

*यणो मयो द्वे वाच्ये । 'मयः' इति पञ्चमी, 'यणः' इति षष्ठीति

---

अणधिक्रियत इति । तेन 'तस्यापत्यं' 'तेन रक्तं रागात्' इत्यादि वक्ष्यमाण-विधेयाऽघटित-सामान्यशास्त्रेष्वण एवोपस्थित्या, तैरणेव विधीयते इत्यवधेयम् । अपत्यादिति । आदिपदेन—निवृ॑त्तसमूहजाताद्यर्थसंग्रहः ।

दित्यदित्येति । दित्यादिभ्यः, पत्युत्तरपदाच्च ण्यः स्यात्प्राग्दीव्यतीयेष्वर्थेषु ।

---

प्राग्दीव्यतोऽण् । 'तेन दीव्यति खनति जयति जितम्' इस सूत्र तक 'अण्' का अधिकार है ।

अश्वपत्यादिभ्यश्च । अश्वपत्यादि से विकल्प से अण् प्रत्यय हो, वक्ष्यमाण प्राग्दीव्यतीय अर्थों में ।

दित्यदित्या । दित्यादि से और पत्युत्तरपद से विकल्प से 'ण्य' प्रत्यय हो । प्राग्दीव्यतीय-अपत्य, देवता, भव, जात आदि अर्थों में ।

यणो मयो । यण् से परे जो मय्, और मय् सें परे जो यण्, उसको द्वित्व हो ।

---

१ क्वाचित्कोऽयं लिखिते पाठः । २ शेषपूरणम् ।

पक्षे—यस्य द्वित्वम् । **हलो यमां यमि लोपः ।८।४।६४।** [ [1]हलः परस्य यमो लोपो ] वा स्या [ [1]द्यमि ] ।–इत्यसति लोपे, द्वित्वे च सति, त्रियं रूपम् । असति लोपे, द्वित्वलोपयोर्वा द्वियम् । द्वित्वाऽभावे, लोपे च सति-एकयम् । प्राजापत्यः ।

* [2]**पृथिव्या ञाऽञौ** । पार्थिवा । पार्थिवी । ***देवाद्यञञौ** । दैव्यम् । दैवम् । ***बहिषष्टिलोपो, यञ्च** । बाह्यः । ***ईकक् च** ।

**किति च ।७।२।११८।** किति तद्धितेऽचामादेरचो वृद्धिः [[3]स्यात्] । बाहीकः । ***गोरजादिप्रसङ्गे यत्** । [ [3]'वान्तो यि प्रत्यये' ] । गोरपत्यादि-

यस्येति । 'आदित्य' इत्यत्र यकारस्य मयः परत्वात्, 'यणो मय' इति द्वित्वम्–आदित्त्यः ।

त्रियमिति । तथा च आदित्त्य्यम् । आदित्य्यम् । आदित्यम्—इत्येवं त्रीणि रूपाणि । गोरपत्यादीति । आदिपदेन जातसमूहाद्यर्थसंग्रहः ।

**हलो यमां ।** हल् से परे जो यम्, उसका लोप हो विकल्प करके, यम् परे रहते ।

**पृथिव्या ञाऽञौ ।** पृथिवी से प्राग्दीव्यतीय अर्थों में 'ञ' और 'अञ्' प्रत्यय हों, विकल्प से ।

**देवाद्यञञौ ।** देव शब्द से यञ् और अञ् प्रत्यय हों, विकल्प करके, प्राग्दीव्यतीय अर्थों में ।

**बहिषष्टि । ईकक्च ॥** बहिष् से विकल्प से यञ् और ईकक् प्रत्यय हों, और बहिष्‌की टिका लोप भी हो, विकल्प करके, प्राग्दीव्यतीय अर्थों में ।

**किति च ।** अचों के मध्य में जो आदि अच्, उसको वृद्धि हो, कित् तद्धित परे रहते ।

**गोरजादि ।** गो शब्द से अजादि प्रत्यय के प्रसङ्ग में, यत् प्रत्यय हो, प्राग्दीव्यतीय अर्थों में ।

१ शेषपूरणम् २ इदं वार्त्तिकं सोदाहरणं क्वचिन्न । ३ क्वाचित्कः पाठः ।

गव्यम्। उत्सादिभ्योऽञ् ।४।१।८६। [ उत्सादिभ्योऽञ्स्यात्प्राग्दीव्यतीयेष्वर्थेषु ]। औत्सः।

* इत्यपत्यादि-विकारान्तार्थ-साधारणाः प्रत्ययाः । *

## अथ अपत्याधिकारः ।

स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् ।४।१।८७। 'धान्यानां भवने' इत्यतः प्रागर्थेष्वाभ्यामेतौ स्तः। [[1]स्त्रिया अपत्यादि–] स्त्रैणः। [[1]पुंसोऽपत्यादि– ] पौंस्नः।

तस्याऽपत्यम् ।४।१।९२। षष्ठ्यन्तात्कृतसन्धेः समर्थादपत्येऽर्थे उक्ता, वक्ष्यमाणाश्च प्रत्यया वा स्युः।

ओर्गुणः ।६।४।१४६। उवर्णान्तस्य भस्य गुणस्यात्तद्धिते। 'ओरो'-

---

उत्से = निर्झरे जातादि–औत्सः।

इत्यपत्यादिविकारान्तार्थसाधारणाः प्रत्ययाः।

स्त्रैण इति। स्त्रिया अपत्यादि–स्त्रैणः। पुंसोऽपत्यादि–पौंस्नः।

तस्येति न स्वरूपपरं, किन्तु षष्ठ्यन्तमात्रस्योपलक्षणम्। तदाह–षष्ठ्यन्तादिति। पञ्चम्यर्थोऽध्याहारलभ्यः, अनुकरणात्पञ्चम्याः सौत्रत्वाल्लुग्वा। उक्ताः–अण्यनञ्स्नञादयः। वक्ष्यमाणाः—इञादयः।

---

उत्सादिभ्यो। उत्सादि से अञ् प्रत्यय हो, प्राग्दीव्यतीय अर्थों में।

स्त्रीपुंसाभ्यां। स्त्री और पुमस् शब्दों से क्रम से नञ् और स्नञ् प्रत्यय विकल्प से हों, 'धान्यानां भवने क्षेत्रे' इससे प्राक् अर्थों में।

तस्यापत्यम्। षष्ठ्यन्त कृतसन्धि समर्थ से अपत्य अर्थ में उक्त और वक्ष्यमाण प्रत्यय विकल्प से हों।

ओर्गुणः। उवर्णान्त भसञ्ज्ञक को गुण हो, तद्धित परे रहते।

---

1 क्वाचित्कः पाठः।

दिति वक्तव्ये गुणोक्तिः 'संज्ञापूर्वको विधिरनित्यः' इति ज्ञापयितुम्। तेन स्वायम्भुवमित्यादि सिद्धम्। उपगोरपत्यम्—औपगवः। आश्वपतः। दैत्यः। औत्सः। स्त्रैणः। पौंस्नः।

**अपत्यं पौत्रप्रभृति गोत्रम्** ।४।१।१६२। अपत्यत्वेन विवक्षितं पौत्रादि 'गोत्र'संज्ञं स्यात्।

**एको गोत्रे** ।४।१।९३। गोत्रे एक एव प्रत्ययः स्यात्। उपगोर्गोत्रापत्यम्—औपगवः। **गर्गादिभ्यो यञ्** ।४।१।१०५। [ [1]गर्गादिभ्यो यञ् स्यात् ] गोत्रापत्ये। गर्गस्य गोत्रापत्यं—गार्ग्यः। वात्स्यः।

---

तेनेति। तेन = अनित्यत्वाद्गुणस्य क्वचिदप्रवृत्त्या। ( उवङि सति )।

एक इति। 'पुत्र एवापत्य'मिति पक्षेऽपि पौत्रेऽभिधेये एक एव प्रत्यय इत्यर्थः। एवञ्च उपगुशब्द एव अणाद्यपत्यप्रत्ययं लभते, नतु औपगवशब्दः। अतो गोत्रापत्ये पौत्रादावप्यनन्तरापत्य इव 'तस्यापत्य'मिति अणेव भवति, नत्वत इञितीञ्, उपगोरदन्तत्वाऽभावादिति भावः। तेन उपगोः पौत्रे ( गोत्रे ) अभिधेये ( 'पुत्र एवापत्य'मितिपक्षे ) अनन्तरापत्ये योऽण् तेनैव तृतीयादिरपि ( पौत्रादिरपि ) अभिधीयते, नतु 'उपगोरनन्तरापत्यम्—औपगवः, औपगवस्यापत्यम्—( उपगोः पौत्रः )—औपगवि'रित्येवमिञादिर्भवतीत्याकूतम्।

गर्गादिभ्य इति। षष्ठ्यन्तेभ्यो गर्गादिभ्यो गोत्रापत्येऽर्थे यञ्स्यात्।

---

अपत्यं पौत्र। अपत्यत्वेन विवक्षित जो पौत्र, प्रपौत्र आदि, वे गोत्र सञ्ज्ञक हों।

एको गोत्रे। गोत्र में एक ही प्रत्यय हो। [ गोत्र में—पुत्र, उसका पुत्र, उसका पुत्र इत्यादि परम्परा से अनेक अपत्य प्रत्यय नहीं होते हैं ]।

गर्गादिभ्यो। षष्ठ्यन्त कृत सन्धि समर्थ गर्गादि से यञ् प्रत्यय हो, गोत्रापत्य अर्थ में।

---

1 शेषपूरणम्।

यञञोश्च ।२।४।६४। गोत्रे यद्यञन्तमञन्तं च, तदवयवयो-रेतयोर्लुक् [[1]स्या]त्तत्कृते बहुत्वे, न तु स्त्रियाम् । गर्गाः । वत्साः ।

गोत्रेऽलुगचि ।४।१।८९। अजादौ प्राग्दीव्यतीये विवक्षिते गोत्रप्रत्ययस्याऽलुक् स्यात् । गर्गाणां छात्राः—। वक्ष्यमाणो 'वृद्धाच्छः' ।

आपत्यस्य च तद्धितेऽनाति ।६।१।१५१। हलः परस्याऽऽपत्य-य(कार)स्य लोपः [स्या]त्तद्धिते, नत्वाकारे। गार्गीयाः। अनाति किम् ? । गार्ग्यायणः । प्राग्दीव्यतीये किम् ? । गर्गेभ्यो हितं–गर्गीयम् । अचि किम् ? । गर्गेभ्य आगतं—गर्गरूप्यम् ।

जीवति तु वंश्ये युवा ।४।१।१६३। वंश्ये पित्रादौ जीवति

---

एतयोरिति । एतयोः = यञञोः । तत्कृते = यञञ्प्रत्ययार्थगते बहुत्वे इति यावत् । गार्गीय इति । अत्र छप्रत्ययोऽजादिः, प्राग्दीव्यतीयश्च ।

गर्गीयमिति । अत्र 'यञञोश्चे'ति यञो लुग्भवत्येव ।

वंश्य इति । पितृपितामहाद्युत्पादकपरम्परा वंशः, तत्र भवो वंश्यः ।

---

यञञोश्च । गोत्रार्थक यञन्त और अञन्त का अवयव जो यञ् और अञ् , उसका लुक् हो, गोत्र प्रत्ययकृत बहुत्व हो तो । परन्तु स्त्रीलिङ्ग में लुक् नहीं हो ।

गोत्रेऽलुगचि । अजादि प्राग्दीव्यतीय प्रत्यय की विवक्षा में गोत्र प्रत्यय का अलुक् ( लुक् नहीं ) हो ।

आपत्यस्य च । हल् से परे जो अपत्यार्थक यकार, उसका लोप हो, तद्धित परे रहते । परन्तु आकार परे रहते लोप नहीं हो ।

जीवति तु । वंश्य = वंशके मुखिया पिता आदि, जीवित रहते, पौत्र आदि का अपत्य जो चतुर्थ ( प्रपौत्र ) आदि, उसकी युवसञ्ज्ञा ही हो, गोत्र सञ्ज्ञा नहीं हो ।

---

१ क्वाचित्कः पाठः ।

(¹सति),पौत्रादेर्यदपत्यं चतुर्थादि, तद्युवसंज्ञमेव स्यान्न तु गोत्रसंज्ञम् ।

**गोत्राद्यून्यस्त्रियाम्**।४।१।९४।यून्यपत्ये विवक्षिते गोत्रप्रत्ययान्तादेव प्रत्ययः स्यात् । स्त्रियां तु न युवसंज्ञा । **यञिञोश्च** ।४।१।१०१। गोत्रे यौ यञिञौ, तदन्तात्फक् [ स्यात् ] ।

**आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्**।७।१।२।प्रत्ययादेः फस्य–आयन्, ढस्य–एय्, खस्य–ईन्, छस्य—ईय्, घस्य–इय्–एते स्युः । गर्गस्य युवापत्यं–गार्ग्यायणः । दाक्षायणः ।

**अत इञ्** ।४।१।९५। [¹अदन्तं यत्प्रातिपदिकं,तत्प्रकृतिकात्षष्ठ्यन्तादिञ् स्यात् ], अपत्येऽर्थे । दाक्षिः । **बाह्वादिभ्यश्च** ।४।१।९६।

---

पित्रादौ = उपगुपौत्रापत्यादेः पित्रादौ ( = उपगुपौत्रादौ ) ।

चतुर्थादि = प्रपौत्र-प्रतिप्रपौत्रादि-परम्परा ।

तदन्तात्फञिति । सामर्थ्याद्यून्यपत्ये एवायं, न तु गोत्रे । नहि गोत्रप्रत्ययान्ताद्गोत्रे प्रत्ययो भवितुमर्हति । 'एको गोत्रे'इत्युक्तेः ।

गार्ग्यायण इति । 'गर्गादिभ्यो यञ्'इति गोत्रे यञि, यस्येति चेत्यकारलोपे, 'यञिञोश्चे'ति यूनि फकि, फस्यायनादेशे, यस्येति चेत्यकारलोपे, णत्वे च गार्ग्यायण इति सिद्धम् ।

गार्ग्यायणः = गर्गस्य जीवत्पितृकः प्रपौत्रादिः । अत इञ् । अदन्तं यत्प्रातिपदिकं तत्प्रकृतिकात्षष्ठ्यन्तादिञ् स्यादपत्येऽर्थे ।

---

यञिञोश्च । गोत्र में जो यञ् और इञ्, तदन्त से फक् प्रत्यय हो ।

आयनेयी । प्रत्यय के आदिभूत फ आदिको क्रमसे आयन् आदि आदेश हों ।

अत इञ् । अदन्त जो प्रातिपदिक, तत्प्रकृतिक षष्ठ्यन्त कृतसन्धि समर्थ से, इञ् प्रत्यय हो, अपत्य अर्थ में ।

बाह्वादिश्च । षष्ठ्यन्त समर्थ बाह्वादि से इञ् प्रत्यय हो, अपत्य अर्थ में ।

---

१ शेषपूरणमेतत् ।

बाह्विः। [ [1]"ओर्गुणः" । उडुलोम्नोऽपत्यादि-] औडुलौमिः। औडुलोमी। ❋लोम्नोऽपत्येषु बहुष्वकारो वक्तव्यः। बाह्वादेरिञोऽपवादः। उडुलोमाः। आकृतिगणोऽयम्।

अनृष्यानन्तर्ये बिदादिभ्योऽञ् ।४।१।१०४। [ [2]बिदादिभ्योऽञ् स्यात् ], ये त्वत्राऽनृषयस्तेभ्यो [ [3]ऽनन्तरे ] ऽपत्ये, अन्यत्र तु गोत्रे। बिदस्य गोत्रं—बैदः। बैदौ। बिदाः। पुत्रस्याऽपत्यं पौत्रः। पौत्रौ। 'यञञोश्चे'ति सूत्रे प्रवराऽध्यायप्रसिद्धं गोत्रम्। तेनेह न—पौत्राः। एवं—दौहित्रादयः।

शिवादिभ्योऽण् ।४।१।११२। [ [2]षष्ठ्यन्तेभ्यः शिवादिभ्योऽण

---

अपवाद इति। बाह्वादिभ्यश्चेतीञोऽपवादोऽकार इत्यर्थः। उडुलोमा इति। 'नस्तद्धिते' इति टिलोपः। बिदा इति। यञञोश्चेति अञो लुक्। पौत्र इति। अनन्तरापत्येऽत्राऽञ्। प्रवरेति। लोके गोत्रपदेन प्रसिद्धं काश्यपहारीतकौशिकादिकमेव गोत्रपदेनेह गृह्यते, न तु अलौकिकं ( शब्दशास्त्रीयं ) पौत्रादिकं गोत्रपदेन गृह्यते। तेन पौत्रस्य लौकिकप्रवराध्यायप्रसिद्धगोत्रत्वाऽभावान्नाऽत्र अञो लुक्। शास्त्रीयगोत्रस्य ग्रहणे तु पौत्रस्य,—'अपत्यं पौत्रप्रभृति गोत्र'मिति गोत्रत्वादञोऽत्र लुगापत्तिः स्यादेव। प्रवराध्यायप्रसिद्धस्येह ग्रहणे च भाष्यमेव मानमित्याशयः।

दौहित्रेति। अत्रापि पौत्रादिवन्न अञो लुगित्याशयः।

---

लोम्नोऽपत्येषु। लोमन् शब्दान्त से बहुत्व विशिष्ट अपत्य अर्थ में अकार प्रत्यय हो।

अनृष्यानन्तर्ये। बिदादि से अञ् प्रत्यय हो, उनमें—ऋषियों से गोत्र अर्थ में, और ऋषि भिन्नों से अनन्तरापत्य अर्थ में अञ् हो।

शिवादिभ्यो। शिवादि प्रकृतिक षष्ठ्यन्त कृतसन्धि समर्थ से अण् प्रत्यय हो, विकल्प करके, अपत्य अर्थ में।

---

१ क्वाचित्कः पाठः। २ शेषपूरणम्। ३ क्वचिन्न।

स्यात्] अपत्ये। शैवः। गाङ्गः। ऋष्यन्धकवृष्णिकुरुभ्यश्च ।४।१।११४। [एभ्योऽण् स्यादपत्येऽर्थे] ऋषिभ्यः-वासिष्ठः। वैश्वामित्रः। अन्धकेभ्यः-श्वाफल्कः-अक्रूरः। वृष्णिभ्यः-वासुदेवः। कुरुभ्यः-नाकुलः। साहदेवः।

मातुरुत्सङ्ख्यासम्भद्रपूर्वायाः ।४।१।११५। सङ्ख्यादिपूर्वस्य मातृशब्दस्य उदादेशः स्यात्, अण् प्रत्ययश्च। द्वैमातुरः। षाण्मातुरः। सांमातुरः। भाद्रमातुरः।

स्त्रीभ्यो ढक् ।४।१।१२०। स्त्रीप्रत्ययान्तेभ्यो ढक् [स्यात्[२]]। वैनतेयः। कन्यायाः कनीन च ।४।१।११६। [कन्याशब्दस्यापत्यार्थे कनीनादेशः,] चादण्। कानीनो—व्यासः, कर्णश्च।

राजश्वशुराद्यत् ।४।१।१३७। [[१]'राजन्' शब्दात्, श्वशुरशब्दाच्च अपत्ये यत्स्यात्]। *राज्ञो जातावेव।

---

शिवस्यापत्यं शैवः—गणेशः। गङ्गाया अपत्यं गाङ्गो-भीष्मः।

द्वयोर्मात्रोरपत्यं—द्वैमातुरः=गणेशः। षण्णां मातॄणामपत्यं—षाण्मातुरः= स्वामिकार्त्तिकेयः। बहुवचननिर्देशात्टाबादिस्त्रीप्रत्ययान्तस्य ग्रहणं, तदाह— स्त्रीप्रत्ययान्तेभ्य इति। विनताया अपत्यं—वैनतेयः=गरुडः।

---

ऋष्यन्धक। ऋष्यादिक से अपत्य अर्थ में अण् प्रत्यय हो (विकल्प करके)।

मातुरुत्। सङ्ख्यादि पूर्वक मातृ शब्दको उत् आदेश; हो। और अण् प्रत्यय भी हो।

स्त्रीभ्यो ढक्। स्त्री प्रत्ययान्त से अपत्यार्थ में ढक् प्रत्यय हो।

कन्यायाः। षष्ठ्यन्त कन्या शब्दसे अण् प्रत्यय हो, तत्संनियोग से कन्या को 'कनीन' आदेश भी हो।

राजश्वशुरा। षष्ठ्यन्त, समर्थ राजन् शब्द और श्वशुर शब्द से अपत्य अर्थ में यत् प्रत्यय हो।

राज्ञो जाता। जातिवाच्य होने पर ही राजन् शब्द मे यत् हो।

---

१ शेषपूरणम्। २ क्वाचित्कः पाठः।

ये चाऽभावकर्मणोः ।६।४।१६८। यादौ तद्धिते [ [1]परे ] अन् प्रकृत्या स्यात्, न तु भावकर्मणोः । राजन्यः । [2]श्वशुर्यः ।

जातावेवेति किम् ?—।

अन् ।६।४।१६७। [ [3]अन् ] प्रकृत्या [स्या]दणि परे । राजनः ।

क्षत्त्राद्धः ।४।१।१३८। [ [3]क्षत्त्राद्धः स्यादपत्येऽर्थे ] । क्षत्त्रियः । जातावित्येव । क्षात्त्रिरन्यः । रेवत्यादिभ्यष्ठक् ।४।१।१४६। [ [3]रेवत्यादिभ्यष्ठक् स्यादपत्येऽर्थे ] । ठस्येकः ।७।३।५०। अङ्गात्परस्य ठस्येकादेशः [ [4]स्यात् ] । रैवतिकः ।

गोत्रे कुञ्जादिभ्यश्च्फञ् ।४।१।९८। [ [2]कुञ्जादिभ्यः च्फञ् स्याद्-

---

राज्ञोऽपत्यं राजन्यः = क्षत्त्रियात्क्षत्त्रियायामुत्पन्नः क्षत्त्रियः ।

श्वशुरस्यापत्यं श्वशुर्यः=श्यालकः ।

राजनः = शूद्रादावुत्पन्नो राज्ञः पुत्रः ।

---

ये चाऽभाव । यकारादि तद्धित परे रहते 'अन' प्रकृति से रहे, उसका लोप नहीं हो । परन्तु भाव और कर्मार्थक प्रत्यय परे रहते यह प्रकृति भाव नहीं हो ।

अन् । अण् परे रहते 'अन्' प्रकृति से रहे ।

क्षत्त्राद्धः । क्षत्त्र शब्दसे घ प्रत्यय हो, अपत्य अर्थ में, समुदाय से जाति गम्यमान हो तो ।

रेवत्यादिभ्य । रेवत्यादिसे अपत्यार्थ में ठक् हो ।

ठस्येकः । अङ्गसे परे जो 'ठ', उसको 'इक' आदेश हो ।

गोत्रे कुञ्जादि । कुञ्जादि से च्फञ् हो, गोत्र अर्थ में ।

---

१ क्वाचित्कः पाठः ।

२ क्वचिदिह न । किन्तु 'राजन' इत्युत्तरं 'श्वशुर्य' इति पठ्यते ।

३ शेषपूरणम् । ४ क्वचिन्न ।

गोत्रे ]। **व्रातच्फञोरस्त्रियाम्** ।५।३।११३। व्रातवाचिभ्यश्च्फञन्तेभ्यश्च स्वार्थे ञ्यप्रत्ययः स्यात्। कौञ्जायन्यः। [ [1]कौञ्जायन्यौ ]। बहुत्वे लुग्वक्ष्यते। कौञ्जायनाः। व्राध्नायन्यः। [ [2]स्त्रियां तु कौञ्जायनी। अत्र गोत्रत्वेन जातित्वान्ङीष्। अनन्तरापत्ये—कौञ्जिः ]।

**नडादिभ्यः फक्** ।४।१।९९। [ [3]नडादिभ्यः फक् स्यात् ], 'गोत्रे' इत्येव। नाडायनः। चारायणः। अनन्तरो—नाडिः।

**अश्वादिभ्यः फञ्** ।४।१।११०। [ [3]अश्वादिभ्यः फञ्स्यात् ] गोत्रे। आश्वायनः। **इतश्चाऽनिञः** ।४।१।१२२। इकारान्ताद् द्व्यचोऽपत्ये ढक् [ [1]स्यात् ], नत्विञन्तात्। दौलेयः। नैधेयः। आत्रेयः। आत्रेयौ।

**अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च** ।२।४।६५। एभ्यो गोत्रप्रत्ययस्य लुक् स्यात्, तत्कृते बहुत्वे, न तु स्त्रियाम्। अत्रयः। भृगवः।

---

कुञ्जस्य गोत्रापत्यं—कौञ्जायन्यः। लुग्वक्ष्यत इति। 'ञ्यादयस्तद्राजाः' इति तद्राजत्वात्—'तद्राजस्य बहुषु तेनैवाऽस्त्रिया'मिति सूत्रेण लुग्वक्ष्यते इत्यर्थः।

नडस्य गोत्रापत्यं—नाडायनः। नडस्यापत्यं—नाडिः। अत्रय इति। अत्र 'इतश्चाऽनिञः' इति ढकोऽनेन लुक्। अत्रेर्गोत्रापत्यम्—आत्रेयः। आत्रेयौ। अत्रयः। भृगव इति। भृग्वादिभ्यश्च ऋष्यणो लुक्। भृगोर्गोत्रापत्यं—भार्गवः। भार्गवौ। भृगवः। एवमग्रेऽपि।

---

व्रातच्फञो। व्रातवाची से और च्फञन्त से स्वार्थ में 'ञ्य' प्रत्यय हो।

नडादिभ्यः। नडादि से फक् हो, गोत्र अर्थ में।

अश्वादिभ्यः। अश्वादि फञ् हो, गोत्र में।

इतश्चाऽनिञः। इकारान्त द्व्यचक से अपत्य अर्थ में ढक् हो। परन्तु इञन्त से ढक् नहीं हो।

अत्रिभृगु। अत्र्यादि से परे जो गोत्र प्रत्यय, उसका लुक् हो, गोत्र प्रत्यय कृत बहुत्व हो तो। पर स्त्री लिङ्ग में यह लुक् नहीं हो।

---

१ क्वचिन्न। २ क्वाचित्कः पाठः। ३ शेषपूरणम्।

कुत्साः । वसिष्ठाः । गोतमाः । अङ्गिरसः ।

**शुभ्रादिभ्यश्च ।४।१।१२३।** [ [1]शुभ्रादिभ्यो ] ढक् [2]स्यादपत्ये । शौभ्रेयः । **कल्याण्यादीनामिनङ् ।४।१।१२६।** [ [1]एषामिनङ् स्यात् ], ढक् च । काल्याणिनेयः । बान्धकिनेयः ।

**कुलटाया वा ।४।१।१२७।** [ [2]कुलटाया इनङादेशो वा स्यादपत्ये । ढक् च ]। इनङ्मात्रं विकल्प्यते, ढक् तु नित्यः पूर्वेणैव । कौलटिनेयः । कौलटेयः । सती भिक्षुक्यत्र-कुलटा ।

**चटकाया ऐरक् ।४।१।१२८।** [ [1]चटकाया ऐरक् स्यादपत्ये ]। ***चटकादिति वाच्यम्** । 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहण'-मिति सिध्यति । चटकस्य, चटकाया वा अपत्यं—चाटकैरः ।

---

शुभ्राया अपत्यं-शौभ्रेयः । पूर्वेणैवेति । 'स्त्रीभ्यो ढ'गित्यनेनैव सिद्ध इत्यर्थः । कुटलाया अपत्यं—कौलटिनेयः ।

सतीति । या भिक्षार्थं कुलान्यटति सा साध्वी भिक्षुक्यत्र कुलटा । या तु व्यभिचारार्थं कुलान्यटति तस्याः 'क्षुद्राभ्यो वा'इति पक्षे ढकि 'कौलटेर' इति, 'कौलटेय'इति च रूपं भवति । तथा चाऽमरः—'अथ बान्धकिनेयः स्याद्बन्धुलश्चाऽसतीसुतः । कौलटेरः कौलटेयो, भिक्षुकी तु सती यदि,—तदा कौलटिनेयः स्यात्कौलटेयोऽपि चात्मजः ।' इति । सिद्ध्यतीति । सिद्ध्यति='चटका'दित्युक्तेऽपि स्त्रीप्रत्ययान्तचटकाशब्दग्रहणं सिध्यत्येव, लिङ्गविशिष्टपरिभाषया ।

---

शुभ्रादिभ्यश्च । शुभ्रादि से ढक् हो, अपत्य अर्थ में ।

कल्याण्यादीना । कल्याण्यादि से, अपत्य अर्थ में ढक् प्रत्यय हो, और कल्याण्यादि के अन्त को इनङ् आदेश भी हो ।

कुलटाया वा । कुलटा शब्द को इनङ् आदेश हो, विकल्प करके । और ढक् भी हो ( ढक् तो नित्य ही होता है )।

चटकायाः । चटका से ऐरक् प्रत्यय हो, अपत्य अर्थ में ।

---

१ शेषपूरणम् । २ क्वचिन्न ।

*स्त्रियामपत्ये लुग्वक्तव्यः। तयोरेव स्त्र्यपत्यं-चटका।

**गोधाया ढ्रक्** ।४।१।१२९। [ [1]गोधाया ढ्रक् स्यादपत्येऽर्थे ]। गौधेरः। [ [1]लोपो व्योर्वलीति यलोपः। पक्षे— ] शुभ्रादित्वाड्ढक्। गौधेयः। **क्षुद्राभ्यो वा** ४।१।१३१। अङ्गहीनाः, शीलहीनाश्च क्षुद्राः, ताभ्यो वा ढ्रक् [ [2]स्यात्। पक्षे ढक् ]। काणेरः। काणेयः। दासेरः। दासेयः।

**पितृष्वसुश्छण्** ।४।१।१३२। [ पितृष्वसुश्छण् स्यादपत्येऽर्थे ]। अणोऽपवादः। पैतृष्वस्रीयः। **ढकि लोपः** ।४।१।१३३। पितृष्वसु- [ [1]रन्त्यस्य लोपः स्याड्ढकि ]। अत एव ज्ञापकाड्ढक्। पैतृष्वसेयः।

**मातृष्वसुश्च** ।४।१।१३४। पितृष्वसुर्यदुक्तं तदस्यापि स्यात्। मातृष्वस्रीयः। मातृष्वसेयः।

---

चटकस्य, चटकाया वा स्त्र्यपत्यं—चटका। गौधेर इति। ढ्रकि, ढस्य एयादेशः। 'लोपो व्योर्वलीति यकारलोपः। 'यस्येति चेत्याकारलोपः। कित्वा- दादिवृद्धिः। काणाया अपत्यं-काणेरः। अङ्गहीनैषा।

शीलहीनायां उदाहरति—दासेर इति। दास्या अपत्यमिति विग्रहः।

---

स्त्रियामपत्ये। स्त्री अपत्य में ऐरक् का लुक् हो।

गोधायाः। गोधा से ढ्रक् हो, अपत्य अर्थ में।

क्षुद्राभ्यो वा। क्षुद्राओं ( अङ्गविकल और शील रहित स्त्री वाचकों ) से-विकल्प से ढ्रक् हो, अपत्यार्थ में।

पितृष्वसु। पितृष्वसृ शब्द से अपत्य अर्थ में 'छण्' हो

ढकि लोपः। पितृष्वसृ के अन्त्य का लोप हो, ढक् परे रहते।

मातृष्वसुश्च। 'पितृष्वसृ' को जो जो कार्य कहे हैं, वे 'मातृष्वसृ' से भी हों।

---

१ शेषपूरणम्। २ क्वाचित्कः पाठः।

**कुलात्खः** ।४।१।१३९। [ [1]कुलात्खः स्यादपत्येऽर्थे ] । कुलीनः । तदन्तादपि [ [1]खः ], उत्तरसूत्रे 'अपूर्वपदा'दिति लिङ्गात् । आढ्यकुलीनः ।

**अपूर्वपदादन्यतरस्यां यड्ढकञौ** ४।१।१४०। कुलादित्येव । [ [1]अपूर्वपदात्कुलशब्दाद्यत्-ढकञौ वा स्तोऽपत्येऽर्थे ] । पक्षे खः । कुल्यः । कौलेयकः । कुलीनः । [ [2]पदग्रहणं किं ? । बहुकुल्यः । बाहुकुलेयकः । बहुकुलीनः ] ।

**महाकुलादञ्खञौ** ।४।१।१४१। 'अन्यतरस्या'मित्यनुवर्त्तते । [ [1]महाकुलादञ् खञौ वा स्तः । [3]पक्षे खः ] । माहाकुलः । माहाकुलीनः । [ [4]पक्षे- ] महाकुलीनः ।

**दुष्कुलाड्ढक्** ।४।१।१४२। [ [1]दुष्कुलाड् ढक् स्यात् ] वा । पक्षे-खः । दौष्कुलेयः । दुष्कुलीनः ।

**स्वसुश्छः** ।४।१।१४३। [ [1]स्वसुश्छः स्यादपत्ये ] स्वस्रीयः ।

---

तदन्तादपीति । तदन्तादपि कुलशब्दादनेन खो भवति । उत्तरसूत्रेऽपूर्वपदादिति पर्युदाससामर्थ्यात् । अन्यथा 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ती'ति तन्निषेधात्पर्युदासो व्यर्थ एव स्यादित्याशयः ।

---

कुलात्खः । कुल से और कुलान्त से भी ख प्रत्यय हो, अपत्य अर्थ में ।

अपूर्वपदा । पूर्वपद रहित कुलशब्द से यत् और ढकञ् प्रत्यय हों, विकल्प करके । अपत्य अर्थ में । पक्ष में-ख प्रत्यय भी होगा ।

महाकुलादञ् । महाकुल शब्द से अञ् और खञ् प्रत्यय हो, विकल्प करके, अपत्य अर्थ में । [ पक्ष में—ख प्रत्यय भी होगा ] ।

दुष्कुलात् । दुष्कुल से ढक् प्रत्यय हो, विकल्प से, अपत्य अर्थ में । [पक्ष में—ख प्रत्यय भी होगा ] ।

स्वसुश्छः । स्वसृ शब्द से छ प्रत्यय हो, अपत्य अर्थ में ।

---

१ शेषपूरणम् ।　　　　२ क्वचिन्न ।

३ लिखिते नास्ति ।　　　　४ लिखिते दृश्यते ।

भ्रातुर्व्यच्च।४।१।१४४। [भ्रातुर्व्यत् स्यादपत्ये] चाच्छः। [[3]अणोऽपवादः]। भ्रातृव्यः। भ्रात्रीयः। [[2]व्यन्सपत्ने।४।१।१४५। भ्रातुर्व्यन् स्यादपत्ये, प्रकृतिप्रत्ययसमुदायेन शत्रौ वाच्ये। भ्रातृव्यः शत्रुः]।

मनोर्जातावञ्यतौ, षुक् च ४।१।१६१। [[1]मनोरञ्यतौ स्तः, प्रत्ययसंनियोगेन मनोः षुगागमश्च, समुदायेन जातौ गम्यायाम्]। समुदायार्थो जातिः। मानुषः। मनुष्यः।

*तक्ष्णोऽण उपसङ्ख्यानम्। षपूर्वहन्धृतराज्ञामणि।६।४।१३५। एषामणि तद्धितेऽनो भस्याऽकारस्य लोपः [[2]स्यात्]। ताक्ष्णः।

तिकादिभ्यः फिञ्।४।१।१५४। [[1]तिकादिभ्यः फिञ् स्या-

---

समुदायार्थ इति। समुदायेन जातिश्चेदभिधेयेत्यर्थः। मनोरपत्यं-मानुषः। षपूर्वेति। षपूर्वो योऽन्, तस्य, हनादेश्च भस्याऽतो लोपः स्यादणीत्यर्थः। फलितार्थमाह--एषामिति। तक्ष्णोऽपत्यं-ताक्ष्णः।

---

भ्रातुर्व्यच्च। भ्रातृ शब्द से अपत्यार्थ में व्यत् प्रत्यय हो। और छ प्रत्यय भी हो।

व्यन् सपत्ने। भ्रातृ शब्द से अपत्य अर्थ में 'व्यन्' प्रत्यय हो, प्रकृति-प्रत्यय समुदाय से यदि शत्रु वाच्य हो तो।

मनोर्जातौ। मनु शब्द से अञ् और यत् प्रत्यय हों, और प्रत्यय संनियोग से मनु को षुक् आगम भी हो। समुदाय से यदि जातिवाच्य हो तो।

तक्ष्णोऽण्। तक्षन् शब्द से अपत्य अर्थ में अण हो,

षपूर्वहन्। षकार पूर्वक जो अन्, और हन्, और धृतराजन्, इनका जो भसञ्ज्ञक अन् का अकार, उसका लोप हो, अण् परे रहते।

तिकादिभ्यः। तिकादि से फिञ् हो, अपत्यार्थ में।

---

१ शेषपूरणम्। २ क्वचिन्न। ३ लिखिते नास्ति। ४ लिखिते दृश्यते।

दपत्येऽर्थे ] तैकायनिः । [ [1]वृद्धिर्यस्याऽचामादिस्तद्वृद्धम् ।१।१।७३। यस्य समुदायस्याऽचां मध्ये आदिवृद्धिस्तद् वृद्धसंज्ञं स्यात् ]।

उदीचां वृद्धादगोत्रात् ।४।१।१५७। [ [2]वृद्धसंज्ञादगोत्रात्फिञ् स्यादपत्ये, उदीचामाचार्याणां मतेन ]। आम्रगुप्तायनिः । प्राचान्तु-आम्रगुप्तिः ।

प्राचामवृद्धात्फिन्बहुलम् । ४ । १ । १६० । [[2]अवृद्धादपत्ये बहुलं फिन्स्यात्प्राचामाचार्याणां मतेन ]। ग्लुचुकायनिः ।

जनपदशब्दात्क्षत्रियादञ् ।४।१।१६८। जनपद-क्षत्रिययोर्वाचकादञ् [ स्यात् ], अपत्ये । पाञ्चालः । *क्षत्रियसमानशब्दाज्जनपदात्तस्य

---

पाञ्चाल इति । अत्र हि—पञ्चालशब्दो देशस्य, तद्देशस्थक्षत्रियाणां च वाचक इति 'जनपदशब्दा'दित्यञ् । राजन्यपत्यवदिति । राजन्यभिधेयेऽपत्यवत्प्रत्ययः स्यादित्यर्थः ।

पाञ्चाल इति । 'जनपदशब्दात्क्षत्रिया'दित्यञ् ।

---

वृद्धिर्यस्याचा । जिस समुदाय. के अचों के मध्य में आदि ( अच् ) वृद्धि हो, उस समुदायकी वृद्ध सञ्ज्ञा हो ।

उदीचां वृद्धा । गोत्र से भिन्न जो वृद्ध सञ्ज्ञक प्रादिपदिक, उससे अपत्य अर्थमें फिञ् प्रत्यय हो, उदीच्य आचार्यों के मत में ।

प्राचामवृद्धात् । अवृद्ध प्रातिपदिक से अपत्य अर्थ में बहुलता करके फिन् हो, प्राच्य आचार्यों के मत में ।

जनपदशब्दात् । जो जनपद ( देश ) वाचक शब्द—तद्देशवाची क्षत्रियों का वाचक भी हो, उससे अञ् प्रत्यय हो, अपत्य अर्थ में ।

क्षत्रियसमान । क्षत्रिय समान शब्द [ क्षत्रियाभिधायक जो शब्द, वही है वाचक शब्द जिसका ऐसा ] जो जनपद, उसके राजा में अपत्यवत् प्रत्यय हो ।

---

१ लिखिते नास्ति । २ शेषपूरणम् ।

राजन्यपत्यवत् । पञ्चालानां राजा—पाञ्चालः । *पूरोरण् । 'ओर्गुणः' पौरवः । [[1]द्व्यञ्मगधकलिङ्गसूरमसादण् ।४।१।१७०। [[2]जनपद-शब्दात् क्षत्रियाभिधायिनो द्व्यचो मगधादेश्चाऽपत्येऽण् वा स्यात् ]। द्व्यच्—आङ्गः । वाङ्गः । मागधः । कालिङ्गः । सौरमसः । तस्य राजन्यप्येवम्[1] ]। *पाण्डोर्ड्यण् । पाण्ड्यः । [[1]वृद्धेत्कोशलाऽजादाञ्ञ्यङ् ।४।१।१७१। [ [2]जनपदक्षत्रिययोर्वाचकेभ्यो वृद्धादिभ्यो ञ्यङ् स्यादपत्ये ] वृद्धात्—आम्बष्ठ्यः । सौवीर्यः । इत्—आवन्त्यः । कौशल्यः । अजादस्याऽपत्यम्—आजाद्यः ]।

कुरुनादिभ्यो ण्यः ।४।१।१७२। [ [2]जनपदशब्दात् क्षत्रियाभिधायिनः कुरुशब्दात्, नकारादिभ्यश्च ण्यः स्यादपत्ये ]। कौरव्यः । नैषध्यः ।

---

नादीति । नकारादिभ्य इत्यर्थः । कुरुशब्दात् द्व्यज्लक्षणेऽणि प्राप्ते, नकारादिभ्यश्च अञि प्राप्ते वचनमिदम् ।

---

पूरोरण् । पूरु से अपत्य अर्थ में अण् प्रत्यय हो ।

द्व्यञ्मगध । जनपद और क्षत्रिय वाची जो द्व्यच्, और मगधादि, उनसे अपत्य अर्थ में अण् प्रत्यय हो ।

पाण्डोर्ड्यण् । पाण्डु से ड्यण् प्रत्यय हो, अपत्य अर्थ में । [ और राज अर्थ में भी ] ।

वृद्धेत् । जनपद और क्षत्रियवाची जो वृद्धादि, उनसे ञ्यङ् प्रत्यय हो, अपत्य अर्थ में ।

कुरुनादिभ्यो । जनपद और क्षत्रियवाची जो कुरु शब्द, और नकारादि, तत्प्रकृतिक षष्ठ्यन्त समर्थ से 'ण्य' प्रत्यय हो ।

---

१ क्लिखिते-नास्ति । २ शेषपूरणम् ।

ते तद्राजाः ।४।१।१७४। अञादयस्तद्राजसंज्ञाः स्युः । **तद्राजस्य बहुषु तेनैवाऽस्त्रियाम्** ।२।४।६२। बहुष्वर्थेषु तद्राजस्य लुक् [ स्यात् ], तत्कृते बहुत्वे, न तु स्त्रियाम् । पञ्चाला इत्यादि ।

**कम्बोजाल्लुक्** ।४।१।१७५। [ [२]कम्बोजा-]-त्तद्राजस्य [ [१]लुक् स्यात् ]। कम्बोजः । कम्बोजौ । * **कम्बोजादिभ्य इति वक्तव्यम्** । चोलः । शकः । केरलः । यवनः ।

[ [२]**अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे**।४।१।७८। त्र्यादीनामन्त्यमुत्तमं, तस्य समीपमुपोत्तमम् । गोत्रे यावणिञौ विहितौ अनार्षौ, तदन्तयोर्गुरूपोत्तमयोः प्रातिपदिकयोः स्त्रियां ष्यङादेशः स्यात् । 'यङश्चाप्' । कुमुदगन्धेर्गोत्रापत्यं स्त्री—कौमुदगन्ध्या । वाराह्या । अनार्षयोः किम् ? । वासिष्ठी । गुरूपोत्तमयोः किम् ? । औपगवी । गोत्रे किम् ? । अहिच्छत्रे जाता–आहिच्छत्री[१] ] ।

## इत्यपत्याधिकारः ।*॥

---

अहिच्छत्रम्–पञ्चाल (फर्रुखाबाद) देशस्तन्नगरञ्च ('मुरादाबाद' 'बरेली'गति सम्प्रति प्रसिद्धम् ) ।

---

**ते तद्राजाः** । 'जनपदशब्दात्क्षत्रियादञ्' इत्यादि सूत्रों से विहित अञादि की 'तद्राज' सञ्ज्ञा हो ।

**तद्राजस्य बहुषु** । बहुत्व अर्थ में 'तद्राज' सञ्ज्ञक प्रत्यय का लुक् हो, तद्राज प्रत्ययार्थ कृत बहुत्व हो तो । परन्तु स्त्रीलिङ्ग में यह लुक् नहीं हो ।

**कम्बोजाल्लुक्** ॥ **कम्बोजादिभ्य इति वक्तव्यम्** ॥ कम्बोजादि से परे 'तद्राज' सञ्ज्ञक प्रत्यय का लुक् हो ।

**अणिञो** । गोत्र में विहित और अनार्ष ( ऋषि सम्बन्धी से भिन्न ) जो अण् और इञ्, तदन्त जो गुरूपोत्तम प्रातिपदिक, उस (के अन्त्य ) को स्त्रीलिङ्ग में ष्यङ् आदेश हो ।

---

१ शेषपूरणम् । २ लिखितेऽयं पाठो नास्ति ।

## अथ रक्ताद्यर्थकाः ।

**तेन रक्तं रागात् ।४।२।१।** [ [1]'तेने'ति तृतीयान्ताद्रागवाचकाद्रक्तमित्यर्थेऽण् स्यात् ]। कषायेण रक्तं वस्त्रं—काषायम् । माञ्जिष्ठम् । रागात्किम् ?। देवदत्तेन रक्तं वस्त्रम् ।

**लाक्षारोचनाट्ठक् ।४।२।२।** [[1]तृतीयान्ताभ्यामाभ्यां ठक् स्याद्रक्तेऽर्थे]। लाक्षिकः । रौचनिकः । * **शकलकर्दमाभ्यामुपसङ्ख्यानम्** । शाकलिकः । कार्दमिकः । * **नील्या अन्** । नील्या रक्तं वस्त्रं नीलम् ।

* **पीतात्कन्** । पीतकम् ।

* **हरिद्रामहारजनाभ्यामञ्** । माहारजनम् । हारिद्रम् ।

**नक्षत्रेण युक्तः कालः ।४।२।३।** [ तेनेति[2] तृतीयान्तात्कृतसन्धेः

---

तेन रक्तमिति । तृतीयान्ताद्रागवाचकात्समर्थाद्यथाविहितं प्रत्ययाः स्युः रक्तमित्यर्थे । महारजनं='कसुम्भा' इति प्रसिद्धम् । नक्षत्रेणेति । नक्षत्रपदमिह नक्षत्रयुक्तचन्द्रपरम् । पुष्ययुक्तेन चन्द्रमसा युक्तमित्यर्थः । नक्षत्राऽणीति । नक्षत्रसम्बन्धी योऽण्, तस्मिन्परतोऽनयोर्यकारस्य लोप इत्यर्थः ।

---

तेन रक्तं । राग (रंग) वाची तृतीयान्त कृतसन्धि समर्थ से 'रक्तम्' इस अर्थ में अण् प्रत्यय हो ।

लाक्षारोचना । रागवाचक तृतीयान्त समर्थ लाक्षा और रोचना शब्द से ठक् प्रत्यय हो, रक्तम् इस अर्थ में ।

शकलकर्दमाभ्यां । शकल और कर्दम से ठक् प्रत्यय हो, रक्तं इस अर्थ में

नील्या अन् । तृतीयान्त 'नीली' से अन् प्रत्यय हो, रक्त अर्थ में ।

पीतात्कन् । तृतीयान्त 'पीत' शब्द से कन् प्रत्यय हो, रक्त अर्थ में ।

हरिद्रामहारजना । तृतीयान्त हरिद्रा और महारजन से अञ् प्रत्यय हो, रक्त अर्थ में ।

नक्षत्रेण युक्तः । तृतीयान्त, कृतसन्धि, समर्थ जो—नक्षत्रविशेषयुक्त

---

१ शेषपूरणम् । २ लिखितेऽयं पाठो दृश्यते, न मुद्रिते ।

[१समर्थान्नक्षत्रविशेषयुक्तचन्द्रवाचिनः शब्दाद्युक्त इत्यर्थे प्राग्दीव्यतीया यथाविहितं प्रत्ययाः स्युः, योऽसौ युक्तः स कालश्चेत्१ ]। तिष्यपुष्ययोर्नक्षत्राऽणि यलोपः [२इति वाच्यम्]। पुष्येण युक्तं पौषम्–अहः।

लुबविशेषे।४।२।४। पूर्वेण विहितस्य लुप् [ स्यात् ], षष्टिदण्डात्मकस्य कालस्याऽवान्तरविशेषश्चेन्न गम्यते। अद्य पुष्यः।

दृष्टं साम।४।२।७। तेनेत्येव। [ १तृतीयान्तात्कृतसन्धेः समर्थादणादयः प्राग्दीव्यतीयाः प्रत्ययाः स्युः, यद् दृष्टं तत्साम चेत् ]। वसिष्ठेन दृष्टं–वासिष्ठं साम।

वामदेवाड्ड्यड्ड्यौ।४।२।९। [ १तृतीयान्ताद्वामदेवशब्दात् ड्यत्-ड्यौ स्तः। दृष्टं सामेत्यर्थे]। वामदेवेन दृष्टं साम–वामदेव्यम्।

---

दृष्टं सामेति। तृतीयान्तात् दृष्टमित्यर्थेऽणादयः स्युर्यद् दृष्टं तत्साम चेदित्यर्थः।

---

चन्द्रवाचक पुष्यादि शब्द, उनसे 'युक्त' अर्थ में यथाविहित अणादि प्राग्दीव्यतीय प्रत्यय हों। जो युक्त हो वह यदि काल हो तो।

तिष्यपुष्ययो। नक्षत्र सम्बन्धी अण् परे रहते तिष्य और पुष्य के यकार का लोप हो।

लुबविशेषे। 'नक्षत्रेण युक्तः कालः' इससे विहित जो प्रत्यय, उसका लुप् हो। षष्टिघस्यात्मक (२४घण्टा) काल का कोई अवान्तर विशेष ( काल) गम्यमान नहीं होता हो तो।

दृष्टं साम। तृतीयान्त समर्थ से 'दृष्टं' इस अर्थ में अणादि प्राग्दीव्यतीय प्रत्यय हों, जो दृष्ट है वह यदि–साम हो तो।

वामदेवात्। तृतीयान्त समर्थ वामदेव शब्द से ड्यत् और ड्य प्रत्यय हों, 'दृष्टं साम' इस अर्थ में।

---

१ शेषपूरणम्।  २ क्वचिन्न।

परिवृतो रथः ।४।२।१०। [ [1]तृतीयान्तात्कृतसन्धेः समर्थादणादयः स्युः, परिवृतेऽर्थे । यः परिवृतः स रथश्चेत् ]। वस्त्रेण परिवृतो-वास्त्रो रथः ।

तत्रोद्धृतममत्रेभ्यः ।४।२।१४। [ [1]सप्तम्यन्तात्कृतसन्धेः समर्थादमत्र-( पात्र )—वाचिनः शब्दादुद्धृतमित्यर्थे यथाविहितमणादयः स्युः ]। शरावे उद्धृतः-शाराव ओदनः ।

संस्कृतं भक्षाः ।४।२।१६। सप्तम्यन्तादण् स्यात्संस्कृतेऽर्थे, यत्संस्कृतं भक्षाश्चेत्ते स्युः । भ्राष्ट्रेषु संस्कृता-भ्राष्ट्रा [2]भक्षाः । शूलोखाद्यत् ।४।२।१७। [ [1]सप्तम्यन्ताभ्यां शूलोखाशब्दाभ्यां 'संस्कृतं भक्षा' इत्यस्मिन्नर्थे यत् स्यात् ]। अणोऽपवादः । शूले संस्कृतं—शूल्यं मांसम् । उख्यम् । दध्नष्ठक् ।४।२।१८। [ [1]सप्तम्यन्तात्समर्थाद्दध्नष्ठक् स्यात्संस्कृतं भक्षा इत्यर्थे ]। दध्नि संस्कृतं-दाधिकम् ।

---

शाराव इति । शरावे आदावेव पृथक्—स्थापितः । 'अवशिष्ट' इति यावत् ।

---

परिवृतो रथः । तृतीयान्त समर्थ से परिवृत अर्थ में प्राग्दीव्यतीय अणादि प्रत्यय हों, जो परिवृत है वह यदि रथ हो तो ।

तत्रोद्धृत । पात्र वाची सप्तम्यन्त समर्थ से 'उद्धृत' अर्थ में यथा विहित अणादि प्रत्यय हों ।

संस्कृतं भक्षाः । सप्तम्यन्त समर्थ से अण् प्रत्यय हो, संस्कृत अर्थ में, जो संस्कृत हो वह यदि 'भक्ष' हो तो ।

शूलोखाद्यत् । सप्तम्यन्त शूलादि से यत् प्रत्यय हो, संस्कृत अर्थ में, जो संस्कृत हो वह यदि 'भक्ष' हो तो ।

दध्नष्ठक् । सप्तम्यन्त समर्थ दधि शब्द से 'संस्कृतं भक्षाः' इस अर्थ में 'ठक्' प्रत्यय हो ।

---

१ शेषपूरणम् । २ 'यवाः' पाठ० ।

साऽस्मिन्पौर्णमासीति ।४।२।२१। [ [1]सेति प्रथमान्तात्पौर्णमासीवाचकादस्मिन्निति सप्तम्यर्थेऽण् स्यात् ] । 'इति'शब्दात्संज्ञायामिति लभ्यते । पौषी पौर्णमासी अस्मिन्–पौषो मासः ।

साऽस्य देवता ।४।२।२४। [[1]सेति प्रथमान्ताद्देवतावाचकात्षष्ठ्यर्थेऽण् स्यात् ] । इन्द्रो देवताऽस्य–ऐन्द्रं हविः । पाशुपतम् । बार्हस्पतम् । त्यज्यमानद्रव्ये उद्देश्यविशेषो देवता, मन्त्रस्तुत्या च । ऐन्द्रो मन्त्रः ।

कस्येत् ।४।२।२५। कशब्दस्य इकारादेशः[2] स्यात्प्रत्ययसंनियोगेन । 'यस्ये'ति लोपात्परत्वादादिवृद्धिः[3] । को=ब्रह्मा देवताऽस्य-कायं हविः । श्रीर्देवताऽस्य-श्रायम् ।

शुक्राद्घन् ।४।२।२६। [ [4]शुक्रात्साऽस्य देवतेत्यर्थे घन् स्यात् ] ।

---

साऽस्य देवतेति । 'साऽस्मिन् पौर्णमासी'त्यतः 'सा' इति प्रकृतमपि, संज्ञासम्बद्धमिति पुनरत्र 'सा'ग्रहणम् । प्रथमान्तादस्य देवतेत्यर्थे यथाविहितं प्रत्ययाः स्युरित्यर्थः ।

देवताशब्दस्य लोकप्रसिद्धदेवतावाचकत्वे 'पितरो देवता अस्य पित्र्य'मित्याद्यनुपपत्तिरत आह—त्यज्यमानेति । मन्त्रेति । मन्त्रेण या स्तूयते साऽपि देवतेत्यर्थः । यथा 'अग्निमीळे' इत्यादावग्न्यादिः ।

---

साऽस्मिन् । प्रथमान्त समर्थ से, सञ्ज्ञा में, 'अस्मिन्' इस अर्थ में अणादि प्रत्यय हों, जो प्रथमान्त है, वह पौर्णमासी हो तो ।

साऽस्य देवता । प्रथमान्त से 'अस्य' अर्थ में अणादि प्रत्यय हों, जो प्रथमान्त है, वह यदि देवता वाचक हो तो ।

कस्येत् । क शब्द को इत् आदेश हो, प्रत्यय के सनियोग में ।

शुक्राद्घन् । प्रथमान्त समर्थ शुक्र शब्द से 'अस्य' इस अर्थ में घन् प्रत्यय हो, जो प्रथमान्त है, वह यदि देवता वाचक हो तो ।

---

१ क्वाचित्कः पाठः । २ 'इकारः स्यात्' । ३ 'आदौ वृद्धिः', । ४ शेषपूरणम् ।

शुक्रियम्। सोमाट्ट्यण् ।४।२।३०। [ [1]सोमशब्दाट्ट्यण् स्यात्साऽस्य-देवतेत्यस्मिन् विषये ]। सौम्यम्।

वाय्वृतुपित्रुषसो यत् ।४।२।३१। [ [1]वाय्वादिभ्यो यत्स्यात्साऽस्य देवतेत्यस्मिन्विषये ] । वायव्यम्। ऋतव्यम्।

रीङृतः ।७।४।२७। अकृद्यकारेऽसार्वधातुके यकारे, च्वौ च परे ऋदन्ताङ्गस्य रीङादेशः [स्यात्[2]]। 'यस्येति च'। पित्र्यम्। उषस्यम्।

द्यावापृथिवी-शुनासीर-मरुत्वद्-ग्नीषोम-वास्तोष्पति-गृहमेधाच्छ च ।४।२।३२। [ [1]द्यावापृथिव्यादिभ्यश्छः स्यात्साऽस्य देवतेत्यस्मिन्विषये]। चाद्यत्। द्यावापृथिवीयम्। द्यावापृथिव्यम्। शुनासीरीयम्। शुनासीर्यम्।

अग्नेर्ढक् ।४।२।३३। [ [1]अग्नेर्ढक् स्यात्साऽस्य देवतेत्यर्थे]। आग्नेयम्

---

पित्र्यमिति। पितरो देवता अस्य–पित्र्यम्।

उषा देवता अस्य–उषस्यम्।

---

सोमाट्ट्यण्। प्रथमान्त समर्थ सोम शब्द से 'अस्य देवता' इस अर्थ में ट्यण् प्रत्यय हो।

वाय्वृतु। प्रथमान्त समर्थ वायु आदि से 'अस्य देवता' इस अर्थ में यत् प्रत्यय हो।

रीङृतः। कृद्भिन्न यकार, असार्वधातुक यकार, और च्वि परे रहते ऋदन्त अङ्ग को रीङ् आदेश हो।

द्यावापृथिवी। द्यावापृथिवी आदि प्रथमान्त समर्थ से 'अस्य देवता' इस अर्थ में छ और यत् प्रत्यय हों।

अग्नेर्ढक्। प्रथमान्त समर्थ अग्नि शब्द से 'अस्य देवता' अर्थ में ढक् प्रत्यय हो।

---

१ शेषपूरणम्। २ क्वचिन्न।

**महाराजप्रोष्ठपदाट्ठञ्** ।४।२।३५। [ [1]महाराजशब्दात्प्रोष्ठपदशब्दाच्च ठञ् स्यात्साऽस्यदेवतेत्यस्मिन्विषये ]। माहाराजिकम्। प्रौष्ठपदिकम्।

**देवताद्वन्द्वे च** ।७।३।२१। अत्र पूर्वोत्तरपदयोराद्यचो वृद्धिः स्याञ्ञिति,णिति, किति च। आग्निमारुतम्। **नेन्द्रस्य परस्य** ।७।३।२२। [ [1]परस्येन्द्रस्य वृद्धिर्न स्यात् ]। सौमेन्द्रः। परस्य किम्?। ऐन्द्राग्नः।

**दीर्घाच्च वरुणस्य** ।७।३।२३। [ [1]दीर्घात्परस्य वरुणस्य ] न वृद्धिः। ऐन्द्रावरुणम्। दीर्घात्किम्?। 'आग्निवारुणीमनड्वाहीम् [—आलभेत' ]।

**पितृव्य-मातुल-मातामह-पितामहाः** ।४।२।३६। एते निपात्यन्ते। पितुर्भ्राता—पितृव्यः। [ [2]'मातुर्डुलच्' ]। मातुर्भ्राता—मातुलः।

[ [2]'मातृपितृभ्यां पितरि डामहच्' ]। मातुः पिता—मातामहः। पितुः पिता—पितामहः। [ ❋[2]मातरि षिच्च। मातामही। पितामही ]।

---

इह भस्याऽढ इति। इह = 'गार्भिण'मित्यत्र।

---

**महाराज**। प्रथमान्त समर्थ महाराज और प्रोष्ठपद से 'अस्य देवता' इस अर्थ में ठञ् प्रत्यय हो।

**देवताद्वन्द्वे च**। देवता द्वन्द्व में–पूर्वपद और उत्तर पद के आदि अच् को वृद्धि हो, ञित्, णित् और कित् परे रहते।

**नेन्द्रस्य परस्य**। पर पदस्थ इन्द्र शब्द को वृद्धि नहीं हो।

**दीर्घाच्च**। दीर्घ से परे जो वरुण शब्द उसको वृद्धि नहीं हो।

**पितृव्य मातुल**। पितृव्य आदि शब्द निपातित हो।

**मातुर्डुलच्**। मातृ शब्द से भ्रातृ अर्थ में डुलच् प्रत्यय हो।

**मातृपितृभ्यां**। षष्ठ्यन्त मातृ और पितृ से पिता अर्थ में 'डामहच्' हो।

**मातरि षिच्च**। षष्ठ्यन्त मातृ और पितृ शब्द से माता अर्थ में डामहच् प्रत्यय हो, और वह षित् भी हो।

---

१ शेषपूरणम्।  २ क्वाचित्कः पाठः।

**तस्य समूहः ।४।२।३७।** [ [1]षष्ठ्यन्तात्कृतसन्धेः समर्थात्समूह इत्यर्थे यथाविहितमणादयः प्राग्दीव्यतीयाः प्रत्ययाः स्युः ]। काकानां समूहः-काकम्। बकानां समूहो-बाकम्। **भिक्षादिभ्योऽण् ।४।२।३८।** [ [1]भिक्षादिभ्योऽण् स्यात्तस्य समूह इत्येतस्मिन्विषये ]। भैक्षम्। गर्भिणीनां समूहो–गार्भिणम्।

इह 'भस्याढे' इति पुंवद्भावे कृते—**इनण्यनपत्ये ।६।४।१६४।** अनपत्यार्थेऽणि इन्प्रकृत्या [[2]स्यात्]। तेन 'नस्तद्धिते' इति टिलोपो न। युवतीनां समूहो-यौवनम्। अन्नन्तादनुदात्तादेरञ्—यौवतम्।

**गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद्वुञ् ।४।२।३९।** [ [1]गोत्रादिभ्यो वुञ् स्यात्तस्य समूह इत्येतस्मिन्विषये ]। ग्लुचुकायनीनां समूहो—ग्लौचुकायनकम्। औक्षकमित्यादि। 'आपत्यस्य चे'ति यलोपे प्राप्ते—।

***प्रकृत्या अके राजन्यमनुष्ययुवानः** । राजन्यकम्। मानुष्यकम्।

***वृद्धाच्चेति वक्तव्यम्** । वार्द्धकम्।

---

यौवनामति । पुंवद्भावात्तिप्रत्ययनिवृत्तिः । 'अ'निति प्रकृतिभावः ।

---

तस्य समूहः। षष्ठ्यन्त कृतसन्धि समर्थ से समूह अर्थ में यथाविहित प्राग्दीव्यतीय अणादि प्रत्यय हों।

भिक्षादिभ्यो। षष्ठ्यन्त समर्थ भिक्षादि से समूह अर्थमें अण् प्रत्यय हो।

इनण्यनपत्ये। अनपत्यार्थक अण् परे रहते इन् प्रकृति करके रहे।

गोत्रोक्षो। षष्ठ्यन्त गोत्र (अपत्यमात्र लौकिक गोत्र) प्रत्ययान्त, और उक्ष आदि से समूह अर्थ में वुञ् हो।

प्रकृत्या अके। 'अक' ( वु ) प्रत्यय परे रहते राजन्यादि प्रकृति से रहें।

वृद्धाच्च। षष्ठ्यन्त वृद्ध से समूह अर्थ में वुञ् हो।

---

१ शेषपूरणमेतत्। २ क्वाचित्कः पाठः।

केदाराद्यञ्च ।४।२।४०। [ [1]षष्ठ्यन्तात्कृतसन्धेः समर्थात्केदारशब्दाद्यञ् स्यात्समूहेऽर्थे ] । चाद्वुञ् । कैदार्यम् । कैदारकम् ।

*गणिकाया यञ् वक्तव्यः । गाणिक्यम् ।

ठञ् कवचिनश्च ।४।२।४१। [[1]षष्ठ्यन्तात्कवचिनः समूहेऽर्थे ठञ् स्यात् ]। चात्केदारादपि। कवचिनां समूहः–कावचिकम् । [कैदारिकम्] ।

ग्रामजनबन्धुभ्यस्तल् ।४।२।४३। [[1]षष्ठ्यन्तेभ्यो ग्रामादिभ्यस्तल् स्यात्समूहेऽर्थे ]। ग्रामता। जनता। बन्धुता। *तलन्तं स्त्रियाम् ।

*गजसहायाभ्यां चेति वक्तव्यम् । गजता । सहायता ।

*अह्नः खः क्रतौ । अहीनः क्रतुः ।

अचित्तहस्तिधेनोष्ठक् ।४।२।४७। [[1]षष्ठ्यन्तेभ्यो, हस्तिधेनुशब्दा-

---

अह्नःखइति। क्रतौ वर्त्तमानादहञ्शब्दात्समूहेऽर्थे खः स्यादित्यर्थः। अहीन इति। 'अहीनः' इत्यत्र अहःशब्देन सौत्यानि अहानि विवक्षितानि। अहर्गणसाध्यसुत्याकः क्रतुरित्यर्थः। 'अह्नष्टखोरेवे'ति नियमाट्टिलोपो न।

---

केदाराद्यञ्च। षष्ठ्यन्त समर्थ केदार से यञ् और वुञ् प्रत्यय हो।

गणिकाया यञ्। षठ्यन्त गणिका से समूह अर्थ में यञ् हो।

ठञ् कवचिन। षठ्यन्त कवचिन् और केदार शब्द से समूह अर्थ में ठञ् प्रत्यय हो।

ग्रामजन। ग्रामादि से समूह अर्थ में तल् प्रत्यय हो।

तलन्तं स्त्रियाम्। तलन्त शब्द स्त्रीलिङ्ग में हो।

गजसहाया। गज और सहाय से तल् प्रत्यय हो, समूह अर्थ में।

अह्नः खः। अहन् शब्द से ख प्रत्यय हो, समूह अर्थ में, समुदाय से क्रतु वाच्य हो तो।

अचित्तहस्ति। अचित्त ( अप्राणी ) वाचक और हस्ती शब्द और धेनु शब्द से ठक् हो, समूह अर्थ में।

---

1 शेषपूरणमेतत्।

भ्यां च ठक् स्यात्समूहेऽर्थे[1]]।

**इसुसुक्तान्तात्कः** ।७।२।५१। इस्, उस्, उक्, त—एतदन्तात्परस्य ठस्य कः [ [2]स्यात् ]। साक्तुकम्। हास्तिकम्। धैनुकम्।

**केशाश्वाभ्यां यञ्छावन्यतरस्याम्** ।४।२।४८। [[1]षष्ठ्यन्ताभ्यां आभ्यां यञ्छौ वा स्तः, समूहेऽर्थे ]। पक्षे ठगणौ। कैश्यम्। कैशिकम्। अश्वीयम्। आश्वम्।

**पाशादिभ्यो यः** ।४।२।४९। [[1]पाशादिभ्यो यः स्यात्समूहेऽर्थे ]। पाश्या। तृण्या। धूम्या। वन्या। वात्या। **खलगोरथात्** ।४।२।५०। [ [1]षष्ठ्यन्तेभ्यः समर्थेभ्यः खलादिभ्यो यः स्यात्समूहेऽर्थे ]। खल्या। गव्या। रथ्या। **इनित्रकट्यचश्च** ।४।२।५१। खलादिभ्यः [ [1]इनि-त्र-कट्यचः ] क्रमात्स्युः। खलिनी। गोत्रा। रथकट्या। * **खलादिभ्य इनिर्वक्तव्यः**। डाकिनी। कुटुम्बिनी। आकृतिगणोऽयम्।

---

**इसुसुक्ता**। इस्, उस्, उक् और त—एतदन्त से परे जो 'ठ' उसको 'क' आदेश हो।

**केशाश्वाभ्यां**। केश और अश्व से समूह अर्थ में क्रम से यञ् और छ प्रत्यय हों, विकल्प करके। पक्ष में—क्रम से ठक् और अण् भी हो।

**पाशादिभ्यो**। पाशादि से समूह अर्थ में 'य' प्रत्यय हो।

**खलगो**। षष्ठ्यन्त—खल, गो, रथ से 'य' प्रत्यय हो, समूह अर्थ में।

**इनित्रकट्य**। खलादि से क्रम से, इनि, त्र, और कट्यच् प्रत्यय हों, समूह अर्थ में।

**खलादिभ्यः**। खलादि से इनि हो—ऐसा कहना चाहिए। (अर्थात्—केवल 'खल' से ही नहीं, किन्तु खलादि से इनि कहना चाहिए)।

---

१ शेषपूरणमेतत्। २ क्वाचित्कः पाठः।

**तदस्यां प्रहरणमिति क्रीडायां णः ।४।२।५७।** [ [1]तदिति प्रथमान्तात्समर्थादस्यामिति सप्तम्यर्थे ण-प्रत्ययः स्यात् । यत्तदिति प्रथमानिर्दिष्टं, प्रहरणं चेत्तद्भवति । यदस्यामिति निर्दिष्टं, क्रीडा चेत्सा भवति] । दण्डः प्रहरणमस्यां क्रीडायां—दाण्डा । मौष्टा ।

**घञः साऽस्यां क्रियेति ञः ।४।२।५८।** घञन्तात् क्रियावाचिनः प्रथमान्तादस्यामित्यर्थे स्त्रीलिङ्गे ञप्रत्ययः [ [2]स्यात् । 'घञ' इति कृद्ग्रहणाद् गतिकारकपूर्वस्यापि ग्रहणम् ] ।

**श्येन-तिलस्य पाते ञे ।६।३।७१।** अनयोर्मुमागमः[3] स्यात्, ञ-प्रत्यये परे, पातशब्दे उत्तरपदे । श्यैनम्पाता मृगया । तैलम्पाता स्वधा । श्येनतिलस्य किम् ? । दण्डपातोऽस्यां—दाण्डपाता तिथिः ।

**तदधीते तद्वेद ।४।२।५९।** [ 'त'दिति द्वितीयान्तात्समर्थादधीते

---

तदस्यां प्रहरणमिति । प्रथमान्तात्प्रहरणवाचकात्सप्तम्यन्तार्थे णः स्यात्स चेत्सप्तम्यन्तः क्रीडा भवति इत्यर्थः । तदधीत इति । द्वितीयान्ताद्ध्येतरि, वेदितरि च प्रत्ययः स्यादित्यर्थः । द्विस्तत्पदोपादानमधीयाने, विदुषि च प्रत्येकं विधानार्थम् ।

---

तदस्यां । प्रथमान्त प्रहरण वाचक से 'अस्यां प्रहरणं' इस अर्थ में 'ण' प्रत्यय हो, जो सप्तम्यन्त है—वह यदि क्रीडा हो तो ।

घञः सास्यां । घञन्त क्रियावाचक प्रथमान्त से 'अस्याम्' इस अर्थ में, स्त्रीलिङ्ग में 'ञ' प्रत्यय हो ।

श्येन तिलस्य । श्येन और तिल शब्द को मुम् आगम हो, ञ प्रत्यय परे रहते, पात शब्द उत्तर पद परे रहते ।

तदधीते । द्वितीयान्त समर्थ से 'अधीते' और 'वेद' अर्थ में यथाविहित अणादि प्रत्यय हों ।

---

१ शेषपूरणम् । २ क्वाचित्कः पाठः । ३ 'आगम' इति क्वचिदेव दृश्यते ।

वेद वेत्यर्थेऽणादयः स्युः] । न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच् ।७।३।३। पदान्ताभ्यां यकारवकाराभ्यां परस्याऽचो न वृद्धिः, किंतु ताभ्यां पूर्वौ क्रमादैजावागमौ स्तः। व्याकरणमधीते, वेत्ति वा-वैयाकरणः। क्रमादिभ्यो वुन् ।४।२।६१। [ [1]क्रमादिभ्यो द्वितीयान्तेभ्यः समर्थेभ्यो वुन् स्यादधीते-वेदेत्यर्थयोः ]। क्रमकः। पदकः। शिक्षकः। मीमांसकः।

क्रतूक्थादिसूत्रान्ताट्ठक् ।४।२।६०। [ [1]क्रतुविशेषवाचिभ्य, उक्थादिभ्यश्च, सूत्रान्ताच्च ठक् स्यात्, तदधीते तद्वेदेत्येतस्मिन्विषये ]। क्रतुविशेषवाचिनामेव ग्रहणम्। तेभ्यो मुख्यार्थेभ्यो वेदितरि, तत्प्रतिपादकग्रन्थपरेभ्यस्त्वध्येतरि। आग्निष्टोमिकः। वाजपेयिकः। उक्थं-सामविशेषः, तल्लक्षणपरो ग्रन्थविशेषो लक्षणया—उक्थम्। तदधीते, वेद वा—औक्थिकः। * मुख्यार्थात्तूक्थशब्दाट्ठगणौ नेष्येते।

---

क्रममधीते वेद वा-क्रमकः। पदान्यधीते वेद वा-पदकः।

शिक्षामधीते वेद वा-शिक्षकः।

अग्निष्टोमं वेत्ति, अग्निष्टोमप्रतिपादकग्रन्थमधीते वा—आग्निष्टोमिकः।

---

न य्वाभ्यां। पदान्त यकार और वकार से परे जो अच्, उसको वृद्धि नहीं हो, किन्तु यकार और वकार से पूर्व क्रम से ऐच् ( ऐ-औ ) आगम हो। [ अर्थात्—य से पूर्व ऐ, व से पूर्व औ अगम हो ]।

क्रमादिभ्यो। द्वितीयान्त क्रमादि से 'अधीते' 'वेद' इन अर्थों में 'वुन्' हो।

क्रतूक्थादि। क्रतुविशेषवाची से वेदिता अर्थ में, क्रतु प्रतिपादक ग्रन्थ वाची से अध्येता अर्थ में ठक् प्रत्यय हो।

मुख्यार्थात्तूक्थ। मुख्यार्थक ( सामविशेषवाची ) उक्थ शब्द से ठक् और अण् इष्ट नहीं है, किन्तु उक्थलक्षणप्रतिपादक ग्रन्थ वाची जो गौण उक्थ शब्द है, उससे ही ठक् और अण् इष्ट हैं।

---

१ शेषपूरणम्।

नैयायिकः । वार्त्तिकः । लौकायतिकः ।

*सूत्रान्ताच्चकल्पादेरेवेष्यते । साङ्ग्रहसूत्रिकः । अकल्पादेः किम् ? । काल्पसूत्रः ।

* विद्या-लक्षण-कल्पान्ताच्चेति वक्तव्यम् । वायसविद्यिकः । गौलक्षणिकः । पाराशरकल्पिकः ।

* अङ्ग-क्षत्र-धर्म-त्रि-पूर्वाद्विद्यान्तान्नेति वक्तव्यम् । आङ्गविद्यः । क्षात्त्रविद्यः । धार्मविद्यः । त्रिविधा विद्या—त्रिविद्या, तामधीते, वेत्ति वा—त्रैविद्यः ।

[ इति रक्ताद्यर्थकाः[1] ] ।

अथ चातुरर्थिकाः ।

तदस्मिन्नस्तीति देशे तन्नाम्नि ।४।२।६७। [ [2]अस्तीत्युपाधिकात्प्रथमान्तादस्मिन्निति सप्तम्यन्तार्थे यथाविहितमणादयः प्रत्ययाः

न्यायमधीते, वेद वा नैयायिकः ।

वृत्तिमधीते, वेद वा—वार्त्तिकः ।

लोकायतं—चार्वाकनास्तिकदर्शनम्, तदधीते, वेद वा—लौकायतिकः ।

त्रिविधा विद्या—त्रिविद्या—आन्वीक्षिक्यादिरूपा । तदस्मिन्नस्तीति । अस्तीत्युपाधिकात्प्रथमान्तादस्मिन्निति सप्तम्यन्तार्थे यथाविहितं प्रत्ययः स्यात् । प्रत्ययान्तनामा देशश्चेदित्यर्थः । तत्=प्रत्ययान्तं—नाम यस्य तस्मिन्—'तन्नाम्नि' इति च विग्रहः ।

सूत्रान्ता । सूत्रान्त से विहित जो ठक् वह अ-कल्पादि से ही होता है ।

विद्यालक्षण । विद्यान्त, लक्षणान्त और कल्पान्त से भी ठक् हो, 'अधीते' और 'वेद' इन अर्थों में।

अङ्गक्षत्र । अङ्गादिपूर्वक जो विद्यान्त समर्थ, उससे ठक् नहीं हो ।

तदस्मिन्नस्तीति । अस्त्युपाधिक प्रथमान्त से 'अस्मिन्' इस अर्थ में यथाविहित अणादि प्रत्यय हों, यदि उस प्रत्ययान्त नामवाला कोई देश हो तो ।

१ अयं पाठो लिखिते नास्ति । २ शेषपूरणमेतत् ।

स्युः। प्रत्ययान्तनामा देशश्चेत् [1]]। उदुम्बराः सन्त्यस्मिन्देशे—औदुम्बरो देशः। **तेन निर्वृत्तम्** ।४।२।६८। [ [1]तृतीयान्तात्कृतसन्धेर्निर्वृत्तमित्यर्थे यथाविहितमणादयः स्युः। प्रत्ययान्तनामा देशश्चेत् ]। कुशाम्बेन निर्वृत्ता—कौशाम्बी नगरी। **तस्य निवासः** ।४।२।६९। [ [1]षष्ठ्यन्तात्समर्थात्कृतसन्धेर्निवास इत्यर्थे यथाविहितमणादयः स्युः। प्रत्ययान्तनामा देशश्चेत् ]। शिबीनां निवासो देशः—शैबः।

**अदूरभवश्च** ।४।२।७०। [ [1]षष्ठ्यन्तात्कृतसन्धेः समर्थाददूरभव इत्यर्थे, चात्पूर्वेषु त्रिष्वप्यर्थेषु च, यथाविहितमणादयः स्युः, तन्नामा देशश्चेत् ]। विदिशाया अदूरभवं [ नगरं ]—वैदिशम्।

**वुञ्छण्कठजिलसेनिरढञ्ण्ययफक्फिञिञ्ञ्यककठकोऽरीहणकृशाश्वर्श्यकुमुदकाशतृणप्रेक्षाऽश्मसखिसङ्काशबलपक्षकर्णसुतङ्गमप्रगदिन्वराहकुमुदादिभ्यः** ।४।२।८०। [ [1]एभ्योऽरीहणादिभ्यः] सप्तदशभ्यः सप्तदश [ [1]प्रत्ययाः ] क्रमात्स्युश्चतुरर्थ्याम्।

---

तेनेति। तृतीयान्तान्निर्वृत्त इत्यर्थेऽणादयः स्युस्तन्नाम्नि देशे इत्यर्थः।

तस्य निवास इति। षष्ठ्यन्तान्निवास इत्यर्थे अणादयः स्युस्तन्नाम्नि देशे इत्यर्थः।

चतुरर्थ्यामिति। 'तदस्मिन्नस्तीति देशे तन्नाम्नि' 'तेन निर्वृत्तम्' 'तस्य

---

तेन निर्वृत्तं। तृतीयान्त समर्थ से 'निर्वृत्त' अर्थ में यथाविहित अणादि प्रत्यय हों। यदि प्रत्ययान्तनामा कोई देश हो तो।

तस्य निवासः। षष्ठ्यन्त समर्थ से निवास अर्थ में यथा विहित अणादि प्रत्यय हों। यदि प्रत्ययान्त, किसी देश का नाम हो तो।

अदूरभवश्च। षष्ठ्यन्त से 'अदूर भव' अर्थ में यथा विहित अणादि प्रत्यय हों। वह प्रत्ययान्त यदि किसी ( देश ) की सञ्ज्ञा हो तो।

वुञ्छण्। अरीहणादि १७ शब्दों से वुञ् आदि १७ प्रत्यय हों, पूर्वोक्त चतुरर्थी

---

१ शेषपूरणमेतत्।

'अरीहणादिभ्यो वुञ्' । अरीहणेन निर्वृत्तम्-आरीहणकम् ।
'कृशाश्वादिभ्यश्छण्' । कार्शाश्वीयम् ।
'ऋश्यादिभ्यः कः' । ऋश्यकम् ।
'कुमुदादिभ्यष्ठच्' । कुमुदिकम् ।
'काशादिभ्य इलः' । काशिलः ।
'तृणादिभ्यः सः' । तृणसम् । 'प्रेक्षादिभ्य इनिः' । प्रेक्षी ।
'अश्मादिभ्यो रः' । अश्मरः ।
'सख्यादिभ्यो ढञ्' । साखेयम् ।
'सङ्काशादिभ्यो ण्यः' । साङ्काश्यम् ।
'बलादिभ्यो यः' । बल्यम् । 'पक्षादिभ्यः फक्' । पाक्षायणः ।
'पथः पन्थ च' । पान्थायनः ।
'कर्णादिभ्यः फिञ्' । कार्णायनिः ।
'सुतङ्गमादिभ्य इञ्' । सौतङ्गमिः ।
'प्रगदिनादिभ्यो ञ्यः' । प्रगदिन्-प्रागद्यः ।
'वराहादिभ्यः कक्' । वाराहकः ।
'कुमुदादिभ्यष्ठक्' । कौमुदिकः ।

---

निवासः' 'अदूरभवश्च' इति चतुर्ष्वर्थेषु इत्यर्थः । चतुर्णामर्थानां समाहारः-

---

( चारों अर्थो ) में । अथात्-१ अरीहणादि से 'वुञ्', २ कृशाश्वादि से 'छण्' ३ ऋश्यादि से 'क', ४ कुमुदादि से 'ठच्', ५ काशादि से 'इल', ६ तृणादि से 'स', ७ प्रेक्षादि से 'इनि', ८ अश्मादि से 'र', ९ सख्यादि से 'ढञ्', १० सङ्काशादि से 'ण्य', ११ बलादि से 'य', १२ पक्षादि से 'फक्', १३ कर्णादि से 'फिञ्', १४ सुतङ्गमादि से 'इञ्', १५ प्रगदिनादि से 'ञ्य', १६ वराहादि से 'कक्', और १७ कुमुदादि से ठक् प्रत्यय हो ।

**जनपदे लुप्** ।४।२।८१। जनपदे वाच्ये चातुरर्थिकस्य लुप् [ [1]स्यात् ]।

**लुपि युक्तवद्व्यक्तिवचने** ।४।२।५१। लुपि सति प्रकृतिवल्लिङ्ग-वचने स्तः। पञ्चालानां निवासो जनपदः–पञ्चालाः। [[1]कुरूणां निवासो जनपदः–] कुरवः। अङ्गाः। वङ्गाः। कलिङ्गाः।

**वरणादिभ्यश्च** ।४।२।८२। [[2]वरणादिभ्यश्चातुरर्थिकस्य प्रत्ययस्य लुप् स्यात् ]। अजनपदार्थ आरम्भः। वरणानामदूरभवं नगरं —वरणाः।

**शर्कराया वा** ।४।२।८३। [3]अस्माच्चातुरर्थिकस्य वा लुप्स्यात्।

**ठक्छौ च** ।४।२।८४। शर्कराया—[ष्ठक्-छ-] एतौ स्तः। कुमुदादौ, वराहादौ च पाठसामर्थ्यात्पक्षे ठच्-ककौ। वाग्रहणसामर्थ्यात्पक्षे औत्सर्गिकोऽण्। तस्य लुब्विकल्पः। षड् रूपाणि। शर्करा। शार्करम्। शार्करिकम्। शर्करीयम्। शर्करिकम्। शार्करकम्।

---

—चतुरर्थी। तस्यामिति विग्रहः। चतुर्ष्वर्थेषु भवः—चातुरर्थिकः। अध्यात्मादित्वाट्ठञ्। 'युक्तव'दित्यस्यार्थमाह—प्रकृतिवदिति। व्यक्तिः—लिङ्गम्।

वरणा इति। वरणा नाम नदी काश्या उत्तरदिशि प्रसिद्धा। अवयवबहुत्वाद्वा, पूजार्थे वा बहुवचनम्। परेतु वरणा वृक्षविशेषाः,–तेषामदूरभवं नगरमित्यर्थमाहुः।

---

जनपदे। जनपदवाच्य हो तो चातुरर्थिक प्रत्यय का लुप् हो।

लुपि युक्त। लुप् होने पर प्रकृति की तरह ही लिङ्ग और वचन हों।

वरणादिभ्यश्च। वरणादि से परे जो चातुरर्थिक प्रत्यय, उसका लुप् हो।

शर्करायावा। शर्करा शब्द से परे जो चातुरर्थिक प्रत्यय, उसका विकल्प से लुप् हो।

ठक्छौ च। शर्करा से ठक् और छ—ये प्रत्यय हों, चातुरर्थिक में।

---

१ क्वाचित्कः पाठः। २ शेषपूरणम्। ३ 'अस्याश्चातुरर्थिकस्य'।

नद्यां मतुप् ।४।२।८५। [ [1]नद्यां मतुप् स्या-]-च्चातुरर्थिकः । इक्षुमती ।

कुमुद-नड-वेतसेभ्यो ड्मतुप् ।४।२।८७। [ [1]कुमुदादिभ्यो ड्मतुप् स्याच्चातुरर्थिकः ]। झयः ।८।२।१०। [ [1]झयन्ता-] न्मतोर्मस्य वः [ [2]स्यात् ] कुमुद्वान् । नड्वान् ।

मादुपधायाश्च मतोर्वोऽयवादिभ्यः ।८।२।९। मवर्णाऽवर्णान्ता-न्मवर्णा-ऽवर्णोपधाच्च यवादिवर्जितात्परस्य मतोर्मस्य वः [ [2]स्यात् ]। वेतस्वान् । [ [3]किंवान् । ज्ञानवान् । विद्यावान् । लक्ष्मीवान् । यश-स्वान् । यवादेस्तु– यवमान् । भूमिमान् ]।

नड-शादाड् ड्वलच् ।४।२।८८। [ [2]आभ्यां ड्वलच् स्याच्चतुर-र्थ्याम् ]। नड्वलः । शाद्वलः । शिखाया वलच् ।४।२।८९। [ [1]शिखाया वलच् स्याच्चतुरर्थ्याम् ]। शिखावलं [ [2]नगरम् ]।

---

इक्षवः सन्त्यस्यां सा–इक्षुमती नदी । ( ओक्सस नदी )। उगित्वान्ङीप् । कुमुदानि सन्त्यस्मिन् देशे–कुमुद्वान् देशः । नडाः सन्त्यस्मिन्देशे नड्वलः ।

शाद्वल इति । 'शादो जम्बालघासयोः' इति, 'शाद्वलः शादहरिते' इति ऽमरः ।

---

नद्यां मतुप् । समुदाय से नदी अभिधेय हो तो मतुप् हो, चारों अर्थों में ।

कुमुदनड । कुमुदादि से ड्मतुप् हो, चारों अर्थों में ।

झयः । झयन्त से परे जो मतुप् का मकार, उसको वकार आदेश हो ।

मादुपधाया । यवादिवर्जित जो–मवर्णान्त, अवर्णान्त, मवर्णोपध, और वर्णोपध, उनसे परे जो मतुप् का मकार, उसको वकार आदेश हो ।

नडशादा । नड और शाद से 'ड्वलच्' प्रत्यय हो, चारों अर्थ में ।

शिखाया । शिखा शब्द से वलच् प्रत्यय हो, पूर्वोक्त चारों अर्थों में ।

---

1 शेषपूरणम् । 2 वाचिकः पाठः । 3 लिखिते नास्ति ।

**उत्करादिभ्यश्छः** ।४।२।९०। [ [1]एभ्यश्छः स्याच्चतुरर्थ्याम् ]। उत्करीयः।

**नडादीनां कुक् च** ।४।२।९१। [ [2]आगमोऽयम् । [1]नडादिभ्यश्छः स्यात् ,तत्संनियोगेन एषां कुगागमश्च]। नडकीयम् ।

***कुञ्चा ह्रस्वत्वञ्च** । कुञ्चकीयः ।

***तक्षन्नलोपश्च** । तक्षकीयः ।

॥ इति चातुरर्थिकाः ॥*॥

---

## अथ शैषिकाः ।

**शेषे** ।४।२।९२। अपत्यादिचतुरर्थ्यन्तादन्योऽर्थः-शेषः । तत्राऽणादयः स्युः। चक्षुषा गृह्यते-चाक्षुषं रूपम् । श्रावणः शब्दः । औपनिषदः पुरुषः । दृषदि पिष्टा-दार्षदाः सक्तवः । उलूखले क्षुण्ण-औलूखलो

---

लक्षणमिति । 'शेषे' इति विधिसूत्रमपि, अधिकारसूत्रमपि च । ननु चाक्षुषादीनां 'तस्येद'मित्यनेन, दार्षदादीनां च'संस्कृतं भक्षाः' इत्यनेनैवाऽणादिप्रत्ययेन सिद्धावस्य विधित्वं व्यर्थम् । एवमधिकारस्यापि न प्रयोजनम् ।

नचाऽस्याऽधिकारत्वाऽभावे चतुरर्थ्यामपत्यादिष्वर्थेषु च पूर्वोक्तेषु घादीनां प्रवृत्त्यापत्तिरिति वाच्यम् , 'उत्करादिभ्यश्छः' इत्युत्करादिगणे आर्द्रकशालादीनां

---

उत्करादिभ्यः । उत्करादि से छ प्रत्यय हो, चारों अर्थों में ।

नडादीनां । नडादि से छ प्रत्यय हो, और नडादि को कुक् आगम भी हो ।

कुञ्चा ह्रस्वत्वं च । कुञ्चा से छ प्रत्यय हो, और कुञ्चा को ह्रस्व भी हो ।

तक्षन्नलोपश्च । तक्षन् से छ प्रत्यय हो, और तक्षन् के नकार का लोप भी हो, चारों अर्थों में ।

शेषे । अपत्यादि चतुरर्थ्यन्त अर्थों से अन्य जो 'जात' 'भव' 'आगत' 'गृह्यते' 'पिष्ट' आदि अर्थ, उन अर्थों में तत्तत् प्रकृतियों से पूर्वोक्त अणादि प्रत्यय और वक्ष्यमाण घादि प्रत्यय हों ।

---

१ शेषपूरणम् । २ क्वाचित्कः पाठः ।

यावकः। अश्वैरुह्यते—आश्वो रथः। चतुर्भिरुह्यते—चातुरं शकटम्। चतुर्दश्यां दृश्यते—चातुर्दशं रक्षः।

'तस्य विकारः' इत्यतः प्राक् शेषाधिकारः।

**राष्ट्राऽवारपाराद्घखौ ।४।२।९३।** आभ्यां घ-खौ स्तः [शेषे]। राष्ट्रे जातादि—राष्ट्रियः। अवारपारीणः। ***अवारपाराद्विगृहीतादपि, विपरीताच्चेति वक्तव्यम्।** अवारीणः। पारीणः। पारावारीणः।

इह प्रकृतिविशेषाद्घादयष्ट्युट्युलन्ताः प्रत्यया उच्यन्ते। तेषां जातादयोऽर्थविशेषाः, समर्थविभक्तयश्च वक्ष्यन्ते।

---

पाठेन 'शेषे' इत्यतः प्राचीनेष्वर्थेषु घादयो न प्रवर्त्तन्ते इति ज्ञापनात्। अन्यथा 'वृद्धाच्छः' इत्येव सिद्धे स्तत्र तेषां पाठो व्यर्थ एव स्यात्। न च शेषाऽधिकाराऽभावे घादयो जातार्थे एव स्युः, सन्निहितत्वात्, भवादिष्वर्थेषु तु न स्युः। शेषाधिकारे तु—वक्ष्यमाणेषु सर्वेष्वप्यर्थेषु घादयः सिद्ध्यन्तीति वाच्यम्, 'तत्र जातः' इत्यनन्तरमेव 'प्रावृषष्ठप्' इत्यादिपाठवत् 'राष्ट्रावारपाराद्घखौ' इत्यादीनां पाठे करणीये, तदधिकारात्पूर्वं घादीनां पाठादेव वक्ष्यमाणेषु भवादिष्वर्थेषु घादीनां प्रवृत्तेर्लाभादधिकारस्य वैयर्थ्यादिति चेदुच्यते; 'आर्द्रकादिभ्यो यदि छः स्यात्तर्हि चतुरर्थ्यामेवे'ति विपरीतनियमस्यापि सम्भवेन, आर्द्रकादिपाठेन घादीनामपत्यादिष्वर्थेषु निवृत्तिर्न सम्भवतीति—अधिकारस्य आवश्यकत्वम्। एवं चाक्षुषादौ गृह्यमाणत्वप्रकारकबोधाय च विधित्वमप्यावश्यकमिति तत्त्वम्।

इह = शेषाधिकारे। प्रकृतिविशेषात् = राष्ट्र-ग्राम-नद्यादिरूपात्प्रकृतिविशेषात्।

---

राष्ट्रावार। राष्ट्र और अवारपार से क्रम से घ और ख प्रत्यय हों, शेष (जातादि) अर्थों में।

अवारपारा। अवारपार से—विगृहीत (अलग २) से, और विपरीत (पारावार) से भी पूर्वोक्त ख प्रत्यय हो।

ग्रामाद्यखञौ ।४।२।९४। [ [1]ग्रामाद्यखञौ स्तः, शेषे ]। ग्राम्यः। ग्रामीणः। नद्यादिभ्यो ढक् ।४।२।९७। [ [1]नद्यादिभ्यो ढक् स्याच्छेषे]। नादेयम्। माहेयम्। वाराणसेयम्।

दक्षिणापश्चात्पुरसस्त्यक् ।४।२।९८। [ [1]एभ्यस्त्यक् स्याच्छेषे ]। दाक्षिणात्यः। पाश्चात्यः। पौरस्त्यः।

द्युप्रागपागुदक्प्रतीचो यत् ।४।२।१०१। [ [1]एभ्यो यत्स्याच्छेषे]। दिव्यम्। प्राच्यम्। अपाच्यम्। उदीच्यम्। प्रतीच्यम्।

[ [2]कन्थायाष्ठक् ।४।२।१०२। कन्थायाष्ठक्स्याच्छेषे। कान्थिकः]।

अव्ययात्त्यप् ।४।२।१०४। [ [1]अव्ययात्त्यप् स्याच्छेषे ]। *अमेहक्वतसित्रेभ्य एव। अमात्यः। इहत्यः। क्वत्यः। ततस्त्यः। तत्रत्यः।

*त्यब्नेर्ध्रुव इति वाच्यम्। नित्यः। * निसो गते।

---

ग्रामे जातादि--ग्राम्यः। नद्यां जातादि-नादेयम्। दक्षिणा भवः—दाक्षिणात्यः। अमा = राजसमीपे, भवः—अमात्यः—मन्त्री।

---

ग्रामाद्यखञौ। ग्राम से जाताद्यर्थों में 'य' और 'खञ्' प्रत्यय हो।

नद्यादिभ्यो। नद्यादि से ढक् प्रत्यय हो, जाताद्यर्थों में।

दक्षिणा। दक्षिणा आदि से त्यक् प्रत्यय हो, भव, जातादि अर्थों में।

द्युप्रागपा। दिव् आदि से यत् प्रत्यय हो, जातादि अर्थों में।

कन्थायाः। कन्था से ठक् हो, जाताद्यर्थों में।

अव्ययात्त्यप्। अमेह। अमा आदि अव्ययों से ही त्यप् प्रत्यय हो, जाताद्यर्थों में।

त्यब्नेर्ध्रुवे। 'नि' से ध्रुव अर्थ में त्यप् हो।

निसो गते। 'निस्' से त्यप् हो, गत अर्थ में।

---

१ शेषपूरणम्। २ क्वाचित्कः पाठः। प्रायो लिखिते नास्ति।

ह्रस्वात्तादौ तद्धिते ।८।३।१०१। ह्रस्वादिणः सस्य षः [[1]स्या] त्तादौ तद्धिते । निर्गतो वर्णाश्रमेभ्यो निष्ट्यः—चाण्डालादिः ।

* अरण्याण्णः । आरण्याः सुमनसः ।

* दूरादेत्यः । दूरेत्यः । *उत्तरादाहञ् । औत्तराहः ।

ऐषमोह्यःश्वसोऽन्यतरस्याम् ।४।२।१०५। एभ्यस्त्यब्वा [ [1]स्याच्छेषे ]। पक्षे वक्ष्यमाणौ ट्यु-ट्युलौ । ऐषमस्त्यम् । ऐषमस्तनम् । ह्यस्त्यम् । ह्यस्तनम् । श्वस्त्यम् । श्वस्तनम् । पक्षे-'शौवस्तिकं' वक्ष्यते ।

[2]वृद्धिर्यस्याचामादिस्तद् वृद्धम् ।१।१।७३। यस्य समुदायस्याऽचां मध्ये आदिवृद्धिस्तद् वृद्धसंज्ञं स्यात । त्यदादीनि च ।१।१।७४। [ [1]त्यदादीनि च ] वृद्धसंज्ञानि स्युः । वृद्धाच्छः ।४।२।११४। [[1]वृद्धा-

---

वक्ष्यत इति । 'श्वसस्तुट् चे'ति सूत्रे ।

---

ह्रस्वात्तादौ । ह्रस्व इण् से परे जो सकार, उसको षत्व हो, तकारादि तद्धित परे रहते ।

अरण्याण्णः । अरण्य से 'ण' प्रत्यय हो, जाताद्यर्थों में ।

दूरादेत्यः । दूर से एत्य प्रत्यय हो, जाताद्यर्थों में ।

उत्तराद्याहञ् । उत्तर शब्द से आहञ् प्रत्यय हो, जातादि अर्थों में ।

ऐषमोह्यः । ऐषमस् आदि से त्यप् प्रत्यय विकल्प करके हो शेष अर्थों में ।

वृद्धिर्यस्या । जिस समुदाय के अचों में आदि वृद्धि हो, उसको 'वृद्ध' सञ्ज्ञा हो ।

त्यदादीनि च । त्यदादि की वृद्ध सञ्ज्ञा हो ।

वृद्धाच्छः । वृद्ध से छ प्रत्यय हो, जातादि अर्थों में ।

---

१ शेषपूरणम् ।

२ एकत्रादर्शे इदं सूत्रमेकशेषप्रकरणे पठ्यते । इह च 'वृद्धाच्छ' इत्यनन्तरं "त्यदादीनि चे"ति सूत्रं पठ्यते ।

च्छः स्याच्छेषे[1] ]। शालीयः। [ [2]मालीयः ]। तदीयः।

*वा नामधेयस्य वृद्धसंज्ञा। देवदत्तीयः। दैवदत्तः।

भवतष्ठक्छसौ ।४।२।११५। [ [3]वृद्धाद्भवत एतौ स्तः[4] ]। भावत्कः। [ [2]सिति च।१।४।१६। सिति प्रत्यये परे पूर्वं पदं स्यात् ]। जश्त्वम्। भवदीयः। 'वृद्धा'दित्यनुवृत्तेः शत्रन्तादणेव—भावतः।

काश्यादिभ्यष्ठञ्-ञिठौ ।४।२।११६। [ [1]काश्यादिभ्यष्ठञ्-ञिठौ स्तः, शेषे ]। इकार उच्चारणार्थः। काशिकी। काशिका। वैदिकी। वैदिका।

* आपदादिपूर्वपदात्कालान्तात्। आपदादिराकृतिगणः। आपत्कालिकी। आपत्कालिका।

धन्व-योपधाद्वुञ् ।४।२।१२१। धन्वविशेषवाचिनो, यकारोपधाच्च देशवाचिनो वृद्धाद् वुञ् स्यात्, [शेषे]। ऐरावतं धन्व,—ऐरावतकः। साङ्काश्य-काम्पिल्यशब्दौ वुञ्छणादिसूत्रेण ण्यान्तौ। साङ्काश्यकः।

---

काश्यां भवा—काशिकी। आपत्काले भवा—आपत्कालिकी।

---

वा नामधेयस्य। नामधेय की वृद्ध संज्ञा विकल्प से हो।

भवतष्ठक्। भवत् शब्द से ठक् और छस् प्रत्यय हों, जातादि अर्थों में।

सिति च। सित् प्रत्यय परे रहते पूर्व की पद संज्ञा हो।

काश्यादिभ्यः। काश्यादि से ठञ् और ञिठ प्रत्यय हों, जाताद्यर्थों में।

आपदादि। आपदादि पूर्वपदक जो कालान्त समर्थ सुबन्त, उससे जातादि अर्थों में 'ठञ्' और 'ञिठ' प्रत्यय हो।

धन्वयोपधा। धन्व विशेष वाची वृद्ध से, और यकारोपध देशवाची वृद्ध से वुञ् हो, जाताद्यर्थों में।

---

१ शेषपूरणम्। २ क्वचिदयं पाठो दृश्यते, न सर्वत्र।

काम्पिल्यकः ।

**नगरात्कुत्सन-प्रावीण्ययोः ।४।२।१२८।** कुत्सने, प्रावीण्ये च [ [२]गम्ये, जातादौ प्रत्ययार्थे ] नगरशब्दाद् वुञ् स्या-[च्छेषे ] । नागरकः चौरः, शिल्पी वा । एतयोः किम् ? । नागरा ब्राह्मणाः ।

**अरण्यान्मनुष्ये ।४।२।१२९।** [ [२]अरण्यशब्दाद् ] वुञ् [ [२]स्या-न्मनुष्ये ] । औपसङ्ख्यानक-णस्याऽपवादः ।

***पथ्यध्यायन्यायविहारमनुष्यहस्तिष्विति [३]वाच्यम् ।** आरण्यकः पन्थाः, अध्यायो, न्यायो, विहारो, मनुष्यो, हस्ती वा ।

**गर्त्तोत्तरपदाच्छः ।४।२।१३७।** देश इत्येव । [ [२]गर्त्तोत्तरपदाद्देश-वाचिनश्छः स्याज्जातादिष्वर्थेषु । अणोऽपवादः ] । वृकगर्त्तीयम् ।

**गहादिभ्यश्च ।४।२।१३८।** [ [२]गहादिभ्यो यथासम्भवं देशवाचि-भ्यश्छः स्याच्छेषे ] । गहीयः ।

**युष्मदस्मदोरन्यतरस्यां खञ् च ।४।३।१।** [ [२]आभ्यां खञ् वा

---

औपसङ्ख्यानिकणस्येति । 'अरण्याण्ण' इत्यस्य ।

---

नगरात्कुत्सन । नगर से वुञ् हो, जातादि अर्थों में,कुत्सन और प्रावीण्य गम्यमान हो तो ।

अरण्यान्मनुष्ये । पथ्यध्याय ।। अरण्य शब्द से जाताद्यर्थों में वुञ् हो, पथ्यादि अर्थ गम्यमान हों तो ।

गर्त्तोत्तरपदा । गर्त्तोत्तरपद देशवाची सुबन्त समर्थ से छ प्रत्यय हो, शेष अर्थों में ।

गहादिभ्यश्छः । यथा सम्भव देशवाचक जो गहादि उनसे छ प्रत्यय हो, जातादि शेष अर्थों में ।

युष्मदस्मदो । युष्मद्, अस्मद् से विकल्प करके खञ् प्रत्यय हो । और छ प्रत्यय भी हो । [ पक्ष में अण् भी होगा ] ।

---

१ 'कुत्सिते' पा । २ शेषपूरणम् । ३ 'वक्तव्यं' पा० ।

स्याच्छेषे ]। चाच्छः। पक्षेऽण्। युवयोर्युष्माकं वाऽयं—युष्मदीयः। अस्मदीयः।

**तस्मिन्नणि च युष्माकाऽस्माकौ** ।४।३।२। युष्मदस्मदोरेतावादेशौ स्तः, खञि, अणि च। यौष्माकीणः। आस्माकीनः। यौष्माकः। आस्माकः।

**तवकममकावेकवचने** ।४।३।३। एकार्थवाचिनोर्युष्मदस्मदोस्तवक-ममकौ स्तः, खञि, अणि च। तावकीनः। तावकः। मामकीनः। मामकः।

**छे तु—प्रत्ययोत्तरपदयोश्च** ।७।२।९८। मपर्यन्तयोरनयोरेकार्थ-वाचिनोस्त्वमौ स्तः, प्रत्यये, उत्तरपदे च। त्वदीयः। [२]मदीयः। त्वत्पुत्रः। [२]मत्पुत्रः।

**मध्यान्मः** ।४।३।८। [ [१]मध्यान्मः स्याच्छेषे ]। मध्यमः।

**अ साम्प्रतिके** ।४।३।९। मध्यशब्दादकारप्रत्ययः [स्य]त्साम्प्रतिकेऽर्थे। उत्कर्षाऽपकर्षहीनो—मध्यो वैयाकरणः। मध्यं दारु। नातिह्रस्वं, नाऽति-दीर्घमित्यर्थः।

**द्वीपादनुसमुद्रं यञ्** ।४।३।१०। समुद्रसमीपे यो द्वीपस्तद्विषयाद्-

---

साम्प्रतिक इति। साम्प्रतिकं = न्याय्यं, युक्तम्, उचितं, सममित्युच्यते।

---

तस्मिन्नणि च। युष्मद् और अस्मद् शब्द को 'युष्माक' और 'अस्माक' आदेश हों, खञ् और अण् परे रहते।

तवक-ममका। एकार्थवाची युष्मद् और अस्मद् शब्द को 'तवक' और 'ममक' आदेश हों, खञ् और अण् परे रहते।

प्रत्ययोत्तर। एकार्थवाची युष्मद् और अस्मद् के मपर्यन्त भाग को 'त्व' और 'म' आदेश हो, प्रत्यय और उत्तरपद परे रहते।

मध्यान्मः। मध्य शब्द से 'म' प्रत्यय हो, जातादि अर्थों में।

अ साम्प्रतिके। मध्य शब्द से 'अ' प्रत्यय हो, साम्प्रतिक ( उचित, ठीक २, योग्य समान ) अर्थ में।

द्वीपादनु। समुद्र समीपस्थ द्वीप विषयक ( बोधक ) द्वीप शब्द से 'यञ्' प्रत्यय हो, शेष ( जातादि ) अर्थों में।

---

१ शेषपूरणम्। २ क्वाचित्कः पाठः।

द्वीपशब्दाद्यञ् स्यात् [ [1]शेषे ]। द्वैप्यम्। द्वैप्या।

कालाट्ठञ् ।४।३।११। [ [1]कालवाचिनष्ठञ् स्याच्छेषे। मासे जातादि— ] मासिकम्। सांवत्सरिकम्। *अव्ययानां भमात्रे टिलोपः। सायंप्रातिकः। पौनःपुनिकः। [2]कथं तर्हि—'शार्वरस्य तमसो निषिद्धये' इति कालिदासः। 'अनुदितौषसरागः' इति भारविः। 'समानकालीनं' 'प्राक्कालीन'मित्यादि च ?। अपभ्रंशा एवैते इति प्रामाणिकाः[2]।

'तत्र जात' इति यावत्कालाधिकारः।

श्राद्धे शरदः ।४।३।१२। [ [1]कालवाचिनः शरच्छब्दात् ] ठञ् [ [2]स्यात् ]। ऋत्वणोऽपवादः। [ [2]शरदि भवं ]-शारदिकं श्राद्धम्।

विभाषा रोगाऽऽतपयोः ।४।३।१३। [[1]कालवाचकाच्छरच्छब्दाट्ठञ्वा स्याद्रोगातपयोरर्थयोर्गम्यमानयोः ]। शारदिकः, शारदो वा रोग, आतपो वा।

---

अपभ्रंशा इति। अशुद्धा एवेत्यर्थः। 'कालाट्ठ'ञिति ठञि हि 'शार्वरिकः' इत्युचितम्। एवम्-'औषसिकः' 'समानकालिकम्' 'प्राक्कालिकम्' इत्युचितमित्याशयः।

शारदिकमिति। कन्यागते सूर्ये पितृपक्षे शरदृतौ पित्रुद्देश्येन क्रियमाणं कर्म। रोग इति। शीतज्वरादिः-रोगः।

---

कालाट्ठञ्। कालवाचक से ठञ् प्रत्यय हो।

अव्ययानां भमात्रे। भसञ्ज्ञक अव्यय की टि का लोप हो।

श्राद्धे शरदः। कालवाची शरद् शब्द से ठञ् हो, अवादि शेष अर्थों में, श्राद्ध अर्थ अभिधेय हो तो।

विभाषा रोगा। कालवाची शरद् शब्द से ठञ् प्रत्यय विकल्प से हो, शेष अर्थों में, रोग और आतप अर्थ अभिधेय हो तो।

---

१ शेषपूरणम्। २ क्वचित्कः पाठः।

निशा-प्रदोषाभ्यां च ।४।३।१४। [ [1]आभ्यां ] वा ठञ् [ [2]स्यात् ] नैशिकम् । नैशम् । प्रादोषिकम् । प्रादोषम् ।

श्वसस्तुट् च ।४।३।१५। श्वसष्ठञ् वा [ [1]स्यात्तस्य ] तुट् च ।

द्वारादीनां च ।७।३।४। एषां न वृद्धिरैजागमश्च । शौवस्तिकम् ।

सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण् ।४।३।१६। [ [1]सन्धिवेलादिभ्य, ऋतुभ्यो, नक्षत्रेभ्यश्च कालवृत्तिभ्योऽण् स्यात्, शेषे ]। सन्धिवेलायां भवं-सान्धिवेलम् । ग्रैष्मम् । [ *[2]तिष्यपुष्ययोर्नक्षत्राऽणि यलोपः । *तैषम् ]। सन्धिवेला । सन्ध्या । अमावास्या । त्रयोदशी । चतुर्दशी । [ [2]पञ्चदशी ]। पौर्णमासी । प्रतिपत् ।

प्रावृष एण्यः ।४।३।१७। [ [1]कालवृत्तेः प्रावृट्शब्दादेण्यः

---

निशायां भवं—नैशं, नैशिकञ्च = तमः ।

प्रदोषे भवं—प्रादोषिकं—शिवपूजनादिकम् ।

प्रावृष एण्य इति । ऋत्वणोऽपवादोऽयम् । प्रवर्षतीति—प्रावृट् । 'नहिवृति'—इति दीर्घः । प्रावृषि भवः—प्रावृषेण्यः—मेघः । जातेऽर्थे तु प्रावृषिक इति भवति ।

---

निशाप्रदोषा । कालवाची निशा और प्रदोष से ठञ् प्रत्यय विकल्प से हो । जातादि अर्थों में ।

श्वसस्तुट् च । कालवाची श्वस् से ठञ् प्रत्यय हो, विकल्प करके, और उस ( ठञ् ) को तुट् आगम भी हो ।

द्वारादीनाञ्च । द्वारादि को आदि वृद्धि नहीं हो, किन्तु उनके यकार वकार से पूर्व ऐच् का आगम हो ।

सन्धिवेला । कालवाची जो सन्धिवेलादि, और ऋतुवाचक, और नक्षत्र वाचक, उनसे अण् प्रत्यय हो, जातादि अर्थों में ।

प्रावृष एण्यः । कालवृत्ति प्रावृट् शब्द से, एण्य प्रत्यय हो, शेष अर्थों में ।

---

1 शेषपूरणम् । 2 क्वाचित्कः पाठः ।

स्याच्छेषे ]। प्रावृषेण्यः। **वर्षाभ्यष्ठक् ।४।३।१८।** [ [1]कालवृत्तेर्वर्षा-शब्दाट्ठक् स्याच्छेषे ]। वर्षासु साधुः—वार्षिकं वासः।

**सर्वत्राऽण् च, तलोपश्च ।४।३।२२।** हेमन्तादण्, [स्या] त्तलोपश्च, वेदलोकयोः। चकारात्पक्षे—ऋत्वण्। [ [2]हेमन्ते भवं ]-हैमनं, हैमन्तं। [2]वसनम् ]।

**सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ, तुट् च ।४।३।२३।** साय-मित्यादिभ्यश्चतुर्भ्यः, अव्ययेभ्यश्च कालवाचिभ्यष्ट्युट्युलौ स्तस्तयो-स्तुट् च। [[2]सायं भवं–] सायन्तनम्। चिरन्तनम्। प्राह्ण-प्रगयोरेदन्तत्वं निपात्यते। प्राह्णेतनम्। प्रगेतनम्। दोषातनम्। दिवातनम्।

***चिरपरुत्परारिभ्यस्त्नो वक्तव्यः**। चिरत्नम्। परुत्नम्। परारित्नम्। ***अग्रादिपश्चाड्डिमच्**। अग्रिमम्। [[1]आदिमम्]। पश्चिमम्।

***अन्ताच्च**। अन्तिमम्।

---

'पूर्वस्मिन्वत्सरे' इत्यर्थे परुत्। ( 'परके' 'गतवर्ष में' )। 'पूर्वतरे वत्सरे इत्यर्थे—परारि। ( 'परारके'='गतवर्ष से भी पूर्व वर्ष में' )।

---

**वर्षाभ्यष्ठक्**। कालवृत्ति वर्षा शब्द से ठक् प्रत्यय हो, 'साधु' आदि शेष अर्थों में।

**सर्वत्राऽण्**। कालवाची हेमन्त शब्द से अण् प्रत्यय हो, तकार का लोप हो, लोक और वेद में। [ पक्ष में—अण् भी होता है ]।

**सायं चिरं**। कालवाची 'सायम्' आदि चार शब्दों से, और कालवाची अव्ययों से ट्यु और ट्युल् प्रत्यय हो, और उनको तुट् आगम भी हो।

**चिरपरुत्**। चिरादि से 'त्न' प्रत्यय हो, जातादि शेष अर्थों में।

**अग्रादि**। अग्र, आदि, और पश्च से 'डिमच्' प्रत्यय हो, भवादि शेष अर्थों में।

**अन्ताच्च**। अन्त से डिमच् हो, शेष अर्थों में।

---

१ शेषपूरणम्। २ क्वाचित्कः पाठः।

**विभाषा पूर्वाह्णा-ऽपराह्णाभ्याम्** ।४।३।२४। आभ्यां ट्युट्युलौ वा स्तस्तयोस्तुट् च। पक्षे ठञ् । पूर्वाह्णेतनम् । अपराह्णेतनम् । [[1]'घकालतनेषु' इति सप्तम्या अलुक् ]। पौर्वाह्णिकम् । आपराह्णिकम् ।

**तत्र जातः** ।४।३।२५। [2]सप्तमीसमर्थाज्जात इत्यर्थेऽणादयो, घादयश्च स्युः । स्रुघ्ने जातः-स्रौघ्नः । औत्सः । राष्ट्रियः । अवारपारीणः । इत्यादि । **प्रावृषष्ठप्** ।४।३।२६। [ [3]प्रावृट्शब्दात्सप्तम्यन्तात्समर्थाज्जात इत्यर्थे ठप् स्यात् ]। एण्यस्याऽपवादः । प्रावृषिकः ।

**प्रायभवः** ।४।३।३९। 'तत्रे'त्येव । [[3]सप्तमीसमर्था-(न्ङ्याप्प्रातिपदिका-) त्प्रायभव इत्यर्थेऽणादयो, घादयश्च स्युः ]। स्रुघ्ने प्रायेण-बाहुल्येन भवति- स्रौघ्नः ।

**सम्भूते** ।४।३।४१। [ [3]सप्तमीसमर्थात्सम्भूतेऽर्थे यथायथमणा-

---

अणादयः = अणआदयः । 'शेषे' इति अण्, 'उत्सादिभ्योऽञ्' इत्यञ् । घादयः = 'राष्ट्रावारपाराद्घखा'विति घादयः । प्रावृषि जातः—प्रावृषिकः । ( बर्साती पौधे आदि ) । स्रुघ्नः = ( आगरा प्रदेश ) ।

---

विभाषा पूर्वाह्णा । पूर्वाह्ण और अपराह्ण से ट्यु और ट्युल् प्रत्यय हों, विकल्प करके । ट्यु और ट्युल् को तुट् आगम भी हो ।

तत्र जातः । सप्तम्यन्त समर्थ से जात अर्थ में अणादि और घादि प्रत्यय हों ।

प्रावृषष्ठप् । प्रावृष् शब्द से ठप् हो, जात अर्थ में ।

प्रायभवः । सप्तम्यन्त समर्थ ( प्रातिपदिक ) से 'प्रायभव' इस अर्थ में यथा विहित अणादि और घादि प्रत्यय हों ।

सम्भूते । सप्तमी समर्थ से 'सम्भूत' ( सम्भव ) इस अर्थ में अणादि और घादि प्रत्यय हों ।

---

१ क्वाचित्कः पाठः । २ 'सप्तम्यन्तात्समर्थात्' पा० । ३ शेषपूरणम् ।

दयो घादयश्च स्युः ] । स्रुघ्ने सम्भवति—स्रौघ्नः ।

कोशाड्ढञ् ।४।३।४२। [[1]सप्तम्यन्तात्कोशशब्दात्सम्भूतेऽर्थे ढञ् स्यात् । [2]कोशे सम्भवति– ] कौशेयं वस्त्रम् ।

तत्र भवः ।४।३।५३। [ [1]सप्तम्यन्ताद्भव इत्यर्थेऽणादयो,घादयश्च यथायथं स्युः] । स्रुघ्ने भवः—स्रौघ्नः । [[2]'उत्सादिभ्योऽञ्' ] । औत्सः । [ [2]'राष्ट्रावारपारे'ति घः ] । राष्ट्रियः ।

दिगादिभ्यो यत् ।४।३।५४। दिगादिभ्यो यत्स्यात्तत्र भवइत्यर्थे । दिश्यम् । वर्ग्यम् ।

शरीरावयवाच्च ।४।३।५५। [[1]सप्तम्यन्तात्समर्थाच्छरीरावयववाचिनो 'भव' इत्यर्थे यत्स्यात् ] । दन्त्यम् । कण्ठ्यम् ।

दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ् ।४।३।५६। [[1]एभ्यो ढञ् स्यात्तत्रभव इत्यर्थे ]। दार्तेयम् । कलशिर्घटः, तत्र [[2]कलशौ ] भवं–कालशेयम् ।

---

दन्ते भवं—दन्त्यं = सकारादि । कण्ठ्यं—ककारादि । दृतिश्चर्मविकारो जलादिपात्रं (मशक–थैली) । तत्र भवं—दार्त्तेयम् । कलशिः—मथनपात्रं च, तत्र भवं कालशेयं—दधि, तक्रं, वा ।

---

कोशाड्ढञ् । सप्तम्यन्त समर्थ कोश से सम्भवति इस अर्थ में ढञ् प्रत्यय हो ।

तत्र भवः । सप्तम्यन्त समर्थ से भव अर्थ में अणादि और घादि प्रत्यय हों ।

दिगादिभ्यो । दिगादि सप्तम्यन्त समर्थ से यत् प्रत्यय हो, भव अर्थ में ।

शरीरावयवाच्च । शरीरावयववाची सप्तम्यन्त समर्थ से यत् प्रत्यय हो, भव अर्थ में ।

दृतिकुक्षि । सप्तम्यन्त समर्थ दृति आदि से ढञ् प्रत्यय हो, भव अर्थ में ।

---

१ शेषपूरणम् । २ क्वाचित्कः पाठः ।

**ग्रीवाभ्योऽण् च** ।४।३।५७। [ [1]सप्तम्यन्तात्समर्थाद् ग्रीवाशब्दाद्भवार्थेऽण् स्यात् ]। चाड्ढञ् । ग्रैवेयम् । ग्रैवम् ।

**गम्भीराञ्ञ्यः** ।४।३।५८। [ [1]गम्भीराञ्ञ्यः स्यात्तत्र भव इत्यर्थे ]। गम्भीरे भवं—गाम्भीर्यम् । **अव्ययीभावाच्च** ।४।३।५९। [ [1]अव्ययीभावाञ्ञ्यः स्यात्तत्र भव इत्येतद्विषये ]। परिमुखं भवं—पारिमुख्यम् । ***परिमुखादिभ्य एवेष्यते** । नेह—औपकूलः ।

**अन्तःपूर्वपदाट्ठञ्** ।४।३।६०। 'अव्ययीभावा'दित्येव। [ [1]अन्तःपूर्वपदादव्ययीभावाट्ठञ् स्यात्तत्र भवइत्येतद्विषये ]। वेश्मनि इति—अन्तर्वेश्मम् । तत्र भवम्—आन्तर्वेश्मिकम् । आन्तर्गणिकम् । ***अध्यात्मादेष्ठञिष्यते** । अध्यात्मं भवम्—आध्यात्मिकम् । **अनुशतिकादीनां च** ।७।३।२०। एषामुभयपदवृद्धिः [ स्यात् ] ञिति, णिति, किति च,

---

ग्रैवेयं—कण्ठभूषणम् । (कण्ठला—कण्ठी) । अध्यात्ममिति । 'नपुंसकादन्यतरस्या'मिति समासान्तष्टच् । अन्तर्वेश्ममिति । 'अनश्चे'ति टच् ।

---

ग्रीवाभ्योऽञ्च । सप्तम्यन्त समर्थ ग्रीवा शब्द से अञ् प्रत्यय हो, भव अर्थ में ।

गम्भीराञ्ञ्यः । सप्तम्यन्त समर्थ गम्भीरसे ञ्य प्रत्यय हो, भव अर्थ में ।

अव्ययीभावाच्च । परिमुखादिभ्यः । अव्ययीभावसञ्ज्ञक सप्तम्यन्त समर्थ परिमुखादि से भव अर्थ में ञ्य प्रत्यय हो ।

अन्तःपूर्वपदा । अन्तःपूर्वपद अव्ययीभावसे ठञ् प्रत्यय हो, 'तत्र भव' इसके विषय में ।

अध्यात्मादे । अध्यात्मादि से ठञ् हो, 'तत्र भव' इसके विषय में ।

अनुशतिकादीनां च । अनुशतिकादिक के उभय पदों को वृद्धि हो, ञित्, णित्, और कित् तद्धित परे रहते ।

---

१ शेषपूरणम् ।

[ [1]तद्धिते परतः ]। आधिदैविकम् । अधिभौतिकम् । ऐहलौकिकम् । पारलौकिकम् । आकृतिगणोऽयम् ।

जिह्वामूलाङ्गुलेश्छः ।४।३।६२। आभ्यां छः स्यात्तत्रभव इत्यर्थे । जिह्वामूलीयम् । अङ्गुलीयम् । वर्गान्ताच्च ।४।३।६३।[ [1]वर्गान्तात्सप्तम्यन्तात्समर्थाच्छः स्याद्भवार्थे । [2]कवर्गे भवं–] कवर्गीयम् ।

तत आगतः ।४।३।७४। [ [1]पञ्चम्यन्तात्समर्थादागत इत्यर्थे यथाविहितमणादयो, घादश्च स्युः ]। स्रुघ्नादागतः–स्रौघ्नः । ठगायस्थानेभ्यः ।४।३।७५। [ [1]पञ्चम्यन्तेभ्यः समर्थेभ्य आयस्थानवाचिभ्यष्ठक् स्यादागत इत्यर्थे ]। शुल्कशालाया आगतः ]—शौल्कशालिकः ।

विद्यायोनिसम्बन्धेभ्यो वुञ् ।४।३।७७। [ [1]एभ्यो वुञ् स्यात्तत आगत इत्येतद्विषये । उपाध्यायादागतः–] औपाध्यायकः । पैतामहकः ।

---

शुल्कं—राजग्राह्यो भागः । 'चुङ्गी' 'जकात' 'कर' । शुल्कशाला= चुङ्गी आदि की चौकी )। विद्यायोनीति । विद्याकृतो, योनिकृतश्च सम्बन्धो येषान्ते विद्यायोनिसम्बन्धाः, तद्वाचिभ्यो वुञित्यर्थः ।

---

जिह्वामूलाङ्गुलेः । सप्तम्यन्त समर्थ जिह्वामूल और अङ्गुलि से छ प्रत्यय हो, भव अर्थ में ।

वर्गान्ताच्च । वर्गान्त सप्तम्यन्त समर्थ से छ प्रत्यय हो, भव अर्थ में ।

तत आगतः । पञ्चम्यन्त समर्थ से आगत अर्थ में यथा विहित अणादि, और घादि प्रत्यय हों ।

ठगायस्थानेभ्यः । आयस्थानवाची पञ्चम्यन्त समर्थ से ठक् हो, आगत अर्थ में । ( आयस्थान–चुङ्गी आदि की चौकी )।

विद्यायोनि । विद्यासम्बन्धवाची और योनिसम्बन्धवाची सप्तम्यन्त समर्थसे आगत अर्थ में वुञ् प्रत्यय हो ।

---

१ शेषपूरणम् । २ क्वाचित्कः पाठः ।

**ऋतष्ठञ्** ।४।३।७८। [ [1]विद्यायोनिसम्बन्धवाचिन ऋदन्तात्पञ्चमीसमर्थादागत इत्यर्थे ठञ् स्यात् ] । वुञोऽपवादः । [ 'इसुसुक्तान्तात्कः' ] हौतृकम् । [ [2]मातृकम् ] । भ्रातृकम् ।

**पितुर्यच्च** ।४।३।७९। [ [1]पितृशब्दाद्यत्स्यात्तत आगत इत्यर्थे ] । चाट्ठञ् । रीङृतः । 'यस्येति च'ेति लोपः । पित्र्यम् । पैतृकम् ।

**गोत्रादङ्कवत्** ।४।३।८०। [ [1]अपत्यप्रत्ययान्तात्पञ्चम्यन्तात्कृतसन्धेरागत इत्यर्थेऽङ्कवत्प्रत्ययाः स्युः ] । बिदेभ्य आगतं-बैदम् । गार्गम् । दाक्षम् । औपगवकम् ।

**हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः** ।४।३।८१। [ [1]हेतुभ्यो, मनुष्यवाचकेभ्यश्च रूप्यप्रत्ययो वा स्यात्तत आगत इत्येतद्विषये ] । समादागतं—समरूप्यम् । विषमरूप्यम् । [ [2]पक्षे गहादित्वाच्छः । समीयम् । विषमीयम् ] । देवदत्तीयम् । देवदत्तरूप्यम् । दैवदत्तम् ।

---

गोत्रादिति । अपत्यप्रत्ययान्तात्तत आगत इत्यर्थेऽङ्कवत्प्रत्ययाः स्युः । अपत्याधिकारादन्यत्र हि लौकिकं गोत्रम् ।

बैदमिति । 'सङ्घाङ्क'ेत्यादिना अङ्कार्थे अण् विहित इति, इहापि अञन्ताद्यञन्तादिञन्ताच्चाऽण् ।

---

ऋतष्ठञ् । विद्यायोनिसम्बन्धवाची पञ्चम्यन्त समर्थ ऋदन्त से ठञ् प्रत्यय हो, आगत अर्थ में ।

पितुर्यच्च । पञ्चम्यन्त समर्थ पितृ शब्दसे यत् प्रत्यय हो, आगत अर्थ में ।

गोत्रादङ्कवत् । अपत्यप्रत्ययान्त पञ्चम्यन्त कृतसन्धि ( समर्थ ) से अङ्कवत् प्रत्यय हों, आगत अर्थ में ।

हेतुमनुष्येभ्यो । हेतुवाचक से, और मनुष्यवाचक से विकल्प करके 'रूप्य' प्रत्यय हो, आगत अर्थ में ।

---

१ शेषपूरणम् । २ लिखिते नास्ति ।

**मयट् च ।४।३।८२।** [ [1]हेतुवाचिनो, मनुष्यवाचिनश्च मयट् स्यात्तत आगत इत्यर्थे ]। सममयम् । विषममयम् । देवदत्तमयम् ।

**प्रभवति ।४।३।८३।** 'तत' इत्येव । [[1]पञ्चम्यन्तात्समर्थात्प्रभवतीत्यर्थे यथाविहितमणादयो,घादयश्च स्युः]। हिमवतः प्रभवति–हैमवती गङ्गा । [[2]**विदूराञ्ञ्यः ।४।३।८४।** [पञ्चम्यन्तात्कृतसन्धेर्विदूराञ्ञ्यः स्यात्प्रभवतीत्यर्थे ]। विदूरात्प्रभवति–वैदूर्यो मणिः । [3]दन्तमध्योऽयं शाद्वलवन्न तु नड्वलवन्मूर्द्धन्यमध्यः । नन्वर्थाऽसङ्गतिः,–वालवायांदसौ प्रभवति, विदूरे तु संस्क्रियते इति चेत्सत्यम् । अत एव समाहितं भाष्ये–'वालवायो विदूरञ्चे'ति । वालवायशब्दः प्रत्ययं लभते, विदूरादेशश्च । सूत्रे पठितेनाऽऽदेशेनाऽनुरूपः स्थानी आक्षिप्यते ।

---

प्रभवति = प्रकाशते । प्रथमं तत्र दृश्यते इति यावत् ।

बालवाय इति । इत्थं हि तत्र भाष्यम्—

'बालवायो विदूरञ्च प्रकृत्यन्तरमेव वा ।
न वै तत्रेति चेद् ब्रूयाज्जित्वरीवदुपाचरेत् ॥' इति ।

'बालवायशब्दाञ्ञ्यः प्रकृतेर्विदूरादेश' इत्येकः पक्षः । यद्वा 'विदूरशब्दो नगरस्येव पर्वतस्यापि वाचक' इति प्रकृत्यन्तरमेव विदूरशब्द इति विदूरादेव ञ्यः । तत्र = पर्वते, न वै = नैव खलु विदूरशब्द प्रसिद्ध, इति चेत् = इति

---

मयट् च । पञ्चम्यन्त हेतु ( कारण ) से, और मनुष्यवाचक से मयट् प्रत्यय हो, आगत अर्थ में ।

प्रभवति । पञ्चम्यन्त समर्थ से प्रभवति अर्थ में अणादि और घादि यथा विहित प्रत्यय हों ।

विदूराञ्ञ्यः । पञ्चम्यन्त समर्थ विदूर शब्द से ञ्य प्रत्यय हो, 'प्रभवति' इस अर्थ में ।

---

१ शेषपूरणम् । २ लिखिते नास्ति । ३ तत्त्वबोधिन्यामयं पाठो दृश्यते । तत एवोद्धृत्य केनाऽप्यत्र प्रक्षिप्तः स्यादिति मन्ये ।

**तद्गच्छति पथिदूतयोः ।४।३।८५।** [ [1]द्वितीयाद्गच्छतीत्यर्थे यथाविहितमणादयो, घादयश्च स्युः । स चेद्गन्ता–पन्था, दूतो वा ]। स्रुघ्नं गच्छति—स्रौघ्नः पन्था, दूतो वा ।

**अभिनिष्क्रामति द्वारम् ।४।३।८६।** [ [2]तदित्येव । [1]द्वितीयान्ताःसमर्थान्निष्क्रामतीत्यर्थे यथाविहितमणादयो, घादयश्च स्युः । यन्निष्क्रामति तद् द्वारञ्चेत् ] । स्रुघ्नमभिनिष्क्रामति—गच्छति—स्रौघ्नं कान्यकुब्जद्वारम् ।

**अधिकृत्य कृते ग्रन्थे ।४।३।८७।** [ [1]द्वितीयान्तात्समर्थादधिकृत्यकृतो ग्रन्थः–इत्यर्थेऽणादयो, घादयश्च यथाविहितं स्युः]। शारीरकमधि-

---

चेदुच्यते, तदा ब्रूमः—वैयाकरणानां निकाये पर्वतेऽपि स प्रसिद्ध एव । यथा वैश्यसमाजे वाराणस्याः—'जित्वरी'ति नाम्ना प्रसिद्धो व्यवहारस्तथाऽस्माकमपि वैयाकरणानां समाजे—पर्वतेऽपि विदूरव्यवहार इति न दोष इति भाष्यार्थः ।

यद्गच्छतीति । द्वितीयान्ताद्गच्छतीत्यर्थे प्रत्ययः स्यात्स चेद्गन्ता–पन्था, दूतो वा भवतीत्यर्थः ।

अभिनिष्क्रामतीति । द्वितीयान्तात्प्रत्ययः स्याद्यन्निष्क्रामति तद् द्वारञ्चेदित्यर्थः ।

---

तद्गच्छति । द्वितीयान्त समर्थ से गच्छति अर्थ में यथाविहित अणादि और घादि प्रत्यय हों, जो जाता है, वह—यदि मार्ग हो, या दूत हो तो ।

अभिनिष्क्रामति । द्वितीयान्त समर्थ से अभिनिष्क्रामति ( उस ओर निकलता है )—इस अर्थ में यथाविहित अणादि और घादि प्रत्यय हों, जो निकलता है, वह यदि द्वार हो तो ।

अधिकृत्य कृते । द्वितीयान्त से 'अधिकृत्य कृतो ग्रन्थः' इस अर्थ में यथाविहित अणादि और घादि प्रत्यय हों ।

---

१ शेषपूरणम् । २ क्वचिन्न

कृत्य कृतो ग्रन्थः[1]–] शारीरकीयः। [ [2]'शारीरकं भाष्य'मिति त्वभेदोपचारात् ]।

**सोऽस्य निवासः** ।४।३।८९। [[3]स इति प्रथमान्तादस्येति षष्ठ्यर्थे यथाविहितमणादयो, घादयश्च स्युः, यः प्रथमान्तः स निवासश्चेत् ]। स्रुघ्नो निवासोऽस्य–स्रौघ्नः।

**तेन प्रोक्तम्** ।४।३।१०१। [ [3]तृतीयान्तात्समर्थात्प्रोक्तमित्यर्थे यथाविहितं प्रत्ययाः स्युः ]। पाणिनिना प्रोक्तं–पाणिनीयम्।

**[ [2]पाराशर्य-शिलालिभ्यां भिक्षु-नट-सूत्रयोः** ।४।३।११०। [ [3]तृतीयान्ताभ्यामाभ्यां क्रमात्प्रोक्तं भिक्षुसूत्रं, प्रोक्तं नटसूत्रमित्यर्थे ] णिनिः स्यात्। पाराशर्येण प्रोक्तं भिक्षुसूत्रमधीयते–पाराशरिणो भिक्षवः। शैलालिनो–नटाः।

**कर्मन्द-कृशाश्वादिनिः** ।४।३।१११। [[3]तृतीयान्ताभ्यामाभ्यां क्रमात् 'प्रोक्तं भिक्षुसूत्रं' 'प्रोक्तं नटसूत्र'मित्यर्थे इनिः स्यात् ]। कर्मन्देन प्रोक्तं भिक्षुसूत्रमधीयते–कर्मन्दिनो भिक्षवः। कृशाश्विनो–नटाः।

---

कुत्सितं शरीरमेव शरीरकम्। तत्सम्बन्धाच्च—शरीरको–जीवात्मा। तमधिकृत्य कृतो ग्रन्थः—शारीरकीयः।

---

**सोऽस्य निवासः**। प्रथमान्त समर्थ से 'अस्य निवासः' इस अर्थ में यथा विहित अणादि और घादि प्रत्यय हों।

**तेन प्रोक्तम्**। तृतीयान्त समर्थ से प्रोक्त अर्थ में यथाविहित अणादि और घादि प्रत्यय हों।

**पाराशर्यशिलालि**। तृतीयान्त समर्थ पाराशर्य से 'प्रोक्तं भिक्षुसूत्रम्' इस अर्थ में, और तृतीयान्त समर्थ शिलाली से 'प्रोक्तं नट सूत्रम्' इस अर्थमें णिनि प्रत्यय हो।

**कर्मन्दकृशाश्वा**। तृतीयान्त समर्थ कर्मन्द और कृशाश्व से, क्रमसे 'प्रोक्तं भिक्षुसूत्रं' 'प्रोक्तं नटसूत्रं' इस अर्थ में इनि प्रत्यय हो।

---

१ क्वचित्कः पाठः। २ लिखिते नास्ति। ३ शेषपूरणम्।

उपज्ञाते ।४।३।११५। [[1]तृतीयान्तादुपज्ञाते यथाविहितमणादयो, घादयश्च स्युः ]। पाणिनिना उपज्ञातं-पाणिनीयम्[2] ]।

तस्येदम् ।४।३।१२०। [[1]षष्ठ्यन्तादिदमर्थे यथाविहितमणादयो, घादयश्च स्युः ]। उपगोरिदम्—औपगवम् ।

[* [2]समिधामाधाने षेण्यण् । सामिधेन्यो मन्त्रः ।

रथाद्यत् ।४।३।१२१। [[1]रथाद्यत्स्यात्तस्येदमित्यर्थे]। रथ्यं चक्रम् ।

पत्त्रपूर्वादञ् ।४।३।१२२।[[1]पत्त्रपूर्वात्षष्ठ्यन्ताद्रथशब्दादिदमर्थेऽञ्स्यात् ]। अश्वरथस्येदम्—आश्वरथम् ।

हलसीराठ्ठक् ।४।३।१२४। [[1]षष्ठ्यन्ताभ्यामाभ्यामिदमर्थे ठक्स्यात्]

---

विनोपदेशं स्वयमेव ज्ञातम्–उपज्ञातम् ।

---

उपज्ञाते । तृतीयान्त समर्थ से 'उपज्ञात' इस अर्थ में यथाविहित अणादि, और घादि प्रत्यय हों ।

तस्येदम् । षष्ठ्यन्त समर्थ से 'इदम्' इस अर्थ में यथाविहित अणादि और घादि प्रत्यय हों ।

समिधामाधाने । षष्ठ्यन्त समर्थ समिध् शब्द से आधान अर्थ में षेण्यण् प्रत्यय हो ।

रथाद्यत् । षष्ठ्यन्त समर्थ रथ शब्द से 'इदम्' अर्थ में यत् प्रत्यय हो ।

पत्त्रपूर्वाञ् । पत्त्र ( अर्थात् वाहन ) पूर्वक षष्ठ्यन्त रथ शब्द से, अञ् प्रत्यय हो, 'इदम्' इस अर्थ में ।

हलसीरा । षष्ठ्यन्त समर्थ हल और सीर से 'इदम्' अर्थ में ठक् प्रत्यय हो ।

---

१ शेषपूरणम् ।

२ अयं सर्वोऽपि ग्रन्थो लिखिते प्रायो न दृश्यते ।

हालिकम्। सैरिकम्। गोत्रचरणाद्वुञ् ।४।३।१२६। [ [1]गोत्रप्रत्ययान्ताच्छाखाध्येतृवाचकाच्च षष्ठ्यन्तादिदमर्थे वुञ् स्यात् ]। औपगवकम्।

*चरणाद्धर्माम्नाययोरिति वक्तव्यम्। कालापकम्। काठकम्।

सङ्घाङ्कलक्षणेष्वञ्यञिञामण् ।४।३।१२७। *घोषग्रहणमपि कर्त्तव्यम्। [ [1]अञन्ताद्यञन्तादिञन्ताच्च षष्ठ्यन्तादण् स्यादिदमर्थे, सङ्घादिषु इदन्त्वेन विवक्षितेषु]। अञ्-वेदः-सङ्घोऽङ्को घोषो वा। वैदं-लक्षणम्। यञ्-गार्गः। गार्गम्। इञ्—दाक्षः। परम्परासम्बन्धोऽङ्कः, साक्षात्तु लक्षणम्।

## * इति शैषिकाः *

## अथ विकारार्थकाः ॥

तस्य विकारः ।४।३।१३४। [ [1]षष्ठयन्तात्कृतसन्धेः समर्थाद्विकारेऽर्थेऽणादयो, वक्ष्यमाणाश्च प्रत्ययाः स्युः]। *[2]अश्मनो विकारे टिलोपो वक्तव्यः। अश्मनो विकार-आश्मः। भास्मनः। मार्त्तिकः।

---

अश्मा = पाषाणः। मृत्तिकाया विकारः—मार्त्तिकः।

---

गोचरणाद्वुञ्। गोत्र प्रत्ययान्त और चरण ( शाखाध्येतृ ) वाचक षष्ठ्यन्त समर्थसे 'इदम्' अर्थमें वुञ् हो।

चरणाद्धर्मा। चरण ( शाखा ) वाचक से जो इदमर्थमें वुञ् कहा है, वह 'धर्म' और 'आम्नाय' ( वेदाभ्यास ) अर्थ में ही हो।

सङ्घाङ्क। घोषग्रहणमपि ॥ अञन्त, यञन्त, और इञन्त षष्ठ्यन्त समर्थ से इदम् अर्थ में, सङ्घादि यदि इदन्त्वेन विवक्षित हों तो, (अर्थात्—'अयं-सङ्घः' 'अयम्-अङ्कः' 'इदं-लक्षणं' और 'अयं-घोषः' इन अर्थों में ) अण् प्रत्यय हो।

तस्य विकारः। षष्ठ्यन्त समर्थसे विकार अर्थमें अण् आदि प्रत्यय हों।

अश्मनो विकारे। अश्मन् शब्द की टिका लोप हो, विकारार्थक प्रत्यय परे रहते।

---

१ शेषपूरणम्। २ इतः पूर्वं "—'नस्तद्धिते' इति प्राप्तस्य टिलोपस्य 'अन्' इति प्रकृतिभावेन निषेधे प्राप्ते, वार्त्तिकम्—" इत्यधिको लिखितादर्शे पाठो दृश्यते।

अवयवे च प्राण्योषधिवृक्षेभ्यः ।४।३।१३५। चाद्विकारे । [[1]अधिकारोऽयम् । [1]प्राणिवाचिन,ओषधिवाचिनो,वृक्षवाचिनश्च षष्ठ्यन्तादवयवे विकारे च उक्ता, अणादयो, वक्ष्यमाणाश्च अञादयः प्रत्ययाः स्युः ]। मयूरस्य विकारोऽवयवो[2] वा—मायूरः । मौर्वं—काण्डं, भस्म वा। पैप्पलम् ।

[3]त्रपुजतुनोः षुक् ।४।३।१३८। आभ्यामण् [ [3]स्यात् ], एतयोः षुक् च [ [3]स्याद्विकारे ]। त्रापुषम् । जातुषम् ।

ओरञ् ।४।३।१३९। [ [4]उवर्णान्तादञ्स्याद्विकाराऽवयवयोः ]। दैवदारवम् । अनुदात्तादेश्च ।४।३।१४०।[[4]अनुदात्तादे] रञ् [[4]स्याद्विकाराऽवयवयोः ]। कापित्थम ।

---

मूर्वा-ओषधिभेदः। [ मूर्वाया विकारः—मौर्वम् ]।

[ पिप्पलस्य अवयवः, काण्डं—( दण्डः )–पैप्पलम् । पिप्पलस्य विकारो भस्म पैप्पलमिति विवेकः]। केचित्तु–'मौर्वं' काण्डं, भस्म वेत्यन्वयमिच्छन्ति ।

कपौ तिष्ठतीति–कपित्थः। 'सुपि स्थः' इति कः । कृदुत्तरपदप्रकृतिस्वरेणास्याऽन्तोदात्ततयाऽनुदात्तं पदमिति शेषनिघातेनानुदात्तादिरयम् । तस्य विकारोऽवयवो वा—कापित्थम् ।

---

अवयवे च । प्राणीवाची, ओषधिवाची और वृक्षवाची से अवयव और विकार अर्थ में अणादि प्रत्यय हों, और इनसे अन्यसे–केवलविकार अर्थ में अणादि प्रत्यय हो। [यह अधिकार सूत्र है। विधिसूत्र नहीं है]।

त्रपुजतुनोः। त्रपु और जतु प्रकृतिक षष्ठ्यन्त समर्थ से अण् हो, और त्रपु और जतु को षुक् आगम भी हो, विकार अर्थ में ।

ओरञ् । उवर्णान्त से अञ् प्रत्यय हो, विकार और अवयव अर्थ में।

अनुदात्तादेश्च । अनुदात्तादि प्रकृतिक षष्ठ्यन्त समर्थ से अञ् हो, विकार और अवयव अर्थ में ।

---

१ क्वाचित्कः पाठः। २ 'अवयवो, विकारो वा' पा० । ३ लिखिते नास्ति। ४ शेषपूरणम् ।

पलाशादिभ्यो वा ।४।३।१४१। [ [1]एभ्यो-] अञ् [ वा स्याद्विकाराऽवयवयोः[1] ]। पालाशम् । खादिरम् । शम्याः ष्लञ् ।४।३।१४२। [ [1]शम्याः ष्लञ् स्याद्विकारावयवयोः ] । शामीलम् ।

मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः ।४।३।१४३। प्रकृतिमात्रान्मयड्वा स्या-[ द्भाषायां,भक्ष्याच्छादनवर्जितयो- ]-र्विकारावयवयोः । अश्ममयम् । आश्मनम् । अभक्ष्येत्यादि किम् ? । मौद्गः सूपः । कार्पासम्-आच्छादनम् ।

नित्यं वृद्धशरादिभ्यः ।४।३।१४४। [ [1]वृद्धाच्छरादिभ्यश्च भाषायामभक्ष्याच्छादनयोर्विकारावयवयोरर्थयोर्नित्यं मयट् स्यात् ] । आम्रमयम् । शरमयम् । [ *[2]एकाचो नित्यम् । वाङ्मयम् ] ।

गोश्च पुरीषे ।४।३।१४५। [ [1]गोप्रकृतिकात्षष्ठ्यन्तान्मयट्

---

शम्या अवयवो, विकारो वा शामीलम् । कार्पासस्य विकारः—कार्पासम् ।

---

पलाशादिभ्यो वा । पलाशादि प्रकृतिक षष्ठ्यन्त समर्थ से विकल्प करके अञ् हो, विकार और अवयव अर्थ में ।

शम्या ष्लञ् । शमी से ष्लञ हो, विकार और अवयव अर्थ में ।

मयड्वैतयोः । प्रकृतिमात्र ( सर्व ) प्रकृतिक षष्ठ्यन्त समर्थ से, मयट् हो, विकल्प करके, विकार और अवयव अर्थ में । लोक में । परन्तु भक्ष्य और आच्छादन वाच्य हो तो मयट् नहीं हो ।

नित्यं वृद्ध । वृद्ध और शरादि से नित्य मयट् हो, विकार और अवयव अर्थ में ।

एकाचो नित्यम् । एकाच् से नित्य मयट् हो,विकार और अवयव अर्थ में ।

गोश्च पुरीषे । गोशब्द प्रकृतिक षष्ठ्यन्त समर्थ से मयट् हो, पुरीष अर्थ में ।

---

१ शेषपूरणमेतत् । २ लिखिते नास्ति क्वचित् ।

स्यात्पुरीषे[1] ]। गोमयम्। [ [2]एण्या ढञ् ।४।३।१५९। [1]एणीप्रकृतिकात्षष्ठ्यन्तात्कृतसन्धेर्ढञ् स्याद्विकारावयवयोः ]। ऐणेयम्। एणस्य तु—ऐणम् ]।

गोपयसोर्यत् ।४।३।१६०। [ [1]गोपयसोर्यत्स्याद्यथायथं विकारावयवयोरर्थयोः ]। गव्यम्। पयस्यम्।

[ [2]फले लुक् ।४।३।१६३। विकाराऽवयवप्रत्ययस्य [ [1]लुक् स्यात्फले विशेषे विवक्षिते]। लुक्तद्धितलुकि ।१।२।४९। [ [1]तद्धितलुकि सति] उपसर्जनस्त्रीप्रत्ययस्य [लुक् स्यात्[1]]। आमलक्याः फलम्—आमलकम्।

प्लक्षादिभ्योऽण् ।४।३।१६४। [ [1]प्लक्षादिप्रकृतिकात्षष्ठ्यन्तात्कृतसन्धेरण् स्यात्फले विकारावयवत्वेन विवक्षिते]। विधानसामर्थ्यान्न लुक्। प्लाक्षम्।

न्यग्रोधस्य च केवलस्य ।७।३।५। [ [1]पदान्तररहितस्य अस्य न

---

एण्या ढञ्। एणी प्रकृतिक षष्ठ्यन्त से ढञ् हो, विकार और अवयव अर्थ में।

गोपयसो। गो और पयस् प्रकृतिक षष्ठ्यन्त समर्थ से यत् प्रत्यय हो, अर्थात्—गो से विकार और अवयव अर्थ में। और पयस् से विकार अर्थ में।

फले लुक्। विकारावयवत्वेन फल रूप अर्थ विवक्षित हो तो विकारार्थक और अवयवार्थक प्रत्यय का लुक् हो।

लुक्तद्धित। तद्धित का लुक् होने पर उपसर्जन स्त्री प्रत्यय का लुक् हो।

प्लक्षादिभ्योऽण्। प्लक्षादि से अण् हो, फलरूप अर्थ विकारावयवत्वेन विवक्षित हो तो।

न्यग्रोधस्य च। केवल ( अर्थात्-पदान्तर रहित ) न्यग्रोधके आदि अच् यकारोत्तर अकारको वृद्धि नहीं हो, किन्तु यकार से पूर्व ऐच् का आगम हो, ञित्, णित् और कित् तद्धित परे रहते।

---

१ शेषपूरणम्। २ लिखिते नास्ति।

वृद्धिरैजागमश्च । नैयग्रोधम् ।

जम्ब्वा वा ।४।३।१६५। [[1]जम्बूशब्दाद् ] अण् [ स्या-] त्फले । जाम्बवम् । पक्षे ओरञ् । तस्य लुक् । लुप् च ।४।३।१६६। जम्ब्वाः फलप्रत्ययस्य लुब्वा स्यात् । 'लुपि युक्तवद्व्यक्तिवचने' । जम्बूः ।

* फलपाकशुषामुपसङ्ख्यानम् । व्रीहयः । मुद्गाः । * पुष्पमूलेषु बहुलम् । मल्लिकायाः पुष्पं-मल्लिका । जात्याः पुष्पं-जातिः । विदार्या मूलं—विदारी । बहुलग्रहणान्नेह—पाटलानि पुष्पाणि । साल्वानि मूलानि । बाहुलकात्क्वचिल्लुक् । अशोकम् । करवीरम् ।

हरीतक्यादिभ्यश्च। ४।३।१६७। एभ्यः फलप्रत्ययस्य लुप् [[2]स्यात] ।

---

फलानां पाकेन शुष्यन्ति फलपाकशुषः = ओषधयो व्रीहिधान्यादयः । तद्वाचिभ्यः परस्य फलप्रत्ययस्य लुबित्यर्थः । व्रीहीणां फलानि—व्रीहयः । मुद्गानां फलानि मुद्गाः । बिल्वाद्यणो लुप् ।

पुष्पमूलेष्विति । विकारावयवप्रत्ययस्य लुबित्यर्थः ।

मल्लिकेति । अनुदात्तलक्षणस्याऽञो लुप् ।

पाटलानीति । बिल्वादित्वादण् । साल्वानीति । अनुदात्तादित्वादञ् । फिट्स्वरेणान्तोदात्ततया शेषनिघातेनास्याऽनुदात्तादित्वात् ।

---

जम्ब्वा वा । जम्बू से फलरूप विकारावयव अर्थ में अण् हो, विकल्प करके ।

लुप् च । जम्बू से विहित फलार्थक प्रत्ययका लुप् हो, विकल्प करके ।

लुपि युक्तवत् । लुप् होने पर प्रकृति की तरह ही लिङ्ग और वचन हों ।

फलपाकशुषा । फलके परिपाक से सूखनेवाली जो ओषधियाँ, तद्वाचक से फलार्थक प्रत्यय का लुप् हो ।

पुष्पमूलेषु । पुष्प और मूल में अर्थ विकारावयव प्रत्ययका बहुलता करके लुप् हो ।

हरीतक्या । हरीतक्यादिसे विहित फलार्थक प्रत्ययका लुप् हो ।

---

१ शेषपूरणम् । २ क्वचिन्न ।

*हरीतक्यादीनां लिङ्गमेव प्रकृतिवत्। हरीतक्याः फलानि–हरीतक्यः।

[ * इति विकारार्थकाः * ]।

* ॥ इति प्राग्दीव्यतीयाः ॥ *

---

अथ ठगधिकारः।

प्राग्वहतेष्ठक् ।४।४।१। 'तद्वहती'त्यतः प्राक् ठगधिक्रियते।

[* [1]तदाहेति माशब्दादिभ्य उपसङ्ख्यानम्। 'मा शब्दः कारि' इति य आह, स—माशब्दिकः। *आहौ प्रभूतादिभ्यः। प्रभूतमाह–प्राभूतिकः। पार्याप्तिकः। *पृच्छतौ सुस्नातादिभ्यः। सुस्नातं पृच्छति–सौस्नातिकः। सौखशायनिकः। आनुशतिकादिः।

*गच्छतौ परदारादिभ्यः। पारदारिकः। गौरुतल्पिकः ]।

---

'राजसंनिधौ कोलाहलो न करणीयः' इत्येवं राजसभादिषु निर्देष्टा राजपुरुषादिः–माशब्दिकः। सुखशयनं पृच्छति–सौखशायनिकः।

---

हरीतक्यादीनां। हरीतक्यादिका लिङ्ग ही प्रकृतिवत् हो। ( अर्थात्—वचन प्रकृतिवत् नहीं हो )।

प्राग्वहते। 'तद्वहति रथयुग' इस सूत्रसे पूर्व तक ठक् अधिकार है।

तदाहेति। कर्मसञ्ज्ञक मा शब्दादि से 'आह' अर्थ में ठक् हो।

आहौ प्रभूता। द्वितीयान्त समर्थ प्रभूतादि से 'आह' अर्थ में ठक् हो।

पृच्छतौ। द्वितीयान्त समर्थ सुस्नातादिसे 'पृच्छति' इस अर्थ में ठक् प्रत्यय हो।

गच्छतौ। द्वितीयान्त समर्थ परदारादिसे 'गच्छति' अर्थ में ठक् प्रत्यय हो।

---

१ क्वाचित्कः पाठः।

तेन दीव्यति खनति जयति जितम् ।४।४।२। [ [1]तृतीयान्तात्कृतसन्धेः समर्थादेष्वर्थेषु ठक् स्यात् ]। अक्षैर्दीव्यति, खनति, जयति वा–आक्षिकः। अक्षैर्जितम्—आक्षिकम् ।

संस्कृतम् ।४।४।३। [ [1]तृतीयान्तात्कृतसन्धेः समर्थात् संस्कृतमित्यर्थे ठक् स्यात् ]। दध्ना संस्कृतं–दाधिकम् । मारिचिकम् ।

तरति ।४।४।५। [ [1]तृतीयान्तात्समर्थात्तरतीत्यर्थे ठक् स्यात् ]। उडुपेन तरति–औडुपिकः ।

[[2]गोपुच्छाट्ठञ् ।४।४।६। [ [2]तृतीयान्ताद् गोपुच्छशब्दात्तरतीत्यर्थे ठक् स्यात् ]। गौपुच्छिकः। नौद्व्यचष्ठन् ।४।४।७। [ [2]तृतीयान्तान्नौशब्दाद् ,द्व्यचश्च तरतीत्यर्थे ठन् स्यात् ]। नाविकः। घटिकः[2]]।

चरति ।४।४।८। [ [1]तृतीयान्तात्समर्थाच्चरतीत्यर्थे ठक् स्यात् ]। हस्तिना हरति–हास्तिकः। [ [2]दध्ना चरति–दाधिकः। शकटेन चरति–शाकटिकः ]।

---

तेन दीव्यति। तृतीयान्त समर्थ से 'दिव्यति' आदि ४ अर्थों में ठक् प्रत्यय हो।

संस्कृतम्। तृतीयान्त समर्थ से 'संस्कृत' अर्थ में ठक् प्रत्यय हो।

तरति। तृतीयान्त समर्थ से 'तरति' अर्थ में ठक् प्रत्यय हो।

गोपुच्छात्। गोपुच्छप्रकृतिक तृतीयान्त समर्थ से 'तरति' अर्थ में ठञ् प्रत्यय हो।

नौद्व्यचष्ठन्। 'नौ' और द्व्यच् प्रातिपदिक प्रकृतिक तृतीयान्तसमर्थ से 'तरति' अर्थ में ठन् प्रत्यय हो।

चरति। तृतीयान्त समर्थ से चरति अर्थ में ठक् प्रत्यय हो।

---

१ शेषपूरणम्। २ लिखिते न दृश्यते।

पर्पादिभ्यः ष्ठन् ।४।४।१०। [ [1]तृतीयान्तेभ्यः पर्पादिभ्यः ष्ठन् स्याच्चरतीत्यर्थे ]। पर्पेण चरति-पार्पिकः। येन पीठेन पङ्गवश्चरन्ति स-पर्पः। आश्विकः। रथिकः।

श्वगणाट्ठञ्च ।४।४।११। [ [1]श्वगणप्रकृतिकतृतीयान्तात्कृतसन्धेः ष्ठन् स्याच्चरतीत्यर्थे]। चात्ष्ठन्। श्वादेरिञि ।७।३।८। [ [1]श्वादेरिञि ] ऐज् न [[1]स्यात्]। श्वाभस्त्रिः। *इकारादाविति वाच्यम्। श्वगणेन चरति-श्वागणिकः। श्वगणिकः।

वेतनादिभ्यो जीवति ।४।४।१२। [ [1]तृतीयान्तात्कृतसन्धेर्वेतनादेः जीवतीत्यर्थे ठक् स्यात् ]। वेतनेन जीवति-वैतनिकः। धानुष्कः।

हरत्युत्सङ्गादिभ्यः ।४।४।१५। [ [1]तृतीयान्तात्कृतसन्धेरुत्सङ्गादेः

---

इकारादाविति। सूत्रे 'इञि' इत्यपहाय इकारादाविति वक्तव्यमित्यर्थः। तेन ठञि परतोऽपि ऐजागमनिषेधः सिध्यति।

---

पर्पादिभ्यः ष्ठन्। पर्पादिप्रकृतिक तृतीयान्त समर्थ से 'चरति' अर्थ में ष्ठन् प्रत्यय हो।

श्वगणाट्ठञ्च। श्वगण प्रकृतिक तृतीयान्तसमर्थ से 'चरति' अर्थ में ठञ् और ष्ठन् प्रत्यय हों।

श्वादेरिञि। श्वादि को इञ् परे रहते ऐच् आगम नहीं हो।

इकारादाविति। 'इकारादि तद्धित परे रहते, श्वादिको ऐच् नहीं हो', ऐसा कहना चाहिए।

वेतनादिभ्यो। तृतीयान्त समर्थ वेतनादिसे 'जीवति' अर्थ में ठक् हो।

हरत्युत्सङ्गादि। उत्सङ्गादि प्रकृतिक तृतीयान्त समर्थ से 'हरति' अर्थ में ठक् प्रत्यय हो।

---

1 शेषपूरणम्।

हरतीत्यर्थे ठक् स्यात् ] । उत्सङ्गेन हरति—औत्सङ्गिकः ।

भस्त्रादिभ्यः ष्ठन् ।४।४।१६। [[1]तृतीयान्तेभ्यो भस्त्रादिभ्यः ष्ठन् स्याद्धरतीर्थे ]। भस्त्रया हरति—भस्त्रिकः । षित्त्वान् ङीष्—भस्त्रिकी ।

विभाषा विवधात् ।४।४।१७। [[1]तृतीयान्तात्कृतसन्धेर्विवधाद्धरतीत्यर्थे वा ] ष्ठन् [ स्यात् ]। पक्षे ठक् । विवधेन हरति-विवधिकः । वैवधिकः । एकदेशविकृतत्वाद्वीवधादपि । 'विवध'-'वीवध'शब्दौ उभयतो बद्धशिक्ये स्कन्धबाह्ये काष्ठे वर्त्तेते ।

निर्वृत्तेऽक्षद्यूतादिभ्यः ।४।४।१९। [[1]तृतीयान्तात्कृतसन्धेरक्षद्यूतादेर्निर्वृत्तेऽर्थे ठक् स्यात् ]। अक्षद्यूतेन निर्वृत्तं-आक्षद्यूतिकं [2]वैरम् ]।

संसृष्टे ।४।४।२२। [ [1]तृतीयान्तात्संसृष्ठे ठक्स्यात् ] दध्ना संसृष्टं दाधिकम् ।[[2]लवणाल्लुक् ।४।४।२४। [[1]तृतीयान्तात्कृतसन्धेः समर्थाल्लवणशब्दात्संसृष्टार्थकप्रत्ययस्य ठको लुक् स्यात् ]। लवणेन संसृष्टो-

---

स्कन्धबाह्ये इति । 'बहंगी' 'कावड' इति ख्याते ।

---

भस्त्रादिभ्यः ष्ठन् । भस्त्रादि प्रकृतिक तृतीयान्त समर्थ से 'हरति' अर्थ में ष्ठन् हो ।

विभाषा विवधात् । विवधप्रकृतिक तृतीयान्त समर्थ से 'हरति' अर्थ में ष्ठन् विकल्प करके हो । [ पक्षमें—ठक् होगा ]।

निर्वृत्तेऽक्ष । अक्षद्यूतादिप्रकृतिक तृतीयान्त समर्थ से 'निर्वृत्त' अर्थ में ठक् प्रत्यय हो ।

संसृष्टे । तृतीयान्तसमर्थ से संसृष्ट अर्थ में ठक् प्रत्यय हो ।

लवणाल्लुक् । लवणप्रकृतिकतृतीयान्त समर्थ से संसृष्ट अर्थ में हुए ठक् प्रत्ययका लुक् हो ।

---

१ शेषपूरणम् । २ अयं ग्रन्थो लिखिते प्रायो न दृश्यते ।

लवणः सूपः । मुद्गादण् ।४।४।२५। [ [1]तृतीयान्तात्समर्थान्मुद्गादण् स्यात्संसृष्टे ]। मौद्ग-[2]ओदनः ]।

उञ्छति ।४।४।३२। [ [1]द्वितीयान्तादुञ्छतीत्यर्थे ठक् स्यात् ]। बदराण्युञ्छति-बादरिकः ।

रक्षति ।४।४।३३। [ [1]द्वितीयान्ताद्रक्षतीत्यर्थे ठक् स्यात् ]। समाजं रक्षति-सामाजिकः ।

शब्द-दर्दुरं करोति ।४।४।३४। [ [1]द्वितीयान्ताभ्यामाभ्यां करोतीत्यर्थे ठक् स्यात् ]। शब्दं करोति-शाब्दिकः । दार्दुरिकः ।

[ [2]पक्षिमत्स्यमृगान् हन्ति ।४।४।३५। [ [1]द्वितीयान्तेभ्यः पक्ष्यादिभ्यो हन्तीत्यर्थे ठक् स्यात् ]। स्वरूपस्य, पर्यायाणां, विशेषाणां च ग्रहणम् । मत्स्यपर्यायेषु मीनस्यैव । पक्षिणो हन्ति-पाक्षिकः । शाकुनिकः । मायूरिकः । मात्स्यिकः । मैनिकः । शाकुनिकः । मार्गिकः । हारिणिकः । सारङ्गिकः[2] ]।

---

शब्दं करोतीति । प्रकृतिप्रत्ययविभागेन शब्दं व्युत्पादयतीत्यर्थः । दर्दुरो-मृत्तिकाकृतो वाद्यभाण्डविशेषः । तं करोति—दार्दुरिकः = कुम्भकारः ।

मैनिक इति । मीनं हन्ति—मैनिकः । मृगं हन्ति—मार्गिकः ।

---

मुद्गादण् । तृतीयान्त समर्थ मुद्गशब्दसे संसृष्ट अर्थमें अण् प्रत्यय हो ।

उञ्छति । द्वितीयान्तसमर्थसे 'उञ्छति' अर्थमें ठक् प्रत्यय हो ।

रक्षति । द्वितीयान्तसमर्थसे 'रक्षति' अर्थमें ठक् प्रत्यय हो ।

शब्ददर्दुरं । शब्द और दर्दुर प्रकृतिक द्वितीयान्तसमर्थसे 'करोति' अर्थमें ठक् प्रत्यय हो ।

पक्षिमत्स्य । पक्ष्यादि प्रकृतिक द्वितीयान्तसमर्थसे 'हन्ति' अर्थमें ठक् प्रयय हो ।

---

१ शेषपूरणम् । २ लिखिते नास्ति ।

धर्मं चरति ।४।४।४१। [ [1]द्वितीयान्तात्कृतसन्धेर्धर्मशब्दाच्चरतीत्यर्थे ठक् स्यात् ]। धार्मिकः ।

*अधर्माच्चेति वक्तव्यम् । आधर्मिकः ।

[ [2]तदस्य पण्यम् ।४।४।५१। [ [1]प्रथमान्तात्समर्थादस्येति षष्ठ्यर्थे ठक् स्यात्, यत्प्रथमान्तं पण्यञ्चेत्तद्भवति]। अपूपाः पण्यमस्य—आपूपिकः ।

लवणाट्ठञ् ।४।४।५२। [ [1]प्रथमान्ताल्लवणाट्ठञ् स्यात्पूर्वविषये ] । लावणिकः[2] ]।

शिल्पम् ।४।४।५५। [ [1]प्रथमान्तात्समर्थादस्येत्यर्थे ठक् स्यात्, यत्प्रथमान्तं शिल्पञ्चेत्तद्भवति ]। मृदङ्गवादनं शिल्पमस्य—मार्दङ्गिकः ।

प्रहरणम् ।४।४।५७। [ [1]प्रथमान्तात्समर्थादस्येत्यर्थे ठक् स्यात्, यत्प्रथमान्तं—प्रहरणं चेत्तद्भवति ] । असिः प्रहरणमस्य—आसिकः । धानुष्कः ।

---

अधर्माच्चेतीति । 'ग्रहणवतेति' तदन्तविधिनिषेधात्तदन्तविधेरभावादप्राप्ते वचनम् । पण्यं—विक्रेयद्रव्यम् ।

---

धर्मं चरति । धर्मप्रकृतिक द्वितीयान्त समर्थ से 'चरति' अर्थ में ठक् हो ।

अधर्माच्चेति । अधर्मप्रकृतिक द्वितीयान्त समर्थ से भी 'चरति' अर्थ में ठक् प्रत्यय हो ।

तदस्य पण्यं । प्रथमान्त समर्थ से 'अस्य पण्यम्' इस अर्थ में ठक् हो ।

लवणाट्ठञ् । लवण प्रकृतिक प्रथमान्त समर्थ से 'अस्य पण्यम्' इस अर्थ में ठञ् हो ।

शिल्पम् । प्रथमान्त समर्थ से 'अस्य शिल्पम्' इस अर्थ में ठक् प्रत्यय हो।

प्रहरणम् । प्रथमान्त समर्थ से 'अस्य प्रहरणम्' इस अर्थ में ठक् प्रत्यय हो।

---

१ शेषपूरणम् । २ लिखिते नास्ति ।

[ [1]शक्तियष्ट्योरीकक् ।४।४।५९।[ [2]आभ्यामीकक् स्यात्पूर्वविषये]।
शाक्तीकः । याष्टीकः ।

**अस्ति-नास्ति-दिष्टं मतिः** ।४।४।६०।[ [2]प्रथमान्तेभ्यः समर्थेभ्योऽस्त्यादिभ्योऽस्येत्यर्थे ठक् स्यात् । यत्प्रथमान्तं मतिश्चेत्तद्भवति ]।
'अस्ति परलोक' इत्येवं मतिर्यस्य—स आस्तिकः । 'नास्ती'ति मतिर्यस्य स—नास्तिकः । 'दिष्ट'मिति मतिर्यस्य स—दैष्टिकः[1] ]।

**शीलम्** ।४।४।६१। [ [2]प्रथमान्तादस्येति षष्ठ्यर्थे ठक् स्यात्। यत्प्रथमान्तं शीलं चेत्तद्भवति ]। अपूपभक्षणं शीलमस्य—आपूपिकः ।

**छत्रादिभ्यो णः** ।४।४।६२।[ [2]प्रथमान्तेभ्यःसमर्थेभ्यश्छत्रादिभ्यो णः स्यादस्य शीलमित्यर्थे ]। गुरोर्दोषाणामावरणं—छत्त्रं, तच्छीलमस्य—छात्त्रः ।

**तत्र नियुक्तः** ।४।४।६९। [ [2]सप्तम्यन्तान्नियुक्त इत्यर्थे ठक् स्यात् ]।
आकरे नियुक्तः—आकरिकः ।

---

अस्तिनास्ती एतौ निपातौ ।

दैष्टिक इति । दिष्टं = दैवं-भाग्यं । तत्परायणः । दैववादी वा ।

आकरिकः=आकराध्यक्षः । ( खानका अध्यक्ष ) ।

---

शक्तियष्ट्योः । शक्ति और यष्टि प्रकृतिक प्रथमान्त समर्थ से 'अस्य प्रहरणम्' इस अर्थ में ईकक् प्रत्यय हो ।

अस्तिनास्ति । अस्ति, नास्ति से, और प्रथमान्त समर्थ दिष्ट से 'इति मतिर्यस्य' (सः) इस अर्थ में ठक् प्रत्यय हो ।

शीलम् । प्रथमान्त समर्थ से 'अस्य शीलं' इस अर्थ में ठक् प्रत्यय हो ।

छत्त्रादिभ्यो णः । छत्त्रादि प्रकृतिक प्रथमान्त समर्थ से 'शीलमस्य' इस अर्थ में ण प्रत्यय हो ।

तत्र नियुक्तः । सप्तम्यन्त समर्थ से नियुक्त अर्थ में ठक् प्रत्यय हो ।

---

१ लिखिते नास्ति । २ शेषपूरणम् ।

निकटे वसति ।४।४।७३। [ [1]सप्तम्यन्तान्निकटशब्दाद्वसतीत्यर्थे ठक् स्यात् ]। नैकटिको भिक्षुः ।

इति ठगधिकारः । * ।

अथ प्राग्घितीयाः ।

प्राग्घिताद्यत् ।४।४।७५। 'तस्मै हित'मित्यतः प्राग् यदधिक्रियते ।

तद्वहति रथयुगप्रासङ्गम् ।४।४।७६। [ [3]तदिति द्वितीयान्ताद्वहतीत्यर्थे यत् प्रत्ययः स्यात् ]। रथं वहति-रथ्यः । युग्यः । [ [2]वत्सानां दमनकाले स्कन्धे यत्काष्ठमासज्यते, स-प्रासङ्गः । तं वहति-] प्रासङ्ग्यः ।

धुरो यड्ढकौ ।४।४।७७। [ [1]द्वितीयान्ताद्धुर्शब्दाद्वहतीत्यर्थे यड्-ढकौ स्तः ]। धुर्यः । धौरेयः ।

[ [3]हलसीराट्ठक् ।४।४।८१। [ हलसीराभ्यां द्वितीयान्ताभ्यां

---

भिक्षुरिति । भिक्षुका हि ग्रामस्य निकट एव निवसन्ति । भिक्षार्थमेव च ग्रामं प्रविशन्ति । 'आरण्यकेन भिक्षुणा ग्रामात्क्रोशे वस्तव्य'मिति हि शास्त्र'मिति काशिका ।

युगं-रथाङ्ग'-वहतीत्यर्थः ।

---

निकटे वसति । निकट प्रकृतिक सप्तम्यन्त समर्थ से वसति अर्थ में ठक् प्रत्यय हो ।

प्राग्घिताद्यत् । 'तस्मै हितम्' इस सूत्र तक यत् का अधिकार है ।

तद्वहति । रथादि प्रकृतिक द्वितीयान्त समर्थ से 'वहति' अर्थ में यत् प्रत्यय हो।

धुरो यड्ढकौ । धुर् प्रकृतिक द्वितीयान्त समर्थ से 'वहति' अर्थ में यत् और ढक् प्रत्यय हो ।

हलसीराट्ठक् । हल-सीर प्रकृतिक द्वितीयान्त समर्थ से 'वहति' अर्थ में ठक् प्रत्यय हो ।

---

१ शेषपूरणम् ।  २ क्वाचित्कः पाठः ।  ३ लिखिते नास्ति ।

वहतीत्यर्थे ठक् स्यात्[1] ]। हलं वहति-हालिकः। सैरिकः।

**विध्यत्यधनुषा** ।४।४।८३। द्वितीयान्ताद्विध्यतीत्यर्थे यत् [स्यात्], न चेत्तत्र धनुष्करणम्। पादौ विध्यन्ति-पद्याः शर्कराः[2] ]।

**नौ-वयो-धर्म-विष-मूल-मूल-सीता-तुलाभ्यस्तार्य-तुल्य-प्राप्य-वध्या-ऽऽनाम्य-सम-समित-संमितेषु** ।४।४।९१। [[1]तृतीयान्तेभ्यो नावादिभ्यस्तार्यादिष्वर्थेषु यत्स्यात् ]। नावा तार्यं-नाव्यं जलम्। वयसा तुल्यो-वयस्यः। धर्मेण प्राप्यं-धर्म्यम्। विषेण वध्यो-विष्यः। मूलेन आनाम्यं-मूल्यम्। मूलेन समो-मूल्यः। सीतया संमितं-सीत्यं क्षेत्रम्। तुलया संमितं-तुल्यम्।

**तत्र साधुः** ।४।४।९८। सामसु साधुः-सामन्यः। अग्र्यः। कर्मण्यः। शरण्यः।

---

पद्या इति। 'पद्यत्यतदर्थे' इति पद्भावः। मूलेन = वणिग्भिर्व्यापारार्थं विनियुक्तेन धनेन, स्वातिरिक्तं यल्लाभाख्यं द्रव्यमात्मानं प्रति शेषीक्रियते, तत्—आनाम्यम् = लाभः। सीता = हलाग्रं, तेन संमितं=निम्नोन्नतादिरहितं कृतम्। संमितं = परिच्छिन्नम्। तुल्यशब्दः समार्थे रूढः।

साधुरिति। साधुरत्र कुशल एव, न तु हितः, 'तस्मै हित'मित्यस्य पृथग् वक्ष्यमाणत्वात्।

---

विध्यत्यधनुषा। द्वितीयान्त समर्थ से 'विध्यति' अर्थ में यत् हो, वेध में यदि धनुष करण नहीं हो तो।

नौवयो। नावादि प्रकृतिक तृतीयान्त समर्थ से 'तार्य' आदि अर्थों में यत् प्रत्यय हो।

तत्र साधुः। सप्तम्यन्त समर्थ से 'साधु' अर्थ में यत् प्रत्यय हो।

---

१ शेषपूरणम्। २ लिखिते नास्ति।

सभाया यः ।४।४।१०५। [ सप्तम्यन्तात्सभाशब्दाद्यत्स्यात्साधुरित्यर्थे[1] ]। सभ्यः।

इति यतोऽवधिः[2] ।*।

## अथ छयतोरधिकारः।

प्राक् क्रीताच्छः ।५।१।१। 'तेन क्रीत'मित्यतः प्राक् छोऽधिक्रियते। उ-गवादिभ्यो यत् ।५।१।२। [ [1]'प्राक् क्रीता'दित्येव ]। उवर्णान्ताद्गवादिभ्यश्च यत् स्यात्, [ [1]प्राक्क्रीतीयेषु हिताद्यर्थेषु ]। छस्यापवादः।

( ग. ) नाभि नभं च। नभ्योऽक्षः। नभ्यम्—अञ्जनम्। रथनाभावेवेदम्। ( ग. ) शुनः सम्प्रसारणं, वा च दीर्घत्वम्। शुन्यम्।

---

नभ्य इति। यत्र अक्षदण्डः प्रवेश्यते तच्चक्रमध्यच्छिद्रं नाभिरित्युच्यते, तस्मै हितः—अक्षदण्डः—नभ्य इत्यर्थः। अञ्जनमिति। रथचक्रादेः प्रगुणीकरणाय तत्र तैलवसाघृतादिकं ( तैलघृताद्यभ्यङ्गः ) यत्प्रदीयते तदञ्जनम्। रथनाभावेवेति। शरीरावयवे तु परेण 'शरीरावयवाद्यत्' इत्यनेन बाधाद्देव। नाभ्यम्।

---

सभाया यः। सभा प्रकृतिक सप्तम्यन्त समर्थ से 'साधु' ( योग्य, कुशल ) अर्थ में 'य' प्रत्यय हो।

प्राक् क्रीताच्छः। 'तेन क्रीतम्' सूत्र तक 'छ' का अधिकार है।

उगवादिभ्यो यत्। उवर्णान्त और गवादि से यत् प्रत्यय हो, प्राक्क्रीतीय ( हितादि ) अर्थों में।

नाभि नभं च। नाभि से यत् प्रत्यय हो,और नाभि को 'नभ' आदेश हो।

शुनः सम्प्रसारण। श्वन् शब्द से यत् हो। और श्वन् को सम्प्रसारण हो। और उसको विकल्प करके दीर्घ भी हो।

---

१ शेषपूरणम्। २ 'यतोऽधिकारः'।

शून्यम्। ( ग. ) ऊधसोऽनङ् च । ऊधन्यः ।

**कम्बलाच्च संज्ञायाम्** ।५।१।३। [ [1]कम्बलात् ] यत् [स्यात्प्राक्क्रीतीयेषु हिताद्यर्थेषु ]। कम्बल्यम्—ऊर्णापलशतम्। संज्ञायां किम् ?। कम्बलीया ऊर्णा ।

**विभाषा हविरपूपादिभ्यः** ।५।१।४। [ [1]हविर्विशेषवाचकादपूपादेश्च यद्वा स्याद्धितादिषु प्राक्क्रीतीयेष्वर्थेषु ] । आमिक्ष्यं दधि। आमिक्षीयम्। पुरोडाश्यास्तण्डुलाः। पुरोडाशीयाः। अपूप्यम्। अपूपीयम्[2]।

**तस्मै हितम्** ।५।१।५। [ [1]चतुर्थ्यन्तात्कृतसन्धेः समर्थाद्धितमित्यर्थे यथाविहितं प्रागुक्ता, वक्ष्यमाणाश्च प्रत्ययाः स्युः ]। वत्सेभ्यो हितो—वत्सीयो गोधुक्। शङ्कव्यं दारु। [ [2]गव्यम्। हविष्यम् ]।

**शरीरावयवाद्यत्** ।५।१।६। [ [1]चतुर्थ्यन्तात्समर्थाच्छरीरावयव-

---

ऊधन्य इति। 'ये चाऽभावकर्मणोः' इति प्रकृतिभावात् 'नस्तद्धिते' इति टिलोपो न।

पलेति। पलं—चत्वारः, पञ्च वा कर्षाः। ( प्रायः ५ तोला, १ छटांक )।

आमिक्षीयमिति। तप्ते पयसि दध्यावपने सति—आमिक्षा भवति।

---

ऊधसो नङ् च। ऊधस् शब्द से यत् प्रत्यय हो, और ऊधस् को नङ् आदेश हो।

कम्बलाच। कम्बल शब्द से संज्ञा में यत् प्रत्यय हो, हितादि अर्थों में।

विभाषा हवि। हविर्विशेषवाची और अपूपादि से विकल्प करके यत् प्रत्यय हो, हितादि अर्थों में।

तस्मै हितम्। चतुर्थ्यन्त समर्थ से हित अर्थ में उक्त और वक्ष्यमाण यथाविहित छ—यत् आदि प्रत्यय हों।

शरीरावयवा। शरीरावयव प्रकृतिक चतुर्थ्यन्त समर्थ से हित अर्थ में यत् प्रत्यय हो।

---

१ शेषपूरणम्। २ लिखिते नास्ति।

वाचिनो हितमित्यर्थे यत् स्यात्[१]। [२]दन्तेभ्यो हितं–] दन्त्यम्। कण्ठ्यम्। नस्यम्।

[[२]अजाविभ्यां थ्यन् ।५।१।८। आभ्यां थ्यन् स्याद्धितमित्यर्थे। अजथ्या यूथिः। अविथ्या ]।

आत्मन्विश्वजनभोगोत्तरपदात्खः ।५।१।९। [[१]चतुर्थ्यन्तेभ्य आत्मादिभ्यो हितमित्यर्थे खः स्यात्]।

आत्माऽध्वानौ खे ।६।४।१६९। [३]एतौ खे प्रकृत्या स्तः। आत्मने हितम्–आत्मनीनम्। विश्वजनीनम्।

[ * [२]कर्मधारयादेवेष्यते। अन्यत्र—विश्वजनीयम्।

* पञ्चजनादुपसंख्यानम्। पञ्चजनीनम्। 'कुमति च'इति णः[२]–] मातृभोगीणः। [ *[२]आचार्यादणत्वं च। आचार्यभोगीनः] ॥

इति छयतोः पूर्णोऽवधिः। *

---

अजाविभ्यां थ्यन्। अज, अवि प्रकृतिक चतुर्थ्यन्त समर्थ से हित अर्थ में थ्यन् प्रत्यय हो।

आत्मन्विश्वजन। आत्मादि प्रकृतिक चतुर्थ्यन्त से हित अर्थ में ख प्रत्यय हो।

आत्माध्वानौ खे। आत्मन् और अध्वन् प्रकृति से रहें, ख प्रत्यय परे रहते।

कर्मधारयादेवेष्यते। विश्वजन से कर्मधारय में ही ख प्रत्यय हो।

पञ्चजनादुप। पञ्चजन प्रकृतिक चतुर्थ्यन्त समर्थ से भी हित अर्थ में ख प्रत्यय हो।

आचार्यादणत्वं च। आचार्य से परे ['भोगीन' के] नकार को णत्व नहीं हो।

---

१ शेषपूरणम्।　　२ लिखिते नास्ति।　　३ लिखितेऽयं पाठो दृश्यते।

## अथ तद्धिते आर्हीयाः ।

**प्राग्वतेष्ठञ्** ।५।१।१८। 'तेन तुल्य'मित्यतः प्राक् ठञधिक्रियते। [ [1]**आऽर्हादगोपुच्छसङ्ख्यापरिमाणाट्ठक्** ।५।१।१९। 'तदर्हती'त्येतदभिव्याप्य ठञधिकारमध्ये ठञोऽपवादष्ठगधिक्रियते, गोपुच्छादीन्वर्जयित्वा ।

**असमासे निष्कादिभ्यः** ।५।१।२०। 'आऽर्हा'दित्येतत्तेन क्रीतमिति यावत्सप्तदशसूत्र्यामनुवर्त्तते। निष्कादिभ्योऽसमासे ठक्, आर्हीयेष्वर्थेषु। निष्केण क्रीतम्—[ इति ]–नैष्किकम्। समासे तु–ठञ् ।

**परिमाणान्तस्याऽसंज्ञाशाणयोः** ।७।२।१७। [[2]परिमाणान्तस्य] उत्तरपदवृद्धिः स्याद्, ञिदादौ–[ [2]नतु संज्ञाशाणयोः ] । परमनैष्किकम् ।

**शताच्च ठन्यतावशते** ।५।१।२१। [[2]शताट्ठन्यतौ स्तोऽशतेऽभिधेये,

निष्कः = सुवर्णमुद्रा। ( मोहर, या १ तोला सोना ) ।

शताच्चेति । शताट्ठन् यतौ स्तोऽशतेऽभिधेये, आर्हीयेष्वर्थेषु इत्यर्थः ।

प्राग्वतेष्ठञ् । 'तेन तुल्यं' इस वति विधायक सूत्र तक ठञ् का अधिकार है ।

आर्हादगोपुच्छ । 'तदर्हति' इस सूत्र तक ठञ् के अधिकार में, ठञ् के अपवाद ठक् का अधिकार है। गोपुच्छादि को छोड़ कर । अर्थात्–गोपुच्छादि में तो ठञ् का ही अधिकार रहेगा, ठक् का नहीं ।

असमासे । निष्कादि से असमास में ठक् हो, आर्हीय क्रीत आदि अर्थों में।

परिमाणान्तस्याऽ । परिमाणान्त को उत्तर पद वृद्धि हो, ञिदादि पर रहते। सञ्ज्ञा और शाण को छोड़कर ।

शताच्च । शत से आर्हीय क्रीत आदि अर्थों में ठन् और यत् हों, शत अभिधेय नहीं हो तो ।

१ [ ] एतदन्तर्गतो ग्रन्थो लिखिते नास्ति । २ शेषपूरणम् ।

आर्हीयेषु क्रीताद्यर्थेषु[1] ]। शत्यम्। शतिकम्। अशते किम्?-।

**सङ्ख्याया अ-ति-शदन्तायाः कन्** ।५।१।२२। [[1]अ-त्यन्तशदन्तायाः सङ्ख्यायाः कन् स्यात्], आर्हीयेऽर्थे। शतं परिमाणमस्य—शतकः सङ्घः। बहुकः। त्यन्तायास्तु—साप्ततिकः। शदन्तायाः—चात्वारिंशत्कः।

**वतोरिड्वा** ।५।१।२३। वत्वन्तात्कन इड् वा [[2]स्यात्]। तावत्कः। तावतिकः। **कंसाट्टिठन्** ।५।१।२५।[[1]कंसाट्टिठन् स्यादार्हीयेष्वर्थेषु]। कंसिकः। कंसिकी।

*अर्द्धाच्च। अर्द्धिकः। [[2]अर्द्धिकी]।

**अध्यर्द्धपूर्वाद् द्विगोर्लुगसंज्ञायाम्** ।५।१।२८। अध्यर्द्धपूर्वाद्, द्विगोश्च परस्याऽऽर्हीयस्य लुक् [[2]स्यात्]। अध्यर्द्धकंसम्। द्विकंसम्। संज्ञायां तु—पाञ्चकलायिकम्[3] ]।

**तेन क्रीतम्** ।५।३।३७। [तृतीयान्तात् क्रीतमित्यर्थे यथाविहितं प्रत्ययाः स्युः]।

---

शतक इति। इह प्रत्ययार्थो वस्तुतः प्रकृत्यर्थाच्छतान्न भिद्यते, तेन ठन्यतौ न, किन्तु कनेव।

कलायः—मानभेदः। (मटर के दाना के बराबर)।

तेन क्रीतमिति। तृतीयान्तात्क्रीतेऽर्थे यथाविहितं प्रत्ययाः स्युः।

---

सङ्ख्याया अति। त्यन्त और शदन्त से भिन्न सङ्ख्या वाचक से कन् प्रत्यय हो, आर्हीय-क्रीत-आदि अर्थों में।

वतोरिड्वा। वत्वन्त से विहित कन् को इट् आगम हो, विकल्प करके।

कंसाट्टिठन्। कंस शब्द से टिठन् प्रत्यय हो, आर्हीय अर्थों में।

अर्द्धाच्च। अर्द्ध से टिठन् हो, आर्हीय अर्थों में।

अध्यर्द्धपूर्वा। अध्यर्द्ध पूर्वक से, और द्विगु से परे जो आर्हीय प्रत्यय, उसका लुक् हो, असञ्ज्ञा में।

तेनक्रीतम्। तृतीयान्त समर्थ से क्रीत अर्थ में यथा विहित ठक् ठञ्

---

१ शेषपूरणम्। २ क्वाचित्कः पाठः। ३ [] एतदन्तर्गतः पाठो लिखिते नास्ति।

ठञ्-[1]गोपुच्छेन क्रीतं गौपुच्छिकम्। साप्ततिकम्। ठक्-नैष्किकम्।

तस्येश्वरः ।५।१।४२। सर्वपृथिवीभ्यामणञौ स्तः, [ [2]तस्येश्वर इत्यर्थे ]। अनुशतिकादीनां चेतिवृद्धिः। सर्वभूमेरीश्वरः-सार्वभौमः। पार्थिवः। [ [3]तदस्य परिमाणम् ।५।१।५७। [प्रथमान्तादस्य परिमाणमित्यर्थे यथाविहितं ठञादयः स्युः। प्रस्थः परिमाणमस्य—प्रास्थिको राशिः *स्तोमे डविधिः। पञ्चदश मन्त्राः परिमाणमस्य पञ्चदशः स्तोमः। सप्तदशः। सोमयागेषु छन्दोगैः क्रियमाणा पृष्ठ्यादिसंज्ञिका स्तुतिः-स्तोमः[4] ]।

पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम् ।५।१।५९। एते रूढिशब्दा निपात्यन्ते।

---

परिमाणमिति। इह परिमाणपदेन परिच्छेदकमात्रं गृह्यते, न तु 'परिमाणं तु सर्वतः' इति पारिभाषितं सर्वतोमानमात्रम्, उत्तरसूत्रे ( सङ्ख्यायाः सञ्ज्ञासंघेति सूत्रे ) परिमाणपदेन सङ्ख्याया ग्रहणात्।

---

आदि आर्हीय प्रत्यय हों।

तस्येश्वरः। सर्वभूमि और पृथिवी प्रकृतिक षष्ठ्यन्त समर्थ से ईश्वर अर्थ में क्रम से अण और अञ् हों।

तदस्य परिमाणम्। प्रथमान्त समर्थ से 'अस्य परिमाणम्' इस अर्थ में यथा विहित आर्हीय ( ठक्-) ठञादि प्रत्यय हो।

स्तोमे डविधः। स्तोम अभिधेय हो तो 'अस्य परिमाणम्' इस अर्थ में 'ड' प्रत्यय हो।

पङ्क्तिविंशति। पङ्क्ति आदि ये १० रूढि शब्द निपातन से सिद्ध हों।

---

१ अत्र—'तेन क्रीत'मिति सूत्रानन्तरम्—

'सप्तत्या क्रीतं-साप्ततिकम्। प्रस्थेन क्रीतं प्रास्थिकम्' इत्येव पाठो लिखिते दृश्यते। २ शेषपूरणम्। ३ लिखिते नास्ति।

तदर्हति ।५।१।६३। द्वितीयान्तादर्हतीत्यर्थे यथाविहितं ठक्-ठञा-दयः स्युः। श्वेतच्छत्रमर्हति श्वेतच्छत्रिकः। [1]दण्डादिभ्यः [यत्]।५।१।६६। एभ्यो यत् स्यादर्हतीत्यर्थे । दण्डमर्हति-दण्ड्यः । अर्घ्यः । वध्यः ।

तेन निर्वृत्तम् ।५।१।७९। [2][तृतीयान्तात्कालवचिनो निर्वृत्तमित्यर्थे ठञ् स्यात् ]। अह्ना निर्वृत्तम्—आह्निकम् ।

## इति ठक्ठञोरवधिः[3] ।

## अथ भावकर्मार्थकाः ।

तेन तुल्यं क्रिया चेद्वतिः ।५।१।११५। [ [2]तृतीयान्तात्तुल्य-मित्यर्थे वतिः स्यात्, यत्तुल्यं--क्रिया चेत सा भवति ]। ब्राह्मणेन

---

तदर्हति। द्वितीयान्ताल्लब्धुं योग्यो भवतीत्यर्थे ठक्--ठञादयः स्युः। प्रास्थिक इति। ठञ उदाहरणम्। आर्हादिति सूत्रे परिमाणस्य पर्युदासेन ठकोऽभावात्। तेन तुल्यमिति। तृतीयान्तात्तुल्यमित्यर्थे वतिः, यत्तुल्यं क्रिया चेत्सा भवति। 'तुल्य'मिति च सामान्ये नपुंसकम्।

---

तदर्हति। द्वितीयान्त समर्थ से 'अर्हति' अर्थ में ठञ् हो।

दण्डादिभ्यः। दण्डादि प्रकृतिक द्वितीयान्त समर्थ से यत् प्रत्यय हो, 'अर्हति' अर्थ में।

तेन निर्वृत्तम्। कालवाची तृतीयान्त समर्थ से 'निर्वृत्त' अर्थ में ठञ् प्रत्यय हो।

तेन तुल्यं। तृतीयान्त समर्थ से 'तुल्य' इस अर्थ में वति हो। जो तुल्य हो--वह यदि क्रिया हो तो।

---

१ अत्र—'दण्डादिभ्यः' इत्येव सूत्रं लिखितं दृश्यते।

अतएव—तत्त्वबोधिनी—बालमनोरमयोः—"पूर्वसूत्राद्यदनुवर्त्तते" इति व्याख्यातम्।

२ शेषपूरणम्। 'दण्डादिभ्यो यत्' इति तु मुद्रिते पाठः। ३ ठञोऽवधिः। पा०।

तुल्यं—ब्राह्मणवदधीते। क्रिया चेत् किम्?। गुणतुल्ये मा भूत्। पुत्रेण तुल्यः स्थूलः।

तत्र तस्येव।५।१।११६। [[1]सप्तम्यन्तात्षष्ठ्यन्ताच्च इवार्थे वतिः स्यात्]। मथुरायामिव-मथुरावत्-स्रुघ्ने प्राकारः। चैत्रस्येव चैत्रवत्-मैत्रस्य गावः।

तस्य भावस्त्वतलौ।५।१।११९। [[1]षष्ठ्यन्तात्समर्थाद्भावे त्व-तलौ स्तः]। प्रकृतिजन्यबोधे प्रकारो-भावः। गोर्भावः—गोत्वम्। गोता। 'त्वान्तं क्लीबम्'। 'तलन्तं स्त्रियाम्'।

आ च त्वात्।५।१।१२०। 'ब्रह्मणस्त्वः' इत्यतः प्राक् त्वतलावधि-क्रियेते। अपवादैः सह समावेशार्थमिदम्। चकारो नञ्स्नञ्भ्यामपि समावेशार्थः। स्त्रिया भावः—स्त्रैणम्। स्त्रीत्वम्। स्त्रीता। पौंस्नम्। पुंस्त्वम्। पुंस्ता।

---

तत्र तस्येवेति। सप्तम्यन्तात्षष्ठ्यन्ताच्च इवार्थे वतिः।

भावइति। प्रकारीभूय भासमानो धर्मो गोत्वघटत्वादिरूपो भाव इत्युच्यते।

अपवादैरिति। 'पृथ्वादिभ्य इमनिज्वा' इत्यादिभिः।

चकार इति। अन्यथाऽन्यत्र सावकाशौ त्वतलौ, स्त्रीपुंसाभ्यां न स्याताम्। पौंस्नमिति। संयोगान्तलोपः। पुंस्त्वमिति। संयोगान्तलोपे 'पुमः खय्य'ति रुत्वम्। अनुस्वाराऽनुनासिकौ। रेफस्य विसर्गः। सत्वम्।

---

तत्र तस्येव। सप्तम्यन्त और षष्ठ्यन्त से 'इव' के अर्थ में 'वति' प्रत्यय हो।

तस्य भावः। षष्ठ्यन्त से भाव अर्थ में 'त्व' और 'तल्' प्रत्यय हों।

त्वान्तं क्लीबं। 'त्व' प्रत्ययान्त नपुंसकलिङ्ग होता है।

तलन्तं स्त्रियाम्। तल् प्रत्ययान्त स्त्रीलिङ्ग होता है।

आ च त्वात्। 'ब्रह्मणस्त्वः' इस सूत्र तक त्व और तल् का अधिकार है।

---

१ शेषपूरणमेतत्।

पृथ्वादिभ्य इमनिज्वा ।५।१।१२२। [ [1]पृथ्वादिप्रकृतिकषष्ठ्यन्तात्कृतसन्धेर्भावे इमनिज्वा स्यात् ]। 'वा' वचनमणादिसमावेशार्थम् ।

र ऋतो हलादेर्लघोः ।६।४।१६१। [ [1]हलादेर्लघोर्ऋकारस्य रः स्या-]-दिष्ठेमेयस्सु ।

टेः ।६।४।१५५। [ [1]भस्य टे] र्लोपः [स्या]दिष्ठेमेयस्सु ।

*पृथुमृदुभृशकृशदृढपरिवृढानामेव रत्वम् । पृथोर्भावः—प्रथिमा । पार्थवम् । म्रदिमा । मार्दवम् ।

वर्णदृढादिभ्यः ष्यञ्च ।५।१।१२३। [ [1]षष्ठ्यन्तेभ्यो वर्णवाचिभ्यो, दृढादिभ्यश्च भावे ष्यञ् स्यात् ]। चादिमनिच् । शौक्ल्यम् । शुक्लिमा । दार्ढ्यम् । द्रढिमा ।

गुणवचनब्राह्मणादिभ्यः कर्मणि च ।५।१।१२४। [ [1]गुणोप-

---

वावचनमिति । इगन्तलघुपूर्वेषु पृथुमृदुप्रभृतिषु अणः समावेशः । गुणवचनेषु चण्डखण्डादिषु तु ष्यञः समावेशः । बालवत्सादिषु च वयोलक्षणस्य अञः समावेश इति विवेकः । त्वतलौ तु पूर्वसूत्रेणैव लब्धौ ।

---

पृथ्वादिभ्यः । पृथु आदि प्रकृतिक षष्ठ्यन्त समर्थ से भाव अर्थ में 'इमनिच्' प्रत्यय हो, विकल्प करके ।

र ऋतो । हलादि लघु ऋकार को 'र' आदेश हो, इष्ठन्, इमनिच् और ईयसुन् प्रत्यय परे रहते ।

टेः । भसञ्ज्ञक की टि का लोप हो, इष्ठन्, इमनिच् और ईयसुन् प्रत्यय परे रहते ।

वर्णदृढादिभ्यः । वर्णवाचि-प्रकृतिक और दृढादि प्रकृतिक जो षष्ठ्यन्त कृतसन्धि समर्थ, उससे भाव अर्थ में ष्यञ् हो, और इमनिच् भी हो ।

गुणवचन । गुणोपसर्जन द्रव्यवाची प्रकृतिक, और ब्राह्मणादिप्रकृतिक जो षष्ठ्यन्त कृतसन्धि समर्थ, उससे कर्म और भाव अर्थ में 'ष्यञ्' प्रत्यय हो ।

---

१ शेषपूरणमेतत् ।

सर्जनद्रव्यवाचिभ्यो, ब्राह्मणादिभ्यश्च षष्ठ्यन्तेभ्यः समर्थेभ्यः कर्मणि ष्यञ् स्यात्[1]]। चाद्भावे। जडस्य भावः, कर्म वा–जाड्यम्। मौढ्यम्। ब्राह्मण्यम्। [ *[2]अर्हतो नुम् च। अर्हतो भावः, कर्म वा–आर्हन्त्यम्। आर्हन्ती ]। आकृतिगणोऽयम्।

[ *[2]चतुर्वर्णादीनां स्वार्थे उपसङ्ख्यानम्। चत्वारो वर्णाः—चातुर्वर्ण्यम्। चातुराश्रम्यम्। त्रैवर्ग्यम्। षाड्गुण्यम्। सैन्यम्। सान्निध्यम्। औपम्यम्। त्रैलोक्यम्। इत्यादि।

स्तेनाद्यन्नलोपश्च ।५।१।१२५। [ [1]षष्ठ्यन्तात्समर्थात्स्तेनशब्दाद्भावे कर्मणि च यत्स्यान्नलोपश्च ]। 'न' इति सङ्घातग्रहणम्। [2]स्तेनस्य भावः, कर्म वा–[1]स्तेयम् ]।

सख्युर्यः ।५।१।१२६। [ [1]सखिशब्दप्रकृतिकात्षष्ठ्यन्ताद्भावे कर्मणि च यः स्यात् ]। सख्यम्।

कपिज्ञात्योर्ढक् ।५।१।१२७। [[1]षष्ठ्यन्ताभ्यामाभ्यां ढक् स्याद्भाव-

---

ब्राह्मणस्य भावः, कर्म वा–ब्राह्मण्यम्। कर्म–शौचादि क्रिया, यागादिरूपं कार्यञ्च। चत्वारो वर्णाः–चातुर्वर्ण्यम्। सेनैव–सैन्यम्।

---

अर्हतो नुम् च। अर्हत्प्रकृतिक षष्ठ्यन्त समर्थ से भाव कर्म अर्थ में ष्यञ् प्रत्यय हो, और अर्हत् को नुम आगम भी हो।

चतुर्वर्णादीनां। चतुर्वर्णादि प्रकृतिक षष्ठ्यन्त समर्थ से स्वार्थ में ष्यञ् हो।

स्तेनाद्यत्। स्तेन प्रकृतिक षष्ठ्यन्त कृतसन्धि समर्थ से भाव और कर्म अर्थ में यत् प्रत्यय हो। और स्तेन के नकार का लोप भी हो।

सख्युर्यः। सखि शब्द प्रकृतिक षष्ठ्यन्त कृतसन्धि समर्थ से भाव कर्म अर्थ में 'य' प्रत्यय हो।

कपिज्ञात्यो। षष्ठ्यन्त समर्थ कपि और ज्ञाति रूप प्रातिपदिक से, भाव और कर्म अर्थ में ढक् प्रत्यय हो।

---

१ शेषपूरणम्। २ लिखिते नास्ति।

कर्मणोः ] । कापेयम् । ज्ञातेयम् । पत्यन्त-पुरोहितादिभ्यो यक् । ५।१।१२८। [[1]पत्यन्तात्पुरोहितादि-प्रकृतिकषष्ठ्यन्तात्कृतसन्धेः समर्थाच्च भावे कर्मणि च यक् स्यात् ]। सैनापत्यम् । पौरोहित्यम् ।

[ *[2]राजाऽसे । 'राजन्'शब्दोऽसमासे यकं लभते इत्यर्थः]। राज्ञो भावः, कर्म वा-राज्यम् । समासे तु-ब्राह्मणादित्वात् ष्यञ् । आधिराज्यम् ।

प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ् ।५।१।१२९। [[1]प्राणिजातिवाचि--वयोवचनो-द्गात्रादिप्रकृतिकषष्ठ्यन्तात्कृतसन्धेः समर्थाद्भावे कर्मणि च अञ् स्यात्] । प्राणभृज्जातिः-आश्वम् । वयोवचनम्-कौमारम् । औद्गात्रम् । औन्नेत्रम् । सौष्ठवम् ।

हायनान्तयुवादिभ्योऽण् ।५।१।१३०। [[1]हायनान्त-युवादिप्रकृतिकात्षष्ठ्यन्तात्कृतसन्धेः समर्थाद्भावे, कर्मणि च अण्स्यात् ]। द्वैहायनम् । त्रैहायनम् । यौवनम् । स्थाविरम् । *श्रोत्रियस्य यलोपश्च ।

---

यौवनमिति । अणि परतः 'अन्' इति प्रकृतिभावः ।

---

पत्यन्तपुरोहितादि । पत्यन्त और पुरोहितादि-प्रकृतिक षष्ठ्यन्त समर्थ से भाव और कर्म अर्थ में यक् प्रत्यय हो ।

राजाऽसे । राजन् शब्द प्रकृतिक षष्ठ्यन्त समर्थ से भावकर्म अर्थ में यक् हो, असमास में ।

प्राणभृज्जाति । षष्ठ्यन्त समर्थ जो प्राणिजातिवाची, वयोवाची, और उद्गात्रादि, उनसे भाव कर्म अर्थ में अञ् प्रत्यय हो ।

हायनान्त । हायनान्त और युवादि-प्रकृतिक षष्ठ्यन्त समर्थ से भाव और कर्म अर्थ में अण् प्रत्यय हो ।

श्रोत्रियस्य । श्रोत्रिय प्रकृतिक षष्ठ्यन्त समर्थ से भावकर्म अर्थ में अण् प्रत्यय हो, और श्रोत्रिय के यकार ( य्-अ सङ्घात ) का लोप भी हो ।

---

१ शेषपूरणम् । २ इत आरभ्य लिखिते नास्ति ।

श्रौत्रम् । कुशल निपुण-चपल-पिशुन-कुतूहल-क्षेत्रज्ञाः—युवादिषु, ब्राह्मणादिषु च पठ्यन्ते । कौशल्यम् । कौशलमित्यादि ।

इगन्ताच्च लघुपूर्वात् ।५।१।१३१। [ [1]लघुपूर्वो य इक्, तदन्तात्षष्ठ्यन्तात्कृतसन्धेः समर्थाद्भावे, कर्मणि च अण् स्यात् ] । शुचेर्भावः कर्म वा—शौचम् । मौनम् ।

योपधाद् गुरूपोत्तमाद् वुञ् ।५।१।१३२।[ [1]षष्ठ्यन्तात्कृतसन्धेः समर्थाद्यकारोपधाद् गुरूपोत्तमाद्भावे कर्मणि च अण् स्यात् ] । रामणीयकम् । आभिधानीयकम् । *सहायाद्वा । साहाय्यम् । साहायकम् ।

द्वन्द्वमनोज्ञादिभ्यश्च ।५।१।१३३। [[1]द्वन्द्वान्मनोज्ञादिभ्यश्च षष्ठ्यन्तात्कृतसन्धेः समर्थाद्वुञ्स्यात] । शैष्योपाध्यापिका । मानोज्ञकम्[2] ] ।

[ इति [2]भावकर्मार्थकाः ] ।

इति नञ्स्नञोऽधिकारः[3] ॥ * ।

---

श्रोत्रियस्य भावः, कर्म वा—श्रौत्रम् ।

मुनेर्भावः, कर्म वा—मौनम् । रमणीयस्य भावः, कर्म वा—रामणीयकम् ।

---

इगन्ताच्च । लघुपूर्वक जो इक्, तदन्त जो षष्ठ्यन्त समर्थ, उससे भाव और कर्म अर्थ में अण् प्रत्यय हो ।

योपधात् । गुरूपोत्तम जो यकारोपध,तत्प्रकृतिक षष्ठ्यन्त कृतसन्धि समर्थ से भाव और कर्म अर्थ में वुञ् प्रत्यय हो ।

सहायाद्वा । सहाय प्रकृतिक षष्ठ्यन्त समर्थ से भाव और कर्म अर्थ में वुञ् प्रत्यय हो, विकल्प करके ।

द्वन्द्वमनोज्ञादि । द्वन्द्वसमास और मनोज्ञादि प्रकृतिक षष्ठ्यन्त समर्थ से भाव और कर्म अर्थ में वुञ् प्रत्यय हो ।

---

१ शेषपूरणमेतत् । २ लिखिते नास्ति । ३ 'स्वधिः' पा० ।

## अथ पाञ्चमिकाः ।

धान्यानां भवने क्षेत्रे खञ् ।५।२।१। [ [1]धान्यवाचिप्रकृतिक-षष्ठ्यन्तात्कृतसन्धेः समर्थाद्भवनं क्षेत्रमित्यर्थे खञ् स्यात् ]। मुद्गानां भवनं क्षेत्रं–मौद्गीनम् । व्रीहिशाल्योर्ढक् ।५।२।२।[[1]आभ्यां ढक् स्या-दुक्तेऽर्थे ]। व्रैहेयम् । शालेयम् ।

[[2]यवयवकषष्टिकाद्यत् ।५।२।३।[षष्ठ्यन्तेभ्यो यवादिभ्यो यत्स्यात् भवनं क्षेत्रमित्यर्थे ]। यव्यम् । यवक्यम् । षष्टिक्यम् ।

विभाषा तिलमाषोमाभङ्गाणुभ्यः ।५।२।४। [ षष्ठ्यन्तेभ्यस्तिला-दिभ्यो वा ] यत् [ [1]स्याद्भवनं क्षेत्रमित्यर्थे ]। पक्षे खञ् । तिल्यम् । तैलीनम् । माष्यम् । माषीणम् । उम्यम् । औमीनम् । भङ्ग्यम् । भाङ्गीनम् । अणव्यम् । आणवीनम् ।

तत्सर्वादेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोति ।५।२।७। सर्वादेः

---

भवत्यस्मिन्–भवनम् । षष्टिको–धान्यविशेषो, यो द्वाभ्यां मासाभ्यां पच्यते ।

---

धान्यानां । धान्यवाची षष्ठ्यन्त समर्थ से 'भवनं क्षेत्रं' इस अर्थ में खञ् प्रत्यय हो ।

व्रीहिशाल्यो । व्रीहिशालि प्रकृतिक षष्ठ्यन्त समर्थ से भवन क्षेत्र अर्थ में ढक् हो ।

यवयवक । यवादि प्रकृतिक षष्ठ्यन्त समर्थ से यत् प्रत्यय हो, भवन क्षेत्र अर्थ में ।

विभाषा तिल । तिलादि प्रकृतिक षष्ठ्यन्त समर्थ से विकल्प करके यत् प्रत्यय हो, भवन क्षेत्र अर्थ में ।

तत्सर्वादेः । सर्वादि जो पथ्याद्यन्त द्वितीयान्त, उनसे 'व्याप्नोति' अर्थ में ख प्रत्यय हो ।

---

१ शेषपूरणम् । २ लिखिते नास्ति ।

पथ्याद्यन्तात् द्वितीयान्तात्खः [स्याद्व्याप्नोतीत्यर्थे[1]]। सर्वपथान् व्याप्नोति–सर्वपथीनः। सर्वाङ्गीणः। सर्वकर्मीणः। सर्वपत्रीणः। सर्वपात्रीणः[2] ]।

**हैयङ्गवीनं सञ्ज्ञायाम्** ।५।२।२३। नवनीते निपातोऽयम्।

**तस्य पाक-मूले पील्वादि-कर्णादिभ्यः कुणब्-जाहचौ** ।५।२।२४। [[1]षष्ठ्यन्तेभ्यः पील्वादिभ्यः पाकेऽर्थे कुणप् स्यात्। षष्ठ्यन्तेभ्यः कर्णादिभ्यश्च मूले जाहच् स्यात् ]। पीलूनां पाकः–पीलुकुणः। कर्णस्य मूलं–कर्णजाहम्। **पक्षात्तिः** ।५।२।२५। 'मूले' इत्यनुवर्त्तते। [[1]षष्ठ्यन्तात्पक्षशब्दान्मूलेऽर्थे ति-प्रत्ययः स्यात् ]। पक्षस्य मूलं-पक्षतिः।

**तेन वित्तश्चुञ्चुप्चणपौ** ।५।२।२६। [[1]तृतीयान्ताद्वित्त इत्यर्थे चुञ्चुप्-चणपौ स्तः ]। यकारः प्रत्यययोरादौ लुप्तनिर्दिष्टः, तेन चस्य नेत्त्वम्। विद्यया वित्तो—विद्याचुञ्चुः। विद्याचणः।

---

हैयङ्गेति। ह्योगोदोहस्य हियङ्गुरादेशो, विकारार्थे खञ् च निपात्यते। ह्योगोदोहस्य विकारो–हैयङ्गवीनम्। ( 'नौनी घी'। 'चूंटिया घी' )।

पीलुकुण इति। पीलूनि मरुदेशे 'पील' इति प्रसिद्धानि, लघूनि वन्यफलानि।

पक्षतिः। प्रतिपत्तिथिः। पक्षिरक्षमूलञ्च।

---

**हैयङ्गवीनं**। नवनीत अर्थ में 'हैयङ्गवीन' यह निपातन हो। अर्थात्—'ह्योगोदोह' को 'हियङ्गु' आदेश हो, और विकारार्थ में खञ् प्रत्यय भी हो, निपातन से।

**तस्य पाक**। षष्ठ्यन्त समर्थ पील्वादि से पाक अर्थ में कुणप् प्रत्यय हो। और षष्ठ्यन्त समर्थ कर्णादि से मूल अर्थ में जाहच् प्रत्यय हो।

**पक्षात्तिः**। पक्ष प्रकृतिक षष्ठ्यन्त समर्थ से मूल अर्थ में 'ति' प्रत्यय हो।

**तेन वित्तः**। तृतीयान्त समर्थ से वित्त अर्थ में चुञ्चुप् और चणप् प्रत्यय हो।

---

१ शेषपूरणम्। २ लिखिते नास्ति।

वेः शालच्छङ्कटचौ । ५ । २ । २८ । क्रियाविशिष्टसाधनवाचका-[ द्वेः शालच्-शङ्कटचौ स्तः ] स्वार्थे । विस्तृतम्-विशालम् । विशङ्कटम् ।

सम्प्रोदश्च कटच् ।५।२।२९। [ [1]एभ्यः क्रियाविशिष्टसाधनवाचिभ्यः स्वार्थे कटच् स्यात् ] । सङ्कटम् । प्रकटम् । उत्कटम् । चात्-विकटम् ।

*अलाबूतिलोमाभङ्गाभ्यो रजस्युपसङ्ख्यानम् । अलाबूनां रजः—अलाबूकटम् । तिलकटम् । * गोष्ठजादयः स्थानादिषु पशुनामभ्यः । गवां स्थानं-गोगोष्ठम् । सङ्घाते कटच् । अवीनां सङ्घातः—

---

साधनेति । साधनं-कारकम् । क्रियाविशिष्टकारकवाचकादित्यर्थः । स्वार्थे इति । अनिर्दिष्टार्थत्वादिति भावः । सङ्कटं—संहतम् । सम्बाधमिति यावत् । प्रकटं = प्रसिद्धम् । प्रकाशितम् । उत्कटम्—उद्भूतम् । विकटं-विकृतम् । गोष्ठजादय इति । 'सङ्घाते कटच्' इत्यादीनि वक्ष्यमाणानि प्रत्ययान्यस्यैव प्रपञ्चभूतानि । पशुनामादिभ्य इति भाष्ये प्रचुरः पाठः ।

सङ्घात इति । अप्रसृतावयवः समूहः—सङ्घातः ।

---

वेः शालच् । क्रियाविशिष्टकारकवाची 'वि' से शालच् और शङ्कटच् प्रत्यय हों, स्वार्थ में ।

सम्प्रोदश्च । क्रियाविशिष्टकारकवाची सम्, प्र, उद् से स्वार्थ में कटच् प्रत्यय हो ।

अलाबूतिलोमा । षष्ठ्यन्त अलाबू आदि से 'रज' अर्थ में कटच् प्रत्यय हो ।

गोष्ठजादयः । पशुनामादि प्रकृतिक षष्ठ्यन्त समर्थ से स्थानादि अर्थों में गोष्ठच् आदि प्रत्यय हों ।

सङ्घाते कटच् । पशुनामादि प्रकृतिक षष्ठ्यन्त समर्थ से सङ्घात अर्थ में कटच् प्रत्यय हो ।

---

1 शेषपूरणम् ।

अविकटः। *विस्तारे पटच्। अविपटः। *द्वित्वे गोयुगच्। द्वावुष्ट्रौ-उष्ट्रगोयुगम्। *षट्त्वे षड्गवच्। अश्वषड्गवम्।

*स्नेहे तैलच्। तिलतैलम्। सर्षपतैलम्।

अवात्कुटारच्च ।५।२।३०। [ [1]क्रियाविशिष्टसाधनवाचकादवात्कुटारच् स्यात्स्वार्थे ]। चात्कटच्। अवाचीनः-अवकुटारः। अवकटः।

नते नासिकायाः संज्ञायां टीटञ्नाटज्भ्रटचः ।५।२।३१। 'अवा'दित्येव। नतं-नमनम्। [ [1]नासिकासाधनके नमने (=नीचैस्त्वे) विद्यमानादवशब्दात्स्वार्थे टीटच्, नाटच्, भ्रटच्-एते प्रत्ययाः स्युः, सञ्ज्ञायाम् ]। नासिकाया नतम्-अवटीटम्। अवनाटम्। अवभ्रटम्। तद्योगान्नासिका—अवटीटा। पुरुषोऽपि—अवटीटः।

---

प्रसृतावयवः समूहो विस्तार इति—सङ्घातसमूहयो र्भेदः।

---

विस्तारे पटच्। पशुनामादि प्रकृतिक षष्ठ्यन्त समर्थ से विस्तार अर्थ में पटच् प्रत्यय हो।

द्वित्वे गोयुगच्। पशुनामादि प्रकृतिक षष्ठ्यन्त समर्थ से द्वित्व अर्थ में 'गोयुगच्' प्रत्यय हो।

षट्त्वे षड्गवच्। पशुनामादि प्रकृतिक षष्ठ्यन्त समर्थ से षट्त्व अर्थ में 'षड्गवच्' प्रत्यय हो।

स्नेहे तैलच्। षष्ठ्यन्त समर्थ से स्नेह अर्थ में तैलच् प्रत्यय हो।

अवात्कुटारच्च। क्रियाविशिष्ट साधन (=कारक) वाचक अव से, कुटारच् प्रत्यय हो, और कटच् प्रत्यय भी हो।

नते नासिकायाः। नासिका का—नमन—इस अर्थ में विद्यमान अव से टीटच् आदि तीन प्रत्यय हों, स्वार्थ में।

---

१ शेषपूरणम्।

**उपाऽधिभ्यां त्यकन्नासन्नाऽऽरूढयोः** ।५।२।३४। [ [1]'उप' 'अधि' इत्येताभ्यां यथासङ्ख्यमासन्नाऽऽरूढयोरर्थयोर्वर्त्तमानाभ्यां स्वार्थे त्यकन् स्यात् ]। पर्वतस्याऽऽसन्नं स्थलम्—उपत्यका। [ पर्वतस्य–] आरूढं स्थलम्–अधित्यका। **कर्मणि घटोऽठच्** ।५।२।३५। [ [1]सप्तम्यन्तात्कर्मन्-शब्दाद्घटते इत्यर्थेऽठच् स्यात् ]। कर्मणि घटते—कर्मठः[2] ]।

**तदस्य सञ्जातं तारकादिभ्य इतच्** ।५।२।३६। [ [1]प्रथमान्तेभ्यस्तारकादिभ्योऽस्य सञ्जातमित्यर्थे इतच् स्यात् ]। तारकाः सञ्जाता अस्य—तारकितं नभः। पण्डितः। आकृतिगणोऽयम्।

**प्रमाणे द्वयसज्दघ्नञ्मात्रचः** ।५।२।३७। [ [1]प्रमाणे वर्त्तमानात्प्रथमान्तादस्येति निर्दिष्टे प्रमेये द्वयसजादयस्त्रयः प्रत्ययाः स्युः]। ऊरू प्रमाणमस्य–ऊरुद्वयसम्। ऊरुदघ्नम्। ऊरुमात्रम्।

---

आसन्नं—समीपवर्त्ति। आरूढम्=उपरिवर्त्तमानम्। कर्मणीति। सप्तम्यन्तात्कर्मन्शब्दाद्घटते इत्यर्थे अठच् प्रत्ययः स्यात्। कर्मठ इति। 'नस्तद्धिते' इति टिलोपः। प्रमाण इति। प्रमाणे विद्यमानात्प्रथमान्तात् अस्येति निर्दिष्टे प्रमेये त्रयः प्रत्ययाः स्युरित्यर्थः।

---

उपाधिभ्यां। आसन्न और आरूढ अर्थ में क्रमशः वर्त्तमान उप और अधि से त्यकन् प्रत्यय हो, स्वार्थ में।

कर्मणि घटो। कर्मन् शब्द प्रकृतिक सप्तम्यन्त समर्थ से 'घटते' इस अर्थ में अठच् प्रत्यय हो।

तदस्य सञ्जातं। तारकादि प्रकृतिक प्रथमान्त समर्थ से 'अस्य सञ्जातम्' इस अर्थ में 'इतच्' प्रत्यय हो।

प्रमाणे द्वयसच्। प्रमाण अर्थ में वर्त्तमान प्रथमान्त समर्थ से 'अस्य' इस षष्ठ्यर्थ से निर्दिष्ट प्रमेय अर्थ में द्वयसच्, दघ्नच् और मात्रच्—ये तीन प्रत्यय हों।

---

१ शेषपूरणम्। २ अयं ग्रन्थो लिखिते नास्ति।

'प्रथमश्च द्वितीयश्च ऊर्ध्वमाने मतौ मम' ।
'ऊर्ध्वमानं किलोन्मानं, परिमाणन्तु सर्वतः ।
आयामस्तु प्रमाणं स्यात्, सङ्ख्या बाह्या तु सर्वतः' ॥

**पुरुष-हस्तिभ्यामण् च** ।५।२।३८। [ [1]पुरुष-हस्तिभ्यां प्रथमान्ताभ्यां समर्थाभ्यां प्रमाणोपाधिकाभ्यामस्येति षष्ठ्यर्थेऽण् स्यात्। चात्— द्वयसच्-दघ्नच्-मात्रचः ]। पुरुषः प्रमाणमस्य-पौरुषम्। पुरुषद्वयसम्। हास्तिनम्। हस्तिद्वयसम्। 'इनण्यनपत्ये' इति प्रकृतिभावः]।

---

प्रथमः = द्वयसच्प्रत्ययः। द्वितीयः—दघ्नच्प्रत्ययः। ऊर्ध्वेति। ऊर्ध्वावस्थितेन येन मीयते तत् उन्मानम्—यथा ऊर्वादि। एवञ्च—मात्रच्प्रत्ययः प्रमाणे = परिच्छेदकमात्रे भवति। दघ्नच्द्वयसचौ तूर्द्ध्वमाने एव भवत इति लब्धम्।

पुरुषः = ऊर्ध्वहस्तनृमानम्। 'पुरसा' इति प्रसिद्धम् ( 'पुरसा' )।

---

**प्रथमश्च**। द्वयसच् और दघ्नच् प्रत्यय ऊर्ध्वमान ( उन्मान-खडा नाप, अर्थात्—पैर कमर नाभि आदि से नापना ) अर्थ में ही होते हैं।

**ऊर्ध्वमानं किलो**। ऊंचाई से नापना—'उन्मान' या 'ऊर्ध्वमान' कहलाता है। और वर्त्तन आदि से सब तरफ से नापना—'परिमाण' कहलाता है। जैसे—प्रस्थ आदि। ['प्रस्थ' 'कुडव' 'द्रोण' आदि काठ आदि के पात्र होते हैं, उनमें अन्न दूध आदि भरकर नापा जाता है। अतः वह परिमाण कहलाता है ]।

और आयाम=लम्बाई-चौड़ाई आदि का नाप 'प्रमाण' कहलाता है। जैसे—हाथ, वितस्ति, अङ्गुल आदि।

और इन सबसे सङ्ख्या ( गिनती ) पृथक् ही है।

**पुरुषहस्तिभ्यामण्**। प्रमाणोपाधिक जो पुरुष और हस्ती, तत्प्रकृतिक प्रथमान्त समर्थ से 'अस्य' इस षष्ठ्यर्थ में अण् हो। द्वयसच् दघ्नच् मात्रच् भी हों।

---

१ शेषपूरणमेतत्।

**यत्तदेतेभ्यः परिमाणे वतुप् ।५।२।३९।** [[1]परिमाणोपाधिकेभ्यो यत्तदेतेभ्यः प्रथमान्तेभ्यः समर्थेभ्योऽस्येति षष्ठ्यर्थे वतुप् स्यात् ]। यत्परिमाणमस्य–यावान्। तावान्। एतावान्।

[[2]**किमिदम्भ्यां वो घः ५।२।४०।** [ परिमाणोपाधिकाभ्यां प्रथमान्ताभ्याम् ] आभ्यां वतुप्, [ [3]स्याद् ], वस्य च घः।

**इदं-किमोरीश्-की ।६।३।९०।** [ [1]इदं-किमोरीश्-की एतौ स्तो ], दृग्दृशवतुषु। कियान् ।

**किमः सङ्ख्यापरिमाणे डति च ।५।२।४१।** [[1]सङ्ख्यायाः परिमाणं = परिच्छेदः, तद्विषयकप्रश्ने वर्त्तमानात्किम्शब्दाड्डतिः स्यात् ] । चाद्वतुप्, तस्य च घः। का सङ्ख्या येषां ते—कति। कियन्तः।

---

किमः सङ्ख्येति। सङ्ख्यायाः परिमाणं—परिच्छेदः, तस्मिन्कर्त्तव्ये यः प्रश्नस्तत्र वर्त्तमानात् किमः प्रथमासमर्थादस्येति षष्ठ्यर्थे डतिः स्यात्। चाद्वतुप्। वस्य च घ इत्यर्थः।

---

यत्तदेतेभ्यः। परिमाणोपाधिक, प्रथमान्त समर्थ जो यत्, तत् और एतत् शब्द, उनसे 'अस्य' इस अर्थ में वतुप् हो।

किमिदम्भ्यां। परिमाणोपाधिक जो प्रथमान्त समर्थ—किम् और इदम् शब्द, उनसे वतुप् प्रत्यय हो, और वकार को घकार हो।

इदंकिमो। इदम् और किम् शब्द को क्रम से ईश् और की आदेश हों। दृक् दृश और वतु ( प्रत्यय ) परे रहते।

किमः सङ्ख्या। सङ्ख्या के परिच्छेद ( इयत्ता निर्द्धारण ) विषयक प्रश्न अर्थ में वर्त्तमान किम् शब्द से डति प्रत्यय हो। और वतुप् प्रत्यय भी हो। और वतुप् के वकार को घकार भी हो।

---

१ शेषपूरणम्। २ अयं ग्रन्थो लिखिते नास्ति। ३ क्वचिन्न।

**सङ्ख्याया अवयवे तयप्** ।५।२।४२। [[1]अवयवे वर्त्तमाना या सङ्ख्या, तद्वाचिनः प्रथमान्तादस्येति षष्ठ्यर्थेऽवयविनि तयप् [2]स्यात् ] । पञ्च अवयवा अस्य—पञ्चतयम् ।

**द्वित्रिभ्यां तयस्याऽयज्वा** ।५।२।४३। [ [2]द्वित्रिभ्यां परस्य तयपोऽयज्वा स्यात् ] । द्वयम् । द्वितयम् । त्रयम् । त्रितयम् ।

**उभादुदात्तो नित्यम्** ।५।२।४४। [ [2]उभशब्दात्तयपोऽयच् स्यात्, स चाऽऽद्युदात्तः ] । उभयम्[3] ।

[ इति पाञ्चमिकाः ] ।।

[ अथ मत्वर्थीयाः ] ।

**तदस्मिन्नधिकमिति दशान्ताड्डः** ।५।२।४५। [[2]तदिति प्रथमान्ताद्दशन्शब्दान्तादस्मिन्निति सप्तम्यर्थे डः स्यात्, यत्प्रथमान्तमधिकं चेत्तद्भवति] । एकादश अधिका अस्मिन्—एकादशम् । *शतसहस्रयो-

---

सङ्ख्याया अवयवे । अवयव में वर्त्तमान जो सङ्ख्या, तद्वाचक प्रथमान्त समर्थ से 'अस्य' इस अवयवी रूप षष्ठ्यर्थ में तयप् हो ।

द्वित्रिभ्यां । द्वि और त्रि से परे जो तयप्, उसको अयच् आदेश हो, विकल्प करके ।

उभादुदात्तो । उभ शब्द से परे जो तयप्, उसको नित्य अयच् आदेश हो । और वह अयच् आद्युदात्त हो ।

तदस्मिन्नधिकमिति । दशन्-शब्दान्त प्रकृतिक प्रथमान्त समर्थ से 'अस्मिन्' इस अर्थ में 'ड' प्रत्यय हो, जो प्रथमान्त है, वह यदि अधिक हो तो ।

शतसहस्रयोः । शत और सहस्र ही यदि प्रत्ययार्थ (विशेष्य) हो तो 'ड' होता है, अन्यत्र नहीं ।

---

१ अयं पाठो लिखिते नास्ति । २ शेषपूरणमेतत् । ३ एतदग्रे—"इति पाञ्चमिकाः । अथ मत्वर्थीयाः"—इति क्वचित्पाठो दृश्यते ।

रेवेष्यते । नेह—एकादशाऽधिका अस्यां विंशत्याम् ।

*प्रकृतिप्रत्ययार्थयोः समानजातीयत्व एवेष्यते । नेह—एकादश माषा अधिका अस्मिन् सुवर्णशते ।

**शदन्तविंशतेश्च** ।५।२।४६। [ [1]शदन्तात्प्रातिपदिकाद्विंशतेश्च ] डः स्यादुक्तेऽर्थे । त्रिंशदधिका अस्मिन्–त्रिंशम् । विंशम् ।

**तस्य पूरणे डट्** ।५।२।४८। 'सङ्ख्यायाः' इत्येव । [ षष्ठ्यन्तात्सङ्ख्येयार्थकसङ्ख्यावाचिनः पूरण इत्यर्थे डट् स्यात् ] । एकादशानां पूरणः–एकादशः ।

**नान्तादसङ्ख्यादेर्मट्** ।५।२।४९। [ [1]नकारान्तात्सङ्ख्यावाचिनोऽसङ्ख्यादेः परस्य ] डटो मडागमः [स्यात] । पञ्चानां पूरणः–पञ्चमः ।

---

तस्येति । षष्ठ्यन्तात्सङ्ख्येयार्थकसङ्ख्यावाचिनः पूरणेऽर्थे डट् स्यात् । पूर्यतेऽनेन पूरणः = अवयवः । स एवेह प्रत्ययार्थः । एकादशानां पूरण इति । उद्भूतावयवभेदः समुच्चयः प्रकृत्यर्थः, अवयवश्चेह प्रत्ययार्थः । यस्मात्सङ्ख्यावाचिनः प्रत्ययविधिस्तदीयप्रवृत्तिनिमित्तस्य एकादशत्वादेः पूरणे डट् ।

---

प्रकृतिप्रत्ययार्थयोः । प्रकृत्यर्थ और प्रत्ययार्थ यदि समान जातीय हों तभी यह ड प्रत्यय इष्ट है, अन्यत्र नहीं ।

शदन्तविंशतेश्च । शदन्त और विंशति प्रकृतिक प्रथमान्त समर्थ से ड प्रत्यय हो, 'अस्मिन् अधिकम्' इस अर्थ में ।

तस्य पूरणे । सङ्ख्येयार्थक सङ्ख्यावाची षष्ठ्यन्त समर्थ से पूरण (अवयव) अर्थ में डट् हो ।

नान्तादसङ्ख्यादेः । असङ्ख्यादि–जो नान्त सङ्ख्यावाची, उससे परे जो डट्, उसको मट् आगम हो ।

---

1 शेषपूरणम् ।

नान्तात्किम् ?-[[1] ति विंशतेर्डिति ।६।४।१४२।[[2] विंशतेर्भस्य तिशब्दस्य लोपः स्याड्डिति परे । विंशतेः पूरणः-] विंशः । असङ्ख्यादेः किम् ? । एकादशः ।

षट्कतिकतिपयचतुरां थुक् ।५।२।५१। [[2] एषां थुगागमः स्या-] ड्डटि । षण्णां पूरणः-षष्ठः । कतिथः । कतिपयशब्दस्याऽसङ्ख्यात्वेऽप्यत एव ज्ञापकाड्डट् । कतिपयथः । चतुर्थः ।

* [3] चतुरश्छयतावाद्यक्षरलोपश्च । तुरीयः । तुर्यः । बहुपूगगण-सङ्घस्य तिथुक् ।५।२।५२। [[2] एषां तिथुगागमः स्या] ड्डटि । बहुतिथः ।

वतोरिथुक् ।५।२।५३।[[2] वतोरिथुगागमः स्या-]ड्डटि । यावतिथः[3] ]।

द्वेस्तीयः ।५।२।५४।[ [1] द्विशब्दात्षष्ठ्यन्तात्पूरणेऽर्थे तीयः स्यात् ]। डटोऽपवादः । द्वयोः पूरणो-द्वितीयः । त्रेः संप्रसारणं च ।५।२।५५।

---

विंश इति । विंशतेः पूरणः—विंशः । डटि 'ति विंशतेर्डिति' इति तिलोपः ।
षट्कतीति । एषां थुगागमः स्याड्डटि ।
वतोरिति । प्रत्ययग्रहणे तदन्तग्रहणम् । तेन 'वतुबन्तस्य इथुगागमः स्याड्डटि परत' इत्यर्थः ।

---

षट्कतिकति । षडादि को थुक् आगम हो, डट् परे रहते ।
चतुरश्छयता । चतुर् प्रकृतिक षष्ठ्यन्त समर्थ से छ और यत् प्रत्यय हों, और चतुर् के आद्यक्षर ( चकार ) का लोप भी हो ।
बहुपूगगण । बहु आदि को तिथुक् आगम हो, डट् परे रहते ।
वतोरिथुक् । वतुप्प्रत्ययान्त को इथुक् आगम हो, डट् परे रहते ।
द्वेस्तीयः । द्विशब्द प्रकृतिक षष्ठ्यन्त समर्थ से पूरण अर्थ में तीय प्रत्यय हो ।
त्रेः सम्प्रसारणञ्च । त्रिशब्द प्रकृतिक षष्ठ्यन्त समर्थ से पूरण अर्थ में तीय प्रत्यय हो, और 'त्रि' को सम्प्रसारण भी हो ।

---

१ लिखितेऽयं पाठो दृश्यते । २ शेषपूरणम् । ३ लिखितेऽयं ग्रन्थो नास्ति ।

[[1]त्रिशब्दात्षष्ठ्यन्तात्पूरणेऽर्थे तीयः स्यात्। त्रेः सम्प्रसारणञ्च स्यात्]। तृतीयः। [[2]इह 'हलः' इति दीर्घो न। 'द्वितीय'-'तृतीये'ति, निर्देशात्।

**विंशत्यादिभ्यस्तमडन्यतरस्याम्।५।२।५६।** एभ्यो डटस्तमडागमो वा स्यात्। विंशतितमः। विंशः। एकविंशतितमः। एकविंशः।

**नित्यं शतादि-मासा-ऽर्द्धमास-संवत्सराच्च।५।२।५७।** [ शतादिभ्यो, मासा-ऽर्द्धमास-संवत्सरेभ्यश्च परस्य डटो नित्यं तमडागमः स्यात् ]। शतस्य पूरणः—शततमः। मासादेरत एव ज्ञापकाड्डट्। मासतमः।

**षष्ट्यादेश्चाऽसङ्ख्यादेः।५।२।५८।** [ [1]असङ्ख्यादेः षष्ट्यादेः सङ्ख्यावाचकात्परस्य डटो नित्यं तमडागमः स्यात् ]। षष्टितमः। सङ्ख्यादेस्तु—'विंशत्यादिभ्यः' इति विकल्प एव। एकषष्टः। एकषष्टितमः।

**मतौ छः सूक्तसाम्नोः।५।२।५९।** [ [1]प्रातिपदिकान्मत्वर्थे छः स्यात्सूक्तसाम्नोरभिधेययोः ]। अच्छावाकशब्दोऽस्त्यस्मिन्—अच्छावाकीयं सूक्तम्। वारवन्तीयं [2]साम ]।

---

निर्देशादिति। तेन निर्देशेन 'हल' इत्यत्र 'ढ्रलोप' इत्यतोऽणित्यनुवृत्तेर्नात्र दीर्घः। तत्र पूर्वेणैवाऽण्ग्रहणमित्युक्तत्वात्।

---

विंशत्यादिभ्यः। विंशत्यादि से परे जो डट्, उसको तमट् आगम हो, विकल्प करके।

नित्यं शतादि। शतादि, और मास, अर्द्धमास, संवत्सर—इनसे परे जो डट्, उसको नित्य तमट् आगम हो।

षष्ट्यादेश्चा। असङ्ख्यादि जो षष्ट्यादि सङ्ख्यावाचक शब्द, उनसे परे जो डट्, उसको नित्य तमट् आगम हो।

मतौ छः। प्रातिपदिक से मत्वर्थ में छ प्रत्यय हो, सूक्त और साम अभिधेय हों तो।

---

१ शेषपूरणमेतत्। २ अयं ग्रन्थो लिखिते नास्ति।

श्रोत्रियंश्छन्दोऽधीते ।५।२।८४। [ [1]श्रोत्रियन्निति निपात्यते, छन्दोऽधीते इत्यस्मिन्नर्थे ] । श्रोत्रियः । 'वे'त्यनुवृत्तेः–छान्दसः ।

[ [2]श्राद्धमनेन भुक्तमिनिठनौ ।५।२।८५। [ [2]भुक्तोपाधिकाच्छ्राद्धशब्दात्प्रथमान्तादनेनेत्यर्थे इनि–ठनौ स्तः] । श्राद्धी । श्राद्धिकः[2] ] ।

पूर्वादिनिः ।५।२।८६। [ [1]पूर्वशब्दादनेन कृतमित्यस्मिन्नर्थे इनिः स्यात् ] । पूर्वं कृतमनेन[3]–पूर्वी ।

सपूर्वाच्च ।५।२।८७। [ [1]विद्यमानपूर्वात्पूर्वशब्दान्तादनेन कृतमित्यर्थे इनिः प्रत्ययः स्यात् ] । कृतपूर्वी ।

इष्टादिभ्यश्च ।५।२।८८। [ [1]इष्टादिभ्योऽनेनेत्यर्थे इनिः स्यात् ] । इष्टमनेन–इष्टी । अधीती ।

[ [2]अनुपद्यन्वेष्टा ।५।२।९०। [अनुपदशब्दादिनिर्निपात्यते, अन्वेष्टर्यर्थे] ।

---

अनुपदीति । अनुपदशब्दादन्वेष्टर्यर्थे इनिप्रत्ययो निपात्यते ।

---

श्रोत्रियंश्छन्दो । 'छन्दोऽधीते' इस अर्थ में 'श्रोत्रियन्' यह निपातन होता है । [ इसमें नकार स्वरार्थ है ] ।

श्राद्धमनेन । भुक्तोपाधिक प्रथमान्त श्राद्ध शब्द से 'अनेन' इस अर्थ में इनि और ठन् प्रत्यय हों ।

पूर्वादिनिः । पूर्व शब्द से 'अनेन कृतं' इस अर्थ में इनि प्रत्यय हो ।

सपूर्वाच्च । विद्यमान पूर्व जो पूर्वान्त प्रतिपादिक, उससे 'अनेन कृतम्' इस अर्थ में इनि हो ।

इष्टादिभ्यश्च । इष्टादि से 'अनेन' इस अर्थ में इनि प्रत्यय हो ।

अनुपद्यन्वेष्टा । अनुपद शब्द से अन्वेष्टा अर्थ में इनि प्रत्यय निपातित होता है ।

---

१ शेषपूरणम् । २ अयं ग्रन्थो लिखिते नास्ति । ३ 'पूर्वं ज्ञातमनेन पूर्वी' पा०।

अनुपदमन्वेष्टा–अनुपदी गवाम् ।

**साक्षाद् द्रष्टरि संज्ञायाम्** ।५।२।९१। [ "[1]साक्षा'दित्यव्ययादिनिः स्यात्संज्ञायां गम्यमानायाम् ] साक्षाद् द्रष्टा–[2]साक्षी ] ।

[ [2]इति पाञ्चमिकाः ] ।

[ [2]अथ मत्वर्थीयाः ] ।

**तदस्याऽस्त्यस्मिन्निति मतुप्** ।५।२।९४। [ [1]अस्त्यर्थोपाधिकात्त-दिति प्रथमान्तादस्येति षष्ठ्यर्थे,अस्मिन्निति सप्तम्यर्थे वा,मतुप्स्यात् ] । गावोऽस्याऽस्मिन्वा सन्ति–गोमान् । **तसौ मत्वर्थे** । १ । ४ । १९ ।

---

पदस्य पश्चात्–अनुपदम् ।

अनुपदी गवाम् = गवां पदानां पश्चाद्गवामन्वेष्टेत्यर्थः । 'गवा'मिति षष्ठी पदापेक्षया । साक्षादिति । साक्षादित्यव्ययाद् द्रष्टर्यर्थे इनिः स्यात् ।

साक्षीत्यत्र 'अव्ययानां भमात्रे टिलोपः' इति टिलोपः ।

तदस्यास्तीति । तदिति प्रथमान्तादस्य अस्मिन्वा अस्तीत्यर्थे मतुप् स्यात् । इह इतिशब्दाद्विषयविशेषो लभ्यते । तथाहि—

'भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने ।
सम्बन्धेऽस्तिविवक्षायां भवन्ति मतुबादयः' ।। इति ।

---

साक्षाद्द्रष्टरि । 'साक्षात्' इस अव्यय से 'द्रष्टा' इस अर्थ से इनि हो, सञ्ज्ञा गम्यमान हो तो ।

तदस्यास्त्यस्मिन् । अस्त्यर्थोपाधिक प्रथमान्त समर्थ से 'अस्य' और 'अस्मिन्' इन अर्थों में मतुप् प्रत्यय हो ।

तसौ मत्वर्थे । तकारान्त और सकारान्त की भ सञ्ज्ञा हो, मत्वर्थीय प्रत्यय परे रहते ।

---

१ शेषपूरणम् । २ क्वाचित्कः पाठः ।

तान्तसान्तौ भसंज्ञौ स्तो, मत्वर्थे प्रत्यये परे। संप्रसारणम्। विदुष्मान्।

*गुणवचनेभ्यो मतुपो लुगिष्टः। शुक्लो गुणोऽस्यास्तीति- शुक्लः पटः। कृष्णः।

**प्राणिस्थादातो लजन्यतरस्याम्** ।५।२।९६। [ [1]प्राणिस्थवाचित आदन्ताल्लज्वा स्यान्मत्वर्थे। [2]चूडा अस्यास्तीति-]। चूडालः। चूडावान्। प्राणिस्थात्किं ?। शिखावान्दीपः।

*प्राण्यङ्गादेव। नेह—मेधावान्।

[[3]**सिध्मादिभ्यश्च** ।५।२।९७। [ [1]सिध्मादिभ्यो] लज्वा [ [1]स्यान्मत्वर्थे ]। सिध्मलः। सिध्मवान्। *वातदन्तबलललाटानामूङ् च। वातूलः। दन्तूलः। बलूलः। ललाटूलः।

**वत्सांऽसाभ्यां काम-बले** ।५।२।९८। [ [1]वत्सांऽसाभ्यां ] लज्वा

---

सम्प्रसारणमिति। 'वसोः सम्प्रसारण'मिति सम्प्रसारणम्।

प्राणिस्थादिति। प्राणिवाचकादाकारान्ताल्लज्वा स्यादित्यर्थः।

चूडाल इति। 'चूडा शिखा केशपाशः' इत्यमरः।

वातूलः—वातरोगी। कामबल इति। सूत्र कामबलशब्दावर्शआद्य-

---

गुणवचनेभ्यो। गुणवाचक से परे जो मतुप्, उसका लुक् हो।

प्राणिस्थादातो। प्राण्यङ्गादेव। प्राणिस्थ प्राण्यङ्ग वाचक जो आदन्त, उससे मत्वर्थ में लच् हो, विकल्प करके।

सिध्मादिभ्यश्च। सिध्मादि से लच् प्रत्यय हो, मत्वर्थ में।

वातदन्त। वात आदि से लच् हो, विकल्प करके, और वात आदि को ऊङ् का आगम भी हो।

वात्सांऽसाभ्यां। वत्स और अंस से लच् प्रत्यय हो, मत्वर्थ में। क्रम से कामवान् और बलवान् अर्थ गम्यमान हो तो।

---

1 शेषपूरणम्। 2 लिखिते दृश्यतेऽयं पाठः। 3 लिखिते नास्ति।

[स्या]द्यथासङ्ख्यं-कामवति, बलवति चाऽर्थे। वत्सलः। अंसलः।

फेनादिलच्च ।५।२।९९। [[1]फेनादिलच् स्यान्मत्वर्थे। पक्षे मतुप् ]। चाल्लच्। अन्यतरस्याङ्ग्रहणं मतुप्समुच्चयार्थमनुवर्त्तते। फेनिलः। फेनलः। फेनवान्[2] ]।

लोमादिपामादिपिच्छादिभ्यः शनेलचः ।५।२।१००। *लोमादिभ्यः शः। लोमशः। लोमवान्। रोमशः। रोमवान्।

*पामादिभ्यो नः। पामनः। *अङ्गात्कल्याणे। अङ्गना।

* लक्ष्म्या अच्च। लक्ष्मणः। *पिच्छादिभ्य इलच्। पिच्छिलः। पिच्छवान्। उरसिलः। उरस्वान्।

[[2]प्रज्ञाश्रद्धाऽर्चाभ्यो णः ।५।२।१०१। [[1]प्रज्ञादिभ्यो णः स्यान्मत्वर्थे। मतुप् च]। प्राज्ञो-व्याकरणे। प्राज्ञः। श्राद्धः। *वृत्तेश्च। वार्त्तः।

---

जन्तौ। अत्र वत्सशब्दो वृत्तिविषये स्नेहवाची। अंसशब्दस्तु बलवाचीत्यप्यवधेयम्। वत्सलः = स्नेहवान्।

प्रशस्ता लक्ष्मीरस्त्यस्य लक्ष्मणः = प्रशस्तश्रीशोभाद्यन्वितः।

---

फेनादिलच्च। फेन से मत्वर्थ में इलच् हो, पक्ष में मतुप् हो। और लच् भी हो।

लोमादि। लोमादि से मत्वर्थ में 'श' प्रत्यय हो, पामादि से मत्वर्थ में 'न' प्रत्यय हो, और पिच्छादि से मत्वर्थ में इलच् प्रत्यय हो। और मतुप् भी हो।

अङ्गात्कल्याणे।। अङ्ग शब्द से 'न' प्रत्यय हो, कल्याण अर्थ में।

लक्ष्म्या अच्च। लक्ष्मी से मत्वर्थ में 'न' प्रत्यय हो, और लक्ष्मी को अकार अन्तादेश भी हो।

प्रज्ञाश्रद्धा। प्रज्ञादि से मत्वर्थ में ण प्रत्यय हो, और मतुप् भी हो।

वृत्तेश्च। वृत्ति से भी मत्वर्थ में ण प्रत्यय हो। और मतुप् भी हो।

---

1 शेषपूरणम्। 2 अयं ग्रन्थो लिखिते नास्ति।

**तपः-सहस्राभ्यां विनीनी ।५।२।१०२।** [ [1]तपःसहस्रशब्दाभ्यां मत्वर्थे क्रमात् 'विनि' 'इनि'—इत्येतौ प्रत्ययौ स्तः । मतुप् च]। विनीन्योरिकारो नकारपरित्राणार्थः। तपस्वी। सहस्री। **अण् च ।५।२।१०३।** [ [1]तपःसहस्राभ्यां मत्वर्थेऽण् स्यात् ] । तापसः । साहस्रः ।

*ज्योत्स्नादिभ्य उपसङ्ख्यानम् । ज्यौत्स्नः । तामिस्रः ।

**सिकता-शर्कराभ्यां च ।५।२।१०४।** [ [1]आभ्यामण् स्यान्मत्वर्थे]। सैकतो घटः। शार्करः। **देशे लुबिलचौ च ।५।२।१०५।** [ [1]सिकताशर्कराभ्यां देशेऽभिधेये मत्वर्थीयप्रत्ययस्य लुप् स्यात् । इलच्प्रत्ययश्च स्यात् ] । चादण्। मतुप् च । सिकताः सन्त्यस्मिन्देशे—सिकता ।

---

ज्यौत्स्नः-शुक्लपक्षः । तामिस्रं—नरकविशेषः । कृष्णपक्षश्च—तामिस्रः। तमःसमूहः—तामिस्रम् । 'ज्योत्स्नातमिस्रे'ति मत्वर्थीयो रः। तत्र हि अवयवभूतानि तमांसि विद्यन्ते । तदस्मिन्नस्तीति तामिस्रः—कृष्णपक्षः ।

शार्कर इति । घटादिरिति शेषः । अदेश इहोदाहरणम् । देशे तु लुबिलचौ भवतः । अण् मतुपौ च। 'स्त्री शर्करा शर्करिलः शार्करः शर्करावति । देश एवादि-

---

तपःसहस्राभ्यां । तपस् और सहस्र से क्रम से मत्वर्थ में विनि और इनि प्रत्यय हों । मतुप् भी हो ।

अण् च । तपस् और सहस्र से मत्वर्थ में अण् भी हो । [ पूर्वोक्त प्रत्यय भी हों ] ।

ज्योत्स्नादिभ्यः । ज्योत्स्ना आदि से मत्वर्थ में अण् प्रत्यय हो । मतुप् भी हो ।

सिकताशर्कराभ्यां च । सिकता और शर्करा से मत्वर्थ में अण् हो। और मतुप् भी हो ।

देशे लुबिलचौ च । देश अभिधेय हो तो सिकता और शर्करा से मत्वर्थीय प्रत्यय का लुप् हो, और इलच् प्रत्यय भी हो । अण् और मतुप् भी हो ।

---

१ शेषपूरणमेतत् ।

सिकतिलः। सैकतः। सिकतावान्। एवं—'शर्करा' इत्यादि ]।

दन्त उन्नत उरच् ।५।२।१०६। [ [1]उन्नतोपाधिकाद्दन्तशब्दादुरच् स्यान्मत्वर्थे ]। उन्नता दन्ता अस्य—दन्तुरः।

[[2]ऊषसुषिमुष्कमधो रः ।५।२।१०७। [ [1]ऊषादिभ्यो रः स्यान्मत्वर्थे। मतुप् च ]। ऊषरः। सुषिरः। मुष्कोऽण्डः। मुष्करः। मधुरः।

*रप्रकरणे ख-मुख-कुञ्जेभ्य उपसङ्ख्यानम् । खरः । मुखरः। कुञ्जो—हस्तिहनुः। कुञ्जरः। *नगपांसुपाण्डुभ्यश्च । नगरम्। पांसुरः। पाण्डुरः। *कच्छ्वा ह्रस्वत्वं च। कच्छुरः। द्युद्रुभ्यां मः ।५।२।१०८। [[1]आभ्यां मत्वर्थे मः स्यात्। मतुप् च ]। द्युमः। [2]द्रुमः ]।

---

मावेवमुन्नेयाः 'सिकतावति' इत्यमरः। ऊषर इति। 'स्यादूषः क्षारमृत्तिका' इत्यमरः। ऊषोऽस्यास्तीति ऊषरः=कृष्यनर्हः क्षारमृत्तिकावान् देशः। सुषिः—छिद्रमस्त्यस्य—सुषिरः = छिद्रान्वितः।

खं = विशालं कण्ठविवरम्। तदस्यास्तीति—खरः। गर्दभे रूढोऽयम्। द्यौरस्यास्तीति द्युमः। 'दिव उत्' इत्युत्वम्। द्रुरस्यास्तीति द्रुमः। द्रुरिह शाखा। द्रुमो वृक्षः।

---

दन्त उन्नत। उन्नतोपाधिक दन्त शब्द से मत्वर्थ में उरच् हो।

ऊषसुषि। ऊष आदि शब्दों से मत्वर्थ में 'र' प्रत्यय हो। मतुप् भी हो।

रप्रकरणे खमुख। मत्वर्थीय रप्रत्ययके प्रकरण में ख, मुख, और कुञ्ज का भी उपसङ्ख्यान करना। अर्थात्—इनसे भी र प्रत्यय हो, मत्वर्थ में। मतुप् भी हो।

नगपांसु। नग आदि से भी मत्वर्थ में र प्रत्यय हो। मतुप् भी हो।

कच्छ्वा ह्रस्वत्वं च। कच्छू से मत्वर्थ में र प्रत्यय हो, कच्छू को ह्रस्व भी हो।

द्युद्रुभ्यां मः। दिव् और द्रु शब्द से मत्वर्थ में 'म' प्रत्यय हो। मतुप् भी हो।

---

१ शेषपूरणम्। २ अयं पाठो लिखिते नास्ति।

**केशाद्वोऽन्यतरस्याम्** ।५।२।१०९। [ [१]केशान्मत्वर्थे वप्रत्ययो वा स्यात् । [२]प्रकृतेनाऽन्यतरस्यग्रहणेन मतुपि सिद्धे, पुनर्ग्रहणं इनिठनोः समावेशार्थम् ]। केशवः । [ [२]केशी । केशिकः ]। केशवान् ।

*** अन्येभ्योऽपि दृश्यते** । [मणिर्विद्यतेऽस्य [२]]। मणिवः—[[२]नागविशेषः । हिरण्यवो—निधिविशेषः ]। ***अर्णसो लोपश्च** । अर्णवः ।

[ [२]**गाण्ड्यजगात्संज्ञायाम्** ।५।२।११०। [ [१]आभ्यां वः स्यान्मत्वर्थे, संज्ञायां विषये]। ह्रस्वदीर्घयोर्यणा तन्त्रेण निर्देशः । गाण्डीवम् । गाण्डिवम्—अर्जुनस्य धनुः । अजगवं—पिनाकः ।

**काण्डाण्डादीरन्नीरचौ** ।५।२।१११। [ [१]काण्डाण्डाभ्यां मत्वर्थे क्रमादीरन्नीरचौ स्तः ]। काण्डीरः । [३]आण्डीरः ।

**रजःकृष्यासुतिपरिषदो वलच्** ।५।२।११२। [ [१]रजआदिभ्यः स्वार्थे वलच् स्यात् । मतुप् च]। रजस्वला स्त्री । कृषीवलः । 'वले' इति

---

ह्रस्वेति । गाण्डि-गाण्डी-शब्दयोरित्यर्थः ।

---

केशाद्वो । केशशब्द से मत्वर्थ में 'व' प्रत्यय हो, विकल्प करके । पक्षमें—इनि, ठन्, और मतुप् भी हों ।

अन्येभ्योऽपि । प्रकृत्यन्तरसे भी मत्वर्थ में 'व' प्रत्यय हो ।

अर्णसो लोपश्च । अर्णस् शब्द से मत्वर्थ में 'व' प्रत्यय हो, और अर्णस् के अन्त्य 'सकार' का लोप भी हो ।

गाण्ड्यजगात् । गाण्डी ( और गाण्डि ) तथा अजग से मत्वर्थ में व प्रत्यय हो, सञ्ज्ञा के विषय में ।

काण्डाऽण्डा । 'काण्ड' और आण्ड ('अण्ड') से मत्वर्थ में क्रमसे ईरन् और ईरच् प्रत्यय हों । मतुप् भी हो ।

रजःकृष्या । रजस् आदि से मत्वर्थ में वलच् प्रत्यय हो ।

---

१ शेषपूरणम् । २ लिखिते नास्ति । ३ 'अण्डीरः' इति क्वचित्पाठः ।

दीर्घः। आसुतीबलः—शौण्डिकः। परिषद्वलः। 'पर्षं'दिति पाठान्तरम्। पर्षद्वलः। *अन्येभ्योऽपि दृश्यते। भ्रातृवलः। पुत्रवलः। शत्रुवलः। 'वले' इत्यत्र 'सञ्ज्ञाया'मित्यनुवृत्तेर्नेह दीर्घः।

**दन्तशिखात्संज्ञायाम्** ।५।२।११३। [[1]दन्तशिखाशब्दाभ्यां मत्वर्थे वलच् स्यात्सञ्ज्ञायाम्]। दन्तावलो हस्ती। शिखावलः केकी[2]]।

**अत इनिठनौ** ।५।२।११५। [[1]अदन्तान्मत्वर्थे इनिठनौ स्तः। मतुप् च]। दण्डी। दण्डिकः।

**व्रीह्यादिभ्यश्च** ।५।२।११६। [[1]व्रीह्यादिभ्यो मत्वर्थे इनिठनौ स्तः। मतुप् च]। व्रीही। व्रीहिकः।

**तुन्दादिभ्य इलच्च** ।५।२।११७। [[1]तुन्दादिभ्यो मत्वर्थे इलच् स्यात्]। चादिनिठनौ, मतुप् च। तुन्दिलः। तुन्दिकः। तुन्दवान्।

उदरम्। पिचण्डः। यवः। व्रीहिः। इति तुन्दादिः।

**रूपादाहतप्रशंसयोर्यप्** ।५।२।१२०। [[1]आहत-प्रशंसा-विशिष्टार्थे

---

शिखावलः = मयूरः। रूपादिति। आहतप्रशंसाविशिष्टेऽर्थे वर्तमानाद्रूप-

---

अन्येभ्योऽपि। अन्य (प्रकृत्यन्तर) से भी वल च् प्रत्यय देखा जाता है।

दन्त शिखात्। दन्त और शिखा शब्द से मत्वर्थ में वलच् प्रत्यय हो, सञ्ज्ञा के विषय मतुप् भी हो।

अतइनि ठनौ। अदन्त प्रातिपदिक से मत्वर्थ में इनि और ठन् प्रत्यय हों। अन्यतरस्याम् इसके अधिकार होने से मतुप् भी पक्ष में हो।

व्रीह्यादिभ्यश्च। व्रीह्यादि से मत्वर्थ में इनि और ठन् हो। मतुप् भी हो।

तुन्दादिभ्य इलच् तुन्दादि से मत्वर्थ में इलच् प्रत्यय हो। इनि, ठन् और मतुप् भी हो।

रूपादाहत। आहत (ठप्पा) और प्रशंसा विशिष्ट अर्थ में वर्त्तमान रूप शब्द से मत्वर्थ में यप् प्रत्यय हो। मतुप् भी हो।

---

१ शेषपूरणम्। २ 'केकी'ति क्वचिन्न।

वर्त्तमानाद्रूपशब्दान्मत्वर्थे यप् स्यात्। मतुप् च[1] ]। आहतं रूपमस्यास्तीति-रूप्यः कार्षापणः। प्रशस्तं रूपमस्यास्तीति-रूप्यो गौः।

*अन्येभ्योऽपि दृश्यते। हिम्याः पर्वताः। गुण्याः-ब्राह्मणाः[2] ]।

**अस्मायामेधास्रजो विनिः।५।२।१२१।** [ [1]असन्तात्प्रातिपदिकान्मायादिभ्यश्च मत्वर्थे विनिः स्यात्। मतुप् च ]। यशस्वी। यशस्वान्। मायावी। [मायावान्। व्रीह्यादिपाठात्- इनिठनावपि भवतः ]—मायी। मायिकः ]। स्रग्वी। [ *[2]शृङ्गवृन्दाभ्यामारकन्। शृङ्गारकः। वृन्दारकः। *फलबर्हाभ्यामिनच्। फलिनः। बर्हिणः। *हृदयाच्चालुरन्यतरस्याम्। हृदयालुः। हृदयी।

---

शब्दान्मत्वर्थे यप् स्यात्। आहतम्=आघातः। 'ताडन'मिति यावत्। (ठप्पा)। निघातिकादि-(हथौडी)-ताडनेन निष्पन्नं यद्रूपन्तदपि आहतमित्युच्यते, कार्ये कारणोपचारादिति, आहतरूपयोः सामानाधिकरण्यमुपपद्यते।

यशस्वीति। 'तसौ मत्वर्थे' इति भत्वाद्रुत्वं न। यशस्वानिति। इहान्यतरस्यांग्रहणं सम्बध्यते, 'तसौ मत्वर्थे' इत्यत्र 'यशस्वा'निति भाष्योदाहरणात्।

फलिनः=फलवान्। बर्हिणः—मयूरः। हृदयालुः=सहृदयः।

---

अन्येभ्योपि। रूपशब्दातिरिक्त शब्दों से भी यप् प्रत्यय देखा जाता है।

अस्मायामेधा। असन्त प्रातिपादिक से, और माया मेधा स्रज्—इन शब्दों से मत्वर्थ में विनि प्रत्यय हो। मतुप् भी हो।

शृङ्गवृन्दारका। शृङ्ग और वृन्दारक से मत्वर्थ में आरकन् हो। और मतुप् भी हो।

फलबर्हाभ्या। फल और बर्ह से मत्वर्थ में इनच् प्रत्यय हो।

हृदयाच्चालु। हृदय से मत्वर्थ में चालु प्रत्यय हो, विकल्प करके। पक्ष में—इनि, ठन्, और मतुप् भी हों।

---

१ शेषपूरणम्। २ अयं ग्रन्थो लिखिते नास्ति।

हृदयिकः। हृदयवान्। *शीतोष्णतृप्रेभ्यस्तदसहने। शीतं न सहते-शीतालुः। उष्णालुः। तृप्रः-पुरोडाशः। तं न सहते—तृप्रालुः।

*तप्पर्वमरुद्भ्याम्। पर्वतः। मरुत्तः।

ऊर्णाया युस् ।५।२।१२३। [ [1]ऊर्णाशब्दाद्युस् स्यान्मत्वर्थे ]। उर्णायुः।

वाचो ग्मिनिः ।५।२।१२४। [ [1]वाचो ग्मिनिः स्यान्मत्वर्थे ]। वाग्ग्मी।

आलजाटचौ बहुभाषिणि ।५।२।१२५। [ [1]'वाक्शब्दात्प्रथमान्तादालच्, आटच्-इत्येतौ प्रत्ययौ स्तो, मत्वर्थे, बहुभाषिण्यभिधेये ]।

*कुत्सिते इति वक्तव्यम्। कुत्सितं बहु भाषते-वाचालः। वाचाटः। यस्तु सम्यग्बहु वदति, तत्र-'वाग्ग्मी'त्येव। स्वामिन्नैश्वर्ये ।५।२।१२६। ऐश्वर्यवाचकात्स्वशब्दान्मत्वर्थे आमिनच् स्यात्। स्वामी[2] ]।

---

ऊर्णायुरिति। इह सित्त्वात्पदत्वेन यस्येति चेत्याकारलोपो न। उर्णायुः-मेषः।

---

शीतोष्ण। द्वितीयान्त शीतादि से चालु प्रत्यय हो, असहन अर्थ में।

तप्पर्वमरु। पर्वत् और मरुत् से मत्वर्थ में तप् प्रत्यय हो।

ऊर्णाया युस्। ऊर्णा शब्द से मत्वर्थ में 'युस्' प्रत्यय हो।

वाचो ग्मिनिः। वाच् शब्दसे मत्वर्थ में ग्मिनि प्रत्यय हो।

आलजाचटौ। कुत्सिते। प्रथमान्त समर्थ वाक् शब्दसे मत्वर्थ में आलच् और आचट् प्रत्यय हों, बहुभाषी अभिधेय होतो, निन्दा गम्यमान होतो।

स्वामिन्नैश्वर्ये। ऐश्वर्य अर्थमें 'स्वामिन्' यह निपातन हो। अर्थात्—ऐश्वर्यवाचक स्व शब्द से मत्वर्थ में आमिनच् प्रत्यय हो।

---

१ शेषपूरणम्। २ लिखिते नास्ति।

अर्शआदिभ्योऽच् ।५।२।१२७। [ १"अर्शआदिभ्यः प्रातिपदिकेभ्योऽच् स्यान्मत्वर्थे ] । अर्शांसि अस्य विद्यन्ते—अर्शसः । आकृतिगणोऽयम् ।

वाताऽतीसाराभ्यां कुक् च ।५।२।१२९। [ १आभ्यां कुक् स्यान्मत्वर्थे ] । चादिनिः । वातकी । अतिसारकी ।

*पिशाचाच्च । पिशाचकी । हस्ताज्जातौ ।५।२।१३३। [ १हस्तादिनिः स्यान्मत्वर्थे, समुदायेन जातावभिधेयायाम् ] । हस्ती ।

वर्णाद्ब्रह्मचारिणि ।५।२।१३४। [ १वर्णादिनिः स्यान्मत्वर्थे, ब्रह्मचारिण्यभिधेये ] । वर्णी ।

पुष्करादिभ्यो देशे ।५।२।१३५। [ १पुष्करादिभ्य इनिः स्यान्मत्वर्थे, देशेऽभिधेये ] । पुष्करिणी । पद्मिनी । देशे किं ? । पुष्करवान् करी ।

---

अर्शआदिभ्यो । अर्शस् आदि प्रातिपदिकों से मत्वर्थ में अच् प्रत्यय हो ।

वातातीसारा । वात और अतीसार से मत्वर्थ में इनि प्रत्यय हो, और इनि के संनियोग से वातादि को कुक् आगम भी हो ।

पिशाचाच्च । पिशाच शब्द से मत्वर्थ में इनि हो, और प्रकृति को कुक् आगम भी हो ।

हस्ताज्जातौ । हस्त शब्द से मत्वर्थ में इनि हो, समुदाय से जाति अभिधेय हो तो ।

वर्णाद्ब्रह्मचारिणि । वर्ण से मत्वर्थ में इनि प्रत्यय हो, ब्रह्मचारी अभिधेय हो तो ।

पुष्करादिभ्यो । पुष्करादि से मत्वर्थ में इनि हो, देश अभिधेय हो तो ।

---

१ शेषपूरणमेतत् ।

**कंशंभ्यां व-भ-यु-स्ति-तु-त-यसः** ।५।२।१३८। 'क'मित्युदकसुखयोः । 'श'मिति सुखे । आभ्यां [ [1]वादयः ] सप्त प्रत्ययाः स्यु-[ [1]र्मत्वर्थे ]। युस्यसोः सकारः पदत्वार्थः । कंवः । कंभः । कंयुः । कन्तिः । कन्तुः । कन्तः । कंयः । एवं-शंव इत्यादि ।

**तुन्दिवलिवटेर्भः** ।५।२।१३९। [ [1]एभ्यो भः स्यान्मत्वर्थे ]। तुन्दिभः । वलिभः । वटिभः । **अहंशुभमोर्युस्** ।५।२।१४०। [ [1]अहंशुभमोर्युस् स्यान्मत्वर्थे]। अहंयुः-अहङ्कारवान् । शुभंयुः-शुभान्वितः]।

*** इति मत्वर्थीयाः । ***

---

## अथ प्राग्दिशीयाः ।

**प्राग्दिशो विभक्तिः** ।५।३।१। 'दिक्शब्देभ्यः-'इत्यतः प्राग्वक्ष्यमाणा प्रत्यया विभक्तिसंज्ञाः स्युः ।

### अथ स्वार्थिकाः प्रत्ययाः ।

[ [2]'समर्थाना'मिति, 'प्रथमा'दिति च निवृत्तं, 'वे'ति त्वनुवर्त्तते एव]।

---

प्रायेण स्वीयप्रकृतेरर्थे भवाः—स्वार्थिकाः ।

---

कंशम्भ्यां । 'कम्' और 'शम्' से मत्वर्थ में व, भ, युस्, ति, तु, त, यस्—ये ७ प्रत्यय हों ।

तुन्दिवलि । तुन्दि, वलि और वटि से मत्वर्थ में 'भ' प्रत्यय हो ।

अहंशुभमो । 'अहम्' और 'शुभम्' से मत्वर्थ में 'युस्' प्रत्यय हो ।

प्राग्दिशो । 'दिक्शब्देभ्यः सप्तमी-पञ्चमी—' इस सूत्र से पूर्व तक जो वक्ष्यमाण प्रत्यय हैं, वे 'विभक्ति' सञ्ज्ञक हों ।

---

१ शेषपूरणम् । २ लिखिते नास्ति ।

**किंसर्वनामबहुभ्योऽद्व्यादिभ्यः** ।५।३।२। 'किमः, सर्वनाम्नो, बहुशब्दाच्चे'ति प्राग्दिशोऽधिक्रियते ।

**पञ्चम्यास्तसिल्** ।५।३।७। पञ्चम्यन्तेभ्यः किमादिभ्यस्तसिल् [ [1]स्याद् ] वा ।

**कु तिहोः** ।७।२।१०४। किमः कुः [ [1]स्या ] त्तादौ, हादौ च विभक्तौ । कुतः । कस्मात् । **इदम इश्** ।५।३।३। [ [2]इदम इशादेशः स्यात् ] प्राग्दिशीये परे । [ [3]अस्मात्—] इतः ।

[4]**एतदोऽन्** ।५।३।५। एतदो[[2]ऽनादेशः स्यात् ] प्राग्दिशीये । अनेकाल्त्वात्सर्वादेशः । अतः । अमुतः । यतः । ततः । बहुतः । द्व्यादेस्तु-द्वाभ्याम् ।

---

किमिति । द्व्यादिपर्युदासात्किमः पृथगुपादानम् । कुत इति । 'न विभक्तौ तुस्माः' इति निषेधात्तस्य 'हलन्त्य'मिति नेत्सञ्ज्ञा ।

अमुत इति । 'अदसो सेः-इति मुत्वम् ।

---

किंसर्वनाम । 'दिक्शब्देभ्यः सप्तमी' इस सूत्र से पूर्व तक-( २४ सूत्रों में ) 'किम्-सर्वनाम-बहुभ्योऽद्व्यादिभ्यः' यह अधिकार है ।

पञ्चम्यास्तसिल् । पञ्चम्यन्त किम् आदि से तसिल् प्रत्यय हो, विकल्प करके ।

कु तिहोः । किम् को 'कु' आदेश हो, तकारादि और हकारादि विभक्ति परे रहते ।

इदम इश् । इदम् को इश् आदेश हो, प्राग्दिशीय ( विभक्ति संज्ञक ) प्रत्यय परे रहते ।

एतदोऽन् । एतद् को अन् आदेश हो, प्राग्दिशीय ( विभक्ति संज्ञक ) प्रत्यय परे रहते ।

---

१ क्वाचित्कः पाठः । २ शेषपूरणम् । ३ क्वचिन्न ।
४ 'एतदोऽश्' इति तु काशिकानुसारी पाठः ।

पर्यभिभ्यां च । ।३।९। [ [1]सर्वोभयार्थयोर्वर्त्तमानाभ्यामाभ्यां ] तसिल् [[1]स्यात्] । परितः । सर्वत इत्यर्थः । अभितः । उभयत इत्यर्थः ।

सप्तम्यास्त्रल् ।५।३।१०। [ [1]सप्तम्यन्तेभ्यः किमादिभ्यस्त्रल् स्याद्वा ] । कुत्र । यत्र । तत्र । बहुत्र । इदमो हः ।५।३।११। [ [1]इदमः सप्तम्यन्ताद्धप्रत्ययः स्यात् ] । त्रलोऽपवादः । इह ।

किमोऽत् ।५।३।१२। [ [1]किमः सप्तम्यन्तादत् प्रत्ययो] वा स्यात् ।

क्वाऽति ।७।२।१०५। किमः क्वेत्यादेशः [ [1]स्यादति परे ] । क्व । कुत्र । [ [2]कस्मिन् ] ।

इतराभ्योऽपि दृश्यन्ते ।५।३।१४। पञ्चमी-सप्तमी-तरविभक्त्यन्ता-दपि तसिलादयो दृश्यन्ते । दृशिग्रहणाद्भवदादियोग एव । स भवान् । ततो भवान् । तत्र भवान् । तं भवन्तम् । ततो भवन्तम् । तत्र भवन्तम् ।

---

अदिति । 'हलन्त्य'मिति तकारस्येत्सञ्ज्ञा । 'न विभक्तौ तुस्माः' इति निषेधस्त्वत्र न प्रवर्त्तते, मकारपरित्राणार्थेन थमोरुकारेण तदनित्यत्वज्ञापनादिति मनोरमाकृतः । वेति । वाग्रहणमपकृष्यते । सप्तम्यन्तात्किमोऽद्वा स्यात् ।

क्विम इति । किमः क्वादेशः स्यादति । तत्र भवन्तमिति । एवं-ततो भवता । तत्र भवता । ततो भवते । तत्र भवते इत्याद्यूह्यम् ।

---

पर्यभिभ्याञ्च । क्रम से सर्व और उभय के अर्थ में वर्त्तमान परि और अभि से—तसिल् प्रत्यय हो ।

सप्तम्यास्त्रल् । सप्तम्यन्त किमादि से त्रल् प्रत्यय हो, विकल्प करके ।

इदमो हः । सप्तम्यन्त 'इदम्' शब्द से ह प्रत्यय हो ( विकल्प से ) ।

किमोऽत् । सप्तम्यन्त किम् शब्द से अत् प्रत्यय हो, विकल्प करके ।

क्वाऽति । किम् के 'क्व' आदेश हो, अत् प्रत्यय परे रहते ।

इतराभ्योऽपि । पञ्चमी और सप्तमी विभक्ति से इतर जो प्रथमादि विभक्ति, तदन्त से भी 'त्र' 'तसिल्' आदि प्रत्यय होते हैं ।

---

१ शेषपूरणम् ।  २ लिखिते दृश्यते, न मुद्रिते ।

एवं—दीर्घायुः । देवानांप्रियः । आयुष्मान् ।

सर्वैकाऽन्यकिंयत्तदः काले दा ।५।३।१५। सप्तम्यन्तेभ्य [[1]एभ्यः] कालार्थेभ्यः स्वार्थे दा स्यात् ।

सर्वस्य सोऽन्यतरस्यां दि ।५।३।६। दादौ प्राग्दिशीये [[1]परतः] सर्वस्य सो वा [ स्यात् ]। सर्वस्मिन् काले-सदा । सर्वदा । एकदा । अन्यदा । कदा । यदा । तदा । काले किम् ? । सर्वत्र देशे ।

इदमो र्हिल् ।५।३।१६। [[1]इदमः ] सप्तम्यन्तात् [ र्हिल् प्रत्ययः स्याद्वा ]। 'काले' इत्येव । हस्याऽपवादः ।

एतेतौ रथोः ।५।३।४। इदम 'एत' 'इत्' एतौ स्तो, रेफादौ, थकारादौ च प्राग्दिशीये परे। अस्मिन्काले-एतर्हि। काले किम् ? । इह देशे।

अधुना ।५।३।१७। [[3]इदमो निपातोऽयम् । [4]इदमः सप्तम्यन्ता-

---

दीर्घायुरिति । एवं-ततो दीर्घायुः । तत्र दीर्घायुः । ततो देवानांप्रियः । तत्र देवानांप्रियः । इत्याद्यह्यम् । काले इत्येवेति । तेन इदमः सप्तम्यन्तात्काले वर्त्तमानात् 'र्हिल्' प्रत्ययः स्यादित्यर्थो बोध्यः ।

---

सर्वैकान्य । कालार्थ में वर्त्तमान सप्तम्यन्त-सर्व, एक, अन्य—आदि से स्वार्थ में 'दा' प्रत्यय हो ।

सर्वस्य सो । सर्व को 'स' आदेश हो, विकल्प करके, दकारादि प्राग्दिशीय प्रत्यय परे रहते ।

इदमो र्हिल् । कालवाची सप्तम्यन्त इदम् शब्द से 'र्हिल्' प्रत्यय हो, ( विकल्प करके ) ।

एतेतोरथोः । इदम् को 'एत' और 'इत्'—ये आदेश हों, रेफादि और थकारादि प्राग्दिशीय प्रत्यय परे रहते ।

अधुना । कालवाची सप्तम्यन्त इदम् शब्द से स्वार्थ में 'अधुना' प्रत्यय हो ।

---

१ क्वचिन्न। २ शेषपूरणम् । ३ लिखिते नास्ति । ४ लिखिते इयं वृत्तिरस्ति ।

त्कालवाचिनः स्वार्थेऽधुना प्रत्ययः स्यात्[1] ]।

**दानीं च।५।३।१८।** इदमो दानीम्-प्रत्ययः [स्या]त्काले। इदानीम्।

**तदो दा च।५।३।१९।** [[2]तदः सप्तम्यन्तात्कालवाचिनो दाप्रत्ययः स्यात्। दानीं च स्यात्]। [3]तदा। तदानीम्। [[4]तदो दावचनमनर्थकं, [4]विहितत्वात् ]।

**अनद्यतने र्हिलन्यतरस्याम् ।५।३।२१।** [ [2]किंसर्वनामबहुभ्यः-सप्तम्यन्तेभ्योऽनद्यतने कालविशेषे वर्त्तमानेभ्यो र्हिल् प्रत्ययो वा स्यात्]। कर्हि। कदा। यर्हि। यदा। तर्हि। तदा।

**'एतेतौ रथोः'** [।५।३।४।] **एतदः ।५।३।५।** [[5]एतदः] 'एत', 'इत्' एतौ स्तो, रेफादौ, थकारादौ च प्राग्दिशीये [परे]। एतस्मिन्काले—एतर्हि।

**[ [4]सद्यःपरुत्परार्यैषमःपरेद्यव्यद्यपूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्यु-**

---

दानीञ्चेति। इदमः सप्तम्यन्तात्कालवाचिनो दानीं प्रत्ययः स्यादित्यर्थः। 'एतदोऽन्' इति सूत्रात्—'एतद्' इति योगं विभज्य व्याचष्टे—एतद इति। एतर्हीति। अत्र इदम, एतदश्च एतादेशः।

---

दानीञ्च। कालवाची सप्तम्यन्त इदम् शब्द से स्वार्थ में 'दानीम्' प्रत्यय हो।

तदो दाच। सप्तम्यन्त कालवाची तद् शब्द से 'दा' और 'दानीम्' प्रत्यय हों।

अनद्यतने र्हिल। अनद्यतन कालवाची सप्तम्यन्त किं सर्वनाम आदि से र्हिल् प्रत्यय हो, विकल्प करके।

[ एतेतौ रथोः ]। एतदः॥ एतद् शब्द को 'एत' और 'इत्' आदेश हों, रेफादि और थकारादि प्राग्दिशीय प्रत्यय परे रहते।

सद्यःपरुत्। सद्य आदि १४ शब्द निपातन से सिद्ध हों।

---

१ लिखिते इयं वृत्तिर्दृश्यते। २ शेषपूरणम्। ३ 'तदानीं-तदा' पा०। ४ लिखिते नास्ति। ५ लिखिते दृश्यते।

रपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः ।५।३।२२। एते निपात्यन्ते ।

*समानस्य सभावो, द्यश्चाऽहनि । समानेऽहनि–सद्यः ।

*पूर्व-पूर्वतरयोः पर, उदारी च, संवत्सरे । पूर्वस्मिन्वत्सरे–परुत् । पूर्वतरे वत्सरे–परारि ।

*इदम इश् , समसण् प्रत्ययश्च, संवत्सरे । अस्मिन्संवत्सरे–ऐषमः । *परस्मादेद्यव्यहनि । परस्मिन्नहनि–परेद्यवि ।

इदमोऽश् , द्यश्च । अस्मिन्नहनि–अद्य ।

*पूर्वादिभ्योऽष्टभ्योऽहन्येद्युस् । पूर्वस्मिन्नहनि–पूर्वेद्युः । अन्यस्मिन्नहनि–अन्येद्युः । उभयोरह्नोः–उभयेद्युः ।

* द्युश्चोभयाद्वक्तव्यः । उभयद्युः[1]] ।

---

समानस्य सभावो । समान को सभाव ( सत्व ) हो, द्यस् प्रत्यय हो, सप्तम्यन्त अहनि यह अभिधेय हो तो ।

पूर्वपूर्वतरयोः । पूर्व और पूर्वतर को पर आदेश हो, और क्रम से 'उत्' और 'आरि' प्रत्यय हों, संवत्सरे–यह अभिधेय हो तो ।

इदम इश् समसण् । इदम् को इश् आदेश हो, समसण् प्रत्यय हो, संवत्सरे–यह अभिधेय हो तो ।

परस्मादेद्यवि । परसे एद्यवि प्रत्यय हो, अहनि यह अभिधेय हो तो ।

इदमोऽश् द्यश्च । इदम् को अश् आदेश हो, द्य प्रत्यय हो, अहनि–यह अभिधेय हो तो ।

पूर्वादिभ्योऽष्टभ्यो । पूर्व, अन्य आदि ८ शब्दों से 'एद्युस' प्रत्यय हो । अहनि–यह अभिधेय हो तो ।

द्युश्चोभयात् । उभय से द्युस् प्रत्यय भी हो, अहनि–यह अभिधेय हो तो ।

---

१. एतावान् पाठो लिखिते नैव दृश्यते ।

**प्रकारवचने थाल्** ।५।३।२३। प्रकारवृत्तिभ्यः किमादिभ्यस्थाल् [ [1]स्यात्स्वार्थे ] । तेन प्रकारेण–तथा । यथा । **इदमस्थमुः** ।५।३।२४। [ [1]इदंशब्दात्प्रकारवचने थमुः स्यात्स्वार्थे ] । थालोऽपवादः ।

***एतदोऽपि वाच्यः** । अनेन, एतेन वा प्रकारेण–इत्थम् ।

**किमश्च** ।५।३।२५। [ [1]किंशब्दात्प्रकारवचने थमुः स्यात् स्वार्थे ] । केन प्रकारेण–कथम् ।

॥*इति प्राग्दिशीयानां विभक्तिसञ्ज्ञानां पूर्णोऽवधिः*॥

---

## [ [1]अथ प्राग्दिवीयाः ] ।

[ [2]**दिक्शब्देभ्यः सप्तमी-पञ्चमी-प्रथमाभ्यो दिग्देशकालेष्वस्तातिः**।५।३।२७।सप्तम्याद्यन्तेभ्यो दिशिरूढेभ्यो दिग्देशकालवृत्तिभ्यः स्वार्थेऽस्तातिः [ स्यात् ] ।

---

इत्थमिति । अत्र–'एतेतौ रथोः', 'एतदः' इत्याभ्याम् एतद, इदमश्च इदादेशः । प्रकार इति । सामान्यस्य भेदको विशेषः–प्रकारः ।

सप्तमीति । यथासङ्ख्यमत्र नेष्यते, अस्वरितत्वात् ।

---

प्रकारवचने । प्रकारवृत्ति–द्वि आदि से भिन्न किम्, सर्वनाम आदि से स्वार्थ में थाल् प्रत्यय हो ।

इदमस्थमुः । प्रकारवृत्ति इदम् शब्द से स्वार्थ में थमु प्रत्यय हो ।

एतदोऽपि । प्रकार वृत्ति एतद् शब्द से भी स्वार्थ में थमु प्रत्यय हो ।

किमश्च । प्रकार वृत्ति किम् शब्द से स्वार्थ में थमु प्रत्यय हो ।

दिक् शब्देभ्यः । दिक्, देश और काल में वर्त्तमान–जो सप्तम्यन्त, पञ्चम्यन्त, प्रथमान्त दिक्शब्द ( दिशाओं में रूढ शब्द ), उनसे अस्ताति प्रत्यय हो, स्वार्थ में ।

---

१ शेषपूरणम् ।  २ इत आरभ्य लिखिते नास्ति ।

**पूर्वाऽधराऽवराणामसिपुरधवश्चैषाम् ।५।३।३९।** एभ्योऽस्तात्यर्थेऽसिः स्याद्योगे चैषां 'पुर्' 'अध्' 'अव्' इत्यादेशाः स्युः ।

**अस्ताति च ।५।३।४०।** [[1]अस्तातिप्रत्यये परतः] पूर्वादीनां पुरादयः स्युः । पूर्वस्यां, पूर्वस्या, पूर्वा वा दिक्-पुरः । पुरस्तात् । अधः । अधस्तात् । अवः ।

**विभाषाऽवरस्य ।५।३।४१।** अस्तातौ [[1]परतोऽवरस्य] अव् वा स्यात् । अवस्तात् । अवरस्तात् । एवं-देशे, काले च । दिशि रूढेभ्यः किम् ? । ऐन्द्यां वसति । सप्तम्याद्यन्तेभ्यः किम् ? । पूर्वं ग्रामं गतः । दिगादिवृत्तिभ्यः किम् ? । पूर्वस्मिन् गुरौ वसति । 'अस्ताति च'इति ज्ञापकादसिरस्तातिं न बाधते ।

**दक्षिणोत्तराभ्यामतसुच् ।५।३।२८।** [[1]दक्षिणोत्तराभ्यां दिक्-शब्दाभ्यां दिग्देशकालेषु वर्तमानाभ्यां सप्तमी-पञ्चमी-प्रथमान्ताभ्यां स्वार्थेऽतसुच्-प्रत्ययः स्यात् ] । अस्तातेरपवादः । दक्षिणतः । उत्तरतः ।

---

अस्तातीति । लुप्तसप्तम्यन्तम्, एकदेशानुकरणं सप्तम्यन्तं वा ।

---

पूर्वाऽधरा । पूर्व, अधर, अवर से 'अस्ताति' के अर्थ में 'असि' प्रत्यय हो, और उस असि के योग में पूर्वादि को क्रम से पुर्, अध्, अव्—ये आदेश भी हों ।

अस्ताति च । अस्तादि प्रत्यय परे रहते 'पूर्व', और 'अधर' को क्रम से 'पुर्' 'अध्' ये आदेश हों ।

विभाषाऽवरस्य । अस्ताति परे रहते अवर को 'अव्' आदेश हो, विकल्प करके ।

दक्षिणोत्तराभ्या । दिग्देशकाल में वर्त्तमान जो—सप्तम्यन्त, पञ्चम्यन्त, प्रथमान्त-दक्षिण और उत्तर ये दिक् शब्द, उनसे अतसुच् प्रत्यय हो, स्वार्थ में ।

---

१ शेषपूरणम् । अयं सर्वोऽपि ग्रन्थो लिखिते नास्ति ।

**विभाषा पराऽवराभ्याम्** ।५।३।२९। [ [1]आभ्यामतसुज्वा स्याद्स्तात्यर्थे ]। परतः। परस्तात्। अवरतः। अवरस्तात्।

**अञ्चेर्लुक्** ।५।३।३०। अञ्चत्यन्ताद्दिक्शब्दादस्तातेर्लुक् स्यात्। 'लुक्तद्धितलुकि'। प्राच्यां, प्राच्याः, प्राची वा दिक्—प्राक्। उदक्।

**उपर्युपरिष्टात्** ।५।३।३१। [[1]अस्तातेरर्थे] निपातावेतौ।

**पश्चात्** ।५।३।३२। तथा [[1]निपातोऽयमस्तात्यर्थे ]।

**उत्तराऽधरदक्षिणादातिः** ।५।३।३४। [ [1]एभ्य आतिप्रत्ययः स्याद्स्तातेरर्थे ]। उत्तरात्। अधरात्। दक्षिणात्।

**एनबन्यतरस्यामदूरेऽपञ्चम्याः** ।५।३।३५। उत्तरादिभ्यो- [[1]ऽस्तातेरर्थे] एनब्वा स्यादवध्यवधिमतोः सामीप्ये। पञ्चम्यन्तात्तु न।

---

तथा = निपातः । पञ्चम्यन्तात्तु नेति । विभक्तित्रये प्रकृते, पञ्चमी पर्युदस्यते। तेन सप्तम्यन्तात् प्रथमान्ताच्च एनब्विज्ञायते इति तत्त्वम् ।

---

विभाषा परा। पर और अवर से 'अस्तांति' के अर्थ में अतसुच् हो, विकल्प करके।

अञ्चेर्लुक्। अञ्चत्यन्त दिक् शब्द से परे जो अस्ताति, उसका लुक् हो।

उपर्युपरि। अस्तादि के अर्थ में 'उपरि' और 'उपरिष्टात्'—ये निपातित हों।

पश्चात्। अस्ताति के अर्थ में 'पश्चात्' यह निपातित हो।

उत्तराधर। उत्तर आदि से 'अस्ताति' के अर्थ में 'आति' प्रत्यय हो।

एनबन्य। उत्तर आदि से 'अस्ताति' के अर्थ में 'एनप्' प्रत्यय हो, विकल्प करके। यदि अवधि और अवधिमान् का सामीप्य हो तो। अर्थात्—अवधि से यदि अवधिमान् समीप ही हो तो। परन्तु—पञ्चम्यन्त से यह 'एनप्' नहीं हो।

---

१ शेषपूरणम्।

उत्तरेण । अधरेण । दक्षिणेन । पक्षे—यथास्वं प्रत्ययाः । इह केचिद्दिक्शब्दमात्रादेनपमाहुः । पूर्वेण ग्रामम् । अपरेण ग्रामम् ।

**दक्षिणादाच्** ।५।३।३६। [ [1]अपञ्चम्यन्ताद्दक्षिणाशब्दादाच् स्यात् ], अस्तातेर्विषये । दक्षिणा वसति । 'अपञ्चम्या' इत्येव । दक्षिणादागतः ।

**आहि च दूरे** ।५।३।३७। [[1]अपञ्चम्यन्ताद् ] दक्षिणात् । [ आहिः प्रत्ययः स्यादस्तातेरर्थे । अवध्यवधिमतोर्दूरत्वे] । चादाच् । दक्षिणाहि । दक्षिणा ।

**उत्तराच्च** । ५।३।३८। [ [1]अपञ्चम्यन्तादुत्तरशब्दादाहिः प्रत्ययः स्यात् । अस्तात्यर्थे, अवध्यवधिमतोर्दूरत्वे । चादाच् ] । उत्तराहि । उत्तरा ।

**सङ्ख्याया विधार्थे धा** ।५।३।४२। क्रियाप्रकारे वर्त्तमानात्सङ्ख्या-

---

यथास्वं = यथासम्भवम् । तदेवं-दक्षिणतः । उत्तरतः । अधः । अधस्तात् । उत्तरात् । अधरात् । दक्षिणात्—इति रूपाणि बोध्यानि ।

विधार्थे । इह हि 'विधाया'मिति वक्तव्ये, अर्थग्रहणं विधाशब्दो यत्रार्थे प्रसिद्धस्तत्रैव यथा स्यादित्येवमर्थम् । तादृशश्चाऽर्थः—प्रकार एव । स च क्रियाविषयक एव गृह्यते, अभिधानस्वाभाव्यात्तदाह—क्रियाप्रकारे वर्त्तमानादिति ।

---

दक्षिणादाच् । अपञ्चम्यन्त दक्षिण शब्द से 'आच्' प्रत्यय हो, अस्ताति के विषय में ।

आहि च दूरे । अपञ्चम्यन्त दक्षिणशब्द से अस्ताति के अर्थ में 'आहि' और 'आच्' प्रत्यय हों, अवधि से यदि अवधिमान् दूर हो तो ।

उत्तराच्च । अपञ्चम्यन्त उत्तर शब्द से अस्ताति के अर्थ में 'आहि' और 'आच्' प्रत्यय हों । अवधि से अवधिमान् यदि दूर हो तो ।

सङ्ख्याया विधार्थे । क्रिया के प्रकार में वर्त्तमान जो सङ्ख्यावाचक शब्द, उससे स्वार्थ में 'धा' प्रत्यय हो ।

---

१ शेषपूरणम् ।

शब्दात्स्वार्थे धा स्यात्। चतुर्द्धा। पञ्चधा।

**एकाद्धो ध्यमुञन्यतरस्याम्** ।५।३।४४। [ [1]एकशब्दात्परस्य धाप्रत्ययस्य ध्यमुञादेशो वा स्यात् ]। ऐकध्यम्। एकधा।

**द्वित्र्योश्च धमुञ्** ।५।३।४५। आभ्यां 'धा' इत्यस्य धमुञ् वा स्यात्। द्वैधम्। द्विधा। त्रैधम्। त्रिधा।

**एधाच्च** ।५।२।४६। [ [1]द्वित्र्योर्विहितस्य धाप्रत्ययस्य एधाच् आदेशो वा स्यात्। चकारो विकल्पानुकर्षणार्थः ]। द्वेधा। [ [2]द्वैधम्। द्विधा ]। त्रेधा। [ [2]त्रैधम्। त्रिधा ]।

**याप्ये पाशप्** ।५।३।४७। [[1]याप्ये = कुत्सिते वर्त्तमानात्प्रातिपदिकात्स्वार्थे पाशप् प्रत्ययः स्यात् ]। कुत्सितो भिषक्–भिषक्पाशः।

***तीयादीकक् स्वार्थे वा वाच्यः** । द्वैतीयीकः । द्वितीयः। तार्तीयीकः। तृतीयः। ***न विद्यायाः**। 'द्वितीया विद्ये'त्येव।

---

एकाद्धो। एक शब्द से परे जो 'धा' प्रत्यय, उसको 'ध्यमुञ्' आदेश हो, विकल्प करके।

द्वित्र्योश्च। द्वि और त्रि से परे जो 'धा' उसको धमुञ् आदेश हो, विकल्प करके।

एधाच्च। द्वि और त्रि से परे जो 'धा' उसको 'एधाच्' आदेश हो, विकल्प करके।

याप्ये पाशप्। याप्य = कुत्सित–अर्थ में वर्त्तमान प्रातिपदिक से स्वार्थ में 'पाशप्' प्रत्यय हो।

तीयादीकक्। तीय प्रत्ययान्त से स्वार्थ में ईकक् प्रत्यय हो, विकल्प करके।

न विद्यायाः। विद्या अर्थ में वर्त्तमान तीय प्रत्ययान्त से ईकक् प्रत्यय नहीं हो।

---

१ शेषपूरणम्। २ क्वाचित्कः पाठः।

एकादाकिनिच्चाऽसहाये ।५।३।५२। [ [1]असहायवाचिन एकशब्दात्स्वार्थे आकिनिच् स्यात् ]। चात्-कन्लुकौ । एकः । एकाकी । एककः ।

भूतपूर्वे चरट् ।५।३।५३। [ भूतपूर्वत्वविशिष्टेऽर्थे वर्त्तमानात्प्रातिपदिकात्स्वार्थे चरट् स्यात् ] । आढ्यो भूतपूर्वः—आढ्यचरः ।

षष्ठ्या रूप्य च ।५।३।५४। षष्ठ्यन्ताद्भूतपूर्वे रूप्यः स्यात् । चरट् च । कृष्णस्य भूतपूर्वो गौः—कृष्णरूप्यः । कृष्णचरः[2] ]।

अतिशायने तमबिष्ठनौ ।५।३।५५। अतिशयविशिष्टार्थे [[1]वर्त्तमानात्प्रातिपदिकात्स्वार्थे] एतौ स्तः । अयमेषामतिशयेनाढ्यः-आढ्यतमः । लघुतमः । लघिष्ठः ।

---

असहाय इति । असहायवाचिन एकशब्दादाकिनिच् स्यात् ।

एषामिति । द्व्यवयवे समुदाये यदा एकस्यातिशयो विवक्ष्यते तदाऽस्य तमपस्तरबीयसुनावपवादौ वक्ष्येते । एवञ्च परिशेषाद् बहूनां मध्ये यदा एकस्य निर्धारणं, तत्रैवायं तमप् प्रवर्त्तते इत्याशयः ।

अयमेषामतिशयेन लघुः—लघुतमः । लघिष्ठः ।

---

एकादाकिनिच्चा । असहायवाची एक शब्द से स्वार्थ में आकिनच् प्रत्यय हो । कन् और लुक् भी हों ।

भूतपूर्वे चरट् । भूतपूर्वत्व विशिष्ट अर्थ में वर्त्तमान प्रातिपदिक से स्वार्थ में 'चरट्' प्रत्यय हो ।

षष्ठ्या रूप्य च । षष्ठ्यन्त प्रातिपदिक से भूतपूर्व अर्थ में रूप्य प्रत्यय हो । 'चरट्' प्रत्यय भी हो ।

अतिशायने । अतिशय विशिष्ट अर्थ में वर्त्तमान प्रातिपदिक से स्वार्थ में 'तमप्' और 'इष्ठन्' प्रत्यय हों ।

---

१ शेषपूरणम् ।

२ प्रकरणादित आरभ्य एतावान् ग्रन्थो लिखिते न दृश्यते ।

तिङश्च ।५।३।५६। तिङन्तादतिशये द्योत्ये तमप् स्यात् ।

तरप्तमपौ घः ।१।१।२२। [ [1]एतौ घसञ्ज्ञौ स्तः] ।

किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे ।५।४।११। किम, एदन्तात्तिङोऽव्ययाच्च यो घस्तदन्तादामुः स्यात्, न तु द्रव्यप्रकर्षे । किन्तमाम् । प्राह्णेतमाम् । प्रगेतमाम् । पचतितमाम् । उच्चैस्तमाम् । द्रव्यप्रकर्षे तु—उच्चैस्तमस्तरुः ।

द्विवचन-विभज्योपपदे तरबीयसुनौ ।५।३।५७। द्वयोरेकस्याऽतिशये, विभक्तव्ये चोपपदे सुप्तिङन्तादेतौ स्तः । पूर्वयोरपवादः । अयमनयोरतिशयेन लघुः—लघुतरः । लघीयान् । उदीच्याः प्राच्येभ्यः—पटवः—पटुतराः । पटीयांसः ।

अजादी गुणवचनादेव ।५।३।५८। [ [1]अजादी= ] इष्ठन्नीयसुनौ

---

अजादी = इष्ठन्नीयसुनौ । एवञ्च इष्ठन्नीयसुनौ गुणोपसर्जनद्रव्यवचनादेव स्त इत्यर्थः । यथा पटिष्ठ इत्यादौ ।

---

तिङश्च । अतिशय अर्थ द्योत्य हो तो तिङन्त से 'तमप्' प्रत्यय हो ।

तरप्तमपौ । तरप् और तमप् की घसञ्ज्ञा हो ।

किमेत्तिङव्यय । 'किम्' शब्द, एदन्त प्रातिपदिक, तिङन्त, और अव्यय, इनसे परे जो घ, तदन्त से 'आमु' प्रत्यय हो । परन्तु द्रव्य के प्रकर्ष में 'आमु' नहीं हो ।

द्विवचनविभज्यो । द्व्यर्थ प्रतिपादक उपपद रहते, और विभक्तव्य ( विभजनीय, जिसका विभाग किया जाए, वह-) उपपद रहते, दो में से एक का अतिशय द्योत्य हो तो, सुबन्त और तिङन्त से 'तरप्' और 'ईयसुन्' प्रत्यय हों ।

अजादी गुण । अजादि जो इष्ठन् और ईयसुन् प्रत्यय, वे गुणवचन से ही होते हैं ।

---

१ शेषपूरणम् ।

[ [1]गुणवचनादेव रतः ]। नेह—पाचकतरः। पाचकतमः।

**प्रशस्यस्य श्रः** ।५।३।६०। [2]अस्य (=प्रशस्यस्य) श्रादेशः स्यात्[2] ], इष्ठेयसोः परतः।

**प्रकृत्यैकाच्** ।६।४।१६३ [ [1]इष्ठादिष्वेकाच् प्रकृत्या स्यात् ]। श्रेष्ठः। श्रेयान्।

**ज्य च** ।५।३।६१। प्रशस्यस्य ज्यादेशः [स्यात्] इष्ठेयसोः। ज्येष्ठः।

**ज्यादादीयसः** ।६।४।१६०। [[1]ज्यादुत्तरस्य ईयस आकारादेशः स्यात् ]। 'आदेः परस्य'। ज्यायान्,

**वृद्धस्य च** ।५।३।६२। [[1]वृद्धस्य ] ज्यादेशः [स्या]दजाद्योः [ [1]परतः ]। ज्येष्ठः। ज्यायान्। **अन्तिकबाढयोर्नेदसाधौ** ।५।३।६३।

---

पाचकतर इति। पाचकशब्दस्य क्रियोपार्जनद्रव्यवाचकतया गुणोपसर्जनद्रव्यवाचकत्वाऽभावदिह अजादी न। प्रकृत्येति। तेन 'श्रेष्ठ' इत्यादौ 'यस्येति चे'ति, 'टे'रिति वा टिलोपो न। ज्यादादीति। ज्यादुत्तरस्य ईयसुन आकारादेशः स्यात्।

---

प्रशस्यस्य। प्रशस्य को 'श्र' आदेश हो, 'इष्ठन्' और 'ईयसुन्' परे रहते।

प्रकृत्यैकाच्। इष्ठन्, इमनिच्, और ईयसुन् परे रहते जो भसञ्ज्ञक एकाच् वह प्रकृति से रहे।

ज्य च। प्रशस्य को 'ज्य' आदेश हो, इष्ठन् और ईयसुन् परे रहते।

ज्यादादीयसः। 'ज्य' से उत्तर जो ईयसुन्, उस (के आदि) को आकार आदेश हो।

वृद्धस्य च। वृद्ध को ज्य आदेश हो, अजादि ( इष्ठन् और ईयसुन् ) प्रत्यय परे रहते।

अन्तिकबाढयो। अन्तिक और बाढको यथासङ्ख्य करके नेद और साध आदेश हों, अजादि ( इष्ठन् और ईयसुन् ) प्रत्यय परे रहते।

---

१ शेषपूरणम्। २ अयं ग्रन्थो लिखिते नास्ति।

[[1]अन्तिकबाढयोर्यथासङ्ख्यं नेदसाधावादेशौ स्तः], अजाद्योः [[1]परतः]। नेदिष्ठः। नेदीयान्। साधिष्ठः। साधीयान्।

**स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं, पूर्वस्य च गुणः** ।६।४।१५६। एषां यणादिपरं लुप्यते, पूर्वस्य च गुणः [ स्यात् ], इष्ठादिषु। स्थविष्ठः। यविष्ठः। ह्रसिष्ठः। एवमीयसुन्। ह्रस्वक्षिप्रक्षुद्राणां पृथ्वादित्वात् ह्रसिमा। क्षेपिमा। क्षोदिमा।

**प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिवृन्दाः** ।६।४।१५७। प्रियादीनां प्रादयः [[1]आदेशाः] स्युरिष्ठादिषु। प्रेष्ठः। स्थेष्ठः। स्फेष्ठः। वरिष्ठः। बंहिष्ठः। गरिष्ठः। वर्षिष्ठः। त्रपिष्ठः। द्राघिष्ठः। वृन्दिष्ठः। एवमीयसुन्। प्रियोरुबहुलगुरुदीर्घाणां पृथ्वादित्वात्–[2]प्रेमेत्यादि ]।

**बहोर्लोपो भू च बहोः** ।६।४।१५८। बहोः परयोरिमेयसोर्लोपः

---

यणादिपरमिति। यण् आदिर्यस्य तत्–यणादि। यणादि च तत्परञ्च–यणादिपरम्। परं यणादीत्यर्थः। तेन स्थूलदूरादेरव्यहितस्य लकाररेफादेर्लोपः। 'पर'ग्रहणात्—यविष्ठो, ह्रसिष्ठ इत्यादौ पूर्वस्य यणादेर्लोपो न।

पृथ्वादित्वादिति। 'इमनिचि' इति शेषः। लोप इति। 'आदेः परस्ये'ति आदेरेवाऽयं लोपो भवति।

---

स्थूलदूर। स्थूलादि का जो यणादि रूप पर भाग, उसका लोप हो, और यणादि से जो पूर्व भाग उसको गुण हो, इष्ठन्, इमनिच् और ईयसुन् प्रत्यय परे रहते।

प्रियस्थिर। प्रिय आदि को 'प्र' आदि आदेश हों, इष्ठन्, इमनच् और ईयसुन् प्रत्यय परे रहते।

बहोर्लोपो। बहु से परे जो इमनिच् और ईयसुन् प्रत्यय, उन (के आदि) का लोप हो, और 'बहु' को 'भू' आदेश भी हो।

---

१ शेषपूरणम्। २ लिखिते न दृश्यते।

स्यात् । बहोश्च भूरादेशः [[1]स्यात्] । भूमा । भूयान् ।

इष्ठस्य यिट् च ।६।४।१५९। बहोः परस्य इष्ठस्य लोपः [[1]स्याद्बहोश्च भूरादेशः स्यादिष्ठस्य] यिडागमश्च । भूयिष्ठः ।

विन्मतोर्लुक् ।५।३।६५। [[2]विन्मतोर्लुक् स्यात्] इष्ठेयसोः [[2]परतः] । अतिशयेन स्रग्वी-स्रजिष्ठः । स्रजीयान् । अतिशयेन त्वग्वान्—त्वचिष्ठः । त्वचीयान् ।

[ [3]प्रशंसायां रूपप् ।५।३।६६। [ [2]प्रशंसा-स्तुतिः । प्रशंसा-विशिष्टेऽर्थे वर्त्तमाना-] त्सुबन्तात्तिङन्ताच्च [ [2]स्वार्थे रूपप् स्यात् ] । प्रशस्तः पटुः—पटुरूपः ] ।

ईषदसमाप्तौ कल्पब्देश्यदेशीयरः ।५।३।६७। [ [2]ईषदसमाप्ति-विशिष्टेऽर्थे वर्त्तमानात्प्रातिपदिकात्कल्पबादयः प्रत्ययाः स्युः] । ईषदूनो विद्वान्—विद्वत्कल्पः । विद्वद्देशीयः । पचतिकल्पम् ।

---

इष्ठस्येति । पूर्वसूत्रं सकलमनुवर्त्तते । तेन बहोर्भूरादेशश्चेत्यपि बोध्यम् । भूयिष्ठ इति । अत्र इष्ठस्य आदेर्लोपे, यकार आगमः । इकारस्तूच्चारणार्थः ।

---

इष्ठस्य यिट् च । बहु से परे जो इष्ठन् प्रत्यय उस ( के आदि ) का लोप हो, और बहु को भू आदेश हो, और इष्ठन् को 'यिट्' आगम भी हो ।

विन्मतोर्लुक् । 'विन्' और 'मतुप्' प्रत्यय का लुक् हो, इष्ठन् और ईयसुन् परे रहते ।

प्रशंसायां । प्रशंसा ( स्तुति ) विशिष्ट अर्थ में वर्त्तमान जो सुबन्त और तिङन्त, उनसे स्वार्थ में 'रूपप्' प्रत्यय हो ।

ईषदसमाप्तौ । ईषत् असमाप्ति ( 'थोड़ी सी अपूर्णता', 'थोड़ी सी कमी' ) विशिष्ट अर्थ में विद्यमान जो प्रातिपदिक, उससे 'कल्पप्' 'देश्य' और 'देशीयर्' प्रत्यय हों ।

---

१ क्वाचित्कः पाठः । २ शेषपूरणम् । ३ अयं ग्रन्थो लिखिते न दृश्यते ।

**विभाषा सुपो बहुच्, पुरस्तात्तु ।५।३।६८।** [ [1]ईषदसमाप्तिविशिष्टेऽर्थे वर्त्तमानात्सुबन्ताद्बहुच् प्रत्ययो वा स्यात् । स च पुरस्तादेव भवति, न पुरतः[1] ] । ईषदूनः पटुः—बहुपटुः । पटुकल्पः । सुपः किं ? । यजतिकल्पम् ।

**प्रागिवात्कः ।५।३।७०।** 'इवे प्रतिकृता'वित्यतः प्राक्काऽधिकारः ।

**अव्ययसर्वनाम्नामकच् प्राक् टेः ।५।३।७१।** [अव्ययानां, सर्वनाम्नां, तिङन्तस्य च टेः प्रागकच् प्रत्ययः स्यात्, प्रागिवीयेष्वर्थेषु ] । काऽपवादः । 'तिङश्चे'त्यनुवर्त्तते । **कस्य च दः ।५।३।७२।** कान्ताऽव्ययस्य दादेशोऽकच्च । **अज्ञाते ।५।३।७३।** [ [2]अज्ञातत्वोपाधिकेऽर्थे वर्त्तमानात्प्रातिपदिकात्तिङन्ताच्च स्वार्थे यथाविहितं प्रत्ययः स्यात् ] । कस्यायमश्वः—अश्वकः । उच्चकैः । नीचकैः । सर्वके । पचतकि । धकित् ।

---

विभाषा सुप इति । ईषदसमाप्तिविशिष्टेऽर्थे सुबन्ताद्बहुज्वा स्यात् । स च प्रकृतेः प्राग्भवति, न तु परत इत्यर्थः ।

---

विभाषा सुपो । ईषदसमाप्ति विशिष्ट अर्थ में वर्त्तमान जो सुबन्त, उससे 'बहुच्' प्रत्यय हो, विकल्प करके । और वह बहुच् प्रत्यय–प्रकृति से पूर्व ही हो, प्रकृति से पर नहीं हो ।

प्रागिवात्कः । 'इवे प्रतिकृतौ' इस सूत्र से पूर्व तक 'क' प्रत्यय का अधिकार है ।

अव्ययसर्वनाम्ना । अव्यय, सर्वनाम, और तिङन्त, इनकी टि से पूर्व ही अकच् प्रत्यय हो, प्रागिवीय अज्ञातादि अर्थों में ।

कस्य च दः । ककारान्त अव्यय को 'द' आदेश हो, और उससे अकच् प्रत्यय भी हो ।

अज्ञाते । अज्ञातत्वोपाधिक अर्थ में वर्त्तमान जो सुबन्त और तिङन्त, उससे स्वार्थ में यथाविहित 'क' 'अकच्' आदि प्रत्यय हों ।

---

१ शेषपूरणम् ।

कुत्सिते ।५।३।७४। [ [1]कुत्सितत्वोपाधिकेऽर्थे वर्त्तमानात्प्रातिपदिकात्स्वार्थे यथाविहितं प्रत्ययः स्यात् ]। कुत्सितोऽश्वः—अश्वकः ।

अल्पे ।५।३।८५। [ [1]अल्पत्वविशिष्टेऽर्थे वर्त्तमानात्प्रातिपदिकात्स्वार्थे यथाविहितं प्रत्ययः स्यात् ]। अल्पं तैलं—तैलकम् ।

ह्रस्वे ।५।३।८६। [ [1]ह्रस्वत्वविशिष्टेऽर्थे वर्त्तमानात्प्रातिपदिकात्स्वार्थे यथाविहितं प्रत्ययः स्यात् । ह्रस्वो [2]वृक्षो—वृक्षकः ।

* अस्मिन् प्रकरणे हलादौ प्रत्यये, द्वितीयादचः परस्य लोपो वा वाच्यः । देवदत्तकः । देवकः । *लोपः पूर्वपदस्य च । दत्तकः ।

*विनापि प्रत्ययं पूर्वोत्तरपदयोर्लोपो वा वाच्यः । देवदत्तः । । देवः । सत्यभामा । भामा । सत्या ।

कुटीशमीशुण्डाभ्यो रः ।५।३।८८। [ [1]ह्रस्वत्वे द्योत्ये एभ्यो रः स्यात् ] ह्रस्वा कुटी-कुटीरः । शमीरः । शुण्डारः ।

कुत्वा डुपच् ।५।३।८९। [ [1]ह्रस्वत्वे द्योत्ये कुतूशब्दाड् डुपच् स्यात् ]।

---

कुत्सिते । कुत्सितत्वविशिष्ट अर्थ में वर्त्तमान प्रातिपदिक से स्वार्थ में यथाविहित क आदि प्रत्यय हों ।

अल्पे । ह्रस्वे । अल्पत्व और ह्रस्वत्व विशिष्ट अर्थ में वर्त्तमान प्रातिपदिक से स्वार्थ में यथाविहित क—अकच् आदि प्रत्यय हों ।

अस्मिन् प्रकरणे । इस प्रागिवीय प्रत्यय के प्रकरण में, हलादि प्रत्यय परे रहते, द्वितीय अच् से जो परे है, उसका लोप हो, विकल्प करके ।

लोपः पूर्वपदस्य । पूर्वपद का भी विकल्प करके लोप हो, प्रागिवीय हलादि प्रत्यय परे रहते ।

विनाऽपि प्रत्ययं । प्रत्यय के विना भी पूर्वपद और उत्तरपद का लोप हो, विकल्प करके ।

कुटीशमी । कुटी आदि से 'र' प्रत्यय हो, ह्रस्वत्व अर्थ द्योत्य हो तो ।

कुत्वा डुपच् । ह्रस्वत्व द्योत्य हो तो 'कुतू' शब्द से डुपच् प्रत्यय हो ।

---

१ शेषपूरणम् । २ अयं ग्रन्थो लिखिते न दृश्यते ।

ह्रस्वा कुतूः—कुतुपः। 'कुतूः कृत्तेः स्नेहपात्रं ह्रस्वा सा कुतुपः पुमान्'।

**कासू-गोणीभ्यां ष्टरच् ।५।३।९०।** [ आभ्यां ष्टरच्स्यात्, ह्रस्वत्वे द्योत्ये ]। आयुधविशेषः—कासूः। ह्रस्वा सा—कासूतरी। गोणीतरी।

**वत्सोक्षाऽश्वर्षभेभ्यश्च तनुत्वे ।५।३।९१।** [ [1]वत्सादिभ्यष्टरच्स्यात्तनुत्वे द्योत्ये ]। वत्सतरः। उक्षतरः। अश्वतरः। ऋषभतरः [2]]।

**किंयत्तदोर्निर्द्धारणे द्वयोरेकस्य डतरच् ।५।३।९२।** [[1]द्वयोरेकस्य निर्द्धारणे किं-यत् तद्-एतेभ्यो डतरच् स्यात् ]। एतयोः कतरो-वैष्णवः। यतरः। ततरः। [ [2]महाविभाषया—कः। यः। सः ]।

**वा बहूनां जातिपरिप्रश्ने डतमच् ।५।३।९३।** [ [1]बहूनां मध्ये एकस्य निर्द्धारणे किं-य-त्तद्भ्यो डतमज्वा स्यात् ]। 'जातिपरिप्रश्ने' इति

---

कुतूः = चर्मनिर्मितं घृतादिभाण्डम्। ( कुप्पा )। ह्रस्वाः कुतूः—कुतुपः- (कुप्पी)। तनुत्व इति। तनुत्वं न्यूनता, सा च प्रवृत्तिनिमित्तस्यैव, प्रत्यासत्तेः। वत्सतरः = ईषदवशिष्टवत्सत्वावस्थः। क्वचित्तु तत्सहचरितधर्मान्तराणामपि न्यूनता। यथा 'अश्वतर' इत्यत्र प्रवृत्तिनिमित्तमश्वत्वं, तत्सहचरितस्य अश्वादश्वायामुत्पन्नत्वस्य धर्मस्य—तनुत्वे=गर्दभादश्वायामुत्पन्नत्वरूपे—वैकल्येऽपि प्रत्ययः। ( अश्वतरः = खच्चर )। ऋषभतरः = निर्बलो वृषः।

---

कासूगोणीभ्यां। ह्रस्वत्व द्योत्य हो तो कासू और गोणी शब्द से 'ष्टरच्' प्रत्यय हो।

वत्सोक्षाश्वर्ष। वत्स आदि से तनुत्व ( थोड़ापन ) अर्थ द्योत्य हो तो ष्टरच् प्रत्यय हो।

किंयत्तदः। दो में से एक का निर्द्धारण करना हो तो—किम्, यत्, तद्—इन शब्दों से डतरच् प्रत्यय हो।

वा बहूनां। बहुत में से एक का निर्द्धारण करना हो तो किम् यत् और तत् से डतमच् हो, विकल्प करके।

---

१ शेषपूरणम्। २ अयं ग्रन्थो लिखिते न दृश्यते।

प्रत्याख्यातमखकरे। कतमो भवतां कठः। यतमः। ततमः। वाग्रहणम-कजर्थम्। यकः। सकः। [[1]महाविभाषया–यः। सः]। **एकाच्च प्राचाम्** ।५।३।९४। [ [2]एकशब्दात्स्वस्मिन्विषये ] डतरच्, डतमच्च स्यात्, [ [2]प्राचां मतेन ]। अनयोरेकतरो मैत्रः। एषामेकतमः[3] ]।

इति प्राग्दिवीयाः।

---

## अथ स्वार्थिकाः।

**इवे प्रतिकृतौ** ।५।३।९६। [[2]इवार्थ—सादृश्य—विशिष्ट-प्रतिकृतौ वर्त्तमानात्प्रातिपदिकात्स्वार्थे ] कन्स्यात्। अश्व इव प्रतिकृतिः—अश्वकः। [ [1]प्रतिकृतौ किं ? । गौरिव गवयः ] ।

[ * [3]**सर्वप्रातिपदिकेभ्यः स्वार्थे कन्**। अश्वकः ]।

**शाखादिभ्यो यः** ।५।३।१०३। [[2]शाखादिभ्यो यः स्यादिवार्थे]। शाखेव-शाख्यः। मुख्यः। जघन्यः। अग्र्यः। शरण्यः।

---

इवे प्रतिकृतौ = इवार्थोपमानत्ववति वर्त्तमानात् प्रातिपदिकात्कन् स्यात्, यदुपमेयं—सा प्रतिकृतिश्चेदिति वृत्तिः शेखरे।

अश्वकः = उपमानत्ववदश्वाऽभिन्न इत्यर्थ इति शेखरे।

---

एकाच्च। एक शब्द से अपने२ विषय में डतरच् और डतमच् प्रत्यय हों, प्राचीन आचार्यों के मत में।

इवे प्रतिकृतौ। इवार्थ जो उपमानत्व, तद्वत् ( उपमान ) में वर्त्तमान जो अश्वादि प्रातिपदिक, उनसे स्वार्थ में कन् प्रत्यय हो। जो उपमेय है, वह यदि प्रतिकृति ( मूर्त्ति, तस्वीर, फोटो आदि ) हो तो।

सर्वप्रातिपदिकेभ्यः। प्रातिपदिक मात्र से स्वार्थ में कन् हो।

शाखादिभ्यो यः। इव के अर्थ में शाखादि से 'य' प्रत्यय हो।

---

१ लिखिते नास्ति। २ शेषपूरणम्।

३ लिखितेऽत्राऽयं पाठो दृश्यते। मुद्रिते त्वग्र वर्त्ततेऽयं पाठः।

कुशाग्राच्छः ।५।३।१०५। [ [१]कुशाग्राच्छः स्यादिवार्थे । कुशाग्रीयः[२] ]।

तत्प्रकृतवचने मयट् ।५।४।२१। [ [१]तदिति प्रथमासमर्थात्प्रकृतोपाधिकेऽर्थे वर्त्तमानात्स्वार्थे मयट् स्यात्। यद्वा तदितिप्रथमासमर्थात्प्रकृतवचनेऽभिधेये मयट् स्यात् ] । प्राचुर्येण प्रस्तुतं प्रकृतं, तस्य वचनं प्रतिपादनम् । भावे, अधिकरणे वा ल्युट् । आद्ये—प्रकृतमन्नम्—अन्नमयम् । अपूपमयम् । द्वितीये—अन्नमयो यज्ञः । अपूपमयं पर्व ।

सङ्ख्यायाः क्रिया-ऽभ्यावृत्ति-गणने कृत्वसुच् ।५।४।१७। अभ्यावृत्तिर्जन्म । क्रिया-जन्म-गणन-वृत्तेः सङ्ख्यायाः स्वार्थे कृत्वसुच् [स्यात् ]। पञ्चकृत्वो भुङ्क्ते। सङ्ख्यायाः किम् ? । भूरिवारान्भुङ्क्ते ।

द्वित्रिचतुर्भ्यः सुच् ।५।४।१८। [ [१]एभ्यः सङ्ख्याशब्देभ्यः क्रिया-

---

तत्प्रकृतवचन इति । भावे ल्युटि एकोऽर्थः,अधिकरणे ल्युटि द्वितीयोऽर्थः । अर्थद्वयमप्येतदाचार्यसंमतमित्युभयथाऽप्युदाहरति—आद्ये इत्यादिना । अभ्यावृत्तिशब्देन यदि द्वितीयादिप्रवृत्तिर्गृह्यते तदा षट्कृत्वःप्रवृत्तौ 'पञ्चकृत्व' इति स्यादतोऽत्र विवक्षितार्थमाह—अभ्यावृत्तिर्जन्मेति ।

---

कुशाग्राच्छः । कुशाग्र से इवार्थ में छ प्रत्यय हो ।

तत्प्रकृत । 'प्राचुर्येण प्रस्तुत' इस अर्थ में वर्त्तमान प्रथमान्त समर्थ से स्वार्थ में मयट् हो । और प्रथमान्त समर्थ से प्रकृतवचन ( प्राचुर्येण प्रस्तुत का अधिकरण ) अभिधेय हो तो मयट् हो ।

सङ्ख्यायाः क्रिया । क्रिया का जो जन्म उस के गणन में वर्त्तमान जो सङ्ख्यावाचक शब्द, उससे स्वार्थ में 'कृत्वसुच्' प्रत्यय हो ।

द्वित्रिचतुर्भ्यः । क्रिया के जन्म के गणन में वर्त्तमान जो—द्वि, त्रि, और चतुर् शब्द, उनसे स्वार्थ में 'सुच्' प्रत्यय हो ।

---

१ शेषपूरणम् । २ अयं सर्वोऽपि ग्रन्थो लिखिते नास्ति ।

जन्म-गणन-वृत्तिभ्यः स्वार्थे सुच् प्रत्ययः स्यात् ]। कृत्वसुचोऽपवादः। द्विर्भुङ्क्ते। त्रिर्भुङ्क्ते। 'रात्सस्य'। चतुर्भुङ्क्ते।

**एकस्य सकृच्च** ।५।४।१९। [ [1]क्रियागणने-एकस्य ] सकृदादेशः [ स्यात् ], चात्सुच्। सकृद्भुङ्क्ते। **देवतान्तात्तादर्थ्ये यत्** ।५।४।२४। तदर्थं एव-तादर्थ्यम्। अत एव स्वार्थे ष्यञ्। [ [1]देवतान्तात्प्रातिपदिकाच्चतुर्थ्यन्तात्समर्थात्तादर्थ्ये यत् स्यात् ]। अग्निदेवतायै इदम्-अग्निदेवत्यम्। पितृदेवत्यम्।

**पादार्घाभ्यां च** ।५।४।२५। [ [1]पादार्घाभ्यां चतुर्थ्यन्ताभ्यां तादर्थ्येऽभिधेये यत्स्यात् ]। पादार्थमुदकं-पाद्यम्। अर्घ्यम्।

**अतिथेर्ञ्यः** ।५।४।२६। [ [1]अतिथिशब्दाच्चतुर्थ्यन्तात्कृतसन्धेः समर्थात्तादर्थ्ये ञ्यः स्यात् ]। अतिथये इदम्-आतिथ्यम्।

***नवस्य नू आदेशस्त्नप्तनप्खाश्च वक्तव्याः**। स्वार्थे। नूत्नम्।

---

एकस्य सकृच्च। क्रिया-गणन अर्थ में वर्त्तमान जो एक शब्द, उससे सुच् प्रत्यय हो, और उसको ( एक को ) सकृत् आदेश भी हो।

देवतान्ता। चतुर्थ्यन्त समर्थ जो देवतान्त प्रातिपदिक, उससे तादर्थ्य में यत् प्रत्यय हो।

पादार्घाभ्याञ्च। पाद और अर्घ प्रकृतिक चतुर्थ्यन्त समर्थ से तादर्थ्य में यत् प्रत्यय हो।

अतिथेर्ञ्यः। अतिथि प्रकृतिक चतुर्थ्यन्त समर्थ से तादर्थ्य में ञ्य प्रत्यय हो।

नवस्य नू। नव से स्वार्थ में-त्नप्, तनप्, और ख प्रत्यय हो, और नव को 'नू' आदेश भी हो।

---

१ शेषपूरणम्।

नूतनम्। नवीनम्। * भागरूपनामभ्यो धेयः। भागधेयम्। रूपधेयम्। नामधेयम्।

*आग्नीध्र-साधारणादञ्। आग्नीध्रम्। साधारणम्।

देवात्तल् ।५।४।२७। [[1]देवशब्दात्स्वार्थे तल् स्यात्]। देव एव देवता। अवेः कः ।५।४।२८। [[1]अवेः स्वार्थे कप्रत्ययः स्यात्]। अविरेव-अविकः।

यावादिभ्यः कन् ।५।४।२९। [[1]यावादिभ्यः स्वार्थे कन् स्यात्]। याव एव-यावकः। मणिकः।

*[2]सर्वप्रातिपदिकेभ्यः स्वार्थे कन्। बहुतरकम्।

मृदस्तिकन् ५।४।३९। [[1]मृच्छब्दात्स्वार्थे तिकन् स्याद्वा]। मृदेव—मृत्तिका। स-स्नौ प्रशंसायाम् ।५।४।४०। [[1]प्रशंसोपाधिकेऽर्थे-

---

भागधेयं = भाग्यम्। रूपधेयं=रूपम्। अविको—मेषः।

---

भागरूप। भाग, रूप, और नाम शब्द से स्वार्थ में 'धेय' प्रत्यय हो।

आग्नीध्रसाधारणा। आग्नीध्र और साधारण से अञ् प्रत्यय हो। (विकल्प करके)।

देवात्तल्। देवशब्द से स्वार्थ में तल् प्रत्यय हो।

अवेः कः। अविशब्द से स्वार्थ में क प्रत्यय हो।

यावादिभ्यः। यावादि से स्वार्थ में कन् प्रत्यय हो।

सर्वप्रातिपदिकेभ्यः। सब प्रातिपादिकों से स्वार्थ में कन् प्रत्यय हो।

मृदस्तिकन्। मृद् शब्द से स्वार्थ में तिकन् प्रत्यय हो।

सस्नौ प्रशंसायाम्। प्रशंसोपाधिक ( प्रशस्त ) अर्थ में विद्यमान मृद् शब्द से 'स' और 'स्न' प्रत्यय हों।

---

१ शेषपूरणम्।   २ लिखिते तु पूर्वमिदं पठितम्।

वर्त्तमानान्मृच्छब्दात्स्वार्थे स-स्नौ स्तः[1] ]। रूपपोऽपवादः। प्रशस्ता मृत्-मृत्सा। मृत्स्ना[2] ]।

प्रज्ञादिभ्यश्च ।५।४।३८। [[1]एभ्यः स्वार्थे ] अण् स्यात् । प्रज्ञ एव-प्राज्ञः। दैवतः। बान्धवः।

[[2]पूगाञ्ञ्योऽग्रामणीपूर्वात् ।५।३।११२। [ [1]अग्रामणीपूर्वात्पूग-वाचिनो ञ्यः स्या]त्स्वार्थे। नानाजातीया अनियतवृत्तयोऽर्थकाम-प्रधानाः सङ्घाः–पूगाः। लौहितध्वज्यः।

ञ्यादयस्तद्राजाः ।५।३।११९। 'पूगाञ्ञ्यः' इत्यारभ्य उक्ता एतत्सञ्ज्ञाः स्युः। तेनाऽस्त्रियां बहुषु 'तद्राजस्ये'ति लुक्। लोहित-ध्वजाः। 'व्रातेऽति च्फञ्'। कापोतपाक्यः। कपोतपाकाः। कौञ्जायन्यः। व्राध्नायन्यः। [2]इत्यादि। ]

बह्वल्पार्थाच्छस्कारकादन्यतरस्याम् ।५।४।४२। [ [1]बह्वल्पार्था-त्कारकाऽभिधायिनो वा शस् स्यात्] । बहूनि ददाति–बहुशः। अल्पशः।

---

बन्धुरेव–बान्धवः। बह्वल्पार्थादिति। अर्थग्रहणात्पर्यायग्रहणम्। तेन 'भूरिश'इत्याद्यपि भवति।

---

प्रज्ञादिभ्यश्च। प्रज्ञादि से स्वार्थ में अण् प्रत्यय हो।

पूगाञ्ञ्यो। अग्रामणी पूर्वक से भिन्न जो पूगवाचक शब्द, उनसे ञ्य प्रत्यय हो, स्वार्थ में।

ञ्यादयस्तद्राजाः। 'पूगाञ्ञ्य' इससे प्रारम्भ कर जो प्रत्यय कहे हैं, उनकी 'तद्राज' सञ्ज्ञा हो।

बह्वल्पार्थात्। बह्वर्थक और अल्पार्थक जो कर्त्ता आदि कारकों के अभिधायक शब्द, उनसे शस् प्रत्यय हो, विकल्प करके।

---

१ शेषपूरणम्। २ एतावान् ग्रन्थो लिखिते प्रायो न दृश्यते।

*बह्वल्पार्थान्मङ्गलाऽमङ्गलवचनम् । नेह—बहूनि ददात्यनिष्टेषु। अल्पं ददात्याभ्युदयिकेषु।

सङ्ख्यैकवचनाच्च वीप्सायाम् ।५।४।४३। [ [1]सङ्ख्यावाचिन, एकवचनाच्च कारकाद्वीप्सायां शस् वा स्यात् ]। द्वौ द्वौ ददाति—द्विशः। माषं माषं ददाति—माषशः। प्रस्थशः। परिमाणशब्दा वृत्तावेकार्था एव। सङ्ख्यैकवचनात्किम् ?। घटं घटं ददाति। वीप्सायां किम् ?। द्वौ ददाति। कारकादित्येव। [ [2]नेह—] द्वयोर्द्वयोः स्वामी।

प्रतियोगे पञ्चम्यास्तसिः ।५।४।४४। प्रतिना कर्मप्रवचनीयेन योगे या पञ्चमी विहिता, तदन्तात्तसिः [स्याद्वा]। प्रद्युम्नः कृष्णतः [3]प्रति ]।

*आद्यादिभ्यस्तसेरुपसङ्ख्यानम् । आदौ—आदितः। मध्यतः। पृष्ठतः। पार्श्वतः। आकृतिगणोऽयम्। स्वरेण—स्वरतः। वर्णतः।

---

अनिष्टेष्विति। भयादिनिमित्तेषु राजादिषु, चौरादिषु च।

आभ्युदयिकेषु। अभ्युदयहेतुषु यज्ञादिषु।

कृष्णत इति। 'प्रतिः प्रतिनिधिप्रतिदानयो'रिति कर्मप्रवचनीयसञ्ज्ञायां 'प्रतिनिधिप्रतिदाने च यस्मात्' इति कृष्णशब्दात्पञ्चमी।

---

बह्वल्पार्थान्मङ्गला। बह्वर्थक से मङ्गल में, अल्पार्थक से अमङ्गल ( अनिष्ट ) में ही शस् हो।

सङ्ख्यैकवचना। सङ्ख्यावाची और एक वचन जो कारकाभिधायक, उससे वीप्सा अर्थ में शस् प्रत्यय हो, विकल्प करके।

प्रतियोगे। कर्मप्रवचनीय 'प्रति' के योग में जो पञ्चमी विहित है, तदन्त से तसि प्रत्यय हो, विकल्प करके।

आद्यादिभ्यः। आद्यादि से तसि प्रत्यय हो, विकल्प करके।

---

१ शेषपूरणम्।  २ अस्माभिर्वर्द्धितोऽयं पाठः।

३ अयं ग्रन्थो लिखिते न दृश्यते।

**कृभ्वस्तियोगे सम्पद्यकर्त्तरि च्विः ।५।४।५०।** *अभूततद्भावे इति वक्तव्यम् । विकारात्मतां प्राप्नुवत्यां प्रकृतौ वर्त्तमानाद्विकारशब्दात्स्वार्थे च्विर्वा स्यात्करोत्यादिभिर्योगे। **अस्य च्वौ ।७।४।३२।** [[1]अवर्णस्य ईत्स्याच्च्वौ परतः]। अकृष्णः कृष्णः संपद्यते, तं करोति,—कृष्णी करोति । ब्रह्मी भवति । गङ्गी स्यात् । *अव्ययस्य च्वावीत्वं नेति वाच्यम् । दोषाभूतमहः । दिवाभूता रात्रिः ।

[[2]**क्यच्व्योश्च ।६।४।१५२।** हलः परस्याऽऽपत्यय [कार]स्य लोपः [ स्यात् ] क्ये, च्वौ च परतः । गार्गी भवति[2]] ।

**च्वौ च ।७।४।२६।** [ [1]च्वौ परतः पूर्वस्य ] दीर्घः [स्यात्] ।

---

सम्पद्यकर्त्तरीति । सम्पद्यश्चासौ कर्त्ता चेति विग्रहः । सम्पद्यतेः कर्त्तेत्यर्थः। कृष्णीति । तथा च—सम्पद्यकर्त्तरि वर्तमानात्प्रातिपदिकादभूततद्भावे गम्यमाने कृभ्वस्तिभिर्योगे च्विर्वास्यादित्यर्थः। कृष्णीति । च्वेर्लोपः । च्व्यन्तत्वात्स्वरादिनिपातेत्यव्ययत्वम् ।

---

कृभ्वस्तियोगे । विकाररूप की प्राप्ति होने वाली प्रकृति के अर्थ में वर्त्तमान जो विकारवाचक शब्द, उस से स्वार्थ में च्वि-प्रत्यय हो, विकल्प करके, कृ, भू, और अस् धातु के योग में ।

अभूततद्भाव इति वक्तव्यम् । अभूत के तद्भाव (अतद्रूप के तद्रूप होने) अर्थ में ही च्वि होता है ।

अस्य च्वौ । अवर्ण को ईत्व हो, च्वि परे रहते ।

अव्ययस्य च्वा । अव्यय को च्वि परे रहते ईत्व नहीं हो ।

क्य-च्व्योश्च । हल् से परे जो आपत्य यकार, उसका लोप हो, क्य और च्वि प्रत्यय परे रहते ।

च्वौ च । च्वि परे रहते पूर्व को दीर्घ हो ।

---

१ शेषपूरणम् । २ अयं ग्रन्थो लिखिते न दृश्यते ।

शुची भवति । पटू स्यात् ।

**अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च ।५।४।५१।** [ [1]एषामन्त्यस्य लोपः स्यात् ] चात् च्विः । अरू करोति । उन्मनी करोति । उच्चक्षू करोति । विरही करोति । विरजी करोति ।

**विभाषा साति कार्त्स्न्ये ।५।४।५२।** [2]च्विविषये सातिर्वा स्यात्साकल्ये [[1]गम्यमाने ] । 'सात्पदाद्योः' । दधि सिञ्चति । कृत्स्नं शस्त्रमग्निः संपद्यते—अग्निसाद्भवति । अग्नी भवति । [ [2]कार्त्स्न्ये किम् ? । एकदेशेन शुक्ली भवति पटः ।

**अभिविधौ सम्पदा च ।५।४।५३।** सम्पदा, कृभ्वस्तिभिश्च योगे [ [2]च्विविषये ] सातिर्वा [[1]स्याद् ] व्याप्तौ । पक्षे कृभ्वस्तियोगे च्विः । सम्पदा तु वाक्यमेव । अग्निसात् सम्पद्यते । अग्निसाद्भवति शस्त्रम् । अग्नी भवति । जलसात्सम्पद्यते । जली भवति लवणम् ।

**तदधीनवचने ।५।४।५४।** [ [1]तदधीनवचने ] सातिः [ स्यात् ], कृभ्वस्तिभिः, संपदा च योगे । राजसात्करोति । राजाधीनमित्यर्थः ।

---

अरुर्मनश्चक्षु । 'अरुष्' आदि के अन्त्य का लोप हो, और 'अरुष्' आदि से 'च्वि' प्रत्यय भी हो ।

विभाषा साति । च्वि के विषय में साति प्रत्यय हो, विकल्प करके । यदि साकल्य अर्थ गम्यमान हो तो ।

अभिविधौ । सम्पूर्वक पद् धातु, और कृ, भू, अस् धातु, इनके योग में च्वि के विषय में साति प्रत्यय हो, विकल्प करके, अभिविधि अर्थात् अभिव्याप्ति अर्थ गम्यमान हो तो ।

तदधीनवचने । 'उसके अधीन है' यह कहना हो तो, च्वि के विषय में साति प्रत्यय हो, कृ, भू, अस्, और सम्पद् के योग में ।

---

१ शेषपूरणम् । २ 'च्वेर्विषये' पा० ।

**देये त्रा च ।५।४।५५।** तदधीने देये त्रा स्यात्सातिश्च, कृञादियोगे। विप्राधीनं देयं करोति—विप्रत्रा करोति। विप्रत्रा सम्पद्यते। पक्षे—विप्रसात्करोति। देये किम्?। राजसाद्भवति राष्ट्रम्।

**देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम् ।५।४।५६।** एभ्यो द्वितीयान्तेभ्यः, सप्तम्यन्तेभ्यश्च त्रा स्या[ [1]द्बहुलम् ]। देवत्रा वन्दे, रमे वा। बहुलोक्तेरन्यत्रापि—बहुत्रा जीवतो [2]मनः ]।

**अव्यक्तानुकरणाद्‌ध्यजवरार्द्धादनितौ डाच् ।५।४।५७।** द्व्यच्-अवरं न्यूनं, न तु ततो न्यूनम्। अनेकाजिति यावत्। तादृशमर्द्धं यस्य [ [1]अव्यक्तानुकरणस्य ] तस्माड्डाच् [ स्यात् ] कृभ्वस्तिभिर्योगे।

*** डाचि बहुलं द्वे भवतः।** —इति डाचि विवक्षिते [ [1]एव पूर्वं ] द्वित्वम्। ततो डाच्।

---

तदधीनेति। तदधीनं = तदायत्तम्। तत्स्वामिकमिति यावत्। स्वामिविशेषवाचिनः प्रातिपदिकादीशितव्येऽभिधेये सातिः स्यात्कृभ्वादियोगे इत्यर्थः।

देवान् वन्दे इति—देवत्रा वन्दे। देवेषु रमे इति—देवत्रा रमे।

---

देये त्रा च। 'उसके अधीन देय = दातव्य वस्तु' ( करना, या होना ) इस अर्थ में—'त्रा' प्रत्यय हो, और साति भी हो, कृ, भू, अस्, और सम्पद् के योग में।

देवमनुष्य। द्वितीयान्त और सप्तम्यन्त देव आदि से 'त्रा' प्रत्यय हो, बहुलता करके।

अव्यक्तानु। अनेकाच् जो अव्यक्त ( ध्वनि ) का अनुकरण, उससे डाच् प्रत्यय हो, कृ, भू, अस् के योग में।

डाचि बहुलम्। डाच् प्रत्यय की विवक्षा में डाच् से पूर्व ही द्वित्व हो जाता है, तब डाच् प्रत्यय होता है।

---

१ शेषपूरणम्। २ लिखिते नास्त्ययं ग्रन्थः।

* नित्यमाम्रेडिते डाचीति वक्तव्यम् । डाच्परं यदाम्रेडितं, तस्मिन्परे पूर्वपरयोर्वर्णयोः पररूपं स्यात्। इति [1]तकार-पकारयोः पकारः । पटपटाकरोति । अव्यक्तानुकरणात्किम् ? । [2]दृषत्करोति । द्व्यजवरार्द्धात्किम् ? । श्रत्करोति । अवरेति किम् ? । खरटखरटाकरोति । अनितौ किम् ? । पटिति करोति ।

कृञो द्वितीयतृतीयशम्बबीजात्कृषौ ।५।४।५८। [[3]कृषावभिधेयायां] द्वितीयादिभ्यो डाच् [स्यात् ] । कृञो योग [4]एव । बहुलोक्तेरव्यक्तानुकरणादन्यस्य डाचि न द्वित्वम् । द्वितीयं, तृतीयं कर्षणं करोति-द्वितीया करोति । तृतीया करोति । शम्बशब्दः-प्रतिलोमे । अनुलोमं कृष्टं क्षेत्रं प्रतिलोमं कर्षति-शम्बा करोति। बीजेन सह कर्षति-बीजा करोति।

सङ्ख्यायाश्च गुणान्तायाः ।५।४।५९। [ [1]गुणान्तात् सङ्ख्यावाचिनः कृषावभिधेयायां कृञो योगे डाच् स्यात् ]। द्विगुणा करोति क्षेत्रम् ।

---

तपयोरिति । तकारपकारयोः स्थाने पररूपेण पकार इत्यर्थः। क्वचित्तु 'तकारपकारयोः पकारः' इत्येव पाठः ।

पटितीति । 'अव्यक्तानुकरणस्याऽत इतौ' इति टेः पररूपम् ।

---

नित्यमाम्रेडिते । डाच् परक जो आम्रेडित, वह परे रहते, पूर्व और पर वर्ण स्थान में नित्य पररूप हो ।

कृञो । कृञ् के योग में-द्वितीय, तृतीय, शम्ब, और बीज शब्द से-डाच् प्रत्यय हो, कृषि ( खेती ) अभिधेय हो तो ।

सङ्ख्यायाश्च । गुणान्त जो सङ्ख्यावाचक शब्द, उससे कृञ् के योग में डाच् प्रत्यय हो, कृषि अभिधेय हो तो ।

---

१ 'तपयोः पः । पा० । २ 'ईषत्करोति' पा० ।

३ शेषपूरणम् । ४ 'कृञ एव योगे' पा० ।

**समयाच्च यापनायाम्** ।५।४।६०। कृषाविति निवृत्तम्। [[1]समयशब्दाद्यापनायां गम्यमानायां कृञो योगे डाच् स्यात्]। समया करोति [2]कालम्। यापयतीत्यर्थः।

**सपत्त्रनिष्पत्त्रादतिव्यथने** ।५।४।६१। [[1]आभ्यामतिपीडने गम्ये डाच् स्यात्, कृञो योगे]। सपत्त्राकरोति मृगम्। सपुङ्खशरप्रवेशनेन सपत्त्रं करोतीत्यर्थः। निष्पत्त्राकरोति। सपुङ्खस्य शरस्याऽपरपार्श्वे निर्गमनान्निष्पत्त्रं करोतीत्यर्थः। अतिव्यथने किम्?। सपत्त्रं, निष्पत्त्रं वा करोति भूतलम्।

**निष्कुलान्निष्कोषणे**।५।४।६२। [[1]निष्कुलशब्दान्निष्कोषणेऽर्थे वर्त्तमानात्कृञो योगे डाच् स्यात्]। निष्कुलाकरोति दाडिमम्। निर्गतं

---

यापनायामिति। कर्त्तव्यस्य, देयस्य वाऽवसरप्राप्तिः—समयः। तस्यातिक्रमणं—यापना।

समया करोतीति। अद्य कार्यान्तरासक्तोऽस्मि, श्वः परश्वो वा भवतां कार्यमवश्यं मया करणीयम्, इदं वा मया देयम्' इत्यादिना बहुशः कथनेन कालं यापयतीत्यर्थः। ('टालमटोल करना' 'बहाना करना')। लक्ष्ये शराः पतन्त्यनेनेति पत्त्रं—शरपुङ्खबद्धो मयूरादिपिच्छः। अन्तर्गतस्य सारभागस्य बहिर्निष्कासनं—निष्कोषणम्। (गूदा निकालना)।

---

समयाच्च। अवसर वाची समय शब्द से, कृञ् के योग में डाच् प्रत्यय हो, यापना (बिताना) अर्थ गम्यमान हो तो।

सपत्त्रनिष्पत्त्रा। अतिपीडन अर्थ में जो सपत्र और निष्पत्र शब्द, उनसे कृञ् के योग में डाच् प्रत्यय हो।

निष्कुलान्निष्कोषणे। निष्कोषण (निकालना) अर्थ में विद्यमान निष्कुल शब्द से कृञ् के योग में डाच् प्रत्यय हो।

---

१ शेषपूरणम्।

२ 'समयाकरोति। कालं यापयतीत्यर्थः' इति केचिच्छेदमिच्छन्ति।

कुलम्—अन्तरवयवानां समूहो यस्मादिति बहुव्रीहेर्डाच्।

सुखप्रियादानुलोम्ये ।५।४।६३। [ [1]आभ्यामानुलोम्ये वर्त्तमानाभ्यां डाच् स्यात्कृञो योगे]। सुखा करोति, प्रिया करोति गुरुम्। अनुकूलाचरणेनाऽऽनन्दयतीत्यर्थः।

दुःखात्प्रातिलोम्ये ।५।४।६३। [ [1]दुःखात्प्रातिपदिकात्प्रातिकूल्ये गम्यमाने डाच् स्यात्, कृञो योगे ]। दुःखा करोति स्वामिनम्। पीडयतीत्यर्थः।

शूलात्पाके ।५।४।६५। [ [1]शूलशब्दात्पाकविषये कृञो योगे डाच् स्यात् ]। शूला करोति। शूलेन पचतीत्यर्थः।

सत्यादशपथे ।५।४।६६। [ सत्यशब्दादशपथे डाच् स्यात्कृञो योगे ]। सत्या करोति भाण्डं वणिक्। 'क्रेतव्य'मिति तथ्यं करोतीत्यर्थः। शपथे तु—सत्यं करोति विप्रः।

मद्रात्परिवापणे ।५।४।६७। [ मद्रशब्दान्मुण्डने वर्त्तमानात्कृञो

---

सत्या करोतीति। किञ्चिद् द्रव्यदानेन 'मयैवेदं ग्राह्य'मिति निश्चितं करोतीत्यर्थः ('साई देना' 'बयाना देना')।

---

सुखप्रिया। अनुकूलता अर्थ में वर्त्तमान सुख और प्रिय शब्द से कृञ् के योग में डाच् प्रत्यय हो।

दुःखात्प्राति। दुःख शब्द से कृञ् के योग में डाच् हो, प्रातिकूल्य अर्थ गम्यमान हो तो।

शूलात्पाके। शूल शब्द से पाक के विषय में डाच् हो, कृञ् योग में।

सत्यादशपथे। सत्य शब्द से कृञ् के योग में डाच् प्रत्यय हो, अशपथ (शपथभिन्न) अर्थ में।

मद्रात्परिवापणे। परिवापण (मुण्डन) अर्थ में वर्त्तमान मद्र शब्द से, कृञ् के योग में डाच् प्रत्यय हो।

---

१ शेषपूरणम्।

योगे डाच् स्यात् ]। मद्रशब्दो मङ्गलार्थः। परिवापणं–मुण्डनम्। मद्रा करोति कुमारम्। माङ्गल्यमुण्डनेन संस्करोतीत्यर्थः।

*भद्राच्चेति वक्तव्यम्। भद्रा करोति। अर्थः प्राग्वत्। परिवापणे किम्?। मद्रं करोति। भद्रं करोति।

इति तद्धितप्रक्रिया [ समाप्ता ]।

---

## अथ द्विरुक्तप्रक्रिया।

सर्वस्य द्वे ।८।१।१। इत्यधिकृत्य। परेर्वर्जने ।८।१।५। [²परेर्वर्जनेऽर्थे द्वे स्तः]। परि परि वङ्गेभ्यो वृष्टो देवः। उपर्यध्यधसः सामीप्ये ।८।१।७। [¹एषां द्वे स्तः, सामीप्ये विवक्षिते ]। उपर्युपरि ग्रामम्। ग्रामस्योपरिष्टात्समीपदेशे इत्यर्थः। अध्यधि सुखम्। सुखस्योपरिष्टा-

---

अधिकृत्येति। वक्ष्यमाणानां 'नित्यवीप्सयोः' इत्येवमादीनां विधेयकार्यिणोरनिर्देशेन साकाङ्क्षत्वात्स्वरितत्वाच्चाऽधिकारोयमिति भावः। एतदर्थरूपमधिकृत्येत्यर्थः।

वङ्गेभ्य इति। 'अपपरी वर्जने' इति कर्मप्रवचनीयसञ्ज्ञायां 'पञ्चम्यपाङ्परिभिः' इति पञ्चमी। वङ्गान् विहायेत्यर्थः।

---

भद्राच्च। परिवापण अर्थ में वर्त्तमान भद्र शब्द से डाच् प्रत्यय हो, कृञ् के योग में।

सर्वस्य द्वे। यह अधिकार है।

परेर्वर्जने। परि को द्वित्व हो, ( विकल्प करके ) वर्जन अर्थ में।

उपर्यध्यधसः। सामीप्य की विवक्षा में उपरि, अधि, और अधस् को द्वित्व हो।

---

१ शेषपूरणम्। २ वचिन्न।

त्समीपकाले दुःखमित्यर्थः । अधोऽधो लोकम् । लोकस्याऽधस्तात्समीपदेशे इत्यर्थः ।

**वाक्यादेरामन्त्रितस्याऽसूयासंमतिकोपकुत्सनभर्त्सनेषु ।८।१।८** [ [1]वाक्यादेरामन्त्रितस्य द्वित्वं स्यादसूयादौ ] । सुन्दर-सुन्दर ! वृथा ते सौन्दर्यम् । देव-देव ! वन्द्योऽसि । दुर्विनीत-दुर्विनीत ! इदानीं ज्ञास्यसि । धानुष्क-धानुष्क ! वृथा ते धनुः । चोर-चोर ! घातयिष्यामि त्वाम् ।

**एकं बहुव्रीहिवत् ।८।१।९।** द्विरुक्त एकशब्दो बहुव्रीहिवत्स्यात्[2] । तेन सुब्लोपपुंवद्भावौ । एकैकमक्षरम् । [ [3]इह द्वयोरपि सुपोर्लुकि सति, बहुव्रीहिवद्भावादेव प्रातिपदिकत्वात्समुदायात्सुप् । तच्च एकवचनमेव] । एकैकयाऽऽहुत्या ।

**आबाधे च ।८।१।१०।** पीडायां द्वे स्तो, बहुव्रीहिवच्च । गतगतः ! । गत-गता ! ।

**प्रकारे गुणवचनस्य ।८।१।१२।** सादृश्ये द्योत्ये गुणवचनस्य द्वे

---

वाक्यादेरिति । वाक्यादेरामन्त्रितस्य द्वित्वं स्यादसूयादावित्यर्थः । सुन्दरेति । असूयायामिदमुदाहरणम् । गुणेषु दोषाविष्करणम्-असूया । देवेति । इमानि क्रमशः संमत्यादावुदाहरणानि । तेनेति । यद्यप्येतौ सुब्लोपपुंवद्भावौ बहुव्रीहौ विशिष्य न विहितौ, तथापि तत्र दृष्टावित्यनयोरतिदेशः सिद्ध्यति । गतगत इति । विरहादिपीडया नायिकादेरियमुक्तिः । गतगतेति । विरहिणो नायकस्येयमुक्तिः । बहुव्रीहिवद्भावात्पुंवद्भावः ।

---

वाक्यादे । वाक्य के आदि के आमन्त्रित का द्वित्व हो, असूयादि गम्यमान हों तो ।

एकं बहुव्रीहि । द्विरुक्त एक शब्द बहुव्रीहिवत् हो ।

आबाधे च । पीडा में द्वित्व हो, और बहुव्रीहिवद्भाव भी हो ।

प्रकारे गुण । सादृश्य द्योत्य हो तो गुणवचन को द्वित्व हो । और वह कर्मधारयवत् भी हो ।

---

१ शेषपूरणमेतत् । २ 'स्या'दिति क्वाचित्कम् । ३ अयं पाठो लिखिते नास्ति ।

स्तः, तच्च कर्मधारयवत्। पटु-पट्वी। पटु-पटुः। पटुसदृशः, ईषत्पटुरिति यावत्।

* आनुपूर्व्ये द्वे वाच्ये। मूले-मूले स्थूलः।

* सम्भ्रमेण प्रवृत्तौ यथेष्टमनेकधा प्रयोगो न्यायसिद्धः। सर्प-सर्पः। बुद्ध्यस्व-बुद्ध्यस्व। सर्पः-सर्पः-सर्पः। बुद्ध्यस्व[1] [बुद्ध्यस्व-बुद्ध्यस्व]।

*कर्मव्यतिहारे सर्वनाम्नो द्वे [[2]वाच्ये], समासवच्च बहुलम्॥

बहुलग्रहणादन्यपरयोर्न समासवत्। इतरशब्दस्य तु नित्यम्।

असमासवद्भावे पूर्वपदस्थस्य सुपः सुर्वक्तव्यः। अन्योन्यं विप्रा नमन्ति। अन्योन्यौ। अन्योन्येन कृतम्। अन्योन्यस्मै दत्तमित्यादि।

स्त्री-नपुंसकयोरुत्तरपदस्थाया विभक्तेराम्भावो वाच्यः। अन्योन्याम्, अन्योन्यम्, परस्पराम्, परस्परम्, इतरेतराम्, इतरेतरं वा—इमे ब्राह्मण्यौ, कुले वा—भोजयतः।

---

आनुपूर्व्ये द्वे। आनुपूर्वी (क्रम) में गम्यमान हो तो द्वित्व हो।

सम्भ्रमेण प्रवृत्तौ। सम्भ्रम (हडबहाहट) से जहाँ प्रवृत्ति हो, वहाँ यथेष्ट अनेकधा प्रयोग न्याय सिद्ध है।

कर्मव्यतिहारे। कर्मव्यतिहार (क्रिया विनिमय) अर्थ में सर्वनाम को द्वित्व हो। और वह समासवत् हो, बहुलता करके।

असमासवद्भावे। अन्य और पर शब्द को असमासवद्भाव में, पूर्व पदस्थ सुप् को 'सु' आदेश हो।

स्त्रीनपुंसकयो। स्त्रीलिङ्ग और नपुंसकलिङ्ग में विद्यमान जो अन्य इतर पर आदि पद, उनको कर्मव्यतिहार में जहाँ द्वित्व हो, वहाँ उत्तर पदस्थ विभक्ति को आम् आदेश हो, बहुलता करके।

---

१ 'सर्पः ३ बुद्ध्यस्व' इति पा०। २ क्वचिन्न।

[ [1]'दलद्वये टाबभावः, क्लीबे चाऽद्ड्डिरहः स्वमोः ।
समासे सोरलुक् चेति, सिद्धं बाहुलकात्त्रयम्' ॥

'अन्योन्य'मित्यादौ दलद्वये टाप्प्राप्तः, 'अद्ड्डतरे'त्यद्ड् च प्राप्तः । 'अन्योन्यसंसक्तमहस्त्रियामम्', 'अन्योन्याश्रयः', 'परस्पराक्षिसादृश्यम्', 'अदृष्टपरस्परै'रित्यादौ सोर्लुक् च प्राप्तः । सर्वं बाहुलकात्समाधेयम् ] ।

## इति द्विरुक्तप्रक्रिया । * ।

—:०:—

## अथ स्त्रीप्रत्ययाः ।

**स्त्रियाम् ।४।१।३।** अधिकारोऽयम् । 'समर्थाना'मिति यावत् ।

**अजाद्यतष्टाप् ।४।१।४।** अजादीनामकारान्तस्य च वाच्यं यत्स्त्रीत्वं,

---

बाहुलकादिति । प्रकृतवार्त्तिकभाष्योदाहरणं, 'स्त्रिया'मितिसूत्रे 'अन्योन्यसंश्रयत्वं तत्' इति भाष्यञ्चाऽत्र प्रमाणमिति दीक्षिताः ।

अजादीति । अजशब्द आदिर्यस्येति बहुव्रीहिः । अच् आदिर्यस्येति तु नाऽर्थः । 'टाब्ऋचि' इत्यत्र 'ऋचि' इति निर्देशात् । अजादिगणपाठसामर्थ्याच्च । 'अ'दिति च न स्वरूपग्रहणं, 'सङ्ख्याया' इत्यादिनिर्देशात् ।

---

दलद्वये । पूर्व पद और उत्तर पद—इन दोनों दलों में टाप् का अभाव, नपुंसक में सु और अम् को अद्ड् आदेश का अभाव, और समास में सु का अलुक्—ये तीनों कार्य बाहुलकात् ( बहुल ग्रहण से ) सिद्ध होते हैं ।

*** इति द्विरुक्तप्रक्रिया भाषा समाप्त ***

स्त्रियाम् । स्त्रियाम्—यह अधिकार है, 'समर्थानां प्रथमाद्वा' इस सूत्र तक ।

अजाद्यत । अजादि का और अकारान्त का वाच्य जो स्त्रीत्व, वह द्योत्य हो तो—तद् द्योतक टाप् प्रत्यय हो ।

---

[1] अयं ग्रन्थो लिखिते प्रायो नास्ति ।

तत्र द्योत्ये टाप् स्यात् । [[1]अजादिभिः स्त्रीत्वस्य विशेषणान्नेह—पञ्चाजी । अत्र हि समासार्थसमाहारनिष्ठं स्त्रीत्वम ] । अतः—[[2]अकारान्तात् ]—
खट्वा । अजा । एडका । अश्वा । चटका । मूषिका । बाला । वत्सा । होडा । मन्दा । विलाता ।

(ग.) *संभस्त्राऽजिन-शण-पिण्डेभ्यः फलात् । संफला । भस्त्रफला । इत्यादि ।

(ग.) * सदच्काण्डप्रान्तशतैकेभ्यः पुष्पात् । सत्पुष्पा । प्राक्पुष्पा । प्रत्यक्पुष्पा ।

(ग.) *शूद्रा चाऽमहत्पूर्वा जातिः । पुंयोगे तु—शूद्री । असमहत्पूर्वा किम ? महाशूद्री । क्रुञ्चा । उष्णिहा । देवविशा ।

---

पञ्चानामजानां समाहारः—पञ्चाजी । 'तद्धितार्थे'ति समासः । 'अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः' इति स्त्रीत्वे 'द्विगो'रिति ङीप् ।

शूद्रेति । शूद्रशब्दष्टापमुत्पादयति, जातिश्चेद्वाच्या । महत्पूर्वः शूद्रशब्दष्टापं नोत्पादयति । 'जातिश्चेद्वाच्ये'तीहाऽपि सम्बध्यते । तेन महती शूद्रा—महाशूद्रेति टाब्भवत्येव । महाशूद्रीति । 'आभीरी तु महाशूद्री जातिपुंयोगयोः समा' इत्यमरः ।

---

संभस्त्रा । सम् आदि से परे जो फलशब्द, उससे स्त्रीत्व द्योत्य हो तो टाप् प्रत्यय हो ।

सदच् । सदादि से परे जो पुष्प शब्द, उससे टाप् हो , स्त्रीत्व द्योत्य हो तो ।

शूद्रा च ( जातिः ) । शूद्र शब्द टाप् को उत्पन्न करता है, जाति वाच्य हो तो ।

अमहत्पूर्वा-जातिः । और महत्पूर्व शूद्र शब्द टाप् को प्राप्त नहीं हो, यदि जातिवाच्य हो तो ।

---

१ लिखिते नास्ति । २ क्वाचित्कः पाठः ।

(ग.) * ज्येष्ठा-कनिष्ठा-मध्यमेति पुंयोगेऽपि ।

(ग.) *कोकिला जातावपि । (ग.) *मूलान्नञः । अमूला ।

उगितश्च ।४।१।६। [ [1]उगिदन्तात्प्रातिपदिकात्स्त्रियां ] ङीप् [ स्यात् ]। 'शप्श्यनोर्नित्यम्' । भवन्ती । पचन्ती ।

वनो र च ।४।१।७। वन्नन्तात्तदन्ताच्च [ [2]प्रातिपदिकात्स्त्रियां ] ङीप् स्यात्, रश्चाऽन्तादेशः । सुत्वानमतिक्रान्ता–अतिसुत्वरी । अतिधीवरी । शर्वरी ।

*वनो न हशः [ [2]इति वक्तव्यम् । 'विड्वनोरनुनासिकस्यात्' ] ।

---

उगितश्चेति । उगिदन्तात्प्रातिपदिकात्स्त्रियां ङीप् स्यात् । अतिसुत्वरीति । 'सुयजोर्ङ्वनिप्' । 'अत्यादयः' इति समासः । धीवरीति । दधातेः—'अन्येभ्योऽपि दृश्यते' इति क्वनिप् । 'घुमास्थे'तीत्वम् । शर्वरीति । शॄधातोः—'अन्येभ्योऽपि दृश्यते' इति वनिप् । गुणः । रपरत्वम् ।

---

ज्येष्ठा० । ज्येष्ठ, कनिष्ठ और मध्यम ये पुंयोग में भी टाप् प्रत्यय को ही उत्पन्न करते हैं ।

कोकिला जातावपि । कोकिल शब्द जाति ( और पुंयोग ) में भी टाप् को ही उत्पन्न करता है ।

मूलान्नञः । नञ् से परे जो मूलशब्द, उससे टाप् हो, स्त्रीत्व द्योत्य हो तो ।

उगितश्च । उगिदन्त जो प्रातिपदिक, उससे स्त्रीत्व द्योत्य हो तो ङीप् हो ।

वनोर च । वन्नन्त और वन्नन्तान्त जो प्रातिपदिक, उससे स्त्रीत्व द्योत्य हो तो, ङीप् हो, और 'र' अन्तादेश हो ।

वनो न हशः । हशन्त धातु से विहित जो वन्, तदन्त से, और तदन्तान्त से ङीप् और रादेश नहीं हों ।

---

1 शेषपूरणम् । 2 क्वचिदेव दृश्यते ।

अवावा ब्राह्मणी। राजयुध्वा।

* बहुव्रीहौ वा। बहुधीवरी। बहुधीवा। [[1]पक्षे डाब्वक्ष्यते]।

पादोऽन्यतरस्याम् ।४।१।८। [[2]पादशब्दः कृतसमासान्तः, तदन्तात्प्रातिपदिकान्ङीब्वा स्यात्]। 'पादः पत्'। द्विपदी। द्विपात्।

टाबृचि ।४।१।६। [[2]ऋचि वाच्यायां पादन्ताट्टाप्स्यात्]। द्विपदा ऋक्। एकपदा।

मनः ।४।१।११। मन्नन्तान्न ङीप्। सीमा। सीमानौ।

अनो बहुव्रीहेः ।४।१।१२। अन्नन्ताद्बहुव्रीहेर्न ङीप्। बहुयज्वा। बहुयज्वानौ।

डाबुभाभ्यामन्यतरस्याम् ।४।१।१३। [[2]सूत्रद्वयोपात्ताभ्यां डाब्

---

ओणते इति–अवावा। वनिप्। 'विड्वनो'रित्यात्त्वम्।
राजानं योधवती–राजयुध्वा। 'राजनि युधि कृञः' इति ङ्वनिप्।

---

बहुव्रीहौ वा। बहुव्रीहि समास में 'वनो र च' इस सूत्र से विहित ङीप् और रादेश विकल्प से हों।

पादोऽन्यतरस्याम्। कृतसमासान्त जो पाद् शब्द, तदन्त प्रातिपदिक से ङीप् हो, विकल्प करके, स्त्रीत्व द्योत्य हो तो।

टाबृचि। ऋक् वाच्य हो तो पादन्त प्रातिपदिक से टाप् हो, स्त्रीत्व द्योत्य हो तो।

मनः। मन्नन्त से ङीप् नहीं हो, स्त्रीत्व द्योत्य हो तो।

अनो बहुव्रीहेः। अन्नन्त बहुव्रीहि से ङीप् नहीं हो, स्त्रीत्व द्योत्य हो तो।

डाबुभाभ्यां। 'मनः' और 'अनो बहुव्रीहेः' इन दोनों सूत्रों में उपात्त [जो मन्नन्त प्रातिपदिक और अन्नन्त बहुव्रीहि उन] से डाप् हो, विकल्प करके, स्त्रीत्व द्योत्य हो तो।

---

१ क्वचिन्न दृश्यते। २ शेषपूरणम्।

वा स्यात् ]। सीमा । सीमे-सीमानौ । दामा । दामे-दामानौ । [ [1]बहुयज्वा । बहुयज्वे-बहुयज्वानौ ]।

**अन उपधालोपिनोऽन्यतरस्याम्** ।४।१।२८। अन्नन्ताद्बहुव्रीहे-रुपधालोपिनो वा ङीप् [ स्यात् ]। पक्षे डाब्-निषेधौ । बहुराज्ञी । बहुराज्ञ्यौ । [ [2]बहुराजा ]। बहुराजे—बहुराजानौ ।

**प्रत्ययस्थात्कात्पूर्वस्याऽत इदाप्यसुपः** ।७।३।४३। प्रत्ययस्थात्ककारात्पूर्वस्याऽकारस्येकारः स्यादापि परे, स आप्सुपः परो न चेत् । सर्विका । कारिका। अतः किम्?। नौका। प्रत्ययस्थात्किम् ?। शक्नोतीति शका। असुपः किम् ?। बहुपरिव्राजका नगरी ।

*** मामकनरकयोरुपसंख्यानम्** । मामिका। नरिका ।

*** त्यक्त्यपोश्च** । [ 'दक्षिणापश्चात्पुरसस्त्यक्'] दाक्षिणात्यिका ।

---

मामकेति। इदं ककारस्य प्रत्ययस्थत्वाऽभावादप्राप्ते वचनम्। मामिकेति। 'केवलमामक' इत्यादिना सञ्ज्ञाछन्दसोरेवेति नियमान्न ङीप्। ममेयं—मामिका।

रात्रौ नरान् कायतीति नरिका = डाकिनी । दाक्षिणात्यिकेति । दक्षिणस्यामदूरे दक्षिणा । 'दक्षिणादाच्' । दक्षिणा भवेति विग्रहे—'दक्षिणापश्चात्पुर-

---

अन उपधा। उपधालोपी जो अन्नन्त बहुव्रीहि, उससे ङीप् विकल्प करके हों, पक्ष में—डाप् और ङीप्-निषेध भी होंएगें।

प्रत्ययस्थात्। प्रत्ययस्थ ककार से पूर्व जो अकार, उसको इकार हो, आप् परे रहते , यदि वह आप् सुप् से परे नहीं हो तो ।

मामकनरकयो। मामक ओर नरक के ककार से पूर्व अकार को भी इत्व हो ।

त्यक्त्यपोश्च। ककार से पूर्ववर्ती जो त्यक् और त्यप् का अकार, उसको इकार आदेश हो, आप् परे रहते ।

---

१ क्वचिन्न दृश्यते । २ क्वचिदेव पठ्यते ।

इहत्यिका।

**न यासयोः ।७।३।४५।** यत्तदोरस्येन्न स्यात्। यका। सका। यकाम्। तकाम्।

***त्यकनश्च निषेधः।** उपत्यका। अधित्यका। ***आशिषि वुनश्च न।** जीवका। भवका। ***उत्तरपदलोपे न।** देवदत्तिका। देवका।

*** क्षिपकादीनां च।** क्षिपका। ध्रुवका। चटका। कन्यका।

*** तारका ज्योतिषि।** [¹अन्यत्र—तारिका]।

*** वर्णका तान्तवे।** [¹अन्यत्र-वर्णिका]।

*** वर्त्तका शकुनौ प्राचाम्।** [¹उदीचान्तु-वर्त्तिका]।

---

सस्त्यक'। 'किति च' इत्यादिवृद्धिः। टाप्। ततोऽज्ञातार्थे कः। 'केऽणः' इति ह्रस्वः। टाप्। इहत्यिकेति। 'अव्ययात्त्यप्'। यकेति। यत्तदोरव्ययसर्वनाम्नामित्यकच्। त्यदाद्यत्वम्। टाप्।

उपत्यकेति। 'उपाधिभ्यां त्यकन्नासन्नारूढयोः' इति त्यकन्।

जीवतात्—जीवका। भवतात्—भवका। 'आशिषि च' इति वुन्।

---

न यासयोः। यत् और तत् के अकार को इकार नहीं हो।

त्यकनश्च। त्यकन् के अकार को इकार नहीं हो।

आशिषि वुनश्च। आशीरर्थक वुन् के अकार को इकार नहीं हो।

उत्तरपदलोपे न। उत्तरपद का जहाँ लोप हुआ हो, वहाँ टाप् परे रहते जो ककार से पूर्व अकार, उसको इकार नहीं हो।

क्षिपकादीनां च। क्षिपकादि को इत्व नहीं हो।

तारका ज्योतिषि। ज्योति (नक्षत्र) अर्थ मेंही तारका-यह रूप होता है। अर्थात्-इसको इत्व नहीं होता है।

वर्णका तान्तवे। तन्तु के विकार में ही 'वर्णका' यहाँ इत्व नहीं होता है।

वर्त्तका। पक्षी अर्थ में 'वर्त्तका' यह रूप होता है, प्राचीनों के मत में।

---

१ क्वाचित्कः पाठः।

* अष्टका पितृदेवत्ये । [[1]अन्यत्र—अष्टिका ] ।

* सूतकापुत्रिकावृन्दारकाणां वेति वक्तव्यम् । एषां वा-अकारो भवतीत्यर्थः । सूतका । सूतिकेत्यादि ।

उदीचामातः स्थाने यकपूर्वायाः ।७।३।४६। यकपूर्वस्य स्त्रीप्रत्ययाऽऽकारस्य[2] स्थाने योऽकारस्तस्य कात्पूर्वस्येद्वा स्यादापि परे। 'केऽणः' इति ह्रस्वः । आर्यका । आर्यिका । चटकका । चटकिका । आतः किम् ? । साङ्काश्ये भवा साङ्काश्यिका। यकेति किम् ? । अश्विका । स्त्रीप्रत्ययेति [3]किम् ? । शुभंयिका ।

अभाषितपुंस्काच्च ।७।३।४८। एतस्माद्विहितस्याऽऽतः स्थानेऽत इद्वा । गङ्गका । गङ्गिका । आदाचार्याणाम् ।७।३।४९। पूर्वसूत्रविषये [ आद्वा स्यात् ] । गङ्गाका ।

साङ्काश्यः—पाञ्चालदेशस्थो नगरविशेषः । ( 'कासगंज'—जिला एटा ) ।

अष्टका । पितृदेवत्य कर्म वाच्य हो तो 'अष्टका' यह रूप होता है । अर्थात् इसको इत्व नहीं होता है ।

सूतका पुत्रिका । इनको ककार से पूर्व अकार आदेश विकल्प से हो ।

उदीचामातः । यकार और ककार हैं पूर्व में जिसके, ऐसा जो स्त्रीप्रत्यय का आकार, उसके स्थान में हुआ जो अकार, उसको कात्पूर्व को इत्व विकल्प करके हो, आप् परे रहते ।

अभाषितपुंस्काच्च । अभाषितपुंस्क से विहित जो स्त्रीप्रत्यय का आकार, तत्स्थानिक जो ककार से पूर्ववर्त्ती अकार, उसको इत्व विकल्प से हो, आप् परे रहते ।

आदाचार्याणाम् । पूर्व सूत्र के विषय में—अर्थात्—अभाषितपुंस्क से विहित आत् स्थानिक अकार को आकार आदेश हो, विकल्प करके ।

१ क्वाचित्कः पाठः । २ 'स्त्रीप्रत्ययस्याऽऽतः स्थाने योऽत्' पा० ।
३ 'स्त्रीप्रत्ययस्य किं' पा० ।

**अनुपसर्जनात्** ।४।१।४४। अधिकारोऽयं 'यूनस्ति'रित्यभिव्याप्य ।

**टिड्ढाऽणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः** ।४।१।१५।

अनुपसर्जनं यट्टिदादि, तदन्तं यददन्तं [ प्रातिपदिकं ], ततः [ स्त्रियां ] ङीप् [ स्यात् ]। कुरुचरी। उपसर्जनत्वान्नेह—बहुकुरुचरा। नदट्—नदी। देवट्—देवी। सौपर्णेयी। ऐन्द्री। औत्सी। ऊरुद्वयसी। ऊरुदघ्नी। ऊरुमात्री। पञ्चतयी। आक्षिकी। लावणिकी। यादृशी। इत्वरी।

* **नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसङ्ख्यानम्** । स्त्रैणी। पौंस्नी। शाक्तीकी। आढ्यङ्करणी। तरुणी। तलुनी।

---

अभिव्याप्येति। अतएव बहुयुवा शालेत्यत्र यूनस्तिरिति तिप्रत्ययो न भवति। तदन्तमिति। टिदादीनां प्रत्ययतया प्रत्ययग्रहणपरिभाषया तदन्तग्रहणम्। तच्च प्रातिपदिकस्य विशेषणम्। एवम्—'अजाद्यतः' इत्यतोऽत इत्यनुवर्त्तमानं प्रातिपदिकविशेषणं, ततस्तदन्तविधिः। तदेवं—'टिदाद्यन्तं यददन्तं प्रातिपदिक'-मित्यर्थः। तत्र 'अनुपसर्जन'मिति टिदादिविशेषणम्। कुरुषु चरति—कुरुचरः। 'चरेष्टः। टित्वान्ङीप्।

नदीति। पचादिषु नदडित्यादिनिपातनाट्टित्त्वान्ङीप्। सुपर्ण्या अपत्यं स्त्री सौपर्णेयी। 'सुपर्णी'शब्दात् 'स्त्रीभ्यो ढक्'गिति ढक्। इन्द्रो देवता अस्याः—ऐन्द्री ऋक्। 'साऽस्य देवता' इत्यण्।

---

अनुपसर्जनात्। 'यूनस्तिः' इस सूत्र तक यह अधिकार है।

टिड्ढाऽणञ्। अनुपसर्जन जो टिदादि ( टित्, ढ, अण्, अञ् आदि ), तदन्त जो अदन्त प्रातिपदिक, उससे ङीप् हो स्त्रीत्व द्योत्य हो तो।

नञ्स्नञीकक्। अनुपसर्जन जो नञादि, तदन्त जो अदन्त प्रातिपदिक, ङीप् हो उससे स्त्रीत्व द्योत्य हो तो।

यञश्च ।४।१।१६। यञन्ता [[1]त्प्रातिपदिका] त्स्त्रियां ङीप् स्यात् । अकारलोपे कृते—हलस्तद्धितस्य ।६।४।१५०। हल उत्तरस्योपधाभूतस्य तद्धितय[ कार ]स्य लोपः [ स्याद् ], ईति परे। गार्गी।

प्राचां ष्फ तद्धितः ।४।१।१७। यञन्तात्ष्फो वा स्यात्, स्त्रियां, स च तद्धितः। [1]षः प्रत्ययस्य ।१।३।६। प्रत्ययाऽऽदिः ष इत्स्यात्। 'आयनेयीनीयी'त्यायनादेशः। षित्त्वसामर्थ्यात्षिद्गौरेति ङीष् ]। गार्ग्यायणी।

वयसि प्रथमे ।४।१।२०। प्रथमवयोवाचिनोऽदन्तात्स्त्रियां ङीप् [[1]स्यात्]। कुमारी। ❋वयस्यचरमे इति वाच्यम् ।वधूटी।चिरण्टी।

द्विगोः ।४।१।२१। अदन्ताद्द्विगोर्ङीप् [[1]स्यात] । त्रिलोकी। अजादित्वात्—त्रिफला। त्र्यनीका सेना।

---

यञश्च। यञन्त प्रातिपदिक से स्त्रीलिङ्ग में ङीप् हो।

हलस्तद्धितस्य। हल् से परे जो उपधाभूत तद्धित यकार, उसका लोप हो, ईकार परे रहते।

प्राचां ष्फ। यञन्त प्रातिपदिक से ष्फ प्रत्यय हो, विकल्प करके, स्त्रीत्व द्योत्य हो तो। और वह ष्फ तद्धित सञ्ज्ञक हो।

षः प्रत्ययस्य। प्रत्यय का आदि जो षकार, उसकी इत्सञ्ज्ञा हो।

वयसि प्रथमे। प्रथम वयोवाची जो अदन्त प्रातिपदिक, उससे स्त्रीत्व द्योत्य हो तो ङीप् हो।

वयस्यचरमे। चरमवयोभिन्न वयोवाची से ङीप् हो—ऐसा कहना चाहिये।

द्विगोः। अदन्त द्विगु से स्त्रीलिङ्ग में ङीप् हो।

---

1 क्वचिन्न।

**अपरिमाणबिस्ताऽऽचितकम्बल्येभ्यो न तद्धितलुकि ।४।१।२२।** अपरिमाणान्ताद्बिस्ताद्यन्ताच्च द्विगोर्न ङीप्, तद्धितलुकि। पञ्चभिरश्वैः क्रीता–पञ्चाश्वा। आर्हीयष्ठक्। 'अध्यर्द्धे'ति लुक्। द्वौ बिस्तौ पचति–द्विबिस्ता। द्व्याचिता। द्विकम्बल्या। परिमाणात्तु—द्व्याढकी। तद्धितलुकि किम्?। समाहारे—पञ्चाश्वी।

**काण्डान्तात्क्षेत्रे ।४।१।२३।** क्षेत्रे यः काण्डान्तो द्विगुस्ततो न ङीप्, तद्धितलुकि। द्वे काण्डे प्रमाणमस्या—द्विकाण्डा क्षेत्रभक्तिः। मात्रचः 'प्रमाणे लो द्विगोर्नित्य'मिति लुक्। क्षेत्रे किम्?। द्विकाण्डी रज्जुः।

**पुरुषात्प्रमाणेऽन्यतरस्याम् ।४।१।२४।** प्रमाणे यः पुरुषस्तदन्ताद्द्विगोर्ङीब्वा स्यात्तद्धितलुकि। द्वौ पुरुषौ प्रमाणमस्या–द्विपुरुषी, द्विपुरुषा वा परिखा।

**ऊधसोऽनङ् ।५।४।१३१।** ऊधोऽन्तस्य बहुव्रीहेरनङ् [१] आदेशः

---

काण्डेति। षोडशहस्तमितो दण्डः–काण्डम्।

पुरुषादिति। अपरिमाणान्तत्वान्निषेधे प्राप्ते वचनम्। पुरुषशब्दो जातिवचनोऽपि अत्र प्रमाणशब्दसामानाधिकरण्यात्प्रमाणेऽपि वर्तते। (पुरसा)।

---

अपरिमाण। अपरिमाणान्त और बिस्ताद्यन्त जो द्विगु, उससे ङीप् नहीं हो, तद्धित का लुक् हुआ हो तो।

काण्डान्तात्। क्षेत्र में जो काण्डान्त द्विगु, उससे स्त्रीलिङ्ग में ङीप् नहीं हो, तद्धित लुक् के विषय में।

पुरुषात्प्रमाणे। प्रमाण में जो पुरुष शब्द, तदन्त द्विगु से ङीप् विकल्प करके हो, तद्धित लुक् के विषय में।

ऊधसोऽनङ्। ऊधोऽन्त जो बहुव्रीहि, उसको अनङ् आदेश हो, स्त्रीलिङ्ग में।

---

१ शेषपूरणम्।

स्यात् ] स्त्रियाम्। बहुव्रीहेरूधसो ङीष् ।४।१।२५। ऊधोन्ताद्बहुव्रीहेर्ङीष् [[1]स्यात्स्त्रियाम् ]। कुण्डोध्नी। स्त्रियां किम् ? । कुण्डोधो धैनुकम्।

दाम-हायनान्ताच्च ।४।१।२७। सङ्ख्यादेर्बहुव्रीहेर्दामान्ताद्धायनान्ताच्च ङीप् [ स्यात् ]। द्विदाम्नी। द्विहायनी–बाला।

* त्रिचतुर्भ्यां हायनस्य णत्वं वाच्यम्। * वयोवाचकस्यैव हायनस्य ङीप्, णत्वं चेष्यते। त्रिहायणी। चतुर्हायणी। वयसोऽन्यत्र—त्रिहायना, चतुर्हायना शाला।

अन्तर्वत्पतिवतोर्नुक् ।४।१।३२। [[2]एतयोः स्त्रियां नुक् स्यात् ]। नान्तत्वान्ङीप्। अन्तर्वत्नी। पतिवत्नी। * गर्भभर्तृसंयोग एवेष्यते। अन्यत्र तु–अन्तरस्त्यस्यां शालायां घटः। पतिवती पृथिवी।

पत्युर्नो यज्ञसंयोगे ।४।१।३३। [[1]पतिशब्दस्य नकारादेशः

---

अन्तर्वती, पतिवतीति। इदं प्राचोक्तं प्रत्युदाहरणमयुक्तम्, आद्येऽस्तिसामानाधिकरण्याऽभावान्मतुपोऽसम्भवात्। द्वितीये वत्वाऽसम्भवादिति तु परे।

---

बहुव्रीहेरूधसो। ऊधोन्त बहुव्रीहि से ङीष् हो, स्त्रीलिङ्ग में।

दामहायनान्ताच्च। सङ्ख्यादि जो दामान्त और हायनान्त बहुव्रीहि, उससे ङीप् हो।

त्रिचतुर्भ्यां। त्रि और चतुर् से परे जो हायन शब्द, उसके नकार को णत्व हो।

वयोवाचकस्यैव। वयोवाची हायन से ही ङीप् और णत्व इष्ट हैं।

अन्तर्वत्। गर्भभर्तृ। अन्तर्वत् और पतिवत् को स्त्रीत्व द्योत्य हो तो नुक् आगम हो। क्रमशः—गर्भ और भर्त्ता के संयोग में ही।

पत्युर्नो। पतिशब्द को नकार आदेश हो, स्त्रीलिङ्ग में। यज्ञ के साथ सम्बन्ध हो तो।

---

१ शेषपूरणम्। २ क्वाचित्कः पाठः।

स्याद्यज्ञेन सम्बन्धे ]। वसिष्ठस्य पत्नी।

विभाषा सपूर्वस्य ।४।१।३४। पतिशब्दान्तस्य [ [2]सपूर्वस्य प्रातिपदिकस्य नो वा स्यात् ]। गृहपतिः। गृहपत्नी। दृढपत्नी। [1]दृढपतिः।

नित्यं सपत्न्यादिषु ।४।१।३५। [ सपत्न्यादिषु नित्यं पत्युर्नकारादेशः स्यात् ]। सपत्नी। एकपत्नी। वीरपत्नी।

पूतक्रतोरै च ।४।१।३६। [पूतक्रतुशब्दस्य स्त्रियामैकारोऽन्तादेशः स्यान्ङीप् च ]। पूतक्रतोः स्त्री—पूतक्रतायी।

वृषाकप्यग्निकुसितकुसिदानामुदात्तः ।४।१।३७। एषामुदात्त ऐ आदेशो, ङीप् च। वृषाकपेः स्त्री-वृषाकपायी। अग्नायी। कुसितायी। कुसिदायी।

---

दृढेति। अनुपसर्जनस्येतीहोत्तरार्थमनुवृत्तमपि न पत्युर्विशेषणं, किन्तु तदन्तस्य। तेन बहुव्रीहावपि भवति—दृढपत्नी—दृढपति रिति भावः।

नित्यमिति। आरम्भसामर्थ्यादेव नित्यत्वे सिद्धे नित्यग्रहणं स्पष्टार्थम्।

वृषाकपेरिति। 'शिवविष्णू वृषाकपी'। 'वृषाकपायी श्रीगौर्योः' इति च कोशः।

---

विभाषा सपूर्वस्य। पति शब्दान्त जो सपूर्व ( विद्यमानपूर्वपद ) प्रातिपदिक, उसको नकार अन्तादेश हो, विकल्प करके स्त्री लिङ्ग में।

नित्यं सपत्न्यादिषु। सपत्नी आदि में पति शब्द को नित्य नकार अन्तादेश हो, स्त्रीत्व द्योत्य हो तो।

पूतक्रतोरै च। पूतक्रतु शब्द को स्त्रीलिङ्ग में ऐकार अन्तादेश हो, और उसके संनियोग से ङीप् प्रत्यय भी हो।

वृषाकप्यग्नि। वृषाकपि आदि को उदात्त ऐकार अन्तादेश हो, और ङीप् भी हो।

---

१ शेषपूरणम्। २ क्वचिन्न।

मनोरौ वा ।४।१।३८। [ [1]मनुशब्दस्यौकारादेशः स्यात्, उदात्तैकारश्च वा, [[2]ताभ्यां संनियोगशिष्टो ङीप् च ]। मनावी । मनुः ।

वर्णादनुदात्तात्तोपधात्तो नः ।४।१।३९। वर्णवाची [3]योऽनुदात्तान्तस्तोपधस्तदन्ताद्वा ङीप्, तस्य नः। एता। एनी । रोहिता। रोहिणी। षिद्गौरादिभ्यश्च ।४।१।४१। [[1]षिद्भ्यो,गौरादिभ्यश्च स्त्रियां] ङीष् [ स्यात् ]। नर्त्तकी । गौरी ।

[(ग.) *[4]आमनडुहः स्त्रियां वा वाच्यः ]। अनडुही । अनड्वाही । (ग.)* पिप्पल्यादयश्च । आकृतिगणोऽयम् । [4]सूर्यतिष्याऽगस्त्यमत्स्यानां य उपधायाः ।६।४।१४९। [ अङ्गस्योपधाया यस्य

---

एतेति। एतशब्दो, रोहितशब्दश्च—'वर्णानां तणतिनितान्तानाम्' इत्याद्युदात्तौ। एवञ्च 'अनुदात्तं पदम्' इत्यनेन शेषनिघातेनाऽनयोरनुदात्तान्तता बोध्या। एनी = चित्रवर्णा। नर्त्तकीति। नृत्यतेः 'शिल्पिनि ष्वुन्' इति ष्वुन्।

---

मनोरौ वा। मनुशब्द को औकार अन्तादेश हो, और उदात्त ऐकार अन्तादेश भी हो–विकल्प करके। और उनका संनियोग शिष्ट (साथ) ङीप् भी हो।

वर्णादनुदात्ता। वर्णवाची जो अनुदात्तान्त तोपध, तदन्त जो प्रातिपदिक, उससे विकल्प करके ङीप् हो, और ङीप् के संनियोग से–तकार को नकार आदेश भी हो, स्त्रीलिङ्ग में।

षिद्गौरादि। षित् और गौरादि से स्त्रीत्व द्योत्य हो तो ङीष् प्रत्यय हो।

आमनडुहः। अनडुह् शब्द से ङीष् हो, और अनडुह् शब्द को आम् आगम भी विकल्प करके हो, स्त्रीत्व द्योत्य हो तो।

पिप्पल्यादयश्च। पिप्पल्यादि से ङीष् हो, स्त्रीत्व द्योत्य हो तो।

सूर्यतिष्या। अङ्ग सम्बन्धी जो उपधा, तदवयव यकार का लोप हो, वह यकार यदि सूर्यादिका अवयव हो तो।

---

१ शेषपूरणम्। २ क्वचिन्न। ३ 'वर्णवाची यस्तोपधः' पा०। ४ क्वाचित्कः पाठः।

लोपः स्यात्स चेद्यः सूर्याद्यवयवः]।

* मत्स्यस्य ङ्याम् । यलोपः । मत्सी ।

जानपद-कुण्ड- गोण-स्थल - भाज-नाग-काल- नील-कुश-कामुक-कबराद्वृत्त्य-मत्रा-ऽऽवपना - ऽकृत्रिमा-श्राणा - स्थौल्य-वर्णा-ऽनाच्छादना-ऽयोविकार-मैथुनेच्छा-केशवेशेषु ।४।१।४२। [ [1]एभ्य ] एकादशभ्यः क्रमाद् वृत्त्यादिष्वर्थेषु ङीष् [ स्यात् ] । जानपदी—वृत्तिश्चेत् । अन्या—जानपदी । अब्नन्तत्वान्ङीपि आद्युदात्तः ।

[ [1]कुण्डी—अमत्रं चेत् । कुण्डाऽन्या । गोणी—आवपनं चेत् । गोणाऽन्या । स्थली-अकृत्रिमा चेत् । स्थलाऽन्या । भाजी—श्राणा चेत । भाजाऽन्या । 'यवागूरुष्णिका श्राणा विलेपी तरला च सा' इत्यमरः । नागी—स्थूला चेत् । नागाऽन्या । काली-वर्णश्चेत् । कालाऽन्या । नीली-अनाच्छादनं चेत् । नीलाऽन्या । नील्या रक्ता शाटीत्यर्थः । कुशी—अयोविकारश्चेत् । कुशाऽन्या । कामुकी—मैथुनेच्छावती चेत । कामुकाऽन्या । कबरी—केशानां सन्निवेशविशेषश्चेत् । कबराऽन्या[1] ] ।

शोणात्प्राचाम् ।४।१।४३। [[2]शोणशब्दात्स्त्रियां ङीष् स्यात्, प्राचां

---

वर्त्ततेऽनया वृत्तिः—जीविका ।

अमत्रं—भाजनम् । ( बर्त्तन—कुण्डी ) । गोणी—शणनिर्मितं धान्यावपनम् । ( 'गोन' 'बोरी' ) । कुशी—('कुश' 'रम्भा' इति) प्रसिद्धा ।

---

मत्स्यस्य । मत्स्य की उपधा के यकार का लोप हो, ङी परे रहते ।

जानपद । 'जानपद' आदि ११ प्रातिपदिकों से क्रम से वृत्त्यादि ११ अर्थों में ङीष् हो, स्त्रीत्व द्योत्य हो तो ।

शोणात् प्राचां । शोण शब्द से स्त्रीलिङ्ग में ङीष् हो, प्राचीनों के मत में । अर्थात् विकल्प से ङीष् हो ।

---

१ प्रायो लिखितेऽयं ग्रन्थः नास्ति । २ शेषपूरणम् ।

सतेन ]। शोणी । शोणा। **वोतो गुणवचनात् ।४।१।४४।** उदन्ताद् गुणवाचिनो वा ङीष् [ स्यात् ] । मृद्वी। मृदुः । उतः किम् ?। शुचिः । गुणेति किम् ? । आखुः ।

***खरु-संयोगोपधान्न** । खरुः । पाण्डुः ।

**बह्वादिभ्यश्च ।४।१।४५।** [ 'बह्वादिभ्यो ] वा ङीष् [ स्यात् ]। बह्वी । बहुः । *** कृदिकारादक्तिनः** । रात्री । रात्रिः ।

*** सर्वतोऽक्तिन्नर्थादित्येके** । शकटी । शकटिः ।

**पुंयोगादाख्यायाम् ।४।१।४८।** या पुमाख्या पुंयोगात्स्त्रियां वर्त्तते, ततो ङीष् [ स्याद् ]। गोपस्य स्त्री–गोपी । ***पालकान्तान्न** ।

'खरुः–पतिंवरा कन्या' इत्यजयः । 'पतिंवरा तु–( या कन्या ) खरुर्वर्या स्वयंवरा' इति कल्पद्रुकोशश्च । सर्वत इति । कृतः, अकृतोऽपि च इकारात् क्तिन्नर्थभिन्नार्थकान्ङीषित्यर्थः ।

**वोतो गुण** । उदन्त गुणवाची प्रातिपदिक से स्त्रीलिङ्ग में विकल्प करके ङीष् हो ।

**खरुसंयोगोपधान्न** । खरु शब्द से और संयोगोपध उदन्त गुणवाची प्रातिपदिक से ङीष् नहीं हो ।

**बह्वादिभ्यश्च** । बह्वादि से स्त्रीलिङ्ग में ङीष् हो, विकल्प करके ।

**कृदिकारा** । क्तिन्नर्थक से भिन्न जो कृत्संज्ञक इकार, तदन्त प्रातिपदिक से ङीष् हो, विकल्प करके, स्त्रीत्व द्योत्य हो तो ।

**सर्वतोऽक्तिन्नर्था** । क्तिन्नर्थ से भिन्न जो कृत् का या अकृत् का इकार, तदन्त प्रातिपदिक से ङीष् हो, विकल्प करके ।

**पुंयोगा** । जो पुंवाचक [ –त्वेन प्रसिद्ध ] शब्द, पुंयोग से स्त्री में प्रवृत्त हो, उससे ङीष् प्रत्यय हो ।

**पालकान्तान्न** । पालकान्त में ङीष् नहीं हो ।

१ शेषपूरणम् ।

गोपालिका । अश्वपालिका । *सूर्याद्देवतायां चाप् [ [1]वाच्यः ] । सूर्यस्य स्त्री देवता-सूर्या । [[1]देवतायां किम् ?। सूरी कुन्ती मानुषीयम्[1]] ।

इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक् ।४।१।४९। [ [2]एषामानुगागमः स्यात् ] ङीष् च । इन्द्राणी ।

*हिमाऽरण्ययोर्महत्त्वे । महद्धिमं—हिमानी । [1]आरण्यानी ।

* यवाद्दोषे । दुष्टो यवो-यवानी ।

* यवनाल्लिप्याम् । यवनानां लिपिर्यवनानी ।

*मातुलोपाध्याययोरानुग्वा । मातुलानी । मातुली । उपाध्यायानी । उपाध्यायी ।

*आचार्यादणत्वं च । आचार्यानी ।

---

सूर्यस्य स्त्रः-सूरी ।

दोषइति । यवत्वजातेरभावेऽपि तदाकारानुकृतिरेवाऽत्र-दोषः । (यवानी= अजवाइन ) ।

---

सूर्याद्देवतायां । सूर्य शब्द से पुंयोग में चाप् हो, यदि देवता अभिधेय हो तो ।

इन्द्रवरुण । 'इन्द्र' आदि को आनुक् आगम हो, और तत्संनियोग से ङीष् प्रत्यय भी हो ।

हिमारण्ययो । हिम और अरण्यसे महत्त्व अर्थमें ही आनुक् और ङीष् हों।

यवाद्दोषे । यव से दोष गम्यमान होता हो तभी-आनुक् और ङीष् होते हैं।

यवनाल्लिप्याम् । यवन शब्द से लिपि अर्थ में आनुक् और ङीष होते हैं ।

मातुलोपाध्याययोः । मातुल और उपाध्याय से पुंयोग में आनुक् विकल्प करके हो । ङीष् भी हो ।

आचार्या । आचार्य शब्द से परे जो आनुक् का नकार, उसको णत्व नहीं हो ।

---

१ लिखिते नास्ति । २ शेषपूरणम् ।

*अर्यक्षत्रियाभ्यां वा स्वार्थे । अर्याणी । अर्या । क्षत्रियाणी । क्षत्रिया । पुंयोगे तु—अर्यी । क्षत्रियी ।

क्रीतात्करणपूर्वात् ।४।१।५० । क्रीतान्तादन्तात्करणादेर्ङीष् [ [1]स्यात् स्त्रियाम् । वस्त्रेण क्रीता-] वस्त्रक्रीती । क्वचिन्न—धनक्रीता ।

[1]क्तादल्पाख्यायाम् ।४।१।५१। करणादेः क्तान्तादन्तान्ङीष् स्यादल्पत्वे द्योत्ये । अभ्रलिप्ती [1]द्यौः ।

बहुव्रीहेश्चाऽन्तोदात्तात् ।४।१।५२। [ [2]बहुव्रीहेः ] क्तान्तादन्तोदात्तादन्तात्स्त्रियां ङीष् स्यात् । ऊरुभिन्नी ।

अस्वाङ्गपूर्वपदाद्वा ।४।१।५३। [ [2]अस्वाङ्गं यत्पूर्वपदं, तस्मात्परं यत् क्तान्तं, तदन्ताद्बहुव्रीहेर्ङीष्वा स्यात्, स्त्रियाम् ]। पूर्वेण नित्ये प्राप्ते विकल्पोऽयम् । सुरापीती–सुरापीता ।

---

वस्त्रेण क्रीता–वस्त्रक्रीती गौः ।

पीता सुरा यया सा–सुरापीती । 'जातिकाल' इति सूत्र-वार्तिकाभ्यां निष्ठाया अन्तोदात्तत्वपरनिपातौ ।

---

अर्यक्षत्रियाभ्यां वा । अर्य और क्षत्रिय शब्द से स्वार्थ में विकल्प करके आनुक् और ङीष् हों ।

क्रीतात् । करणादि जो क्रीतान्त अदन्त प्रातिपदिक, उससे ङीष् हो, स्त्रीत्व द्योत्य हो तो ।

क्तादल्पा । करणादि जो क्तान्त अदन्त प्रातिपदिक, उससे ङीष् हो, स्त्रीलिङ्ग में । अल्पत्व अर्थ द्योत्य हो तो ।

बहुव्रीहेश्चा । क्तान्तान्त, अदन्त, अन्तोदात्त–जो बहुव्रीहि, उससे ङीष् हो, स्त्रीत्वद्योत्य हो तो ।

अस्वाङ्गपूर्व । अस्वाङ्ग जो पूर्वपद, उससे परे जो क्तान्त, तदन्त बहुव्रीहि से ङीष् विकल्प करके हो ।

---

१ लिखिते नास्ति । २ शेषपूरणम् ।

**स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्** ।४।१।५४। असंयोगोपधमुपसर्जनं यत्स्वाङ्गं, तदन्ता [²ददन्तात्प्रातिपदिका] द्वा ङीष् [स्यात्स्त्रियाम्] । अतिकेशी । अतिकेशा । चन्द्रमुखी । चन्द्रमुखा । संयोगोपधात्तु सुगुल्फा । [ ²उपसर्जनात्—किं ? । शिखा । स्वाङ्गं त्रिधा-] ।

'अद्रवं मूर्तिमत्स्वाङ्गं प्राणिस्थमविकारजम् ।'

[ ¹किञ्च-- ]

'अतत्स्थं तत्र दृष्टं च, तेन चेत्तत्तथा युतम्' ।।१।।

सुस्वेदा-द्रवत्वात् । सुज्ञाना—अमूर्त्तत्वात् । सुमुखा शाला—अप्राणिस्थत्वात् । सुशोफा—विकारजत्वात् ।

---

अद्रवमिति । अद्रवं, मूर्तिमत्प्राणिस्थमविकारजं, किञ्च—सम्प्रति अप्राणिस्थमपि प्राणिनि क्वचिद् दृष्टं, किञ्च यत् प्राणिवदप्राणिनि स्थितं, यच्च संयोगोपधमुपसर्जनं स्वाङ्गं, तदन्तात्प्रातिपदिकाद्वा ङीषित्यर्थः । सुस्वेदेति । अत्र ङीष् न, स्वेदस्य द्रवत्वात् । सुज्ञानेति । अत्र ङीष् न, ज्ञानस्य अमूर्त्तत्वात् । एवमग्रेऽपि योज्यम् । सुमुखेति । अत्र ङीष् न, मुखस्य प्राणिभिन्नशालास्थत्वात् । सुशोफेति । शोफः=शोथ, । ( सूजन ), स्थौल्यं वा ।

---

स्वाङ्गाच्चोप । असंयोगोपध, उपसर्जन जो स्वाङ्ग वाचक, तदन्त जो अदन्त प्रातिपदिक, उससे ङीष् हो, विकल्प करके । स्त्रीत्व द्योत्य हो तो ।

अद्रवं मूर्त्तिमत् । (१) स्वाङ्ग तीन प्रकार का है । (१) जो-द्रव वाचक नहीं हो, (२) और जो मूर्त्तिमान् हो, (३) और-जो प्राणी में स्थित हो, परन्तु विकार से जात ( उत्पन्न हुआ ) नहीं हो । (-ये स्वाङ्ग कहलाते हैं ) ।

किञ्च—जो सम्प्रति प्राणी में स्थित न भी हो, तो भी कभी प्राणी में स्थित दृष्ट हो, और प्राणी की तरह ही अप्राणी में स्थित हो, तो वह भी 'स्वाङ्ग' कहलाता है ।

---

१ शेषपूरणम् । २ क्वाचित्कः पाठोऽयं, न सार्वत्रिकः ।

सुकेशी, सुकेशा वा रथ्या—अप्राणिस्थस्यापि प्राणिनि दृष्टत्वात्। सुस्तनी सुस्तना वा प्रतिमा—प्राणिवत्प्राणिसदृशे स्थितत्वात्।

नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च।४।१।५५। [[1]स्वाङ्गवाचकोपसर्जननासिकाद्यन्तात्प्रातिपदिकात्स्त्रियां ] वा ङीष् [ स्यात् ]। तुङ्गनासिकी। तुङ्गनासिका। * पुच्छाच्च। सुपुच्छी। सुपुच्छा।

* कबरमणिविषशरेभ्यो नित्यम्। कबरपुच्छी।

* उपमानात्पक्षाच्च, पुच्छाच्च। उलूकपक्षी शाला। उलूकपुच्छी सेना।

न क्रोडादिबह्वचः।४।१।५६। क्रोडादेर्बह्वचश्च स्वाङ्गान्न ङीष्। कल्याणक्रोडा। आकृतिगणोऽयम्। सुजघना।

---

प्रतोली—रथ्या। ( गली )।

रथ्येति। रथ्यायाः प्राणित्वाऽभावाचात्र विकीर्णानां केशानामप्राणिस्थत्वेऽपि, तेषां केशानां कदाचित् प्राणिस्थतया दृष्टत्वात् ङीष्विकल्पो भवत्येवेत्याशयः।

प्रतिमेति। यथा प्राणिनि स्तनयोः स्थितिरेवमेव प्रस्तरप्रतिमायामिति ङीष्विकल्पोऽत्र भवत्येवेत्याशयः।

---

नासिकोदरौष्ठ। स्वाङ्ग वाची, उपसर्जन जो नासिकादि, तदन्त प्रातिपदिक से ङीष् हो, विकल्प करके।

पुच्छाच्च। पुच्छान्त प्रातिपदिक से स्त्री लिङ्ग में ङीष् हो, विकल्प करके।

कबरमणि। कबरादि से परे जो पुच्छ शब्द, तदन्त प्रातिपदिक से नित्य ही ङीष् हो।

उपमानात्पक्षाच्च। उपमानवाचक से परे जो पक्ष और पुच्छ शब्द, तदन्त प्रातिपदिक से नित्य ही ङीष् हो।

न क्रोडादि। स्वाङ्ग वाचक जो क्रोडादि, और बह्वच्, तदन्त प्रातिपदिक से ङीष् नहीं हो।

**सह-नञ्-विद्यमान-पूर्वाच्च ।४।१।५७।** [ [1]सहेत्यादित्रिकपूर्वा-]-न्न ङीष् । सकेशा । अकेशा । विद्यमाननासिका ।

**नख-मुखात्संज्ञायाम् ।४।१।५८।** [ [1]नख-मुखाऽन्त-त्प्रातिपदिका-त्सञ्ज्ञायां स्त्रियां [2]न ङीष् । ]

[1]**पूर्वपदात्सञ्ज्ञायामगः ।८।४।३।** पूर्वपदस्थान्निमित्तात्परस्य नस्य णः स्यात्सञ्ज्ञायाम् । न तु गकारव्यवधाने । शूर्पणखा । गौरमुखा । संज्ञायां किम् ? । ताम्रमुखी कन्या ।

**वाहः ।४।१।६१।** वाहन्तात्प्रतिपदिकात्स्त्रिय ङीष् [स्यात्] । दित्यौही । **सख्यशिश्वीति भाषायाम् ।४।१।६२।** [ [1]एतौ ङीषन्तौ भाषायां निपात्येते ] । सखी । अशिश्वी ।

---

शूर्पणखेति । 'पूर्वपदात्सञ्ज्ञाया'मिति णत्वम् । यदा तु शूर्पवन्नखानि यस्या इति योगमात्रं विवक्ष्यते, न तु सञ्ज्ञा, तदाऽसञ्ज्ञात्वान्न ङीन्निषेधो, न वा णत्वं भवति । तेन राक्षस्यपि योगवृत्त्या तु 'शूर्पनखी'ति वक्तुं शक्यते एव ।

नास्ति शिशुर्यस्याः सा—अशिश्वी ।

---

सहनञ् । सह, नञ् और विद्यमान—ये तीन हैं पूर्व में जिसके, ऐसा जो प्रातिपदिक, उससे स्त्री लिङ्ग में, ङीष् प्रत्यय नहीं हो ।

नखमुखात् । नख मुखान्त जो प्रातिपदिक, उससे सञ्ज्ञा में स्त्रीलिङ्ग में ङीष् नहीं हो ।

पूर्वपदात्सञ्ज्ञाया । पूर्वपदस्थ निमित्त से परे जो नकार, उसको णकार हो, सञ्ज्ञा में । परन्तु गकार के व्यवधान में यह णत्व नहीं हो ।

वाहः । वाहन्त प्रातिपदिक से स्त्रीत्व द्योत्य हो तो ङीष् प्रत्यय हो ।

सख्यशिश्वीति । 'सखी' और 'अशिश्वी' ये दोनों भाषा ( लोक ) में ङीषन्त निपातित हों ।

---

१ शेषपूरणम् । २ 'ङीष् न' पा० ।

जातेरस्त्रीविषयादयोपधात् ।४।१।६३। जातिवाचि यन्न च स्त्रियां नियतमयोपधं, ततः [ [1]स्त्रियां ] ङीष् [ स्यात् ] ।

'आकृतिग्रहणा जातिर्लिङ्गानां च न सर्वभाक् ।
सकृदाख्यातनिर्ग्राह्या, गोत्रञ्च चरणैः सह' ॥ १ ॥

घटी । वृषली । औपगवी । कठी । जातेः किं ? । मुण्डा ।
अस्त्रीविषयात्किम् ? । बलाका । अयोपधात्किम् ? । क्षत्रिया ।

---

आकृतीति । अनुगतसंस्थानव्यङ्ग्येत्यर्थः । जलसमीपदेशो हि 'तट'मित्यनुगतसंस्थानव्यङ्ग्यमेतत् । 'घटी'ति पाठे तु स्पष्टमेवानुगतसंस्थानव्यङ्ग्यत्वम् ।

लिङ्गानामिति । असर्वलिङ्गत्वे सति, एकस्यां व्यक्तौ कथनाद्व्यक्त्यन्तरे कथनं विनाऽपि सुग्रह्या—जातिरिति लक्षणान्तरम् । 'वृषली'त्युदाहरणम् । एकस्यां व्यक्तौ वृषलत्वे ज्ञाते, तत्पुत्रादौ कथनं विनाऽपि च तस्य सुग्रहत्वम् ।

गोत्रमिति । अपत्यप्रत्ययान्तः, शाखाध्येतृवाची च शब्दो जातिकार्यं लभते इत्यर्थः । 'औपगवी'त्याद्युदाहरणम् ।

---

जातेरस्त्री । नित्य स्त्रीलिङ्ग से भिन्न और अयोपध जो जातिवाची, उससे ङीष् हो, स्त्रीलिङ्ग में ।

आकृतिग्रहणा जातिः । आकृति ( स्वरूप ) देखने से ही जो जानी जा सके, अर्थात् जो अनुगतसंस्थानविशेष से ही अभिव्यङ्ग्य हो, वह जाति कहलाती है ।

लिङ्गानां च । और सब लिङ्ग जिससे नहीं होते हों, और एक व्यक्ति में बतानेपर अन्य व्यक्तियों में विना बताये ही जानी जा सके—वह भी जाति होती है ।

गोत्रञ्च । अपत्य प्रत्ययान्त शब्द, और शाखाध्येतृवाची जो शब्द, वह भी जाति कार्य को प्राप्त होता है ।

---

१ शेषपूरणम् ।

*योपधप्रतिषेधे हय-गवय-मुकय-मनुष्य-मत्स्यानामप्रतिषेधः। हयी। गवयी। मुकयी। [ [1]"मनोर्जातावञ्-यतौ षुक् च" ]। मनुषी। मत्सी।

पाक-कर्ण-पर्ण-पुष्प-फल-मूल-वालोत्तरदाच्च ।४।१।६४। पाकाद्युत्तरपदाज्जातिवाचिनः स्त्रीविषयादपि ङीष् [ स्यात् ]। ओदनपाकी। शङ्कुकर्णी। शालपर्णी। शङ्खपुष्पी। दासीफली। दर्भमूली। गोवाली। [ [1]ओषधविशेषे रूढा एते ]।

इतो मनुष्यजातेः ।४।१।६५। [ [1]इकारान्तान्मनुष्यजातिवाचिनः स्त्रियां ] ङीष् [ स्यात् ]। दाक्षी। ऊङुतः ।४।१।६६। ऊकारान्तादयोपधान्मनुष्यजातिवाचिनः [ स्त्रिया[2] ]मूङ् [ स्यात् ]। कुरूः।

पङ्गोश्च ।४।१।६८। [ [1]पङ्गुशब्दात्स्त्रियामूङ् स्यात् ]। पङ्गूः।

---

दाक्षीति। अत्र 'अत इञ्' ज्ञिति इञ्। गोत्रलक्षणेयं जातिः। अदन्तत्वाऽभावादप्राप्तो ङीष् अनेन विधीयते।

---

योपधप्रतिषेधे। योपध के प्रतिषेध में हयादि का प्रतिषेध नहीं हो। अर्थात् हयादि से जातिलक्षण ङीष् होता ही है।

पाककर्ण। पाकाद्युत्तरपद जो जातिवाची प्रातिपदिक, वह यदि नित्य स्त्रीलिङ्ग भी हो, तब भी उससे ङीष् हो।

इतो मनुष्यजातेः। इकारान्त मनुष्य जाति वाची से स्त्रीलिङ्ग में ङीष् हो।

ऊङुतः। उकारान्त अयोपध मनुष्य जाति वाची से स्त्रीलिङ्ग में ऊङ् प्रत्यय हो।

पङ्गोश्च। पङ्गु शब्द से स्त्रीलिङ्ग में ऊङ् प्रत्यय हो।

---

१ क्वाचित्कः पाठः। २ शेषपूरणमेतत्।

* श्वशुरस्योकाराऽकारलोपश्च । चांदूङ् ॥ पुंयोगलक्षणङीषोऽपवादः । श्वश्रूः ।

ऊरूत्तरपदादौपम्ये ।४।१।६९। उपमानवाचिपूर्वपदमुरूत्तरपदं य[ [1]त्प्रातिपदिकं ] तस्मादूङ् [ स्यात् ] । करभोरूः ।

संहितशफलक्षणवामादेश्च ।४।१।७०। [ [1]संहित-शफ-लक्षण-वामादेरूरूत्तरपदात्प्रातिपदिकात्स्त्रियामूङ् स्यात् । [2]अनौपम्यार्थं सूत्रम् ] । संहितोरूः । *संहित-सहाभ्यां च । सहितोरूः । सहोरूः ।

शार्ङ्गरवाद्यञो ङीन् ।४।१।७३। शार्ङ्गरवादेरञो योऽकारस्तदन्ताच्च जातिवाचिनो ङीन् [स्यात्] । शार्ङ्गरवी । [ [2]अनृष्यानन्तर्ये

---

उपमीयतेऽनयेत्युपमा, तस्या भाव—औपम्यम् ।

करभेति । 'मणिबन्धादाकनिष्ठं करभो बहिः' इत्यमरः । करभाविव ऊरू यस्याः सा-करभोरूः । शार्ङ्गरवीति । शृङ्गरवशब्दादपत्येऽण्, आदिवृद्धिः । 'ओर्गुणः' । 'टिड्ढाणञ्' इति ङीपं बाधित्वा परत्वाज्जातेरिति ङीषि प्राप्तेऽनेन ङीन् विधीयते ।

---

श्वशुरस्य । श्वशुर के उकार और अकार का लोप हो, और ऊङ् प्रत्यय भी हो, पुंयोग में । ( स्त्रीत्व द्योत्य हो तो ) ।

ऊरूत्तरपदा । उपमानवाचिपूर्वपदक जो ऊरूत्तरपदक प्रातिपदिक, उससे ऊङ् हो, स्त्रीत्व द्योत्य हो तो ।

संहितशफ । संहित, शफ, लक्षण, और—वाम ये आदि में है जिसके, ऐसा जो ऊरूत्तर प्रातिपदिक, उससे ऊङ् प्रत्यय हो, स्त्रीत्व द्योत्य हो तो ।

सहितसहाभ्याञ्च । सहित और सह-पूर्वपद में है जिसके, ऐसा जो ऊरूत्तर प्रातिपदिक, उससे ऊङ् हो, स्त्रीत्व द्योत्य हो तो ।

शार्ङ्गरवाद्यञो । शार्ङ्गरवादि से, और—अञ् का जो अकार तदन्त जो जातिवाचक, उससे—ङीन् प्रत्यय हो, स्त्रीलिङ्ग में ।

---

१ शेषपूरणमेतत् । २ क्वाचत्कः पाठः ।

बिदादिभ्योऽञ्' ]। बैदी।

* नृनरयोर्वृद्धिश्च। नारी।

यङश्चाप् ।४।१।७४। यङन्ताच्चाप् [ स्यात् ]। आम्बष्ठ्या। कारीषगन्ध्या। * षाद्यञश्चाब्वाच्यः। पौतिमाष्या।

आवट्याच्च ।४।१।७५। अस्माच्चाप् [ स्यात् ]। 'यञश्चे'ति ङीपोऽपवादः। 'अवट'शब्दो गर्गादिः। आवट्या।

यूनस्तिः ।४।१।७७। युवन्—शब्दात्तिः [प्रत्ययः स्यात्स्त्रियां, स च तद्धितः ]। युवतिः। 'अनुपसर्जना'दित्येव। बहवो युवानो यस्यां सा-बहुयुवा। 'युवती'ति तु-यौतेः शत्रन्तान्ङीपि बोध्यम्।

॥ * ॥ इति स्त्रीप्रत्ययाः ॥ * ॥

---

युवतीति। 'उगितश्चे'ति ङीपि 'युवती'ति रूपमित्याशयः।

---

नृनरयोः। नृ और नर से ङीन् प्रत्यय हो, और नृ और नरको वृद्धि भी हो। स्त्रीत्व द्योत्य हो तो।

यङश्चाप्। यङन्त से चाप् हो, स्त्रीत्व द्योत्य हो तो।

षाद्यञश्चाप्। षकार से परे जो यञ्, तदन्त प्रातिपदिक से चाप् हो।

आवट्याच्च। आवट्य से चाप् हो, स्त्रीत्व द्योत्य हो तो।

यूनस्तिः। अनुपसर्जन युवन् शब्द से—स्त्रीत्व की विवक्षा में—'ति' प्रत्यय हो, और वह तद्धितसञ्ज्ञक भी हो।

* इति स्त्रीप्रत्यय भाषा समाप्त *

॥ श्रीगणेशाय नमः ॥

## अथ वैदिकप्रक्रिया ।

षष्ठीयुक्तश्छन्दसि वा ।१।४।९। [ [1]षष्ठ्यन्तेन युक्तः ] पतिशब्द-[ [1]श्छन्दसि ] घिसंज्ञो [ वा [1]स्यात् ]। क्षेत्रस्य पतिना वयम्। इह 'वे'ति योगं विभज्य 'छन्दसी'त्यनुवर्तते। तेन सर्वे विधयश्छन्दसि वैकल्पिकाः। 'बहुलं छन्दसी'त्यादिरस्यैव प्रपञ्चः।

अयस्मयादीनि च्छन्दसि ।१।४।२०। [2]एतानि च्छन्दसि साधूनि। भ पद-संज्ञाऽधिकाराद्यथायोगं संज्ञाद्वयं बोध्यम्। तथा च वार्त्तिकम्-

* उभयसंज्ञान्यपीति वक्तव्यम्। इति। सस्रुष्टुभा स ऋक्वता गणेन। पदत्वात्कुत्वम्। भत्वाज्जश्त्वाऽभावः। नैनं हिन्वन्त्यपि वाजिनेषु। अत्र पदत्वाज्जश्त्वं, भत्वात्कुत्वाऽभावः।

---

पतिनेति। घित्वाद्ङो नेति नाभावः। ऋक्वतेति। 'ऋच्वता' इत्यत्र पदत्वाच्चोः कुरिति चस्य कुत्वम्। भत्वाच्च जश्त्वेन जकारो नेति भावः।

अत्रेति। 'वाजिनेषु' इत्यत्र। जश्त्वं = वाचश्चकारस्य 'झलां जशोऽन्ते' इति जकारः। कुत्वाऽभावः='चोः कु'रिति कुत्वाऽभावः।

---

षष्ठीयुक्तः। षष्ठ्यन्त से युक्त जो पति शब्द, वह विकल्प करके घिसञ्ज्ञक हो, वेद में।

अयस्मयादीनि। 'अयस्मय' आदि वेद में साधु हों।

उभयसञ्ज्ञान्यपीति। वेदमें–भसञ्ज्ञा और पदसञ्ज्ञा–इन दोनों का समावेश भी होता है।

---

१ किञ्चित् क्वचिदपवादः। २ क्वचिदेव दृश्यते।

'ते प्राग्धातोः'। छन्दसि परेऽपि ।१।४।८१। व्यवहिताश्च ।१।४।८२। [[1]ते=गत्युपसर्गसञ्ज्ञका धातोः परेऽपि, व्यवहिता अपि च च्छन्दसि प्रयोक्तव्याः]। हरिभ्यां याह्योक आ। आमन्द्रैरिन्द्र हरिभिर्याहि।

तृतीया च होश्छन्दसि ।२।३।३। जुहोतेः कर्मणि तृतीया स्याद्, द्वितीया च। यवाग्वाऽग्निहोत्रं जुहोति।

मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन् ।३।२।७१। [[1]श्वेतवहादिभ्यो ण्विन् स्यान्मन्त्रे]। *श्वेतवहादीनां डस् पदस्येति वक्तव्यम्। यत्र पदत्वं भावि, तत्र ण्विनोऽपवादो डस्वक्तव्य इत्यर्थः। श्वेतवाः। श्वेतवाहौ। श्वेतवाहः। उक्थानि, उक्थैर्वा शंसति—उक्थशा यजमानः। उक्थशासौ। [1]उक्थशासः। पुरो दास्यते-दीयते-पुरोडाः। [2]पुरोडाशौ। [2]पुरोडाशः।

---

परेऽपीति। ते = गत्युपसर्गसञ्ज्ञाः, छन्दसि परेऽपि, व्यवहिता अपि च प्रयुज्यन्ते इत्यर्थः। याहि आ इति। आयाहीति लोके। आमन्द्रैरिति। मन्द्रैः—हरिभिर्वाजिभिरायाहीत्यर्थः। श्वेता वहन्त्येतं श्वेतवाः—इन्द्रः। 'अत्वसन्तस्ये'ति दीर्घः। पुरोडाः—पुरोडाशः।

---

छन्दसि परेऽपि। व्यवहिताश्च। गति और उपसर्ग सञ्ज्ञक वेद में धातु से परे और धातु से व्यवहित भी प्रयुक्त होते हैं।

तृतीया च हो। जुहोति (हु धातु) के कर्म में तृतीया हो, और द्वितीया भी हो।

मन्त्रे श्वेतवहो। श्वेतवहादि से ण्विन् हो। अर्थात्—श्वेतादि उपपदक वह आदि धातुओं से ण्विन् हो, मन्त्र में।

श्वेतवहादीनां। श्वेतवहादि को जहाँ पदत्व भावी हो वहाँ ण्विन् का अपवाद डस् प्रत्यय हो।

---

१ शेषपूरणम्। २ क्वचिन्न।

**अवे यजः ।३।२।७२।** [ [1]अवे उपपदे यजेर्ण्विनिः स्यान्मन्त्रे ]। अवयाः । अवयाजौ । अवयाजः । **अवयाः श्वेतवाः पुरोडाश्च ।८।२।६७।** एते संबुद्धौ कृतदीर्घा निपात्यन्ते । चादुक्थशाः ।

**लिङर्थे लेट् ।३।४।६७।** [ [1]विध्यादौ, हेतुहेतुमद्भावादौ च धातो-र्लेट् स्याच्छन्दसि ]।

**सिब्बहुलं लेटि ।३।१।३४।** [ [1]धातोर्बहुलं सिप्प्रत्ययः स्याल्लेटि परतः ]। **इतश्च लोपः परस्मैपदेषु ।३।४।९७।** लेटस्तिङा-[ [1]मितो-लोपो ] वा [ [3]स्यात्परस्मैपदेषु ]। **लेटोऽडाटौ ।३।४।९४।** [ [3]लेटः-अट् आट् एतावागमौ] वा स्तः, तौ च पितौ ।

***सिब्बहुलं णिद्वक्तव्यः** । वृद्धिः । प्र ण यू आ इ षि तारिषत् ।

---

लिङर्थ इति । विध्याद्यर्थेषु छन्दसि लेडित्यर्थः ।

लेटोऽडाटाविति । लेटोऽडाटौ वा स्तः, तौ च पितावित्यर्थः ।

---

अवे यजः । अव उपपद रहते यज् धातु से ण्विनि हो, मन्त्र में ।

अवयाः श्वेतवाः । सम्बुद्धि में 'अवयाः' इत्यादि कृतदीर्घ निपातन हों ।

लिङर्थे लेट् । विध्यादि और हेतुहेतुमद्भावादि जो लिङ् के अर्थ हैं, उनमें धातु से लेट् लकार हो, वेद में ।

सिब्बहुलं लेटि । धातु से बहुलता करके सिप् प्रत्यय ( विकरण ) हो, लेट् परे रहते ।

इतश्च लोपः । लेट् सम्बन्धी जो तिङ् का इकार, उसका लोप हो, विकल्प करके, परस्मैपद परे रहते ।

लेटोऽडाटौ । लेट् को अट् और आट् आगम हों, विकल्प करके । और वे अट् आट् पित् हों ।

सिब्बहुलं णित् । सिप् बहुलता करके णित् हो ।

---

१ शेषपूरणम् । २ इयं वृत्तिः क्वचिदेव दृश्यते । ३ क्वाचित्कः पाठः ।

सुपेशस्करति जोषिषद्धि। आसाविषदर्शसानाय। सिप, इडोपस्त्व चाऽभावे—पताति विद्युत्। प्रियः सूर्ये प्रियो अग्ना भवाति।

स उत्तमस्य ।३।४।९८। लेट उत्तमस्य [ 'सकारस्य ] वा लोपः [ स्यात् ]। करवावः। करवाव। टेरेत्त्वम्।

आत ऐ ।३।४।९५। लेट [ आताम्-आथाम्-सम्बन्धिन आदेः]—आकारस्य [ ऐः स्यात् ]। सुतेभिः सुप्रयसा मादयैते। 'आताम्'इत्याकारस्य ऐ[कारः]

वैतोऽन्यत्र ।३।४।९६। लेट एकारस्य ऐः स्याद्वा, 'आत ऐ' इत्यस्य विषयं विना। पशूनामीशै। ग्रहा गृह्यान्तै। अन्यत्र किम् ?। सुप्रयसा मादयैते।

उपसंवादा-ऽऽशङ्कयोश्च ।३।४।८। पणबन्धे, आशङ्कायां च लेट् [ स्यात् ]। अहमेव पशूनामीशै। नेज्जिह्मायन्तो नरकं पताम।

---

उपसंवादः—पणबन्धः ( 'शर्त' 'बाज़ी'।

नेदिति। कौटिल्यं कुर्वतां नरके पातः, सोऽस्माकं मा भूदित्यर्थः। इच्छन्दो निपात आशङ्काद्योतकः।

---

स उत्तमस्य। लेट् सम्बन्धी जो उत्तम पुरुष का सकार, उसका लोप हो, विकल्प करके।

आत ऐ। लेट् सम्बन्धी आकार को 'ऐ' आदेश हो। [ स्वभावतः प्रथम पुरुष और मध्यम पुरुष के आत्मनेपद के द्विवचन में ही यह प्रवृत्त होता है, अर्थात्—आताम् और आथाम् के आदि आकार को यह ऐकार होता है ]।

वैतोऽन्यत्र। लेट् के आकार को ऐ आदेश विकल्प करके हो, 'आत ऐ' इसके विषय को छोड़कर।

उपसंवादा। पणबन्ध ( शर्त मारना ) और आशङ्का में लेट् लकार हो।

---

१ शेषपूरणम्।

व्यत्ययो बहुलम् ।३।१।८५। विकरणानां [ बहुलं व्यत्ययः स्याच्छन्दसि]। आण्डा [1]शुष्णस्य भेदति। 'भिनत्ती'ति प्राप्ते। जरसा मरते पतिः । 'म्रियते' इति प्राप्ते। इन्द्रो वस्तेन नेषतु । नयतेर्लोट् । शप्सिपौ द्वौ विकरणौ । इन्द्रेण युजा तरुषेम वृत्रम् । तरेमेत्यर्थः । तरतेर्विध्यादौ लिङ् । उः, सिप् , शप् चेति त्रयो विकरणाः ।

सुप्तिङुपग्रहलिङ्गनराणां,
कालहलच्स्वरकर्तृयङां च ।
व्यत्ययमिच्छति शास्त्रकृदेषां,
सोऽपि च सिध्यति बाहुलकेन ॥

[ सुप्–] धुरि दक्षिणायाः । 'दक्षिणस्या'मिति प्राप्ते । [ तिङ्–] चषालं ये अश्वयूपाय तक्षति । तक्षन्तीति प्राप्ते । उपग्रहः–परस्मैपदात्मनेपदे । ब्रह्मचारिणमिच्छते । इच्छतीति प्राप्ते । प्रतीपमन्य ऊर्मिर्युध्यति । 'युध्यते' इति प्राप्ते । [ लिङ्ग– ] मधोस्तृप्ता इवाऽऽसते । 'मधुनः' इति प्राप्ते । नरः–पुरुषः । अधा स वीरैर्दशभिर्वियूयाः । 'वियूया'दिति प्राप्ते । कालः—कालवाची प्रत्ययः । श्वोऽग्नीनाधास्य-

शास्त्रकृत–भगवान् पाणिनिर्व्यत्ययमिच्छति । सोऽपि = व्यत्ययोऽपि ।

व्यत्ययो बहुलम् । वेद में विकरणों का बहुलता करके व्यत्यय हो ।

सुप्तिङुपग्रह । सुप् , तिङ् , परस्मैपद, आत्मनेपद, लिङ्ग, पुरुष, काल, हल् , अच् , स्वर, कारक वाचक, कृत् और तद्धित, और 'य–ङ्' इनका शास्त्रकार वेद में व्यत्यय चाहते हैं, और वह व्यत्यय बाहुलकात् सिद्ध होता है ।

१ 'शुष्मस्य' पा० ।

मानेन। लुटो विषये लृट्। [ हल्-] तमसो गा अदुक्षत्। 'अधुक्षदिति प्राप्ते। [ अच्-] मित्रं वयं च सूरयः। 'मित्रा वय'मिति प्राप्ते। स्वरव्यत्ययस्तु वक्ष्यते। कर्तृशब्दः—कारकमात्रपरः। तथा च तद्वाचिनां कृत्तद्धितानां व्यत्ययः—[1]अन्नादाय। अण्विषये अच्। अवग्रहे विशेषः। यङो 'य'शब्दादारभ्य 'लिङ्याशिष्य'ङ्ङिति ङकारेण प्रत्याहारः। तेषां व्यत्ययो—[2]भेदतीत्यादिरुक्त एव।

**छन्दस्युभयथा** ।३।४।११७। धात्वधिकारोक्तः प्रत्ययः सार्वधातुकार्द्धधातुकोभयसंज्ञः स्यात्। वर्द्धन्तु त्वा सुष्टुतयः। वर्द्धयन्त्वित्यर्थः। आर्द्धधातुकत्वाण्णिलोपः। विशृण्विरे। सार्वधातुकत्वात् श्नुः, शृभावश्च। 'हुश्नुवो'रिति यण्।

**तुमर्थे सेसेनसेअसेन्क्सेकसेनध्यैअध्यैन्कध्यैकध्यैन्शध्यैशध्यैन्तवैतवेङ्तवेनः** ।३।४।९। [ तुमर्थ=भावे, धातोरेते प्रत्ययाः स्युश्छन्दसि विषये]। से—वक्षे रायः। सेन्—तावामेषे। असे—शरदो जीवसे धाः। असेन्—नित्त्वादाद्युदात्तः। क्से—प्रेषे। कसेन्—गवामिव श्रियसे। अध्यै, अध्यैन्—जठरं पृणध्यै। पक्षे—आद्युदात्तम्। कध्यै-कध्यैन्—आहुवध्यै। पक्षे नित्स्वरः। शध्यै— राधसः सह मादयध्यै। शध्यैन्—वायवे पिबध्यै। तवै—दातवा उ। तवेङ्—सूतवे। तवेन्—कर्त्तवे।

छन्दस्युभयथा। वेद में—धात्वधिकारोक्त जो प्रत्यय, वे सार्वधातुक और आर्द्धधातुक उभय सञ्ज्ञक हों।

तुमर्थे सेसेन्। तुमर्थ जो भाव, उसमें धातुसे 'से' आदि प्रत्यय हों, वेद में।

[1] अन्नादशब्दस्य चतुर्थ्या रूपमेतत्। [2] 'स्यादि वृत्तः'।

**प्रयै रोहिष्यै अव्यथिष्यै ।३।४।१०।** एते [ [1]तुमर्थे ] निपात्यन्ते । प्रयातुं, रोढुम् , अव्यथितुमित्यर्थः । **दृशे विख्ये च ।३।४।११।** [ [1]एतौ छन्दसि तुमर्थे ] निपातौ । द्रष्टुं, विख्यातुमित्यर्थः ।

**कृत्यार्थे तवैकेन्केन्यत्वनः ।३।४।१४।** [ [1]कृत्यार्थे] धातोरेते स्यु- [श्छन्दसि] । तवै—[2]अन्वेतवै । केन्—अवगाहे । केन्य—दिदृक्षेण्यः । त्वन्—कर्त्वम् ।

**सृपितृदोः कसुन् ।३।४।१७।** तुमर्थे [ [1]सृपितृदोः कसुन् स्याच्छन्दसि । भावलक्षणे इत्यनुवर्त्तते ]। पुरा क्रूरस्य विसृपो विरप्शिन् । पुरा जत्रुभ्य आतृदः ।

**प्रकृत्याऽन्तः पादमव्यपरे ।६।१।११५।** ऋक्पादमध्यस्थ एङ् प्रकृत्या स्यादति परे, न तु वकारयकारपरेऽति [ परे ]। उपप्रयन्तो अध्वरम् । सुजाते अश्वसूनृते । अन्तः पादं किम् ? । एतास एतेऽर्चन्ति । अव्यपरे किम् ? । तेऽवदन् ।

---

प्रयै रोहिष्यै । 'प्रयै' आदि तुमर्थ में निपातित हों, छन्द में ।

दृशे विख्ये च । 'दृशे' और 'विख्ये' ये दोनों तुमर्थमें निपातित हों, वेदमें ।

कृत्यार्थे तवै । कृत्य प्रत्यय के अर्थ में धातु से 'तवै' आदि प्रत्यय हों, वेद में ।

सृपितृदोः । भावलक्षण अर्थ में वर्त्तमान जो सृपि और तृद धातु, उनसे तुमर्थ में 'कसुन्' प्रत्यय हो, वेद में ।

प्रकृत्याऽन्तः । ऋक् पाद मध्यस्थ जो एङ्, वह प्रकृति करके रहे, अत् परे रहते । परन्तु वकार और यकार परक अत् परे रहते यह प्रकृति भाव नहीं हो ।

---

१ शेषपूरणम् । २ 'न म्लेच्छितवै । अवगाहे । दिदृक्षेण्यः । भूर्यस्पष्ट कर्त्वम्' इति क्वचिदुदाहरणानि ।

अव्यादवद्यादवक्रमुरव्रतायमवन्त्ववस्युषु च ।६।१।११६।

एषु व्यपरेऽप्यति एङ् प्रकृत्या [ स्यात् ]। वसुभिर्नो अव्यात्। मित्र महो अवद्यात्। मा शिवासो अवक्रमुः। ते नो अव्रता। शतधारो अयं मणिः। ते नो अवन्तु। कुशिकासो अवस्यवः।

सुपां सु-लुक्-पूर्वसवर्णा-ऽऽच्छे-याडाड्यायाजालः ।७।१।३९।

[ [1]छन्दसि विषये सुपां स्वादय आदेशाः स्युः ]। ऋजवः सन्तु पन्थाः। 'पन्थान' इति प्राप्ते-सुः। परमे व्योमन्। 'व्योमनीति' प्राप्ते-ङेर्लुक्। धीती। मती। सुष्टुती। 'धीत्या'। 'मत्या' 'सुष्टुत्ये'ति प्राप्ते— पूर्वसवर्णदीर्घः। या सुरथा रथीतमा दिविस्पृशा अश्विना। 'यौ सुरथा'-विति प्राप्ते—आ। नताद् ब्राह्मणम्। 'नत'मिति प्राप्ते—आत्। या देव विद्म ता त्वा। 'य'मिति प्राप्ते। न युष्मे वाजबन्धवः। अस्मे इन्द्रा बृहस्पती। 'युष्मासु' 'अस्मभ्य'मिति प्राप्ते-शे। उरुया। धृष्णुया। 'उरुणा' 'धृष्णुने'ति प्राप्ते या। नाभा पृथिव्याः। 'नाभा'विति प्राप्ते-डा। ता [2]अनुष्ठ्योच्यावयतात्। आङो-ड्या। साधुया। 'साध्वि'ति प्राप्ते—याच्। वसन्ता यजेत। 'वसन्ते' इति प्राप्ते—आल्।

*इया-डिया-जीकाराणामुपसङ्ख्यानम्। उर्विया। दार्विया।

---

अव्यादवद्या। 'अव्यात्' आदि सम्बन्धी वकार यकार परक अत् परे रहते भी एङ् प्रकृति करके रहे। वेद में।

सुपां सुलुक्। वेद में सुप् को 'सु' आदि आदेश हों।

इया-डिया। सुप् के स्थान में 'इयां' 'डियाच्' और 'ई' कार ये आदेश हों, वेद में।

---

1 शेषपूरणम्।

2 इतः परम्—'अनुष्ठानमनुष्ठ्या। व्यवस्थावदङ्' इति क्वचिदधिकः पाठः।

'उरुणा' 'दारुणे'ति प्राप्ते–इया । सुक्षेत्रिया । 'सुक्षेत्रिणे'ति प्राप्ते—डियाच् । 'दृतिं न शुष्कं सरसी शयानम्' । सरस्यामिति प्राप्ते–ई ।

आज्जसेरसुक् ।७।१।५०।[[1]अवर्णान्तादङ्गात्परस्य जसोऽसुगागमः स्यात् ]। ब्राह्मणासः ।

[2]छन्दस्युभयथा।६।४।८६। भूसुवोर्यण् स्यादियङुवङौ च। वनेषु चित्रं विभ्वम् । विभुवं वा । सुध्यो नव्यमाने । सुधियो वा ।

*तन्वादीनां छन्दसि [बहुलम्[2]]। वेयङुवङौ। तन्वं पुषेम । तनुवं पुषेम । विष्वं पश्य । विषुवं पश्य । स्वर्गो लोकः । सुवर्गो लोकः । त्र्यम्बकम् । त्रियम्बकम् । वरेण्यम् । वरेणियम् ।

'अतो भिस् ऐस्' । बहुलं छन्दसि ।७।१।१०। [ [1]अतोऽङ्गात्परस्य भिस ऐस् स्याच्छन्दसि बहुलं ]। अग्निर्देवेभिः ।

मन्त्रेष्वाङ्यादेरात्मनः ।६।४।१४१। आत्मन्-शब्दस्याऽऽदेर्लोपः स्यादाङि मन्त्रे । त्मना देवेषु ।

---

आज्जसे । अवर्णान्त अङ्ग से परे जो जस् , उसको असुक् आगम हो ।

छन्दस्युभयथा । भू और सू को यण् हो, और इयङ् उवङ् भी हों, वेद में।

तन्वादीनां छन्दसि। तन्वादि को इयङ् उवङ् बहुलता करके हों, वेद में।

बहुलं छन्दसि । अदन्त अङ्ग से परे जो भिस्, उसको ऐस् आदेश बहुलता ( विकल्प ) करके हो, वेद में ।

मन्त्रेष्वाङ्यादे । आत्मन् शब्द के आदि का लोप हो, मन्त्र में ।

---

१ शेषपूरणम् । २ क्वाचित्कः पाठः ।

'अपो भि'। * मासश्छन्दसीति वक्तव्यम् । माद्भिः शरद्भिः।

प्रसमुपोदः पादपूरणे ।८।१।६। एषां द्वे स्तः [पादपूरणे]। प्रप्राय-मग्निः। संसमिद्युवसे। उपोप मे परामृश। किन्नो दुदुहर्षसे।

षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु ।८।३।५३। [ एषु परेषु षष्ठ्या ] विसर्गस्य सः स्यात्। वाचस्पतिं विश्वकर्माणम्। दिवस्पुत्राय सूर्याय। दिवस्पृष्टं भन्दमानः। तमसस्पारमस्य। परिवीत इळस्पदे। दिवस्पयो दिधिषाणाः। रायस्पोषं यजमानेषु [ धत्तम् ]।

*॥ इति वैदिकप्रक्रिया ॥*

---

## अथ स्वरप्रक्रिया।

धातोः ।६।१।१६२। [धातोः-] अन्त उदात्तः स्यात्।

अनुदात्तं पदमेकवर्जम् ।६।१।१५८। परिभाषेयं स्वरविषया।

---

मास इति। मासस्तकारो भादौ प्रत्यये छन्दसि। 'पदन्नो'मासिति सूत्रेण मासस्य 'मास्' आदेशः।

---

मासश्छन्दसि। मास् शब्द को तकार अन्तादेश हो, भादि प्रत्यय परे रहते, वेद में।

प्रसमुपोदः। पादपूरणार्थक प्रादिको द्वित्व हो, वेद में।

षष्ठ्याः। पति, पुत्र आदि परे रहते षष्ठी सम्बन्धी विसर्ग को सत्व हो, वद में।

* इति वैदिक प्रक्रिया भाषा समाप्त *

धातोः। धातु का अन्त उदात्त हो।

अनुदात्तं पद। जिस पदमें-जिस अच् को उदात्त या स्वरित विधान किया है, उस अच् को छोड़कर, उस पद के बाकी सब अच् अनुदात्त होते हैं।

यस्मिन् पदे यस्योदात्तः, स्वरितो वा विधीयते, तमेकमचं वर्जयित्वा, शेषं तत्पदमनुदात्ताऽच्कं स्यात्। गोपायतं नः। अत्र 'सनाद्यन्ता धातवः' इति धातुत्वे, धातुस्वरेण, पकाराऽकार उदात्तः। शिष्टमनुदात्तम्।

**उदात्तादनुदात्तस्य स्वरितः ।८।४।६६।** [ [1]उदात्तात्परस्यानुदात्तस्य स्वरितः स्यात् ]। —इति तकाराऽकारः स्वरितः।

**स्वरितात्संहितायामनुदात्तानाम् ।१।२।३९।** [ [1]स्वरितात्परेषामनुदात्तानां संहितायां]मेकश्रुतिः स्यात्। इति नकाराऽकारः प्रचयः।

**अनुदात्तस्य च यत्रोदात्तलोपः ।६।१।१६१।** यस्मिन्ननुदात्ते [ परे ] उदात्तो लुप्यते, तस्योदात्तः [ स्यात् ]। देवीं वाचम्। अत्र ङीबुदात्तः। **आद्युदात्तश्च ।३।१।३।** प्रत्यय आद्युदात्तः स्यात्। कर्त्तव्यम्।

---

धातुत्वे=गोपायेत्यस्य धातुत्वे।

धातुस्वरेण='धातोः' इत्यनेन। उदात्त इति। 'धात्वन्ततये'ति शेषः।

शिष्टम्='गोपा' इत्यत्र ओकार, आकारश्चेति द्वयम्।

देवीमिति। देवशब्दस्य पचाद्यन्ततया 'चितः' इत्यन्तोदात्तता। ङीप् च पित्त्वात् सुप्पितौ चानुदात्ताविस्यनुदात्तः। तस्मिन्परतश्च 'यस्येति चे'त्यकारस्यलोपः। तत्र अकार उदात्तः, ईकारश्चाऽनुदात्त इति प्रकृतसूत्रप्रवृत्त्या ङीबीकारस्योदात्ततेत्याशयः। पूर्वस्य='आद्युदात्तश्चे'त्यस्य।

---

उदात्तादनु। उदात्त से परे जो अनुदात्त, वह स्वरित होता है।

स्वरितात्संहितायां। स्वरित से परे जो अनुदात्त, उनको संहिता में एक श्रुति ( प्रचय ) स्वर हो।

अनुदात्तस्य च। जिस अनुदात्त अच् के परे रहते उदात्त अच् का लोप हुआ हो, उस अनुदात्त को उदात्त आदेश हो।

आद्युदात्तश्च। प्रत्यय आदि उदात्त हो।

---

१ शेषपूरणमेतत्। २ 'शेषम्' पा०।

**अनुदात्तौ सुप्पितौ ।३।१।४।** [ [1]सुपः, पितश्च प्रत्यया अनुदात्ताः स्युः ]। पूर्वस्यापवादः। यज्ञस्य। न यो युच्छति। शप्तिपोरनुदात्तत्वे स्वरितप्रचयौ।

**चितः ।६।१।१६३।** [ [1]चितो ] ऽन्त उदात्तः स्यात्।

*** चितः सप्रकृतेर्बह्वकजर्थम्** । चिति प्रत्यये सति प्रकृतिप्रत्यय-समुदायस्याऽन्त उदात्तो वाच्य इत्यर्थः। नभन्तामन्यके [ समे ]। यके सरस्वतीम्। तकत्सु ते।

**तद्धितस्य ।६।१।१६४।** चितस्तद्धितस्याऽन्त उदात्तः [ स्यात् ]। पूर्वेण सिद्धे ञित्स्वरबाधनामिदर्थम्। कौञ्जायनाः।

**कितः ।६।१।१६५।** कितस्तद्धितस्याऽन्त उदात्तः [ स्यात् ]। यदाग्नेयः।

**तित्स्वरितम् ।६।१।१८५।** [ [1]तित्स्वरितं स्यात् ]। क्व नूनम्।

---

युच्छतीति। युच्छ प्रमादे। 'धातोः'रित्यन्तोदात्तः। ततः परः शप्—'उदात्तादनुदात्तस्य स्वरितः' इति स्वरितः। ततः परस्य तिपस्तु—'स्वरितात्

---

अनुदात्तौ सुप्पितौ। सुप् और पित् प्रत्यय अनुदात्त हों।

चितः। चित् को अन्त उदात्त हो।

चितः सप्रकृतेः। चित् प्रत्यय हो तो, चिद्विशिष्ट–प्रकृति–प्रत्यय–समुदाय के अन्त को उदात्त हो, ऐसा बहुच् और अकच् के लिए कहना चाहिए।

तद्धितस्य। चित् तद्धित का अन्त उदात्त हो।

कितः। कित् तद्धित का अन्त उदात्त हो।

तित्स्वरितम्। तित् स्वरित होता है।

---

१ शेषपूरणम्।

उपोत्तमं रिति ।७।१।१२७। रित्प्रत्ययाऽन्तस्योपोत्तममनुदात्तं स्यात्। यदाहवनीये।

ञ्नित्यादिर्नित्यम् ।६।१।१९७। ञिदन्तस्य, निदन्तस्य चाऽऽदिरुदात्तः [ [1]स्यात् ]। यस्मिन्विश्वानि पौंस्या। पुंसः कर्मणि ब्राह्मणादित्वात्ष्यञ्। सुते दधिष्व नश्चनः। चायतेरसुन्। 'चायतेरन्ने ह्रस्वश्चे'ति चकारादसुनो नुडागमः।

लिति ।६।१।१९३। लित्प्रत्ययात्पूर्वमुदात्तं स्यात्। चिकीर्षकः। अत्र ईकारस्योदात्तता।—इत्यादिप्रयोगमनुसृत्याऽन्वाख्यातव्यम्।

*** इति स्वरप्रक्रिया। ***

एषा वरदराजेन बालानामुपकारिका।
अकारि पाणिनीयानां मध्यसिद्धान्तकौमुदी ॥ १ ॥

---

संहितायामनुदात्तानाम्' इत्यनेन ( स्वरितात्परेषामनुदात्तानां संहितायमेकश्रुतिः स्यादित्यर्थकेन ) प्रचयापरपर्याया एकश्रुतिरिति सिद्धम्।

---

उपोत्तमं रिति। रित् प्रत्ययान्त का उपोत्तम अनुदात्त हो। (उपोत्तम=अन्त्य अच् से पूर्व का अच्)।

ञ्नित्यादिर्नित्यम्। ञिदन्त और निदन्त का आदि उदात्त हो।

लिति। लित् प्रत्यय परे रहते पूर्व को उदात्त हो।

वरदराजाचार्यने पाणिनीय व्याकरण शास्त्र के पढ़ने की इच्छा रखनेवाले बालकों के उपकार के लिए, पाणिनीय व्याकरण के सिद्धान्तों को सरलता से बतानेवाली यह 'मध्यसिद्धान्तकौमुदी' बनाई है ॥ १ ॥

---

1 शेषपूरणम्।

कृतिर्वरदराजस्य 'मध्यसिद्धान्तकौमुदी' ।
तस्याः सङ्ख्या तु विज्ञेया खबाणकरवह्निभिः (३२५०) ॥२॥

इति श्रीवरदराजकृता मध्यसिद्धान्तकौमुदी ।



तस्याः सङ्ख्येति । द्वात्रिंदक्षरानुष्टुप्छन्दोमानेन श्लोकसङ्ख्येत्यर्थः ।

इति श्रीपण्डितराज-मरुमण्डलमार्त्तण्डश्रीस्नेहिरामजिशास्त्रिणां पौत्रेण, पण्डित-प्रकाण्डश्रीशिवनारायणशास्त्रिणां पुत्रेण, सतीसार्वभौमश्रीराजलक्ष्मी-गर्भसम्भूतेन श्रीगुरुप्रसादशास्त्रिणा सङ्कलितायां,
वैयाकरण-मध्यसिद्धान्तकौमुदा-
बालमनोरमायां
स्वरप्रकरणम् ।
शुभम ।
[ निर्माणकालः-कार्तिकी पूर्णिमा १५।१९९४ वै० ] ॥

वरदराजाचार्य कृत यह मध्यसिद्धान्तकौमुदी थोड़े शब्दों में बहुत अर्थ को बतानेवाली है ।

इसकी ग्रन्थ सङ्ख्या अनुष्टुप् श्लोक मान से ३२५० है ॥२॥

❋ इति स्वर प्रक्रिया भाषा समाप्त ❋

इति 'साहित्यरत्नं' श्रीसीतारामशास्त्रिणा व्याकरणाचार्येण कृता, मध्यसिद्धान्तकौमुदी—सूत्रवार्त्तिकश्लोक–भाषाटीका समाप्ता ।

॥ श्रीगुरुचरणार्पणमस्तु ॥

॥ संवत् २००६ वै० भाद्रपूर्णिमायां श्रीकाशी–क्षेत्रे पूर्णतामगात् ॥

---

❋ ॥ श्रीः ॥ शुभम् ॥ ❋

## * अथ लिङ्गानुशासनम् *

### ॥ अथ स्त्रीलिङ्गाधिकारः ॥

१ लिङ्गम् ।

२ स्त्री । अधिकारसूत्रे एते ।

३ ऋकारान्ता मातृदुहितृस्वसृयातृननान्दरः । एते पञ्चैव स्त्रीलिङ्गाः ।

४ अन्यूप्रत्ययान्तो धातुः । अनिप्रत्ययान्त, ऊप्रत्ययान्तश्च धातुः स्त्रियां स्यात् । अवनिः । चमूः ।

५ मिन्यन्तः । मि-निप्रत्ययान्तः स्त्रियाम् । भूमिः । ग्लानिः ।

६ क्तिन्नन्तः । कृतिरित्यादि ।

७ ईप्रत्ययान्तश्च । लक्ष्मीः ।

८ ऊङाबन्तश्च । कुरूः । अजा ।

९ य्वन्तमेकाक्षरम् । श्रीः । भूः ।

१० विंशत्यादिरा नवतेः । इयं विंशतिः ।

११ तलन्तः । शुक्लता ।

१२ भाःस्रुग्दिग्गुष्णिगुपानहः । इयं भाः ।

१३ स्थूणोर्णे नपुंसके च । स्थूणा । स्थूणम् ।

१४ शष्कुलिराजिकुट्यशनिवर्तिभ्रुकुटित्रुटिवलिपङ्क्तयः । एते स्त्रियां स्युः । इयं शष्कुलिः ।

१५ अप्सुमनस्समासिकतावर्षाणां बहुत्वं च । अबादीनां पञ्चानां स्त्रीत्वं स्याद्, बहुत्वं च । आप इमाः ।

१६ ताराधाराज्योत्स्नादयश्च । इयं तारा ।

इति स्त्रीलिङ्गाधिकारः ॥ * ॥

### ॥ अथ पुंल्लिङ्गाधिकारः ॥

१ पुमान् । अयमधिकारः ।

२ घञबन्तः । पाकः । करः । भावार्थ एवेदम् ।

३ घाऽजन्तश्च । विस्तरः । चयः ।

४ भयलिङ्गभगपदानि नपुंसके। भयमित्यादि।
५ नङन्तः। पुंसि स्यात्। यज्ञ इत्यादि।
६ याच्ञा स्त्रियाम्। पूर्वस्यापवादः।
७ क्यन्तो घुः। आधिः। प्रधिः।
८ इषुधिः स्त्री च। चात्पुंसि। इयमयं वा इषुधिः।
९ द्यौः स्त्रियाम्।
१० क्रतुपुरुषकपोलगुल्फमेघाभिधानानि। क्रतुरध्वरः।
११ अभ्रं नपुंसकम्। पूर्वस्यापवादः।
१२ [1]उदन्तः। अयं पुंसि स्यात्। प्रभुः। विभुः।
१३ धेनुरज्जुकुहूसरयुतनुरेणुप्रियङ्गवः स्त्रियाम्। इयं धेनुः।
१४ रुत्वन्तः। मेरुः। सेतुः।
१५ दारुकसेरुजतुवस्तुमस्तूनि नपुंसके। इदं दारु।
१६ सक्तुर्नपुंसके च। सक्तु। सक्तुः।

'अदन्त' इत्यधिकृत्य।

१७ कोपधः। कोपधोऽकारान्तः पुंसि स्यात्। स्तबकः। कल्कः।
१८ चिबुकादीनि नपुंसके। चिबुकम्।
१९ टोपधः। अदन्तः पुंसि। घटः। पटः।
२० किरीटादीनि नपुंसके च। किरीटम्। किरीटः।
२१ णोपधः। अदन्तः पुंसि। गणः। पाषाणः।
२२ ऋणादीनि नपुंसके। ऋणम्।
२३ कार्षापणादीनि नपुंसके च। चात्पुंसि।
२४ थोपधः। अदन्तः पुंसि। रथः। यूथः।
२५ नोपधः। अदन्तः पुंसि। इनः। फेनः।
२६ जघनादीनि नपुंसके। जघनम्।
२७ पोपधः। अदन्तः पुंसि। दीपः। पर्पः।
२८ पापादीनि नपुंसके। पापम्।
२९ शूर्पकुतपकुणपद्वीपविटपानि नपुंसके च। चात्पुंसि।

१ 'उकारान्तः' पा०।

३० भोपधः । कुम्भः । सरभः ।
३१ तलभं नपुंसकम् ।
३२ जृम्भं नपुंसके च ।
३३ मोपधः । होमः । धर्मः ।
३४ रुक्मादीनि नपुंसके । इदं रुक्ममित्यादि ।
३५ संग्रामादीनि नपुंसके च । चात्पुंसि । संग्रामः । संग्रामम् ।
३६ योपधः । हयः । समयः ।
३७ किसलयादीनि नपुंसके ।
३८ गोमयादीनि नपुंसके च ।
३९ रोपधः । क्षुरः । खुरः । अङ्कुरः ।
४० द्वारादीनि नपुंसके । इदं द्वारम् ।
४१ शुक्रमदेवतायाम् । देवतायां तु-शुक्रः ।
४२ षोपधः । वृषः । वृक्षः ।
४३ शिरीषादीनि । इदं शिरीषम् ।
४४ सोपधः । वायसः । महानसः ।
४५ पनसबिसबुससाहसानि नपुंसके ।
४६ चमसादीनि नपुंसके च । चात्पुंसि ।
४७ कंसं चाऽप्राणिनि । कंसः, कंसं वा पानपात्रम् । प्राणिनि तु कंस औग्रसेनिः ।
४८ रश्मिदिवाभिधानानि । 'अत' इति निवृत्तम् ।
४९ दीधितिः स्त्रियाम् ।
५० दिनाऽहनी नपुंसके । दिनम् अहः ।
५१ मानाभिधानानि । कुडवः ।
५२ द्रोणाढकौ नपुंसके च । चात्पुंसि ।
५३ खारीमानिके स्त्रियाम् । इयं खारिः ।
५४ दाराऽक्षतलाजाऽसूनां बहुत्वं च । इमे दाराः ।
५५ मरुद्गरुत्तरद्दृत्विजः । अयं मरुत् ।

५६ ध्वजगजमुञ्जपुञ्जाः । एते पुंसि ।

५७ वंशांशपुरोडाशाः । अयं वंशः ।

५८ ह्रदकन्दकुन्दबुद्बुदशब्दाः । अयं ह्रदः ।

५९ अर्घपथिमथ्यृभुक्षिस्तम्बनितम्बपूगाः । अयमर्घः ।

६० सारथ्यतिथिकुक्षिबस्तिपाण्यञ्जलयः ।

६१ पल्लवपल्वलकफरेफ ( शेफ ) कटाहनिर्व्यूहमठमणितरङ्गतुरङ्ग-गन्धस्कन्धमृदङ्गसङ्गसमुद्गपुङ्खाः । अयं पल्लव इत्यादि ।

६२ ऋषिराशिदृतिग्रन्थिक्रिमिध्वनिवलिकौलिमौलिरविकविकपि-मुनयः । एते पुंसि स्युः । अयमृषिः ।

६६ हस्तकुन्ता-ऽन्तव्रातवातदूतधूर्तसूतचूतमुहूर्ताः । एते पुंसि । अयं हस्त इत्यादि ।

## ❀ इति पुंलिङ्गाधिकारः । ❀

## अथ नपुंसकलिङ्गाधिकारः ।

१ नपुंसकम् । अयमधिकारः ।

२ भावे ल्युडन्तः । ज्ञानम् । हसनम् । भावे किम् ? । पचनः ।

३ निष्ठा च । भावे या निष्ठा, तदन्तं क्लीबं स्यात् । गीतम् ।

४ त्वष्यञौ तद्धितौ । शुक्लत्वम् । शौक्ल्यम् । षित्वसामर्थ्यात्पक्षे स्त्रीत्वे ङीष् । चातुरी ।

५ कर्मणि च ब्राह्मणादिगुणवचनेभ्यः । ब्राह्मण्यम् ।

६ यद्यढग्यगञण्वुञ्छाश्च भावकर्मणि । एतानि क्लीबानि । स्तेयम् । सख्यम् । कापेयम् । सैनापत्यम् । औष्ट्रम् । द्वैहायनम् । पितापुत्रकम् । अच्छावाकीयम् ।

७ अव्ययीभावः । अधिहरि ।

८ द्वन्द्वैकत्वम् । पाणिपादम् ।

९ अनल्पे छाया । शरच्छायम् ।

१० इसुसन्तः । हविः । सर्पिः । धनुः ।

११ अर्चिः स्त्रियां च । इदमियं वाऽर्चिः ।

१२ छर्दिः स्त्रियामेव । इयं छर्दिः ।

१३ मुखनयनलोहवनमांसरुधिरकार्मुकविवरजल ( हल ) धनान्नाभिधानानि । एषामभिधायकानि क्लीबे स्युः । मुखमाननं वक्त्रम् इत्यादि ।

१४ सीरार्थौदनाः पुंसि ।

१५ वक्त्रनेत्रारण्यगाण्डीवानि पुंसि च । चात् क्लीबे ।

१६ अटवी स्त्रियाम् । पूर्वस्येयं त्रिसूत्री बाधिका ।

१७ लोपधः । कुशलम् ।

१८ शीलादीनि पुंसि च । चात् क्लीबे । शीलम् ।

१९ शतादिसंख्या । शतम् । सहस्रम् ।

२० शतायुतप्रयुताः पुंसि च ।

२१ लक्षा कोटिः स्त्रियाम् । इयं लक्षा ।

२२ सहस्रः पुंसि ।

२३ मन् द्व्यच्कोऽकर्तरि । मन्प्रत्ययान्तो द्व्यच्कः पुंसि स्यात्, । चात् क्लीबे, नतु कर्तरि । वर्मा । वर्म । अकर्तरि किम् ? ददातीति-दामा ।

२४ ब्रह्मन्पुंसि च । अयं ब्रह्मा । इदं ब्रह्म ।

२५ सामरोमणी क्लीबे । पूर्वस्यापवादः ।

२६ असन्तो द्व्यच्कः । यशः । मनः । तपः ।

२७ अप्सराः स्त्रियाम् । एता अप्सरसः ।

२८ त्रन्नन्तः । पत्रम् । छत्रम् ।

२९ यात्रामात्राभस्त्रादंष्ट्रावरत्राः स्त्रियामेव ।

❀ इति नपुंसकाधिकारः ॥ ❀

## अथ स्त्रीपुंसाधिकारः ॥

१ स्त्रीपुंसयोः । अयमधिकारः ।

२ गोमणियष्टिमुष्टिपाटलिवस्तिशाल्मलित्रुटिमसिमरीचयः । इयमयं वा गौः ।

३ अपत्यार्थस्तद्धिते । औपगवः । औपगवी ।

❀ इति स्त्रीपुंसाधिकारः ॥ ❀

## अथ पुंनपुंसकाधिकारः ।

१ पुंनपुंसकयोः । अधिकारोऽयम् ॥

२ घृतभूतमुस्तक्ष्वेलितैरावतपुस्तकबुस्तलोहिताः । अयं घृतः । इदं घृतम् ॥

३ कबन्धौषधाऽऽयुधान्ताः । स्पष्टम् ॥

४ दण्डमण्डखण्डशवसैन्धवपार्श्वकाशाङ्कुशकुलिशाः । दण्डः । दण्डम् ।

इति पुंनपुंसकाधिकारः ॥*

१ अविशिष्टलिङ्गम् । अव्ययम् ।

२ कतियुष्मदस्मदः ।

३ ष्णान्ता सङ्ख्या ॥

शिष्टा परवत् । एकः पुरुषः । एका स्त्री । एकं कुलम् ॥

४ गुणवचनम् । शुक्लः पटः । शुक्ला पटी । शुक्लं वस्त्रम् ॥

५ कृत्याश्च ।

६ करणाधिकरणयोर्ल्युट् च ।

७ सर्वादीनि सर्वनामानि ।

स्पष्टार्थेयं त्रिसूत्री ॥

इति श्रीवरदराजविरचिता संक्षिप्तलिङ्गानुशासनसूत्रवृत्तिः ।

---

वन्देऽनवद्यसद्ग्रन्थविद्योद्भासितदिङ्मुखान् ।
मरुमण्डलमार्त्तण्ड-स्नेहिरामजिशास्त्रिणः ॥

---

॥ श्रीः ॥ हरिः ॐ तत्सत् ॥ श्रीः ॥

॥ श्रीः ॥

# अथ मध्यकौमुदीस्थसूत्राणां सूची ।

१ अइउण् । २ ऋलृक् । ३ एओङ् । ४ ऐऔच् । ५ हयवरट् ।
६ लण् । ७ ञमङणनम् । ८ झभञ् । ९ घढधष् । १० जबगडदश् ।
११ खफछठथचटतव् । १२ कपय् । १३ शषसर् । १४ हल् ।

इति माहेश्वराणि सूत्राणि ।

पृष्ठम् सूत्रम्



पृष्ठम् सूत्रम्



पृष्ठम् सूत्रम्

